# वीरमित्रोदये

व्यवहाराध्यायः ।

मित्र मिश्रेण विरचितः ।

---

वि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृतः ।

---


कलिकातानगरे

सुचारुयन्त्रे

मुद्रितः ।

इं १८७५ ।

পিণ্টার-শ্রীরামব্রহ্ম মুখোপাধ্যায় ।

# वीरमित्रोदयस्य सूचीपत्रम् ।

समाप्तेदं सूचीपत्रम् ।

---

ॐगणेशाय नमः ।

# अथ वीरमित्रोदयाख्यधर्म्मशास्त्रं लिख्यते ।

## तत्र प्रथमं व्यवहाराख्य-प्रकरणम् ।

पुरतः प्रविलोक्य भर्गचापम्परतः कामपिकामकार्मुकज्याम् ।
पुलकाञ्चितपीनबाहुदण्डः कुशलन्नः कुरुताद्रघु-प्रकाण्डः॥१॥
स्वस्तिश्रीयुतवीरसिंहनृपते राज्ञावशादुत्सुकः
श्रीमित्राभिधपण्डितः प्रतिदिशङ्कीर्त्यानिशं मण्डितः ।
नानानिर्णय-वर्णनं व्यसनिनां सद्भावताम्प्रीतिदम्
सम्प्राप्तव्यवहारसाधकमिमं कुर्वे प्रकाशम्परम् ॥ २ ॥
उद्वृत्तप्रभवप्रजापरिभवप्राग्भारभङ्गाहृता
नन्ताकारमरागमत्सरबुधा-राध्यन्निदिध्यासनैः ।
धर्मैकाश्रयमाश्रयं मुनिगिराम-ह्वासदुद्धारकम्
प्रस्तौमि व्यवहारमच्युतमिव प्राक्प्रस्तुतम्प्राक्तनैः ॥ ३ ॥
परिभाषापरिष्कारः प्रमाणानान्निरूपणम् ।
विवादपदनिर्देशः प्रकीर्णकविवेचनम् ॥ ४
एवम्प्रकरणान्यत्र चत्वारि प्रथमे पुनः ।
लक्षणं व्यवहारस्य निरुक्तिर्मुनिभाषिता ॥ ५ ॥

व्यवहारस्य भेदाश्च स्वलक्षण-विलक्षणाः ।
सामान्यतोविशेषाच्च परिभाषाप्रकाशनम् ॥ ६ ॥
सामान्यपरिभाषायां धर्माधिकरणे क्षणम् ।
दर्शने व्यवहारस्य राज्ञो विधिविवेचनम् ॥ ७ ॥
प्राड्विवाकस्वरूपञ्च सभापतिसभासदाम् ।
निरूपणञ्च सभ्यानां सयुक्तिकबलाबलम् ॥ ८ ॥
केषाञ्चित्सभ्यभिन्नाना-मपिस्थानं सभास्थले ।
तत्प्रयोजनमादेयानादेयव्यवहारयोः ॥ ९ ॥
विवेचनमथो कार्य्यं सद्दृष्टकसभापतेः ।
प्रतिज्ञोत्तरहेतूनां पदानां सिद्धिशालिनाम् ॥ १० ॥
निरूपणमसद्दृष्टावदृष्टौ च सभापतेः ।
सद्दृष्टकस्य दोषोक्तिः सम्यक्दृष्टौ फलाभिधा ॥ ११ ॥
विशेषपरिभाषायां प्रत्यभियोगनिर्णयः ।
निह्नवादौ विधिस्तत्र निह्नवादिविवेचनम् ॥ १२ ॥
विलम्बोत्तरदानञ्च क्वचिन्नैव विलम्बनम् ।
आद्ये प्रकरणे त्वर्थाविविच्यन्ते क्रमादमी ॥ १३ ॥
उपोद्घातप्रसङ्गाद्यैरन्येपि तदनुव्रताः ।
द्वैतीयीके तु साक्ष्यादि-लक्षणन्तत्र साक्षिणः ॥ १४ ॥
असाक्षिणस्तत्र हेतुः साक्षिप्रश्नविधिस्ततः ।
तद्द्वैधे निर्णयःकौट साक्ष्ये क्वचिददोषता ॥ १५ ॥
निर्णयो लिखितस्याथ तद्भेदास्तत्परीक्षणम् ।
साक्षिणां लिखितस्यापि शब्दत्वेन प्रमाणता ॥ १६ ॥
भुक्तिर्विशेषणान्यस्या अर्थापत्त्यनुमानता ।
लौकिकानाम्प्रमाणानामभावे दिव्यभावना ॥ १७ ॥

दिव्यभेदास्तदावस्था देश कालाधिकारिणः ।
तन्मात्रकास्तद्विशेषविषयो विविधाःक्रमात् ॥ १८ ॥
तेषामपि च शब्दोत्थाऽनुमानत्वेन मानतः ।
एतेऽर्थाविविच्यन्ते ऽथोतार्तीयके ततः क्रमात् ॥ १९ ॥
व्यवहारपदा न्यष्टादशोद्दिष्टानि लक्षणम् ।
तेषां सामान्यमथ तद्भिदानां विविधा विधाः ॥ २० ॥
एतेऽर्थाः सम्यगुच्यन्ते तुरीये तु प्रकीर्णकम् ।
यन्नोक्तमुपयुक्तन्तद्विविच्य प्रतिपाद्यते ॥ २१ ॥

अथ कोऽयं व्यवहारः ।

प्रमाणतर्कोपष्टम्भः पक्षप्रतिपक्षपरिग्रह इति चेन्न । वादादेरपि तत्त्वापत्तेः । लिखितादिः प्रमाणविशेषः परिगृह्यत इति चेत् । तत्रापि तत्प्रष्टव्यविरोधात् । अनुमानाद्यवहिर्भावाच्च तेषामव्यावर्त्तकत्वात् । अतएवान्यविरोधेन स्वसम्बन्धितया कथनमित्यपि परास्तम् । प्रमाणान्तर्भावेण स्वरूपनिरूपणानौचित्याच्च कथनादे-र्व्यवहारपदवाच्यत्वे व्यवहारान्नृपः पश्येदित्याद्यनन्वयाच्च । उच्यते । ऋणादानादिलौकिकार्थविषया कथैव व्यवहारः । कथाव्यपदेशाभावस्तु शास्त्रीयपदार्थाविषयत्वात् । अधिकरणादिव्यपदेशो यथा वैदिकार्थविषयकक्रथाया-स्तथात्र व्यवहारव्यपदेशः। अतएव यथायथं हेत्वाभासनिग्रहस्थानादियोजनमपि युक्तम् । तच्च तत्र तत्र प्रदर्शयिष्यते । चतुष्पात्त्वमपि तस्य तदविरोध्येवे-त्युपपादयिष्यते । यत्तु गोपालेन तत्वनिर्णयेषु कथात्वाद्वादत्वमेवास्येति मिश्रमतत्वेनोपन्यस्य जयभङ्गफलकत्वात् स्थापनावसानत्वाच्च जल्पमेवायमिति तन्निरस्तन्तद्वयमप्ययुक्तम् । श-

ज्ञातत्वाभियोगभेदेन उभयरूपत्वस्यैव युक्तत्वात्। वैतण्डिकस्य व्यवहारायोग्यत्वादस्य वितण्डत्वम्परमसम्भवि। अन्यविरोधेन स्वसम्बन्धितया कथनमिति विज्ञानयोगिवचोऽप्येवं सति नायुक्तम्। नच पश्येदित्यन्वयः। निर्णयार्थकथनतया सर्वनिबन्धृभि-स्तद्व्याख्यानात्। स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्। इति याज्ञवल्क्यवचनं यद्यपि व्यवहारपदा-न्यृणादानादीनि सामान्येन लक्षयति तथापि व्यवहारसामान्यलक्षणमपि समानसम्बन्धिसम्वेद्यतया ततः प्रतीयते। तस्मात्त्वयमर्थः। स्मृत्याचारादि धर्म्मप्रमाणातिक्रान्तरीत्या-न्यैरभिभूतः पुरुषोराजादिभ्यो व्यवहारदर्शिभ्यो यद्यावेदयति तर्हि तदा वेद्यमानञ्चतुष्पाद्व्यवहारस्य पदं विषयः। हीति प्रसिद्धमृणादानादिलक्ष्यत्वेन मन्वाद्युक्तमुपलक्षितमिति। एवञ्चाधर्षितस्यार्थित्वमाधर्षकस्य प्रत्यर्थित्वन्तयोर्विवादश्च व्यवहार इति प्रतीयते। इदमेव च मिताक्षरायामन्यविरोधेनेत्यादिना निष्कृष्टमुक्तम्। अन्यविरोधेनेत्यनुक्ते प्रश्नोत्तरादिरूपेण स्वसम्बन्धिकथनमपि व्यवहारःस्यात्। स्वसम्बन्धितयेत्यनुक्ते एकसम्बन्धितया साक्षिणा कथनमन्यविरोधिभवत्येवे-त्यस्याप्यर्थित्वापत्तिरतः स्वसम्बन्धितयेति। इदं चोत्तरचतुष्टयेऽप्यनुगतम्। नच सम्प्रति पत्तावव्याप्तिः तत्रापि साध्यतया वादिना निर्दिष्टस्य सिद्धतया निर्देशे तद्विरोधपर्य्यवसानात्। अन्यथोत्तरत्वभङ्गप्रसङ्गात्। यत्रापि द्वावपि भाषावादिनौ तत्रापि परस्परविरोधावश्यम्भावान्नाव्याप्तिः। इदं चाग्रे व्यक्तीभविष्यति। यच्च कात्यायनेनोक्तम्।

प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे ।
साध्यमूलस्तु यो वादो व्यवहारः स उच्यते ॥ इति ।

एतच्च व्यवहारहेतु व्यवहारस्वरूपोक्तिपरतया माधवीयपारिजातादिष्वेवं व्याख्यातम् । विहिताचरणनिषिद्धवर्जनादिप्रयत्नसाध्ये धर्माख्ये वस्तुनि विच्छिन्ने विप्लुते सतीति व्यवहारहेतुरुक्तः ॥

धर्माधर्मविप्लवस्यैव व्यवहारहेतुत्वात् ।

तथा च नारदः ।

मनुः प्रजापतिर्यस्मिन् काले राज्यमबूभुजत् ।
धर्मैकताना: पुरुषास्तदासन् सत्यवादिनः ।
तदा न व्यवहारोऽभू-न्न द्वेषो नापि मत्सरः ।
नष्टे धर्मे मनुष्येषु व्यवहारः प्रवर्त्तत इति ।

बृहस्पतिरपि ।

धर्मप्रधानाः पुरुषाः पूर्वमासन्न हिंसकाः ।
लोभद्वेषाभिभूतानां व्यवहारः प्रवर्त्तत इति ।

न्यायेत्यादिना व्यवहारस्वरूपमुक्तम् ।

तत्र माधवीयव्याख्यानम् ।

न्यायः शिष्टसम्प्रतिपन्नं लौकिकमाचरणं तस्य विस्तर इदं युक्तमिदमयुक्तमिति । उपपत्तिपुरःसरो निर्णयः । तस्मिन् विषयभूते तत्प्रवर्त्तकोऽर्थिप्रत्यर्थिनोः साध्यमूलसाध्यस्वर्णादानादिपदं तन्मूलस्तद्विषयको यो विवादः स व्यवहार इति । मदनरत्ने तु न्यायः प्रमाणन्तस्य विस्तरः प्रवृत्तिर्यस्य तस्मिन् विषय इति । साध्यमूलेत्यादितुल्यम् । मदनरत्नाकरस्मृति चन्द्रिकाकल्पतरुकारैः सर्वमेवेदं वचनं व्यवहारस्वरूपपरतयापि

व्याख्यानमुक्तम्। प्रयत्नसाध्ये कष्टसाध्ये पराभिभवेन स्वेच्छया भोक्तुमशक्ये गृहक्षेत्रादौ सति न्यायः प्रमाणं विस्तार्यते प्रपञ्च्यते यस्मिन् तस्मिन् धर्माधिकरणे सदसि साध्यमूलेत्यादि पूर्ववत्। तेनापि प्रागुक्तमेव विवक्षितमतस्तत्त्वपदकृत्येनातीव यतितव्यम्। वयन्तु सर्वसप्तम्यन्तसामानाधिकरण्येन व्याचक्ष्महे। विहितानुष्ठानादिगोचरप्रयत्नसाध्ये धर्माख्ये न्यायविस्तरे। नीयतेऽर्थोऽनेनेति न्यायः प्रमाणं श्रुतिस्मृत्यादि विस्तार्यते प्रवर्त्तते ऽस्मिन् श्रुत्यादिप्रमेय इत्यर्थः। विच्छिन्ने विविधच्छिन्ने प्रमाणापरिज्ञानतात्पर्यानवधारणादिना दुर्ज्ञेयेसति। यद्वा। धर्म आख्यायते ऽनेनेति धर्माख्यो धर्मप्रतिपादक इति यावत्। न्यायविस्तरे प्रमाणसमूहे श्रुतिस्मृत्यादौ प्रमादादिना विच्छिन्ने लुप्तप्राये सति साध्यमूलेत्यादिगतार्थमिति। हारीतः।

स्वधर्मस्य यथा प्राप्तिः परधर्मस्य वर्जनम्।
न्यायेन क्रियते तत्तु व्यवहारः स उच्यत इति।

न्यायेन प्रमाणेन। एतस्यापि पूर्वोक्त एव तात्पर्यम्॥

इति व्यवहार लक्षणम्॥

निरुक्तिमपि व्यवहारपदस्या ऽमुमेवार्थमुपलक्षयति। सा च कात्यायनेनोक्ता। विनानार्थेन सन्देहोहरणं हार उच्यते। नानासन्देहहरणाद्व्यवहारइति स्मृत इति।

अथ व्यववारभेदाः नारदः।

सोत्तरोनुत्तरश्चेति सविज्ञेयो द्विलक्षणः।
सोत्तरोभ्यधिको यत्र विलेखात्पूर्वकः पणः इति।

यदि पराजयेऽहं तदा पराजयदण्डाभ्यधिकमेतावद्राज्ञे दास्यामीति यत्रलिखनपूर्वकम्प्रतिज्ञायते स सोत्तर इत्यर्थः।

तद्‌द्विहितोऽनुत्तर इत्यर्थो उक्तम्भवति। स एव त्रयोदशप्रकार-निबन्धनानवान्तरभेदानुद्दिश्य विहृतवान्। यथाह।

चतुष्पाच्च चतु:स्थान चतु:साधन एव च।
चतुर्हितश्चतुर्व्यापी-चतुष्कारी च कीर्त्तित:।
त्रियोनिर्द्व्यभियोगश्च द्विद्वारर्द्विगतिस्तथा।
अष्टाङ्गोऽष्टादशपद: शतशाखास्तथैव च।
धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।
चतुष्पाद्व्यवहारोऽयमुत्तर: पूर्वबाधक:।
तत्र सत्ये स्थितो धर्म्मो व्यवहारस्तु साक्षिषु।
चरित्रं तु स्वीकरणे राजाज्ञायान्तु शासनम्।
साम्याद्युपायसाध्यत्वाच्चतु: साधन उच्यते।
चतुर्णामपिवर्णानां रक्षणाच्च चतुर्हित:।
कर्त्तॄनथोसाक्षिणश्च सभ्यान् राजानमेव च।
व्याप्नोति यादृशो यस्माच्चतुर्व्यापी तत: स्मृत:।
धर्मस्यार्थस्य यशसोलोकपङ्क्तेस्तथैव च।
चतुर्णाङ्करणादेव चतु:कारी प्रकीर्त्तित:।
कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात्प्रवर्त्तते।
त्रियोनि: कीर्त्यते तेन त्रयमेतद्विवादकृत्।
द्व्यभियोगस्तु विज्ञेय: शङ्कातत्त्वाभियोगत:।
शङ्कासतान्तु संसर्गात्तत्त्वं ह्रोडाभिदर्शनात्।
पक्षद्वयाभिसम्बन्धात् द्विद्वार: समुदाहृत:।
पूर्ववादस्तयो: पक्ष प्रतिपक्षस्तदुत्तर:।
भूतच्छलानुसारित्वात् द्विगति: समुदाहृत:।
भूतन्तत्वार्थसंयुक्तं प्रमादाभिहितं छलम्।

राजा स पुरुषः सभ्यः शास्त्रं गणकलेखकौ ।
हिरण्यमग्निरुदकमष्टाङ्गः समुदाहृतः ।
ऋणादानह्युपनिधिः सम्भूयोत्थानमेव च ।
दत्तस्य पुनरादानमशुश्रूषाभ्युपेत्य च ।
वेतनस्यानपाकर्म तथैवास्वामिविक्रयः ।
विक्रीयासम्प्रदानं च क्रीत्वा-नुशयमेव च ।
समयस्यानपाकर्म विवादः क्षेत्रजस्तथा ।
स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसः ।
वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च ।
द्यूतम्प्रकीर्णकञ्चैवे त्यष्टादशपदः स्मृतः ।
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते इति ।

यद्यपि प्रतिज्ञादीनां वक्ष्यमाणानां साक्षाद्व्यवहारस्वरूप घटकत्वाद्व्यवहारपादकत्वं युक्तम् । धर्म्मादीनान्तु तत्र सत्ये-स्थितो धर्म इति नारदोक्तप्रकारेणैव निर्णयमात्रहेतुत्वान्न साक्षाद्व्यवहारः पादत्वमर्हम् । याज्ञवल्क्यादिभिरतएव तेषामेव व्यवहारपादत्वमुक्तन्तद्वचनानि त्वग्रे प्रदर्शयिष्यन्ते । तथापि निर्णयाख्यचतुर्थव्यवहारपादहेतुत्वेन गौणमेव व्यवहारपादत्वमेषामत्रोक्तम् । व्यवहारपदेन निर्णय एव वा लक्ष्यते । तद्धेतुत्वन्तत्पादत्वमिति तद्द्रष्टव्यम् । तथा च बृहस्पतिः । धर्म्मादीनां निर्णयहेतुत्वं स्पष्टमेवाह ।

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुः प्रकारोऽभिहितः सन्दिग्धेऽर्थेविनिर्णय इति ॥

गौणानामेषान्धर्म्मादिपादानामधिकरणकथनम् । तत्र सत्येस्थितोधर्म इत्यादिना । अत्र माधवीये चरित्रन्तु स्वीकरण

इति पाठं लिखित्वा देशाचारचरित्रं तत्स्वीकारे तदेव निर्णयहेतुरिति व्याख्यातम् । कात्यायनवचनञ्च तत्र ।

यद्यदाचर्य्यते यत्र धर्मं वाऽधर्ममेव वा ।
देशस्याचरणे नित्यं चरित्रन्तद्विकीर्त्तितम् ॥

चण्डेश्वरेण तु चरित्रन्तु पुस्तकरणमिति पठित्वा पुस्तम्पञ्जिकेत्यर्थः । तत्करणमधिकरणं दस्येति व्याकृतन्तद्गुरुढिहीनाद्वचनान्तरासम्वादाच्च हेयम् । तेषां निर्णयहेतुत्वं प्रपञ्चितं कात्यायनेन ।

दोषाकारी तु कर्तृत्वं धनहारी स्वकं धनम् ।
विवादे प्राप्नुयाद्यत्र स धर्मेणैव निर्णयः ॥

वाक्पारुष्यस्तेयादिदोषकारी व्यवहारप्रवर्त्तनमन्तरेणैवानुतापादिना धर्माभिमुखोऽधर्माद्भीतश्च स्वस्य दोषकर्तृत्वं स्वयमभ्युपैति । यत्र धनस्वामीधर्माभिमुखादधर्मभीरोश्चाधमर्णादेर्व्यवहारं विनैव स्वकीयं धनमाप्नोति तत्रोभयत्र सम्प्रतिपत्युत्तर इति यावत् । धर्मेणैव निर्णय इत्यर्थः । अतएवोक्तन्तत्र सत्येस्थितोधर्म इति ।

स्मृतिशास्त्रन्तु यत्किञ्चित् प्रथितं धर्मसाधकैः ।
कार्य्याणां नियमार्थेषु व्यवहारः स्मृतो हि सः ॥

धर्मसाधकैः सभ्यैः स्मृतिशास्त्रं साक्ष्यादिक्रियाप्रत्यायकमर्थिप्रत्यर्थिनोः कार्य्यनिर्णयार्थं प्रथितमख्यापितं यत्र चतुष्पाद्व्यवहारप्रवर्त्तनेन निर्णयकरणमिति यावत् । तत्र व्यवहारो निर्णयहेतुरित्यर्थः ॥ अतएवोक्तम् । व्यवहारस्तु साक्षिषु तिष्ठति । साक्षिग्रहणं प्रमाणोपलक्षणम् ।

चरित्रविषयवचनम्पूर्वमेवोपवर्णितम् ।
न्यायशास्त्राविरोधेन देशदृष्टेस्तथैव च ॥
यन्धर्मं स्थापयेद्राजा न्याय्यन्तद्राजशासनम् ।
न्यायशास्त्रं व्यवहारप्रतिपादकं स्मृत्यादिशास्त्रम् ।

तदविरोधेन देशदृष्टेर्देशाचारस्याविरोधेनेति । सम्प्रत्य-न्तर्गतस्य निष्कृष्यान्वयः राजायं धर्मं स्थापयेदाज्ञापयेत्तन्न्या-य्यमुक्तं राजशासनं अन्यदन्याय्यमित्यर्थात् । तादृशशासनानु-रोधेन निर्णयः कर्त्तव्य इत्यर्थः । धर्मादीनामुत्तरोत्तरस्य पूर्वपूर्वबाधकमुत्तरत्व विवक्ष्यते । असतां विषये स्तेयादीनां संसर्गात् पारदार्य्यस्तेयादिशङ्कातयाभियोगः । होडालिङ्गं चौ-र्य्यादिचिह्नन्तद्दर्शनात् साक्षाद्दर्शनं वा होडादर्शनन्तस्मादनेनैव चौर्य्यादिकृतमिति निश्चयरूपेणाभियोगस्तत्त्वाभियोग इत्य-र्थः । हिरण्यग्न्युदकानां यथा सम्भवं व्यवहाराङ्गत्वं अष्टादश-पदानां निरूपयिष्यन्ते क्रियाभेदादेकैकव्यवहारपदसम्बन्धि व्यापारभेदा-दनन्तरप्रकारत्वं शास्त्रतम् । इति व्यवहारभेदः । अथ सामान्यपरिभाषा । तत्र धर्म्माधिकरणाख्या सभानिरू-पणम् । बृहस्पतिः ।

दुर्गमध्ये गृहं कुर्य्याज्जलवृक्षान्वितं पृथक् ।
प्राग्दिशि प्राङ्मुखीन्तस्य लक्षण्याङ्कल्पयेत्सभाम् ॥
माल्यधूपासनोपेतां वीजरत्नसमन्विताम् ।
प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथेति ॥
लक्षण्यां वास्तुशास्त्रोक्तं लक्षणेन तु लक्षिताम् ।

अग्न्यम्बुनेति समाहारद्वन्द्वः । सभायां धर्म्माधिकरणत्व-ङ्कात्यायन आह ।

धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम् ।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति।

तत्र सभ्योपवेशनमाह मनुः ।

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।
राज्ञश्चाधिकृतोविद्वान् ब्राह्मणस्तां सभां विदुरिति॥

त्रय इत्युपलक्षणम् । अधिकानामपि स्मृतत्वात् । तच्च वक्ष्यते । अधिकृतो विद्वान् प्राड्विवाकः अत्र प्रविशेत्सभाम् । सभामेव प्रविश्येदित्यादिवचनात् सभामुख्यं व्यवहारदर्शनस्थानम् । अन्यान्यथ मुख्यानि व्यवहारवचनादवगन्तव्यानि ।

देशस्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः ।
निर्णयं येन गच्छन्ति विवादं प्राप्यवादिनः ॥
आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः सार्थिकैस्तथा ।
सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः ॥
उभयानुमतञ्चैव गृह्यते स्थानमीप्सितम् ।
कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः ॥
ग्रामपौरगणश्रेण्यश्चातुर्विद्यश्च वर्गिणः ।
कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथेति ॥

स्वकै रारण्यकैः ग्रामेऽपीत्यपि शब्दाद्ये ग्रामेऽरण्यादौ च निवसन्ति ते उभयवासिभि निर्णयं कुर्य्युरुभयव्यवहाराभिज्ञत्वात्तेषां कुलिकाः कुलश्रेष्ठाः । सार्थो ग्रामदेवयात्रादौ मिलितो जनसङ्घः तन्मुख्याः सार्थवाहादयः । पुरं मुख्यनगरम् । तस्मादर्व्वाचीनो ग्राम इति पुरग्रामनिवासिनोर्भेदसार्थः कुलिकादीनि पञ्चस्थानानि तानि चारण्यकादीनामेव अग्रामादीनि

दशस्थानानि साधारणानि । ग्रामो ग्रामाकारेणावस्थितो-जनः । पौरः पुरवासिनां समूहः ।

श्रेण्यो रजकाद्यष्टादश हीनजातयः ।

चातुर्विद्यः आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः ।

वर्गिणो गणप्रभृतयः । इति सभानिरूपणम् । अथ व्यवहारदर्शनविधिः । तत्र मनुः ।

व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥
तत्रासीनः स्थितो वापि पाणिमुद्यम्य दक्षिणम् ।
विनीतवेषाभरणः पश्येत्कार्य्याणि कार्य्यिणाम् ॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक् ॥
धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेदिति ॥

व्यवहारान् पूर्वलक्षितान्दिदृक्षुर्निर्णिनीषुः । पार्थिवोऽभिषिक्तक्षत्रियः । तमेवाधिकृत्य प्रजापालनव्यवहारदर्शनादिविधानात् । यथादृत्तो भवेन्नृप इत्यादिषु । नृपग्रहणात्तु अन्यस्यापि तत्स्थानापन्नस्य प्रजापालनौपयिकं धर्मजातम्भवतीति गम्यते । आसीन स्थितो वेति सामर्थ्याद्यनुसारेण पूज्यापूज्यार्थि प्रत्यर्थ्यपेक्षया वा व्यवस्थितो विकल्पः । दक्षिणपाण्युद्यमनं कार्यिणामवधानबोधनार्थम् । विनीतवेषाभरणत्वन्तेषामपि प्रतिभा निवृत्त्यर्थमुपात्तम् । प्रत्यहमित्यनेनाह्निकवद्व्यवहारदर्शनस्यावश्यकतोक्ता । देशदृष्टाः श्रुतिस्मृत्यनुक्ता अपि देशाचाररूपास्तदविरुद्धा हेतवो युक्तिकलापाः । यथो-

हीच्यमध्यमानां कन्यां याचितुमागताय भोजनदानं कन्याप्रतिश्रवणप्रतिबद्धमतस्तस्मिन् कृते अवश्यं तस्मै कन्यादातव्येति निर्णेतव्यम्। एवमन्यदप्यूह्यम्। यथाह कात्यायनः।

यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः।
श्रुतिस्मृत्यनुरोधेन देशदृष्टः स उच्यत इति॥

मार्गेषु व्यवहारपदेषु। निबद्धानि सम्बद्धानि धर्मनिर्णयोपयोगित्वाद्धर्मासनम्। संवीताङ्गो वस्त्राद्या वृतशरीर इत्यनेन नीतिशास्त्रोक्तं कर्मणादिपरिहारोपयोगि सर्वमुपलक्षितम्। समाहितो विक्षेपशून्यः। विक्षेपदशायान्तत्त्वप्रतिभासायोग्यत्वाच्चितस्य लोकपालप्रमाणोऽपि तदुपयोगी। याज्ञवल्क्यः। व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह।

धर्मशास्त्रानुसारेण क्रोधलोभविवर्जित इति।

अत्र व्यवहारान् स्वयम्पश्येत्सभ्यैः परिवृतोऽन्वहमित्यनेनैव याज्ञवल्क्येन विहितस्य व्यवहारदर्शनस्यानुवादो ब्राह्मणसाहित्यादि विधानार्थः। ब्राह्मणग्रहणं क्षत्रियादिव्युदासाय।

सहयुक्तेऽप्रधान इति व्याकरणस्मृतेः।
सहार्थे तृतीयया तेषामप्राधान्यं गम्यते इति॥

तत्प्रयोजनमदर्शनान्यथादर्शनयोर्नैतेषां दोषः। किन्तु राज्ञ एवेति बोधनम्। धर्मशास्त्रानुसारेणेत्यनेनैव क्रोधलोभविवर्जिते सिद्धे तद्वर्जनोपादानं क्रोधलोभाभ्यामदर्शनान्यथादर्शनयोर्दोषातिशयप्रदर्शनार्थम्। न च क्रियानुवादेनानेकगुणविधाने वाक्यभेदः। दर्शनकर्त्तृतया वाक्यान्तरप्राप्ते तावद्विशेषणवैशिष्टस्यैकार्थस्य बोधनात्तदनापत्तेः। पौरुषेयवाक्ये तात्पर्यानुरोधेन तस्यादोषत्वाच्च। ननु सर्वे-

ऽपि व्यवहारदर्शनविधयो न तावत्केवलादृष्टार्थः। प्रजापालनौपयिकदुष्टादुष्टपरिज्ञानस्य दृष्टस्यावश्यकत्वात्। अतएव विज्ञानेश्वरः। अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनम्परमो धर्मस्तच्च दुष्टनिग्रहं विना न सम्भवति। तत्परिज्ञानञ्च व्यवहारदर्शनं विनेति व्यवहारदर्शनमहरहः कर्त्तव्यमित्युक्तम्। व्यवहारान् स्वयं पश्येदित्यादि। नच तदेव फलमिति वाच्यम्। स्वर्गादिफलस्यादर्शनान्यथादर्शनयोः प्रत्यवायस्य वचनान्तरैर्बोधनात्। तथाच कात्यायनः।

सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः॥ इति

अत्र ब्राह्मणपुरोहितशब्देन अनियुक्तानान्तेषां ग्रहणम्। सभ्यशब्देन नियुक्तानाम्। वृहस्पतिरपि।

विप्रो धर्मद्रुमस्यादिः स्कन्धशाखे महीपतिः।
सचिवाः पत्रपुष्पाणि फलं न्यायेन पालनम्॥
यशोवित्तं फलरसो भोगोपग्रहपूजनम्।
अजेयत्वं लोकपंक्तिः स्वर्गे स्थानञ्च शाश्वतम्॥
विदित्वैतान्न्यायरसान् समो भूत्वा विवादिनाम्।
त्यक्तलोभादिकं राजा धर्मंकुर्य्याद्विनिर्णयमिति॥

न्यायरसान् व्यवहारदर्शनफलानि। प्रत्यवायोऽपि मनुनोक्तः।

विद्धो धर्मोह्यधर्मेण सभां यत्रोपतिष्ठते।
शल्यं चास्य निकृन्तन्ति विद्धास्तत्र सभासदः॥
पादोऽधर्मस्य कर्त्तारम्पादः साक्षिणमृच्छति।
पादः सभासदः सर्वान् पादो राजानमृच्छति॥

कर्त्तृसमपापा: सर्वे भवन्तीति तात्पर्य्यम्। नन्वन्यपापस्यान्यत्र संक्रमसम्भव:। नारदोऽपि।

न्यायमार्गादपेतन्तु ज्ञात्वा चित्तं महीपते:।
वक्तव्यं तत्प्रियन्नात्र न सभ्य: किल्बिषी भवेत्॥

तत्प्रियं न वक्तव्यं राज्ञ: मनोऽनुकूलमेव न वाच्यम्। किन्तु न्याय्य एवं सति सभ्यो न किल्बिषी भवेदिति नञ्द्वयान्वय:।

अधर्मत: प्रवृत्तन्तं नोपेक्षेरन् सभासद:।
उपेक्ष्यमाणा: सनृपा नरकं यान्त्यधोमुखा:॥
अन्यायेनापि तं यान्तं येऽनुयान्ति सभासद:।
तेऽपि तद्भागिनस्तस्माद्बोधनीय: स तैर्नृप इति॥

मनु:। राजा भवत्यनेनास्तु मुच्यन्ते च सभासद:।
एनो गच्छति कर्त्तारन्निन्दार्हो यत्र निन्द्यत इति॥

किञ्च दृष्टापरिज्ञानोपायेष्वनेकेषु प्राप्तेषु विधावस्मिन्नभ्युपगम्यमानेऽयं नियमविधि:। स्वर्गादिफलप्रत्यवायपरिहारयो-र्भव्यत्वेऽपूर्वविधिरिति वैरूप्यञ्चापद्यते। व्यवहारदर्शनमात्रोपायकत्वं यदि दृष्टादृष्टपरिज्ञानस्य तर्हि तदर्थतयाऽनुष्ठानार्थतया ज्ञानस्येति विधिर्व्यर्थ:। अथ यथा भट्टसोमेश्वरेणानुष्ठानं विनाभूतस्यापि ज्ञानस्य विध्यधीनाङ्गत्वनिर्वाहाय यदेव विद्ययेत्यादि वाक्येन कर्मार्थतया विधिरभ्युपगतो यथाच मिश्रादिभिर्लिङ्गादेवाङ्गत्वं ज्ञानस्येत्युक्तम्। तथा व्यवहारदर्शनस्य तदविनाभावेऽपि विधिरभ्युपेयताम्। नैवं कर्मानुष्ठानस्यापूर्वसाधनत्वा-त्तात्पर्य्यवसायिज्ञानविधिरविनाभावेऽप्यस्तु। दृष्टादृष्टपरिज्ञानस्य तु तदभावान्नाङ्गापेक्षेति

वैषम्यम्। नचास्यापि प्रजापालनमदृष्टार्थमुपकुर्वतः परम्परयास्येवापूर्वपर्य्यवसानमित्यस्याङ्गत्वार्थम् एव विधिरिति वाच्यम्। एवमपूर्वपर्यवसायिविधिसम्भवेऽपि श्रुत्याद्यभावेऽनारभ्यविधेरङ्गत्वाबोधकत्वात्। अन्यथाध्ययनाध्यापनयोरप्यङ्गत्वापत्तेः। ज्ञानस्य तु वाक्यादेवाङ्गत्वं यदेव करोतीति श्रवणात्। येन कर्मणेच्छेत्तत्र जयाञ्जुहुयात्।

एवं विनायकम्पूज्यग्रहांश्चैव विधानतः।

कर्मणां फलमाप्नोति इति च श्रवणाज्जपहोमविनायकस्नपनग्रहयज्ञानामिव शूद्राद्यधिकारनिवृत्तिश्च तद्विधिबोधिताध्ययनोपायकज्ञानाग्निलाभ उपायान्तरस्य ज्ञानाग्निद्वारकक्षेपप्रतिक्षेपात्। प्रजापालनं परं ज्योतिष्टोमाद्यपूर्वमेव स्वफलापूर्वञ्जनयतीत्यन्यदेतत्। अत्र ब्रूमः। व्यवहारदर्शनोत्पत्तावेव विधेस्तात्पर्य्यम्। अन्ये तु विधयस्तस्य निमित्तफलोपाधिभेदेनाधिकारविषयः प्रयोगभेदश्चाग्निहोत्रं जुहोतीत्युत्पन्नस्य यावज्जीवस्य अग्निहोत्रं जुहुयात्। अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यत्रेव। अतो न वैरूप्यादिदोषः। दृष्टार्थतया तु न विधिरयं प्रमाणान्तरसिद्धत्वात्तस्याः यद्यपि व्यवहारशास्त्रे न्यायसिद्धानुवादका एव प्रायो विषय इत्येतस्यापि तयात्वेन बाधकन्तथापि विधित्वे सम्भवत्यनुवादत्वमङ्गीकर्तुमनर्हम्। यत्र तु तदसम्भवस्तत्र तदेवाश्रियते व्यवहारशास्त्रत्वादिति सकलनिबन्धस्वरसायातः समाधिः दृष्टादृष्टपरिज्ञाने तु यद्युपायान्तरप्राप्त्या व्यवहारदर्शनस्य पाक्षिकत्वं तदास्य नियमविधित्वमेवाध्यापनादिविधीनामिवार्जनोपायतया तद्वदेवोपायान्तरादुर्जने प्रत्यवायकल्पनवदु-

पायान्तरात् दृष्टादृष्टपरीक्षया प्रजापालनेत्यवसेयम्। स्मृत्यादीनाञ्च त्रैवर्णिकचातुर्वर्ण्याधिकारिकत्वात्। म्लेच्छादीनां यथाकथञ्चिद्दृष्टादृष्टपरिज्ञानेन प्रजापालनेऽपि न क्षतिः। नचैवं प्रजापालनविधेरप्यभिषिक्तक्षत्रियाधिकारिकत्वादन्येषान्तत्र फलाभावेनाप्रवृत्तिः। दृष्टादृष्ट्यादि लाभार्थं कथञ्चित्प्रवृत्तावपि तस्माद्धर्म्माभावप्रसङ्गोऽन्यथा दर्शनादर्शनन्यायप्रवृत्त्यादिना प्रत्यवायाभावापत्तिश्चेति वक्तव्यम्। दयाहिंसादि साधारणधर्म्मान्तर्भावेण प्रजापालनस्य तेषामपि धर्मजनकत्वात्। नृपपदेन तत्संग्रहसम्भवाच्च । तस्मादयमत्र निष्कर्षः। उत्सर्गापवादादिमूलभूतान्वयव्यतिरेकादिन्यायमूलकता यत्र सम्भवति तादृशव्यवहारशास्त्रस्य सर्व्वस्य न मूलकता कल्प्यते । यदंशे तदसम्भवस्तत्रादृष्टार्थकतया वेद एव मूलं कल्प्यते। वास्तुसामुद्रिकादिविधिषु ज्योतिःशास्त्रायुर्वेदप्रामाण्यव्यवस्थापकप्रसङ्गेनाचार्य्यैः स्मृत्यधिकरणे व्यक्तमेव एतत्प्रपञ्चितम्। अतएवार्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिरित्युक्तम्। वचनविरोधे न्यायस्य बाधत्वादर्थशास्त्रस्य च तन्मूलकत्वात्। यत्तु स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारत इति वचनं तस्यायमाशयः। न्यायानुपष्टब्धस्मृत्यपेक्षया न्यायोपष्टब्धा स्मृतिर्बलवतीति न्यायानुपष्टब्धस्मृतेस्तात्पर्य्यान्तरकल्पना कार्य्येति। तस्य चोत्सर्गापवादविषय व्यवस्थाविकल्पादिरूपस्य न्यायस्य प्रत्यायकं हेतुमाह। व्यवहारत इति। वृद्धव्यवहारा-दन्वयव्यतिरेकादि रूपादनादि व्युत्पत्त्या परपर्य्यायान्न्यायो प्रत्येतव्य इत्यर्थः।

नारदोऽपि। धर्मशास्त्रविरोधे तु युक्तियुक्तोविधिः स्मृत इति।

धर्मशास्त्रयोर्विरोधे युक्तिर्न्यायः। न्यायपर्य्यालोचनाभावे सोपपत्तिकन्दोषमाह। बृहस्पतिः।

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो हि निर्णयः।
युक्तिहीनविचारे हि धर्म्महानिः प्रजायते॥
चोरोऽचोरः साध्वसाधु जायते व्यवहारतः।
युक्तिं विना विचारेण माण्डव्यश्चोरताङ्गतः॥
असत्यासत्यसदृशाः सत्याश्चासत्यसन्निभाः॥
दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत्।

साध्वसाधुरिति छान्दसः सुलोपः। साधुरसाधुरित्यर्थः। व्यवहारतो निर्युक्तिकात्। अर्थशास्त्रं चात्र धर्मशास्त्रान्तर्गतमेव नीतिव्यवहारशास्त्ररूपं गृह्यते। औशनसादर्थशास्त्रस्य धर्मशास्त्रानुसारिणेत्यनेनैव निरस्तत्वात्। विरोधोदाहरणन्तु।

हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरायत।

अतो यदेतत्प्राप्तावित्यर्थशास्त्रं धर्मशास्त्रानुसारेण क्रोधलोभविवर्जित इति धर्मशास्त्रम्। अनयोश्च क्वचिच्चतुष्पाद्व्यवहारे प्रवर्त्त्यमाने विरोध आपतति। कस्यचित्प्रमाणतः पराजयार्हस्य छलादिना जयेऽवधार्य्यमाणे सोऽत्यन्तमैत्रीयोग्यो मित्रं लभ्यते। अन्यस्य तदवधारणे धर्मलाभो धर्मपरिहारश्च सत्यवादित्वात्।

तत्र मित्रलाभमनपेक्ष्य धर्म एवानुरोद्धव्यः।

द्वयोः प्रमाणयोरेककर्तृकत्वेन तुल्यबलत्वेऽपि प्रमेययोरर्थधर्मयोर्धर्मस्य प्राबल्यात्। प्रमाणबलाबलवैपरीत्येऽपि प्रमेयबलाबलानुरोधेन तस्य बाध्यत्वेन शिष्टाक्षोपनयेव्यवस्थितत्वात्। किमुत समानबलाबलत्वे अतएव धर्म्मार्थसन्निपातेऽर्थग्राहिण

एतदेवेति धर्मविरुद्धार्थग्रहणं आपस्तम्बेनैतच्छब्दपरामृष्टं द्वादशवार्षिकं प्रायश्चित्तमुपदिष्टम् । केचित्तु ।

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति ॥

मन्युःक्रोधोमन्युं हन्ति न तु पुरुषः पुरुषान्तर मित्यर्थवादः ।
तथा । आततायिनमायान्त मपि वेदान्तिगं रणे ।

जिघांसन्तञ्जिघांसीयान्न तेन ब्रह्महा भवेत् ॥
जिघांसीयात् सन्नियाद्गच्छेदित्यर्थः इत्यादि ।
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥

धनग्रहणेन प्राप्तावपि पृथक् क्षेत्रग्रहणान्त्वल्पस्यापि क्षेत्रस्य शासनाद्यारूढस्य हर्त्ता धनस्य च बहुतरस्य येन वृत्तिच्छेद एव भवति तावतो हर्त्ताततायीति द्रष्टव्यम् ।

तथा । उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा ।
आथर्वणेन हन्ता च पिशुनश्चापि राजनि ॥

यदभिधानेनावश्यं प्राणात्ययो भवतीति तादृशपैशून्यस्य राजगामिनः कर्त्ता ।

भार्य्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः ।
एवमाद्यान् विजानीयात् सर्व्वानेवाततायिनः ॥

एवमाद्यामित्यनेन बधतुल्यस्वपीडाकारिण इत्युक्तम्भवति । उद्यतादिपदसमभिव्यहारात् प्रवृत्तक्रिया एवाततायिनो न

भूतभावि क्रिया। एतेषामाततायिनां बधे दोषाभावप्रतिपादकं वचनकदम्बकमर्थशास्त्रम्। आत्मरक्षणार्थत्वात्।

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्।
कामतो ब्राह्मणबधेर्निष्कृतिर्न विधीयते॥

इत्यादि धर्मशास्त्रम्।

दृष्टार्थत्वाभावात्। अनयोर्विरोधे सम्भवत्यपि आततायनाततायिविषयत्वेन सामान्यविशेषभावेन बाध्यबाधकभावविपर्यये धर्मशास्त्रत्वात्सामान्यशास्त्रमेव बलवत्। आततायिवधे दोषाभावप्रतिपादनन्तु कथञ्चिदन्यथात्मरक्षणासम्भवे आततायिबधमात्मरक्षणार्थं कुर्वतोऽनपराधत्वाद्राजदण्डाभावमात्रपरमर्थशास्त्रत्वात्। दुर्बलमित्युदाहरणमर्थशास्त्रधर्मशास्त्रयोर्बिरोधः स्यात्। अत्र विज्ञानेश्वरः। दोषाभावमाततायिबधे प्रतिपादयतां गुरुं वेत्यादिवचसां विध्यन्तरशेषत्वादपिशब्द वाशब्दादीनां विधिशक्तिप्रतिबन्धकानां श्रवणाच्च न स्वार्थपरत्वं किन्तु शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यत इत्युपक्रम्य।

आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे।
स्त्री विप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति॥ इति॥

आत्मरक्षणे दक्षिणादीनां यज्ञोपकरणानां रक्षणे युद्धे च स्त्री विप्रानुग्रहनिमित्तञ्चाततायिनमकूटशस्त्रेन घ्नन्दोषभागिति दण्डाभावमुक्त्वा तदर्थवादोऽयमुच्यते। गुरुम्वेत्यादि गुर्वादीनत्यन्तावध्यानप्याततायिनो घ्नतो नदोषः। किमुत तदन्यानिति कैमुतिकन्यायेन स्तुतिप्रतीतेर्न गुर्वादीनां

बध्यत्वप्रतीतिः। स्वार्थपरत्व एषां वचसां नाततायिवधे दोषोऽन्यत्र गोब्राह्मणादिति सुमन्तुवचनविरोधश्च। यच्च।

आचार्यञ्च प्रवक्तारं मातरं पितरं गुरुम्।
न हिंस्याद्ब्राह्मणान् गाश्च सर्वांश्चैव तपस्विनः॥

इति मनुवचनम्।

तदपि ब्राह्मणादिहननस्य वचनान्तरैरेव निषिद्धत्वादाततायिनामपि तेषां बधो न कार्य इति। अर्थकत्व एवार्थवदिति। तद्विरोधोऽपि गुर्वाद्याततायिबधस्य दोषो जनकत्वे। ननु गुरुं वेत्यादि वचसां त्वन्मते स्तुतिपरत्वेनाततायिबधदोषाभावा प्रतिपादकत्वादप्रसक्तदोषाभावप्रतिप्रसववैयर्थ्यमित्यनाततायिनामेव तेषां बधे दोषातिशयप्रतिपादनार्थत्वेन मानवस्यार्थवत्वमिति न तद्विरोध इति चेत्। मैवम्। यस्य मते तेषां वचनाना-माततायिबधे दोषाभावप्रतिपादकत्वं तं प्रति प्रतिप्रसवार्थत्वापादने विरोधपादने विज्ञानेश्वरतात्पर्य्यात् तर्हि तस्य भवन्मते दोषातिशयार्थत्वावश्यम्भावा-त्तन्मतेऽपि तथैवास्तु। क्वचिद्विरोध इति चेत्। भ्रान्तोसि। उभयत्र गुर्वाद्युपादाने विरोधप्रसक्ते-रपरिहार्यत्वात्। विज्ञानेश्वरमतेत्वर्थवादकल्पयो-रन्यगत्यसम्भवे हिंसानभिसन्धिनात्मरक्षणे प्रमादोपजात-गुर्वाद्याततायिभिन्नाततायिबधे राजदण्डाभावलघुप्रायश्चित्तयो गुर्वादिविषये अपवादार्थमनुवचनमित्यदोषः। वस्तुतस्तु शस्त्रं द्विजातिभिर्ग्राह्यमित्यनेनोक्तस्याततायिबधे दोषाभावस्य प्रायश्चित्तराजदण्डाभावयोश्चाचार्य्यादिविषयेऽपवादार्थं मानवम्। आततायिवधे दोषाभावश्च पलायनादिना केनापि प्रकारान्तरेणात्मरक्षणासम्भवे बोध्यः। अन्यथा वचनस्या-

दृष्टार्थत्वं हिंसादोषप्रतिपादकशास्त्रस्याततायिदोषेऽत्यन्तबाध-श्चेत्युभयमप्यन्यायमापद्येत। गुर्वादिविषयकदोषाभावस्य प्रति-पादकार्थवादस्य वा नाततायिगुर्वादिवधापेक्षयाततायि-तद्वधे दोषाल्पत्वप्रायश्चित्ताल्पत्वे राजदण्डाभावश्चेत्यलं वचनानि स्तुत्युपयोगिगुणवाद इति। अत्र भट्टभवदेवः।

स्वाध्यायिनं कुले जातं हन्यादेवाततायिनम्।

न तेन ब्रह्महा सः स्यान्मन्युस्तं मन्युमृच्छतीति॥

वसिष्ठवचनात्तदेकवाक्यतया वा शब्दादिश्रवणेऽपि गुर्वादि-वाक्यानां प्रतिप्रसवविधित्वमेव नत्वर्थवादत्वम्। नच सुमन्तु वचनेनाततायिवधदोषोऽन्यत्र गोब्राह्मणादित्यनेन विरोधः। सूत्रच्छेदापरिज्ञानात्। तथाहि। सूत्रत्रयमिदम्। आत-तायिवधेनेत्येकम् १। दोषोऽन्यत्रेत्यपरम् २। गोब्राह्म-णात्स्नातः प्रायश्चित्तं कुर्य्यादित्यन्यत् ३। तत्र ब्रह्मवधप्राय-श्चित्तमुक्त्वा यस्तैः सम्बन्धं कुर्य्यात्तस्याप्येतदेव प्रायश्चित्त-मित्यभिधाय सुमन्तुराह। आततायिनो ब्राह्मणस्य वधे कृते नप्रायश्चित्तमिति प्रथमस्य सूत्रस्यार्थः। दोषोऽन्यत्र। आत-तायिव्यतिरिक्ते दोष इति द्वितीयस्य। गो ब्राह्मणात् स्नातः प्रायश्चितं कुर्य्यादिति प्रायश्चित्ताङ्गस्नानविधायकम्। तत्र गो हेतुकं स्नानम्। व्यास आह।

श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु नित्यशः।

अभिषेकः समस्तेषाङ्गवां शृङ्गोदकस्य चेति॥

ब्राह्मणशब्देनात्र विधायकं वाक्यमुच्यते।

तद्धेतुकं स्नानमघमर्षणादिजपादिपूर्वकम्॥

द्वन्द्वैकवद्भावश्च गो ब्राह्मणादिति। तेन गो हेतुकब्रा-

ब्राह्मणहेतुकस्नानाभ्यां प्रायश्चित्ताधिकारी भवति न स्नानमात्रेणेति तृतीयस्येति। यदपि भविष्यपुराणवचनम्।

हत्वातु प्रहरन्तं वै ब्राह्मणं वेदपारगम्।
कामतोऽपि चरेद्वीर द्वादशाब्दाख्यमुत्तममिति।

तदपि नाततायिबधविषयम्। प्रहारशब्दस्य बधायकत्वात् तेनायमर्थः। यश्चक्षुराद्यवयवानाम्नकर्षेण हरणे प्रवृत्तेस्तद्वधेऽपि कामतोऽपि द्वादशवार्षिकमेव प्रायश्चित्तमित्यर्थ इत्याह। तदयुक्तम्। आचार्य्यं चेत्यस्य मानवस्योक्तयुक्तिबलादाततायि आचार्य्यादिवधे दोष प्रतिप्रसवार्थत्वस्या पापादित्वात्तदेकमूलतया सुमन्तवचनस्य मिताक्षरोक्तच्छेदेनैव व्याख्यातुमर्हत्वात्। त्वदुक्तच्छेदे दोषो ऽन्यत्रेत्यस्य वैयर्थ्यापत्तेश्च। गोब्राह्मणादित्यस्य स्नानहेतुत्वे पञ्चमीति व्याख्याने गोशब्दस्यावयविवाचकस्याऽवयवशृङ्गलक्षणायां लक्षितलक्षणापत्तेः। गोस्नानाहेतुत्वात्। ब्राह्मणस्य ज्ञापकहेतुत्वा द्गोश्च कारकाहेतुत्वस्य क्लिष्टस्य ग्रहणाद्वैरूप्यादिदोषप्रसङ्गाच्च। यदपि भविष्यपुराणीयवचनव्याख्यान-न्तत्त्वन्तवह्निमुद्रम्। ताडनादिबधपर्य्यन्तन्तद्देहपीडने रूढस्य प्रहरतेश्चक्षुराद्यवयवप्राकर्षणहरणे योगग्रहणस्य रथकारनयविपरीतत्वात्। किञ्च। चक्षुराद्यवयवोद्धरणप्रवृत्तब्राह्मणवधे कामकृतेऽपि द्वादशाब्दमेव ब्रह्मवधप्रायश्चित्तं नतु कामकृताऽन्य ब्रह्मवधवत्प्रायश्चित्तद्वैगुण्यं मरणान्तिकं वेत्यस्यैतद्वचनादिसंहितस्य प्रायश्चित्तह्रासप्रयोजकदोषाल्पत्वस्याततायित्वमेव निमित्तमन्यासम्भवाच्छस्त्रपाणित्वे-नाततायित्वन्तस्यैव सत्वाच्च। तथाच नाततायिविषय-

मिदमित्यसम्बन्धं आततायिन्यदोषोऽन्यत्र। गोब्राह्मणं यदा हन्यात् तदा प्रायश्चित्तं कुर्य्यात्।

शिखावानपि गोविप्रं न हन्याद्वै कदाचन।

इत्याभ्यां संवर्त्तभविष्यवचनाभ्यां विरोधस्य सर्वथादुष्परिहरत्वाच्च विध्यन्तरशेषभूतस्य विधिशक्तिप्रतिबन्धकापि शब्दादिमनोर्गुर्वादिवाक्यप्रतिप्रसवविधित्वस्याभ्युपगन्तुमशक्यत्वाच्च। नच विध्यशेषभूतानां वसिष्ठादिवचसामर्थवादत्वमसम्भवतीति गुरवेत्यादीनामपि नार्थवादत्वं विध्यन्तरशेषत्वा-त्तेषामर्थवादत्वेऽपि वास्मदभिप्रेतत्वार्थसिद्धेर्वचनान्तरैः परतन्त्रैरुरीकृतत्वान्नचतिरिति वाच्यम्। यतस्तेषामपि गोब्राह्मणाद्याततायिवधदोषप्रतिपादकबहुतरवचनान्तरविरोधाद्दोषाल्पत्वप्रतिपादकतैव तदेकमूलकता लाभायोचिता ऽन्यथा। दुःपरिहरत्वाद्विरोध स्येत्येतास्तु विस्तरः।

शूलपाणिस्तु। नाततायिवधे दोषात् किल्बिषं प्राप्नुयात् क्वचित्। विनाशार्थिनमायान्तं घातयन्नापराप्नुयादिति॥

वृहस्पतिवचनम्।

आततायिवधस्यादोषताप्रमाणत्वेनोपन्यस्य किल्बिषाभावः प्रायश्चित्तनिषेधार्थः। अपराधावस्तु दण्डनिषेधार्थ इति च व्याख्यापयतसर्वत आत्मानं गोपायेदिति श्रुतिमूलकमिदमतः पलायनादिनाप्यात्मरक्षणासम्भवपरमिति तत्तात्पर्य्यमुपवर्ण्य गुरवेत्यादि मन्वादिवचनान्यपि तदुपष्टम्भकतया प्रदर्श्य आततायिन्यदोष इत्यादिसंवर्त्तवचनं शिखावानित्यादिभविष्यवचनं च पूर्वोक्तन्तार्हविरोधित्वेनाशङ्क्यव्यवस्थामेव मुक्तवान्।

हन्त्रपेक्षया तपोविद्याजातिकुलैरुत्कृष्टो ब्राह्मणगुर्व्वादिराततायि न वध्यः। समोऽपकृष्टश्च वध्यः। तथा च कात्यायनः।

आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः।

वधस्तत्र तु नैव स्यात् पापं हि न वधेतु नेति॥

अतएव गीतायामुक्तम्।

पापमेवाश्रयेदस्मान् हत्वैतानाततायिन॥ इति॥

एतान् भीष्मादीनस्मत्तोऽत्यन्तोत्कृष्टा-नाततायिनोऽपि हत्वाऽस्मान् पापमेवाश्रयेदेवेत्यर्थः। उत्कृष्टाततायिहनानान्निवृत्तौ फलमप्युक्तं वृहस्पतिना।

आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम्।

यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेदिति॥

तेनोत्कृष्टाततायिवधनिवृत्तौ तद्वधप्रसक्तप्रत्यवायपरिहारोऽश्वमेधफलस्य संयोगपृथक्त्वानपायात्। यद्यपि गुरुं बहुश्रुतं हन्यादिति श्रूयते गुरोश्च शिष्यापेक्षयोत्कृष्टत्वमेवेति तत्र व्यवस्थेयं दुःखस्था तथापि गुरोरपि सकाशात् कुलविद्यातपः प्रभृतिभिर्गुणैः शिष्यस्याप्युत्कर्षः सम्भवतीति सुस्थैव तत्रापि व्यवस्थेयम्। गौरवाततायिनमविशेषेणावध्येति विरोधिवचनाभावात्। एतेषाञ्चाततायिता प्रयोजकव्यापारगोचरवर्त्तमान प्रवृत्तिकानामेव हन्तव्यानामप्याततायिनां हनने दोषाभावो नतु निवृत्तव्यापारकाणामपि।

उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते।

निवृत्तानान्तथारम्भाद् ग्रहणन्न वधः स्मृतः॥

इति कात्यायनवचनादिति। तदपि न चोदक्षमम्। तथाहि। न हिंस्यादिति निषेधावधारितस्य दोषस्य शस्त्रं

द्विजातिभिरित्यादिना आततायिविषये ऽपवादमभिधाय तद-र्थवादत्वेन गुरुं वेत्याद्युक्त्वा मनु सुमन्तुसम्वर्त्तभविष्यादिवचनै र्गोब्राह्मणादिविषये तत्प्रतिप्रसूयचरितार्थेषु सर्ववचनेषु का-त्यायनीयमाततायिनि चोत्कृष्टा इत्यादिवचोऽपि मन्वादिवच नोपात्ताचार्य्यब्राह्मणत्वाद्युत्कर्षमेवादाय तदेकार्थकमेवोचितं नतु तेषामुत्कृष्टाचार्य्यादिविषयकतया सङ्कोचकम्। तपः स्वा ध्यायजन्मत इत्यनेनापि ब्राह्मणत्वादि कृतोत्कर्षस्यैवोपलक्ष-णात्। किञ्चाततायिवधे दोषाभावस्य स्वोत्कर्षमात्रेणाप-वादस्तवाभिमतः। गीतास्यस्यैतत्पदस्य तदुपष्टम्भकत्वमधम-वर्णवध्यत्वमुत्तमवर्णाततायिनो वदतः। तथा च सामान्यतो ब्राह्मणत्वादिपुरस्कारेण तदपवादकवाक्यानामार्थक्यमेव स्यात् अस्योपसंहारविषयत्वात्। यत्र हि मित्रविन्दावत् द्वयोरर्थ-वत्त्वं तत्र सामान्यविशेषउपसंहारः स्वीक्रियते। अनुत्कृष्टतद्वधे-त्वया दोषाभावस्यैवाभ्युपेतत्वात्। गुरुं वेत्यादिबहुवचसां प्रति-प्रसवविधित्वेन त्वयाभ्युपेतानां कात्यायनीयैकवचोऽनुरोधेनो-त्कृष्टमात्रेणोपलक्षणत्वमानर्थक्यापरपर्य्याय एव। यद्वा गोत्व ब्राह्मणत्वादिनिमित्तप्रतिप्रसवे कृते कात्यायनीयमुत्कर्षनिमि-त्तदोषातिशयप्रतिपादकं भविष्यतीति समस्तवचनसामञ्जस्य-सम्भवे वचनस्वरसभङ्गाङ्गीकरणं भङ्ग्याङ्गीकरणमेव। उत्कृष्ट-वधनिमित्तो फलातिशयोऽप्यस्तु। संयोगपृथक्त्वात्। तत्रा-प्यश्वमेधपदमन्यानर्थक्यप्रसङ्गादविवक्षितमथवा तत्र श्रुतं ब्रह्म-हत्यातरणन्तज्जन्यपापक्षयरूपमत्रवधनिवृत्तौ तज्जन्यपापा-नुत्पत्तितादात्म्येनोपचर्य्यते। फलपदन्तु पक्षेऽस्मिन् न समञ्जसं निषिद्धनिवृत्तौ पापानुत्पत्तेः। फलत्वाभावादिति प्राच्यामेव

व्याख्यानं साधीयः। तारतम्येन वाक्यमेधफलमत्रापि भवतीति नान्यानर्थक्यमिति समाधेयम्। किञ्च। आततायिब्राह्मणादिवधस्यादोषता प्रतिपादकतया तवाभिमतेषु कात्यायनदेवलादिवचनेष्वपि वेदान्तगं भ्रूणमपीत्यादीनामुत्कर्षप्रतिपादकत्वात्। कथमुत्कर्षदोषपरं कात्यायनीयमाततायिनि चोत्कृष्ट इति वच-स्तद्विरोधसमाधानसत्त्वं स्यात्। यच्च देवलवचनं भवतोदाहृतम्।

उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्॥ इति।

भ्रूणः रक्तमब्राह्मणविशेषः। दोषप्रदर्शनं नियमार्थमिति व्याख्यातञ्च। तदन्यसम्बद्धम्।

न ह्याततायि-हनने दोषः कस्यापि सम्मतः।

किन्तु तद्धनने दोषाभावमात्रम्। तस्मादन्यथात्मरक्षणासम्भवे तदहननेस्वहत्यैव भ्रूणहत्याप्रसज्यत इत्यात्मरक्षणविधिप्राप्तानुवादमात्रमेतदिति व्याख्येयम्। तस्मादाततायिनि-चोत्कृष्ट इत्यादिकात्यायनवचनमस्मदुक्तरीत्या सुमन्तुसंवर्त्तादि वचः समानार्थतयोत्कर्षप्रयुक्तदोषातिशयपरतया वा वर्णनीयम्। ननु विरोधे व्यवस्थापकतयेत्यलमतिदूर गत्वा मम तु प्रतिभाति सत्यपि गुरुम्वेत्यादीनां प्रतिप्रसवविधित्वेन तेषामर्थशास्त्रत्वम्। अदृष्टदोषाभावस्याप्यदृष्टत्वेन दृष्टार्थत्वाभावात् न चात्मरक्षणमात्रार्थत्वेन तथा सति प्रायश्चित्तप्रसङ्गात्। न चेष्टापत्तिः। न तेन ब्रह्महा भवेत्। आततायिन्यदोषोऽन्यत्र गोब्राह्मणान् दाहन्यात् तदा प्रायश्चित्तं कुर्य्यात् पापमेवाश्रेदस्मानित्यादिषु पापतदभावयोश्च स्पष्टमवगमात्। तस्मात्

सर्वमतेऽप्यर्थधर्मशास्त्रविरोधोदाहरण-मिदमित्यसङ्गतमेवेत्यलं प्रसक्तानुप्रसक्तविचारप्रपञ्चेन। प्रकृतमनुसरामः। व्यवहार-दर्शनकालमाह कात्यायनः।

सभास्थानेषु पूर्व्वाह्णे कार्य्याणां निर्णयं नृपः।
कुर्य्याच्छास्त्रप्रणीतेन मार्गेणामित्रकर्षणः॥
दिवसस्याष्टमम्भागं मुक्त्वाभागत्रयन्तु यत्।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृत॥ इति।

अत्र सभास्थानेष्वित्यादिसर्वमनुवादः। कात्यायनेनैव वचनान्तरै-र्विहितत्वात्। पूर्व्वाह्णमात्रं विधेयन्तदपि दृष्टाय तदा बुद्धिप्रसादात् कार्य्यान्तराव्याहतत्वाच्च। तत्र विशेषो दिवसस्याष्टमं भागमित्यादिनोक्तः। अष्टमोभागः प्रथमप्रहरार्द्धम्। भागत्रयन्तदुपरमावर्त्तनात् प्राक्तनम्। अन्यथा पूर्व्वाह्णविधि-विरोधात्। प्रथमप्रहरार्द्धत्यागोऽपि नित्यहोमादिबाधपरि-हारौपयिकतया दृष्टार्थ एव। अत्र वर्ज्यास्तिथीराह। संवर्त्तः।

चतुर्दशीत्वमावस्यापौर्णमासी तथाष्टमी।
तिथिष्वासु नपश्येत्तु व्यवहारविचक्षणः॥ इति।

एतत्प्रतिषेधस्त्वदृष्टार्थ एव दृष्टासम्भवात्। भोजनाश्रित-दिगादिप्रतिषेधवत्। स्पष्टशास्त्रानुपलम्भे तु देशव्यवहारानु-रोध्येव निर्णयः। कार्य्य इत्यप्याह स एव।

तस्माच्छास्त्रानुसारेण राजा कार्य्याणि साधयेत्।
वाक्याभावे तु सर्वेषां देशदृष्टमतं नयेत्॥

अत्र पूर्व्वार्द्धमनुवादः। उत्तरार्द्धन्तु न्यायमूलकम्। मनुः।

जातिजानपदान्धर्म्मान् श्रेणिधर्मां स्तथैव च।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत्॥

जातिजानपदान्। जातिप्रयुक्तान् देशप्रयुक्तांश्च धर्मान्। श्रेण्यएकेककर्म्मोपजीविनो वणिक्कृषीवलादयः। स्वधर्मं राजप्रवर्त्तितं धर्मम्। मदनरत्ने तु स्वधर्मं दुष्टदण्डेन रूपमिति व्याख्यातम्। तदनुवादमात्रत्वापत्तेर्हेयम्। कुलधर्म्मलक्षणमभिहितम्। कात्यायनेन।

गोत्रस्थितिस्तु या तेषां क्रमादायाति धर्मतः।
कुलधर्मन्तु तं प्राहुः पालयेत्तन्तथैव तु॥

वृहस्पतिः। देशजातिकुलानां च ये धर्माः प्राक् प्रवर्त्तिताः।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा॥
जनापरक्तिर्भवति बलं कोशश्च नश्यति।
उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः॥
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः।
मत्स्यादाश्च नराः सर्वे व्यभिचाररता स्त्रियः॥
उत्तरे मद्यपानार्य्यः स्पृश्या नृणां रजस्वलाः।
खशजाताः प्रगृह्णन्ति भ्रातृभार्य्यामभर्तृकाम्॥
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः॥ इति।

सर्व इत्यनेन स्मृतिविरोध उक्तः। पूर्व इति कल्पतरौ-पाठः। तत्र पूर्वदेश इत्यर्थः। दमो दण्डः। यत्तु स्मृत्यन्तरेष्वेतत्कर्मकरणे प्रायश्चित्तदण्डस्मरणन्तदेतद्वचनानुपात्तदेशविषयमिति। मदनरत्नाकरः। वयन्तु प्रजाप्रक्षोभादिदृष्टदोषकथनाद्राज्ञा तत्र दण्डो न कार्य्य एव। प्रायश्चित्ताभावस्तु व्यवहारविषयः। परलोक-शुध्यर्थं प्रायश्चित्तं भवेदित्येवेति न स्मृत्यन्तरविरोधः। तत्तद्देशव्यापकश्रुतिस्मृतिविरुद्धाचरणे व्यवहारप्रतिबन्धिकाशक्तिस्तज्जन्यपापस्य नास्ति नरकजनिका-

स्त्र्येव। उपक्रमपर्य्यालोचनादेतावदर्थकतयैव चैतद्वचनोपपत्तौ सर्वथा दोषाभावकल्पनस्यानुचितत्वात्। अतएव आपस्तम्बेनोक्तम्। देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः। प्रमाणमिति।

येषां परम्परा प्राप्ताः पूर्वजैरप्यनुष्ठिताः।
त एव तैर्नदुष्येयुराचारान्नेतरे पुनरिति॥

नदुष्येयुरव्यवहार्य्या राजदण्ड्याश्च न भवेयुरित्यर्थः॥ अन्यथैतयोरेव वचनयोः परस्परविरोधो दुष्परिहारः स्यादिति ब्रूमः। यानि तु वचनानि व्यासः।

वणिक् शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु।
अशक्यो निर्णयो ह्यन्यै स्तदीयैरेव कारयेत्॥

बृहस्पतिः। कीनाशाः कारुकाः शिल्पिकुशीदिश्रेणिनर्त्तकाः।
लिङ्गिनस्तस्कराः कुर्य्युः स्वेन कर्मेण निर्णयम्॥

कीनाशाः कर्षकाः। कारूकावर्धक्यादयः। शिल्पिनश्चित्रकारादयः। कुशीदिनो वार्द्धुषिकाः। लिङ्गिनः पाशुपतप्रभृतयः। मनुः। आश्रमेषु द्विजातीनां कार्य्ये विवदतां मिथः।

न विब्रूयान्नृपो धर्मं चिकीर्षुर्हितमात्मनः॥
यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः।
सान्त्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत्॥

आश्रमेषु कार्य्ये। आश्रमसम्बन्धिनि कार्य्ये विब्रूयात्। विरुद्धवचनस्य सामान्यतएव प्रतिषिद्धत्वात्। प्रशमय्य कोपमपनीय।

बृहस्पति। तपस्विनान्कार्य्याणि त्रैविद्यैरेव कारयेत्।
माया योगविदाचैव न स्वयं कोपकारणात्॥

कोपकारणात्तेषां कोपप्रसङ्गात् । कात्यायनः ।

सम्यक् विज्ञान सम्पन्नेनोपदेशं प्रकल्पयेत् ।
उत्कृष्टजाति शीलानां गुर्वाचार्य तपस्विनाम् ॥

सम्यग्विज्ञान सम्पन्नेनेति तृतीयान्तं पदम् । तथा च तज्ज्ञानोत्कृष्टजातिशीलानां गुर्वाचार्य्यतपस्विनामुपदेशं प्रकल्पयेत् । कारयेत् । न स्वयमुपदेशं प्रकल्पयेत् । कारयेत् । न स्वयमुपदेशन्तेषां कुर्य्यादित्यर्थः । तानि नः सर्वथा राज्ञो व्यवहारदर्शनप्रतिषेधपराणि किन्तु तत्तत्कार्य्ये वणिकादीनामभियुक्तत्वात्तान्विहाय न व्यवहारनिर्णयः। करणीय इत्येवम्पराणि यथाहुः ।

अभियुक्ताश्च ये यत्र यन्निबन्धनियोजनाः ।
तत्र त्यगुणदोषाणान्त एव हि विचारकाः ॥ इति ।

तत्र तत्त्वमभियोगविशेषात् स्यादिति जैमिनिरपि साधुशब्दाधिकरणे सूत्रयामास । अतएव चिकीर्षुर्हितमात्मनः । सान्त्वेन प्रशमय्याकोपकारणादित्यादि हेतुप्रदर्शनम् । यथा तत्त्वावधारणं स्यानिष्टनिवारणञ्च भवति तथा कौशलेननिर्वाहनीयमित्यत्र तात्पर्य्यम् ।

अथ प्राड्विवाकलक्षणम् ।

विवादे पृच्छति प्रश्नं प्रतिप्रश्नन्तथैवच ।
प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥

इति बृहस्पतिः । व्यासोऽपि ।

विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः स्मृत इति ॥

गौतमेन तु बृहस्पतिवद्योगार्थः प्राड्विवाकशब्दस्य

दर्शितः। प्राड्विवाके वादिप्रतिवादिनौ पृच्छतीति प्राट्-ताभ्यामुक्तं सभ्यैः सह विविच्य वक्तीति विवाक इति वृह-स्पतिना। विचारयत्यभिधानाद्विविनक्ति इति विवाकशब्दस्य व्युत्पत्तिरुक्ता विवक्तीति विवाक इति। इति गौतमेन। नारदहारीतौ।

यथा शल्यं भिषक्कायादुद्धरेद्यत्नयुक्तितः।
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः॥ इति।

शल्यञ्च धर्मस्याधर्ममिश्रणम्। यथा च मनुः।

बिद्धो धर्मोह्यधर्मेण सभां यत्रोपतिष्ठते।
शल्यञ्चास्य निकृन्तन्ति विद्वांस्तत्र सभासद॥ इति।

अयञ्च राज्ञा स्वयं व्यवहारदर्शने क्रियमाणेऽस्य सहायः स प्राड्विवाक इति स्मरणात्। यदातु राजा कार्य्यान्तर-व्यग्रतया स्वास्थ्याभावेन वा स्वयं व्यवहारदर्शनासमर्थस्तदा तत्प्रतिनिधिः।

यदास्वयं न कुर्य्यात्तु नृपतिः कार्य्यदर्शनम्।
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने॥
सोऽस्य कार्य्याणि सम्पश्येत्सभ्यैरेव स्त्रिभिर्वृतः।
सभामेव प्रविश्याग्र्यामासीनः स्थित एव सः॥

इति मनुवचनात्। सभ्यग्रहणादमात्यादि निवृत्तिः त्रिग्रहणात्संख्यान्तरनिवृत्तिः। सभ्यानामिति स्मृति चन्द्रिका-कारः। तत्रदृष्टार्थत्वप्रसङ्गादयुक्तमित्युपलक्षणत्वमेव न्याय्यं अपश्यताह्यर्थवशाद्व्यवहारान्नृपेण तु।

सभ्यैः स ह नियोक्तव्यो ब्राह्मणः सर्व्व धर्मवित्।
इति याज्ञवल्क्यवचनाच्च।

यदा न कुर्य्यान्नृपति: स्वयं कार्यविनिर्णयम्।
तदा तत्र नियुञ्जीत ब्राह्मणं शास्त्रपारगम्॥
दान्तं कुलीनं मध्यस्थं मनुद्वेगकरं स्थिरम्।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितमिति॥

कात्यायनस्मरणाच्च। शास्त्रपारगं बहुशास्त्राभियोगशालिनम्। यथा च कात्यायन एव।

एकं शास्त्रमधीयानो न विद्यात्कार्यनिर्णयम्।
तस्माद्बह्वागम: कार्य्यो विवादेषूत्तमो नृपै:॥

एवम्विधब्राह्मणालाभे क्षत्रियं वैश्यं वा प्रतिनिदधीत न शूद्रम्। तथा स एव।

यत्र विप्रो न विद्वान् स्यात् क्षत्रियन्तत्र योजयेत्।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥

मनु:। जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुव:।
धर्मप्रवक्ता नृपतेर्न्नतु शूद्र: कथञ्चन॥
यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम्।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यत:॥

व्यास:। द्विजान्विहाय य: पश्येत्कार्य्याणि वृषलै: सह।
तस्य प्रक्षुभ्यते राष्ट्रं वलं कोशश्च नश्यति॥

इदं वचनं स्मृतिचन्द्रिकायाममात्यादि स्थानेऽपि शूद्रं वर्जयेत्। किमुत धर्मनिर्णय इत्येव परमुक्तम्। दोषातिशयकीर्त्तनात्। कल्पतर्वादिषु तु प्रकरणाद्व्यवहारदर्शन एव शूद्रवर्जकत्वेन लिखितम्। अयञ्च प्रतिषेधोऽदृष्टार्थ एव। राष्ट्रक्षोभादेरदृष्टद्वारकफलस्यैव सङ्कीर्त्तनात्। चण्डेश्वरेण तु शूद्रस्य धर्मज्ञानेऽपि वेदाविरोधप्रतिसन्धानविरहात्तत्प्रति-

सन्धानस्य च सम्यक् निर्णयोपायत्वात्। त्याग इति युक्तिरप्युक्ता। सा वणिगादिष्वप्यतिप्रसक्तेत्यन्वाचयमात्रं एते च सर्वे व्यवहारासम्बद्धाविति प्रतिषेधा अभिषिक्तक्षत्रियाधिकारिका-स्तत्स्थानापन्नान्याधिकारिकाश्च प्राड्विवाकादयस्त्वर्थार्थितया ऋत्विक् स्थानीयाः। स प्राड्विवाक इत्यादिना तेषां गुणभावावगमान्नियोगोक्तेश्च।

राजाभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः।

धर्म्मासनगतः पश्येद्व्यवहारा ननुल्बण इति प्रजापतिवचनात्। अत्र राजशब्दोऽवेष्ट्यधिकरणन्यायेन क्षत्रियजातिवचनः। अभिषेकसंयुक्त इति वचनात् स्मृत्यन्तरेऽप्यऽभिषिक्तक्षत्रियं प्रक्रम्य तदभिधानाच्चानभिषिक्तक्षत्रियस्य नाधिकारः। अतश्च तत्प्रयुक्तशुभाशुभफलयोस्तद्गामितैव। प्राड्विवाकादीनान्तु प्राक्प्रदर्शितेभ्यो न्यायेनापि तं यान्तमित्यादि वाक्येभ्यो राज्ञोऽनिवारणे परं दृष्टादृष्टदोषभागिता। अनियुक्तानान्तु न तत्रापीत्यादि मिताक्षरादौ व्यक्तं ब्राह्मणो वेत्यनुकल्पत्वाभिप्रायको वा शब्दो न तुल्यकक्षाधिकारपरः। अनुल्बणोऽनुद्धतः। सभापतिश्च नृपति रेव दुर्गमध्ये गृहं कुर्य्यादित्यादिना वृहस्पत्यादिभिः सभानिर्म्माणतद्रक्षणादेस्तत्र सभ्योपवेशनादेश्च तम्प्रत्येव विधानात्।

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति॥
अपि भ्राता सुतोऽर्घ्यो वा श्वसुरो मातुलोऽपि वा।
नादण्ड्यो नाम राज्ञोऽस्ति धर्म्माद्विचलितः स्वकात्॥

इत्यादिभिर्नित्यकामाधिकारयोस्तस्यैव ग्रहणात् प्रजापालनाधिकाराच्च।

अथ सभ्याः। तत्र योगीश्वरः।

श्रुताध्ययनसम्पन्नाः धर्मज्ञाः सत्यवादिनः।

राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समा इति॥

श्रुतेन मीमांसा व्याकरणादिश्रवणेन वेदाध्ययनेन च सम्पन्नाः धर्मज्ञाः सत्यवादिनः। सत्यवदनशीलाः रिपौ मित्रे च समाः द्वेषरागशून्याः एवंविधा सभासदः सभायां रुदसि यथा सीदन्ति यथादानमानसत्कारैः राज्ञा कर्त्तव्याः सभ्यत्वेन वरीतव्या इत्यर्थः। अतस्तेषामुपादेयत्वात् स्वाध्यायोऽध्येतव्यो यूपं छिनत्ति पुरोहितस्तं प्रकुर्व्वीतेत्यादिवत्सत्यपि कर्मत्वेऽनुद्देश्यत्वात् तद्गतैकत्ववद्बहुत्वं विवक्षितम्। यच्च यद्यपि कपिञ्जलनयेन त्रित्वमात्रेणापि चरितार्थस्तथापि स्मृत्यन्तरोक्तबहुत्वविकल्पपरम्। तथाच वृहस्पतिः।

लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा।

यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभेति॥

मनुना तु त्रय एवोक्ताः।

यस्मिन् देशे निषीदन्ति विप्रावेदविद स्त्रय इति।

अत्र त्रिभ्योऽन्यूनाः सप्तभ्योऽधिकाश्च न कार्य्या इत्यत्र तात्पर्यं सङ्ख्यावैषम्यन्तु भूयोऽल्पविरोधे भूयसां स्यात्। स्वधर्मत्वमिति न्यायेन विप्रतिपत्तावधिकसङ्ख्यावचनमादरणीयं गुणसाम्यैः। तद्वैषम्ये तु शतमप्यन्धाना न्नपश्यतीति न्यायेन गुणवत्तरवचनमेवेति प्रदर्शनार्थम्।

यत्तु चत्वारो धर्मज्ञाः पर्षत्त्रैविद्यमेव वा।
सा ब्रूते यं सधर्मः स्यादेको वा-ध्यात्मवित्तम इति॥

योगीश्वरेण विषमसङ्ख्यात्वमपि बहुत्वमपि चानादृतम्। तत्तु पूर्वोक्तानां धर्मकारकज्ञापकहेतूनां सन्देहनिर्णयविषयं प्रक्रमात्। व्यवहारविषये तु त्र्यवराणां विषयसङ्ख्यानामेव सभ्यत्वं विशेषविधानादित्यवसेयम्। एते च ब्राह्मणा एव।

मनु बृहस्पतिभ्यां विप्रपदो-पादानात्।
सतु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः॥

धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैरिति द्विजोत्तमपदस्य च कात्यायनेनोपादानात्। नारदः।

राजा तु धार्मिकान् सभ्यान्नियुञ्ज्यात्सुपरीक्षितान्।
व्यवहारधुरां वोढुं ये शक्ताः पुङ्गवा इव॥
धर्मशास्त्रेषु कुशलाः कुलीनाः सत्यवादिनः।
समाः शत्रौ च मित्रे च नृपतेः स्युः सभासद इति॥

पुङ्गवा इवेति स्मृतिचन्द्रिकायां पाठः। मदनरत्ने तु सद्गवा इति पठित्वा सद्गवा उत्तमवृषभा इति व्याख्यातम्। कल्पतरावपि सद्गवा इति एव पाठः। सब्राह्मणपुरोहितः स सभ्य इति पूर्वोदाहृतकात्यायनवचने ब्राह्मणानां सभ्यानाञ्च भेददर्शनान्नियुक्तानियुक्तविशेषेण गोबलीवर्दन्यायेन सभ्यानां ब्राह्मणानाञ्च राजसहायत्वं व्यवहारदर्शनेऽवगन्तव्यम्। याज्ञवल्क्यस्यापि।

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह।
श्रुताध्ययनसम्पन्ना इत्यादि वदतो भेद एवाभिप्रेतः॥

न च श्रुताध्ययनसम्पन्ना इत्यादि वदतो भेद एवाभिप्रेतः

न च श्रुताध्ययनसम्पन्ना इत्यादि पूर्ववाक्यविहितब्राह्मणानुवादेन विशेषणविधानमात्रमिति युक्तम्। तृतीयाप्रथमानिर्दिष्टानां विशेषणविशेष्यभावासम्भवात्।

तात्पर्य्यगत्या विशेषणविधिर्न्न शब्दरीत्येति चेत्।
न विद्वभिरित्यनेन श्रुतेत्यादेः पुनरुक्तत्वप्रसङ्गात्॥

कात्यायनसंवादलाभाच्च। भेदकन्तु नियुक्तानां राज्ञोऽन्यथाकरणे निवारणमावश्यकम्। अन्यायेनापि तं यान्तमिति पूर्व्वोदाहृत कात्यायनवचनेनानिवारणे दोषप्रतिपादनात्। अनियुक्तानान्त्ववचनान्यथा वचनयोरेव दोषो नतु राजा निवारणे।

अनियुक्तो नियुक्तो वा धर्म्मज्ञो वक्तुमर्हति।
दैवीवाचं स वदति यः शास्त्रमुपजीवति॥

इति वसिष्ठोक्तेः।

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्।
अब्रुवन्विब्रुवन् वापि नरो भवति किल्विषी॥

इति मनुक्तेश्च।

नियुक्तेषु सभा वा न प्रवेष्टव्येत्यसङ्गतेः।

नियोगः स्वीकारे सभाप्रवेशस्यावश्यकत्वादनियुक्तविषयमेवैतन्मनुवचनम्। यत्तु नारदेनोक्तम्।

नानियुक्ते न वक्तव्यं व्यवहारेषु किञ्चन।
नियुक्तेन तु वक्तव्यमपक्षपतितं वचः॥ इति।

तत्त्वनङ्गीकृतसभाप्रवेशो यदृच्छयाकायन्ति रभसाद्वा यश्चागतस्ताद्दशानियुक्तविषयं बोध्यमन्यथा मन्वादिवचनविरोधात्।

शान्तिकपौष्टिकाद्यर्थमिव व्यवहारदर्शनार्थं पुरोहितोऽपि राज्ञाधिकर्त्तव्य इत्याह व्यासः।

राजा पुरोहितं कुर्य्यादुदीर्णं ब्राह्मणं हितम्।
श्रुताध्ययन सम्पन्नमलुब्धं सत्यवादिनमिति॥

उदीर्णमुद्युक्तं हितमित्यनेन सभ्यापेक्षयाप्यस्योच्छृङ्खलप्रवृत्तिक राजानिवारणेऽधिको दोषस्तेन प्रसह्यापि तन्निवारणमनेनावश्यं कार्य्यमिति सूचितम्। अतएव वशिष्ठेन। राजापेक्षयापि दण्डव्यत्यये तस्य प्रायश्चित्तमधिकमभिहितम्। दण्ड्योत्सर्गे राजैकरात्रमुपवसेत् त्रिरात्रम्पुरोहितः। कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजेति। पुरोहितमिति चैकत्वं विवक्षितं पूगञ्छिनत्ति भार्य्यामुद्वहेदित्यादिवदुपादेयगतत्वात्। अथ सभ्यानां बलाबलम्। याज्ञवल्क्यः।

नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च।
पूर्व्वंपूर्व्वं गुरुज्ञेयं व्यवहारविधौ नृणामिति॥

नृपेण राज्ञाधिकृता व्यवहारदर्शने नियुक्ताः। पूगाः-समूहाः। भिन्नजातीनां भिन्नवृत्तीनामेकस्थानवासिनां ग्रामनगरादिस्थानाम्। श्रेणयो नानाजातीनामेकजातीयकर्म्मोपजीविनां सङ्घाताः। हेडावुकताम्बूलिककुविन्दचर्मकारादीनाम्। कुलानि ज्ञातिसम्बन्धिबन्धूनां समुदायः एतेषां यत्पूर्व्वं पूर्व्वंपाठक्रमेण प्रथमावगतन्तत्तद्गुरु बलवज्ज्ञेयं नृणां व्यवहारिणां व्यवहारविधौ व्यवहारनिर्णये कार्य्ये। उत्तरोत्तरनिर्णीतो व्यवहारः कुदृष्टबुद्ध्यार्थिप्रत्यर्थिनोरन्यतरस्यापरितोषे नृपाधिकृतपर्य्यन्तं परावर्त्तते। नतु पूर्वकृत उत्तरोत्तरनिकर इत्यर्थः। नारदेन पुनर्नृपाधिकृतनिर्णीतो

नृपसविधेपरावर्त्तत इत्युक्तम्। कुलानि श्रेणयश्चैव गणाश्चाधिकृता नृपः। प्रतिष्ठाव्यवहाराणां पूर्वेषामुत्तरोत्तरमिति॥ अत्र नृपग्रहणं प्राड्विवाकोपलक्षणं नृपाधिकृतापेक्षया तस्याधिकत्वात्। तथा च नृपाधिकृतकृतः प्राड्विवाकः सविधे तत्कृतश्च नृपसविधेपरावर्त्तत इत्यर्थः। तत्र नृपगमने सोत्तरसभ्येन राज्ञा पूर्वैः सह सपणव्यवहारे निर्णीयमाने यदि कुदृष्टवादी पराजितस्तदा द्विगुणमसौ दण्ड्यः। यदि जयति तदा पूर्वसभ्या दण्ड्या यथा शास्त्रन्तच्च वक्ष्यते। ननु पूगादीनां व्यवहारदृष्टत्वमेवासम्भावि। कुतस्त्यं बलाबलम्। तथा हि राजनियोगेन वा व्यवहारदृष्टत्वन्तेषां स्वतन्त्र्येण वा। नाद्यः सहायत्वेन प्रतिनिधित्वेन प्राड्विवाकस्य पुरोहितामात्यसभ्यानाञ्च सहायत्वेनैव नियोगविधानात्। न द्वितीयः प्रजापालनाधिकृतानामेव व्यवहारदर्शनाधिकारबोधनादन्येषां स्वातन्त्र्या-सम्भवात्। अथ पूर्व्वोपन्यस्तैर्वणिक्शिल्पिप्रभृतिष्वित्यादिभिर्व्यास इहस्त्यादिवचनैः पूर्व्वोपपादितरीत्यासहायत्वेन नियोगावगमात् वणिगादिव्यवहारदृष्टत्वं पूगादीनां राजनियोगेनैवेति मतन्तन्न। तथा सति राजप्राड्विवाकभिन्नानां तन्नैरपेक्ष्येण दृष्टत्वाभावा सर्वव्यवहारदृष्टत्वं प्राधान्येन व्यपदेशा भवन्तीति न्यायेन तयोरेवेति कुलादिदृष्टो व्यवहारः परावर्त्तत इत्यनुपपन्नन्तद्दृष्टत्वाभावात्। शूद्रं यत्नेन वर्जयेदिति निषेधात् पूगादीनाञ्च प्रायः शूद्रतदधमप्रतिलोमरूपत्वेन प्रतिनिधितयापि केवलानान्तद्द्रष्टृत्वाभावादिति। अत्रोच्यते। मास्तु तेषां व्यवहारदर्शने कैवल्यं तथापि वणिगादिव्यवहारे तेषामभियोगाद्राजादी-

नामपि तत्र तत्प्रत्ययेन निर्णायकत्वात् तत्कृतप्राधान्यमादाय तत्कृतत्वव्यपदेशसम्भवात् कुट्टष्टबुध्यापराहृत्य पुनर्व्यवहारप्रवर्त्तनाय बलाबलं तेषामनेन वचनेनोच्यते ऽन्यथास्य वचनस्य निर्विषयतापद्येत। वस्तुतस्तु। शूद्रं यत्नेन वर्जयेदित्यनेन प्रतिषिद्धप्रतिनिधिभावानामपि पूगादीनाम्पूगादिव्यवहारे प्रतिप्रसवः। प्रतिनिधिभावस्य व्यासादिवचनैरभियोगाविशेषात् क्रियत इति। प्राड्विवाकवत् कैवल्यमपि वक्तुं शक्यत इति न किञ्चिदनुपपन्नम्। बृहस्पतिस्त्वमुमेवार्थं स्फुटयति। तथा चाह।

राज्ञो ये विदिताः सम्यक् कुलश्रेणिगणादयः।
साहसन्यायवर्ज्यानि कुर्य्युः कार्य्याणि ते नृणाम्॥
कुलश्रेणिगणाध्यक्षाः प्रोक्तनिर्णयकारिणः।
येषामग्रे निश्चितस्य प्रतिष्ठाप्युत्तरोत्तरा॥
विचार्य्य श्रेणिभिः कार्य्यं कुलैर्यन्न विचारितम्।
गणैश्च श्रेण्यविख्यातं गणाज्ञानन्नियुक्तकैः॥
कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकःस्मृतः।
सर्वेषामधिको राजा धर्म्मं यत्नेन निश्चितम्॥
उत्तमाधममध्यानां विवादानां विचारणात्।
उपर्य्युपरि बुद्धीनाञ्चरन्तीश्वरबुद्धय इति॥

कुलादिपदार्था व्याख्याताः गणशब्दः पूगपर्य्यायः। आदिपदेन सभ्यादिग्रहणम्। नियुक्तकाः सभ्याः। साहसाख्यं व्यवहारपदम्। युक्तिस्वात्रेयम्। कुलादीनां ज्ञात्यादिरूपाणां दाक्षिण्यादिनान्यथा दर्शनमपि सम्भाव्यत इति कुट्टष्टत्वोद्भावकवचनेन राजादीनामसम्भवः श्रेणीनामुदासीनतया

ततो बलवत्ता। पूगानान्त्वेकस्थानवासमात्र सम्बन्धेऽपि भिन्न जातितया भिन्नवृत्तितया च ततोऽपि मिथोऽनपेक्षत्वादौ दाक्ष्याद्बलवत्वम्। नृपाधिकृतानान्तु ततोऽपि निःसम्बन्धतया राज्ञापरीक्ष्याधिकृतानां राजभयादपि पक्षपातदाक्षिण्याद्य सम्भव इति पूगेभ्यो बलवत्तरत्वम्प्राड्विवाकस्य पुरोहितामात्यानाञ्च सुतरां प्रागुक्तहेतुद्वयाधिक्यम्। नृपस्य साक्षादेव नृपाणां प्रजापालनाधिकारादिपक्षपातकीभूत दोषाधिक्यात् "अन्यायं कुरुते यदि पतिः कस्तं निरोद्धुं क्षम" इति न्याये प्रजाप्रक्षोभादिदृष्टादृष्टदोषभयादवश्यमपक्षपातता सम्भवतीति सर्वतो बलवत्तरत्वम्। बुद्धितारतम्यमपि बृहस्पतिवचने स्पष्टमिति। अथ केषाञ्चित् सभ्यभिन्नानामपि सभावस्थानन्निरूप्यते। कात्यायनः।

कुलशीलवयोवृत्तैर्वित्तवद्भिरमत्सरैः।
वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम्॥

अधिष्ठितं सद इति प्रक्रमात्। कुलभूतैर्वृद्धैरित्यर्थः। तेषामुपयोगश्चोक्तस्तेनैव।

श्रोतारो वणिजस्तत्र कर्त्तव्यादर्शित इति।

गणकलेखकसाध्यपालाख्याराजपुरुषाणामपि सभावस्थान माह। कार्य्यकथनमुखेन बृहस्पतिः।

नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ।
हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश॥
एतद्दशाङ्गकरणं यस्या मध्यस्थ पार्थिवः।
न्यायान् पश्येत्कृतमतिः सा सभा ध्वरसम्मिता॥
दशानामपि चैतेषां कर्मप्रोक्तं पृथक् पृथक्।

वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्य्यपरीक्षकाः ॥
स्मृतिर्विनिर्णयं ब्रूते जयदानन्दमन्तथा।
शपथार्थे हिरण्याग्नी अम्बुतृषितक्षुब्धयोः ॥
गणको गणयेदर्थं लिखेन्न्यायञ्च लेखकः ।
प्रत्यर्थिसभ्यानयनं साक्षिणाञ्च स्वपूरुषः ॥
कुर्य्यादलग्नकौ रक्षेदर्थिप्रत्यर्थिनौ सदा ।
एषां मूर्द्धा नृपोऽङ्गानां मुखं वाधिकृतः स्मृतः ॥
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ।
हेमाग्न्यम्बुदृशौ हृच्च पादौ स्वपुरुषस्तथेति ॥

अत्राधिकृताध्यक्षशब्दाभ्यां प्राड्विवाको गृह्यते। एतत् करणकं सभारूपं शरीरं दशाङ्गमित्यर्थः। यस्यां सभायां शरीरतुल्यायाम्पार्थिवः क्षेत्रज्ञ इवाध्यस्याधिष्ठानं कृत्वा। अनेन क्षेत्रज्ञः शरीरमिव साङ्गां सभां राजाधिष्ठाया-न्तर्य्यामिवत् सर्वचरितानि पश्यं स्तदनुरूपस्य फलस्य भोक्ता दाता च भवतीति सूचितम्। स्वपुरुषलक्षणं बृहस्पतिरेवाह।

अकारणे रक्षणे च साक्ष्यार्थिप्रतिवादिनाम्।
सभ्याधीनः सत्यवादी कर्त्तव्यस्तु स्वपूरुषः ॥

अयं च साध्यपालनामाशूद्र एव। तथा च व्यासः।

साध्यपालकस्तु कर्त्तव्यो राज्ञा साध्यस्य साधकः।
क्रमायातो दृढः शूद्रः सभ्यानाञ्च मते स्थित इति ॥

गणकलेखकौ चेदृग्गुणयुतौ कर्त्तव्यावित्याह बृहस्पतिरेव।

शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची।
नानालिपिज्ञौ कर्त्तव्यौ राज्ञा गणकलेखकौ ॥

व्यासोऽपि। त्रिस्कन्धज्योतिषाभिज्ञं स्फुटं प्रत्ययकारकम्।

श्रुताध्ययनसम्पन्नङ्गणकङ्कारयेन्नृपः॥
स्फुटलेखन्नियुञ्जीत शब्दलाक्षणिकं शुचिम्।
स्फुटाक्षरं जितक्रोधमलुब्धं सत्यवादिनम्॥

त्रिस्कन्धं होरागणितसंहिताख्यं त्रिभेदयुक्तं यज्ज्योतिःशास्त्रं तद्वेदिनम्। श्रुताध्ययनसम्पन्नमित्युक्तेर्गणको द्विजाति स्तस्माद्ब्रह्मचर्य्यल्लेखकोऽपि नृपः शास्तेति यदुक्तन्तदर्थदण्डवधदण्डयो राजकर्त्तृकत्वनियमार्थम्। वाग्दण्डधिग्दण्डौ तु प्राड्विवाकेनापि कार्य्यौ। दण्डप्राप्तधने वध्यवधे च राज्ञ एवाधिकारात्। वाग्दण्डधिग्दण्डयोस्तु दमनमात्रार्थत्वादनियमः। तथा च वादनिर्णयकृद्राजा ब्राह्मणश्च बहुश्रुत इत्यभिधायोक्तन्तेनैव

धिग्दण्डस्त्वथवाग्दण्डो विप्रायत्तौ तु तौ स्मृतौ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपीति॥

प्रतिष्ठिता प्रतिष्ठितसभास्थैस्तु सभ्यैर्निर्णयमात्रं कृत्वोपरमितव्यम्। पूर्ववचनात् क्वचिदपि दण्डे तेषामनधिकारात्। सर्वरञ्जकः सभास्तारोपि व्यासेनोक्तः।

अर्थिप्रत्यर्थिनौ सभ्याल्लेखकः प्रेक्षकाश्च यः।
धर्मवाक्ये रञ्जयति सभास्तारयितामियात्॥
अयञ्च चातुर्वर्ण्ये यः कश्चिद्विशेषानभिधानात्।
स्मृतिचन्द्रिकाकारमते तु शूद्रं यत्नेन वर्जयेदिति॥
यत्नग्रहणाद्दोषातिशयकीर्त्तनाच्च त्रैवर्णिक एव।

अथादेयानादेयाख्य व्यवहारविवेकः।

याज्ञवल्क्यः। मत्तोन्मत्तार्त्त व्यसनि बालभीतादियोजितः।
असम्बद्धकृतश्चैव व्यवहारो न सिद्ध्यति॥

मत्तो मदनीय द्रव्येण उन्मादेन वा पित्तश्लेष्मसन्निपातग्रह-सम्भवेनोपहृष्ट उन्मत्तः। आर्त्तः व्याधिविकलः। व्यसनमि-ष्टवियोगानिष्टसम्बन्धजनितं दुःखन्तद्वान् व्यसनी। बालोऽप्रा-प्तव्यवहारः। भीतो भयाकुलः। आदिग्रहणाच्चित्तविक्षेपका-रणानामन्येषामप्युपसंग्रहार्थम्। एतैर्योजितः कृतो निर्णीत इति यावत्। एतैः सह योजित इति वा। एते यत्रार्थिप्रत्य-र्थिभावमापन्ना इत्यर्थः। तथा सम्बन्धकृतोऽपि। अर्थिप्रत्यर्थि सम्बन्धरहितै स्तदीयचेष्टितानभिज्ञैः कृतो निर्णीतस्तैः सह कृतो वा व्यवहारो न सिद्ध्यति कृतोऽपि निवर्त्तते। प्रवृत्तश्च तादृशैः सह निर्णयत्वेन नोपादेय इत्यर्थः। नचा सम्बद्धत्व-मुदासीनत्वं सभ्यानां गुण एव। अनुदासीनेषूपाधिसम्भवात्। अतएव रिपौ मित्रे च ये समा इत्युक्तमिति वाच्यम्। असम्बद्ध पदस्य देशादिसम्बन्धराहित्यपरत्वात्। व्यवहारनिर्णयस्य च देशाचाराद्यनुरोधित्वात्। तथा च तदानभिज्ञनिर्णीत-स्तदनभिज्ञार्थप्रत्यर्थिको वेत्यर्थः। पर्य्यवस्यति द्वितीयव्याख्या-नेतु सम्बन्धाभावनिश्चये संशयाभावेन तादृशव्यवहारस्यानुपा-देयत्वौचित्यात्।

पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः॥

इत्यस्याप्ययमर्थः। पुरराष्ट्रविरुद्धो यत्र नगरे राष्ट्रे च या व्यवस्था पुरातनी तद्विरोधापादको व्यवहारो नादेयः। पौर-जानपदक्षोभापादकत्वात्। केनचिन्निमित्तेन प्राचीनोऽपि राज्ञा स्वराष्ट्रे प्रतिषिद्धः सोऽपि राज्ञा स्वराष्ट्रे प्रतिषिद्धः सोऽपि राजाज्ञाभङ्गप्रसङ्गान्नाङ्गीकर्तव्य इति। यत्तु स्मरन्ति।

गुरोः शिष्ये पितुः पुत्त्रे दम्पत्योः स्वामिभृत्ययोः ।
विरोधे तु मिथस्तेषां व्यवहारो न सिद्ध्यतीति ॥

तत्तु गुरुशिष्यादीनामन्योन्यमात्यन्तिकव्यवहारानु पादानपरन्न भवति । तेषामपि धनिकाधमर्णत्वादिना व्यवहारनिवृत्तेरप्रत्यूहत्वात् । नच गुरुशिष्यत्वपितृपुत्त्रत्वादिप्रयुक्त व्यवहारानादेयतापरमिदमिति वाच्यम् । तादृशस्याप्यनादेयत्वे निर्णयाभाव प्रसङ्गेन युक्तिविरोधात् । नचा प्रसक्त्यानुवादमात्रमनादेयत्वाभिधानमिति युक्तम् । प्रसक्ते सत्वात् । तथा हि ।

भार्य्यापुत्त्रश्च शिष्यश्च शिष्ये भ्राता सहोदरः ।
प्राप्तापराधास्ताड्यास्युरज्ज्वा वेणुदलेन वा ॥
पृष्टतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन ।
अतोऽन्यथातु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ॥

शिष्यशिष्टिरवधेनाशक्तौ वेणुविदलाभ्यां तदनुभ्यामन्येन घ्नन् राज्ञा शास्य इत्यादिभि र्मनुगौतमादिवचनैः शिष्यस्य शासनप्रकारविशेषनियतमादानादिक्रमेण गुरुर्यदि महता दण्डेनोत्तमाङ्गे शिष्यं कोपावेशवशात्ताडयति तदा स्मृत्याचारव्यपेतमार्गेण गुरुणाधर्षितः । शिष्यो वैयात्याद्धर्मादिकरणं प्रविशति चेत्तद्दण्डपारुष्यरूपं व्यवहारपदन्नभवतीति वक्तुमनर्हम् । तथा दायभागप्रकरणे वक्ष्यमाणभूर्य्या पितामहोपात्तेत्यादिवचनानि पितामहोपार्जितभूम्यादौ पितापुत्त्रयोः साम्य साम्ये यदि पितामहोविषमविभागादि चिकीर्षति । तदा पितापुत्त्रयोर्दायभागाख्य विवादपदमादाय व्यवहारः प्रसज्यमानो नापह्नोतुं शक्यः । तथा ।

दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके।
गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति॥

इति वचनात्। दुर्भिक्षादिनिमित्तं विनैव यदि स्त्रीधनं भर्त्ता गृहीत्वा व्ययीकरोति। तथा च याच्यमानो विद्यमानधनोऽपि शापान्न प्रत्यर्पयति। तदृणादानपदमादाय जायापत्योरपि व्यवहारप्रवृत्तिः केन निरोद्धुं शक्या एवं स्त्रीपुंधर्म्माख्यविवादपदोपादानेन तु तयोरेव व्यवहार आवश्यकः। तस्यानन्यविषयत्वात् दृष्टादृष्टव्यवहारपदान्तर्गणना मन्वादिस्मृतिषून्मत्तप्रलपितमेव स्यात्। स्वामिभृत्ययोस्तु व्यवहारो वेतनादाननिरूपणे वक्ष्यते। गर्भदासादीनधिकृत्य च।

यश्चैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात्।
दासत्वात् स विमुच्येत पुत्रभागं लभेतचेति॥

नारदोक्तेस्तादृशानान्तेषान्दास्यादमोचने पुत्रभागादाने च स्वामिना सह विवादो दुर्वारः। तस्मादिदं वचनं गुर्वादिभिः सह शिष्यादीनां व्यवहारकरणे लोकद्वये न श्रेय इह निन्दावहत्वादमुत्र नरकजनकत्वादित्येतत्परमेव। राजादिभिस्तु नायमुचितो व्यवहारो लोकद्वयहानिकरत्वादिति निवार्यमाणा अपि शिष्यादयो न परितुष्यन्ति चेत्तदा तेषां यथा शास्त्रन्निर्णयकरणमदोष एव। गुर्वादिभिः सह व्यवहारः शिष्यादीनामनादेयो राज्ञेत्यभिधानात् पुत्राद्यनिवारणे परं दृष्टादृष्टदोष इति ध्येयम्।

गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ।
एतेषां समवेतानां व्यवहारो न विद्यते॥

इति मदनरत्नधृतवृहस्पतिवचनमप्येतदभिप्रायकमेव।

मदनरत्नकल्पतरुरत्नाकरेषु तु राजा यथा कथञ्चिदर्थमाकलय्य विवादोपशमं कुर्यात्। तत्तु प्रतितरलेखकपूर्वकं विचार्य कुर्य्यादिति व्याख्यातन्तदसत्। कथञ्चिदर्थानाकलने चतुष्पाद्व्यवहाराप्रवर्त्तनस्यावश्यकत्वात्। पूर्वप्रदर्शिततात्पर्यवर्णनमन्तरा गत्यभावात्।

एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्य जनस्य च।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः।

इति नारदवचनम्। तस्यापि भिन्नार्थैरनेकैरेकस्य युगपद्व्यवहारो नादेय इत्यर्थः।

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः।

एकघ्नतां बहूनाञ्चेत्यादि स्मरणाद्गणद्रव्यहारिण एकस्य बहुभिस्ताडितस्य वा गणेन ताडयितृभिश्च सहैकार्थे युगपदपि व्यवहारस्य युक्तत्वात्। भिन्नार्थैरपि क्रमेणापि व्यवहारादर्शनेन तत्तदर्थानिर्णयप्रसङ्गात्। प्रतिज्ञादोषा अपि वक्ष्यमाणा स्तादृग्व्यवहारानादेयत्व एव पर्य्यवस्यन्ति।

अथ सद्दृष्टकसभापतेः कार्य्यं निरूप्यते।

तत्रावेदयितुः प्रश्नप्रकारमाह। कात्यायनः।

काले कार्य्यार्थिनं पृच्छेत् प्रणतम्पुरतः स्थितम्।
किं कार्य्यं का च ते पीडा माभैषीर्ब्रूहि मानव!॥
केन कस्मिन् कदा कस्मात् पृच्छेदेवं सभागतम्।

एवं पृष्टः कार्य्यं यथा वेदयेत्तं प्रकारमाह। याज्ञवल्क्यः।

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तदिति॥

चेदित्यनेन यदि केनचिन्निमित्तेन स नावेदयेत्तर्हि न बलाद्वादये-दित्युक्तम्। तथा च मनुः।

नोत्पादयेत् स्वयङ्कार्य्यं राजानाप्यस्य पूरुष इति।

पितामहोऽपि।

नतु पश्येत् समुत्प्रेच्य स्वयं वा पुरुषेण वेति।

नारदोऽपि। नतु राजा वशित्वेन धनलोभेन वा पुनः।

उत्पादयेत्तु कार्य्याणि नराणामविवादिनाम्॥

तयोत्पन्नमपि कार्य्यं कार्यिणा तत्सम्बन्धिना वाऽनिवेदितं कथञ्चिदवगस्यापि न राजादिभिर्बलाद्वादनीयमित्यप्याह।

मनुः। नच प्रापितमन्येन ग्रसेदर्थं कथञ्चनेति।

अन्येनासम्बद्धेन कथञ्चन रागलोभादिना। अर्थं कार्य्यं ग्रसेत् स्ववशं कुर्य्यात्। अतएव पितामहः।

न रागेन न लोभेन न क्रोधेन न ग्रसेन्नृपः।

परैरप्रापितानर्थान्नचापि स्वमनीषयेति॥

परैः कार्यितत्सम्बद्धैः कार्यिसम्बन्धाः पुत्त्रभ्रात्रादयः।

यो न भ्राता नच पिता न पुत्त्रो न नियोगकृत्।

परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन्॥

इति नारदवचनात्।

अर्थिना संनियुक्तो वा प्रत्यर्थि प्रहितोऽपि वा।

यो यस्यार्थे विवदते तयो र्जयपराजयौ॥

इति कात्यायन वचनाच्च। पितामहोऽमुमर्थं स्पष्टमाह।

पिता माता सुहृद्वापि बन्धुः सम्बन्धिनोऽपि वा।

यदि कुर्य्युरुपस्थानं वादन्तत्र प्रवर्त्तयेदिति॥

यः कश्चित्कारयेत्किञ्चिन्नियोगात् येन केनचित्।

तत्तेनैव कृतं ज्ञेयमनिवर्त्त्यं हि तत् स्मृतमिति॥

अनिवेदितानां दानापवादमाह स एव।

छलानि चापराधांश्च पदानि नृपते स्तथा।
स्वयमेतानि गृह्णीयान्नृपस्त्वा-वेदकै र्विनेति॥

छलान्याह स एव।

पथिभङ्गोपराक्षेपी प्राकारोपरिलङ्घकः।
निपानस्य विनाशी च तथा चायतनस्य च।
परिखापूरकश्चैव राजच्छिद्र-प्रकाशकः॥
अन्तःपुरं वासगृहं भाण्डागारं महानसम्।
प्रविशत्यनियुक्तो यो भोजनञ्च निरीक्षते॥
विण्मूत्रश्लेष्मवातानां क्षेप्ता कामान्नृपाग्रतः।
पर्य्यङ्कासन बन्धी चाप्यग्रस्थाननिरोधकः॥
राज्ञोऽतिरिक्तवेषश्च विधृतः प्रविशेत्तु यः।
यश्चापद्वारेण विशेद वेलाया न्तथैव च॥
शय्यासने पादुके च शयनाशनरोहणे।
राजन्यासन्न-शयने यस्तिष्ठति समीपतः॥
राज्ञोविद्विष्टि-सेवीचाप्यदत्त-विहितासनः।
वस्त्राभरणयोश्चैव सुवर्णपरिधायकः॥
स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः।
अनियुक्तः प्रभाषी च नृपाक्रोशक एव च॥
एकवासा स्तथाभ्यक्तो मुक्तकेशोऽवगुण्ठितः।
विचित्रिताङ्गः स्रग्वी च परीधान विधूनकः॥
शिरःप्रच्छादकश्चैव च्छिद्रान्वेषण तत्परः।
आसङ्गी मुक्तकेशश्च घ्राणकर्णाक्षि दर्शकः॥

दन्तोल्लेखनकश्चैव कर्णनासाविशोधकः ।
छलान्येतानि पञ्चाशद्भवन्ति नृप सन्निधाविति ॥

राज्ञः शय्यायां शयनन्तदीयासनोपवेशनन्तत्पादुकारोहणमिति त्रीणि छलानि। वस्त्राभरणयो श्चैवेत्यत्रापि स्वयंग्राहेण परिधायक इति योज्यम्। परिधायपदं समासान्तर्गतमपि बुद्ध्या निष्कर्षणीयम्। स्मृतिचन्द्रिकाकारस्तु वस्त्राभरणयोश्चेत्यत्रादत्तग्राहक इति शेषमाह। तन्नेयम्। पूर्व-व्याख्यानेनोत्पत्तौ शेषाध्याहारस्यायुक्तत्वात्। मुक्तकेश इति द्विःपाठो संयतकेशमुण्डितकेशयोः समावेशार्थः । अपराधानाह नारदः ।

आज्ञा-लङ्घन-कर्त्तारः स्त्रीवधो वर्णशङ्करः ।
परस्त्री-गमनञ्चौर्य्यं गर्भश्चैव पतिं विना ।
वाक्पारुष्यमवाच्याय दण्ड-पारुष्यमेव च ।
गर्भस्य पातनञ्चैवेत्यपराधा दशैवत्विति ।

पदान्याह पितामहः ।

उत्कृत्ती शस्यघातीचाप्यग्निदश्च तथैव तु ।
विध्वंसकः कुमार्य्याश्च निधानस्योपभोजकः ।
सेतुकण्टक-भेत्ता च चेत्रसङ्करकस्तथा ।
आरामच्छेदकश्चैव गरदश्च तथैव च ।
राज्ञो द्रोहप्रकर्त्ता च तन्मुद्रा भेदक स्तथा ।
तन्मन्त्रस्य प्रभेत्ता च बद्धस्य च विमोचकः ।
भोगदण्डौ च गृह्णाति दानं विक्रयमेव च ।
पटहा-घोषणाच्छादी द्रव्यमस्वामिकञ्च यत् ॥

राजा वलीढद्रव्यञ्च यच्चैवाङ्गविनाशनम्।
द्वाविंशतिपदान्याहुर्नृपज्ञेयानि पण्डिता इति।

एतानि छलान्यपराधपदानि च राजा नावेदितान्यपि। स्वयङ्कयश्चित् ज्ञात्वा विचारयेत्। यदा तु स्वयं ज्ञातुमशक्त-स्तदास्तोभकसूचकद्वारा ज्ञात्वा विचारयेत्।

स्तोभकसूचकस्वरूपमुक्तं कात्यायनेन।
शास्त्रेण निन्दितन्त्वर्थ-मुख्यो राज्ञा प्रचोदितः॥
आवेदयति यत्पूर्वं स्तोभकः स उदाहृतः।
नृपेण विनियुक्तो यः परदोषा-नवेक्षणे॥
नृपस्य सूचयेज्ज्ञात्वा सूचकः स उदाहृत इति।

शास्त्रेण निन्दितञ्छलादिकम्। अर्थो मुख्यः प्रयोजनम् यस्य धनलाभप्रयोजनक इति यावत्। राजनियोगान-पेक्ष एव यः परापराधं राज्ञो निवेदयति। सः स्तोभको। यस्तु तन्नियोगेन निवेदयति स सूचको इत्यनयोर्भेदः। आवेदकेन चैव म्विधेन नावेदनं कर्त्तव्यमित्याहोशनाः।

सशस्त्रोऽनुत्तरीयश्च मुक्तकेशः सहासनः॥
वाहनस्थोऽथ वा स्रग्वी वदन्दण्डमवाप्नुयात्। इति

मुक्तकच्छ इति माधवीयपाठः। विनीतवेषो वदेदिति तात्पर्य्यम्। तदाऽऽवेदकवचनं लेखकः फलकादिषु राजाद्या-ज्ञया लिखेदित्याह नारदः।

रागादिना यदेकेन कोपितः करणे वदेत्।
तदोमिति लिखेत्सर्वं लेखकः फलकादिष्विति॥

करणे धर्माधिकरणे। ओमित्यनेन यथावेदितन्तथैव लिखेदित्युक्तम्। लिखनानन्तरं कृत्यमाह। कात्यायनः।

एवम्पृष्टः स यत् ब्रूयात् सभ्यै ब्राह्मणैः सह ।
विचार्य कार्य्यं न्याय्यञ्चेदाह्वानार्थमतःपरम् ॥
मुद्रां वा निक्षिपेत् तत्र पुरुषं वा समादिशेदिति ।

न्याय्यं न्यायादनपेतं मया जन्मान्तरेऽस्मै दत्तमृणं यन्न प्रत्यर्पयतीति इत्यादिवद्विचारायोग्यं यन्न भवतीत्यर्थः । तस्मिन्नावेदके पुरुषं साध्यपालनामानम् । आह्वानार्थमभियुक्तस्येत्यर्थात् । तथा च बृहस्पतिः ।

यस्याभियोगं कुरुते तत्त्वेनाशङ्कयाऽथवा ।
तमेवाह्वानयेद्राजा मुद्रया पुरुषेण वा ॥

उत्तरदाने तस्यैवाधिकारादितिभावः ।

कात्यायनः । अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसङ्गतेरिति । इतरस्याभियुक्तदेकार्थभिन्नस्य । असङ्गते-रसम्बन्धात् । अभियुक्तानामपि केषाञ्चिदनाह्वानमाह । स एव ।

अकल्पबालस्थविरविषमस्थक्रियाकुलान् ।
कार्य्यातिपाती व्यसनी नृपकार्योत्सवाकुलान् ॥
मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वानयेन्नृपः ॥

अकल्पो व्याधितः । विषमस्थः सङ्कटापन्नः । क्रियाकुलो नित्यनैमित्तिककर्म्मकरणव्यग्रः । कार्य्यातिपाती । यस्य तदानीमागच्छतो गुरुतरकार्य्यहानिः । व्यसनी । इष्टवियोगादिजन्यशोकवान् । मत्तो मदनीयसेवनेन च्युतमतिः । उन्मत्तो ग्रहाद्याविष्टः । प्रमत्त स्तदानीं सर्वत्रानवधानवान् । आर्त्तो-विषादवान् । भृत्यग्रहणमस्वतन्त्रोपलक्षणम् । अतएव ।

न्हीनपक्षां युवतिङ्कुलेजातां प्रसूतिकाम् ।
सर्ववर्णोत्तमाङ्कन्यान्तां ज्ञातिप्रभुका स्मृता ॥

इत्यवास्वतन्त्रस्त्रीणामाह्वानम्प्रतिषिध्य स्वतन्त्राणान्तासामाह्वानमाह। स एव।

तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः।
निष्कुला याश्च पतितास्तासा माह्वानमिष्यत इति॥

नारदः। निर्वेष्टुकामो रोगार्त्तो यियक्षु र्व्यसनेस्थितः।
अभियुक्तस्तथान्येन राजकार्य्योद्यतस्तथा॥
गवां प्रचारे गोपालाः शस्यावापे कृषीवलाः।
शिल्पिनश्चापि तत्कालं आयुधीयाश्च विग्रहे॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती।
विषमस्थाश्च नासाध्या नचैतानाह्वयेन्नृप इति॥

निर्वेष्टुकामो विवाहे उन्मुखः। एते च कालान्तर आह्वातव्याः। यदा तु तत्कालाह्वानमावश्यकं तदा पुत्रादि यत् प्रतिनिधयः। इदमाह बृहस्पतिः।

अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम्।
पूर्वोत्तरं वदेत् बन्धु र्नियुक्तो योऽथवा नरः॥

बन्धुः पुत्रादिस्तस्य परार्थवादित्वाभावात्।
नियुक्तस्य तत्त्वादेव। प्रतिनिध्याह्वानेन यदि न निर्वाहः कालातिपातासहत्वञ्च यत्र च प्रतिनिधिकरणप्रतिषेधस्तत्र यथा कथञ्चिदकल्पाद्याह्वानमाह स एव।

कालन्देशञ्च विज्ञाय कार्य्याणाञ्च बलाबलम्।
अकल्पादीनपि शनैर्यानैराह्वापयेन्नृपः॥
ज्ञात्वाऽभियोगं येऽपि स्यु र्वनेप्रव्रजितादयः।
तानप्याह्वापयेद्राजा गुरुकार्य्येष्वकोपयन्॥

गुरुकार्य्येषु आह्वापयेदिति सम्बन्धः।

निमित्तसप्तमी चेयम् । गुरुकार्यनिमित्तमाह्वापयेदित्यर्थः । अकोपन् सान्त्वयन् ।

प्रतिनिधिप्रतिषेधं क्वचिदाह कात्यायनः ।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमे ॥
अन्येषु चातिपापेषु प्रतिवादी न दीयते ॥
मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दातव्यः कर्त्तापि विवदेत् स्वयमिति ॥

पुनस्तेयग्रहणं सर्वथा तत्र प्रतिनिधिप्रतिषेधार्थमिति मदनरत्नाकरः पूर्वं स्तेयग्रहणं ब्रह्महत्यादिसन्निधानात् सुवर्णस्तेयपरमिति तु वयम्। प्रतिवादी वादिप्रतिवादिनोः प्रतिनिधि रीदृशेषु गुरुकार्येषु न ग्राह्यमित्यर्थः ।

राजाह्वानमतिक्रामतो दण्डो बृहस्पतिनोक्तः ।
आहूतो यत्र नागच्छेद् दर्पाद्बन्धुबलान्वितः॥
अभियोगानुरूपेण तस्य दण्डम्प्रकल्पयेत् ।
अभियोगभेदेन दण्डभेदस्तु कात्यायनेनोक्तः ।
आहूतस्त्ववमन्येत यः शक्तो राजशासनात् ।
तस्य कुर्यान्नृपोदण्डं विधिदृष्टेन कर्मणा ॥
हीने कर्म्मणि पञ्चाशत् मध्यमे तु शतावरः ।
गुरुकार्य्येषु दण्डः स्यान्नित्यं पञ्च शतावरः ॥

गुरुकार्येषु नित्यश्चाशक्त इति विशेषणादापन्नानागमने दण्डो नास्तीति कथितम् । व्यासेन तु स्पष्टमुक्तम् ।

परानीकहते देशे दुर्भिक्षव्याधिपीडिते।
कुर्वीत पुनराह्वानं दण्डेन परिकल्पयेत्॥
आपन्नात्वमत्वागमनासम्भवहेतुभूतं विवक्षितम्।

आवेदनाय जिगमिषता कृतावेदनेन वा कार्य्यान्तरवैयग्रादिना राजाह्वानविलम्बे राजशपथादिना प्रतिवादिनःप्रतिरोधश्च आसेधापरपर्य्यायः कार्य इत्याह कात्यायनः।

उत्पादयति यो हिंसान्देयम्वा न प्रयच्छति।
याचमानाय दौःशील्यादाकृष्यो ऽसौ नृपाज्ञया॥
आवेद्य तु नृपे कार्य्य मसन्दिग्धे प्रतिश्रुते।
तदासेधं प्रयुञ्जीत यावदाह्वानदर्शनमिति॥

प्रतिश्रुते विचार्यत्वेन निश्चिते प्रतिज्ञाते च।
नारदोऽपि। वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तञ्च तद्वचः।

आसेधयेद्विवादार्थी यावदाह्वानदर्शनमिति।

वक्तव्ये निर्णीतव्ये। आसेधस्य चातुर्विध्यमाह स एव।

स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा।
चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत्॥

स्थानासेधो यावन्निर्णयमस्मात् स्थानात्पदमपि न चलितव्यमित्यादिरूपः। कालासेधः एतावन्तं कालं कार्यान्तरं न करणीयम निर्णीयाऽमुं व्यवहारमितीदृशः। निर्णयावधि विदेशगमन मकार्यन्त्वयेत्येवं विधः प्रवासासेधः। देशकालावधिरहितो निर्णयसात्रावधिकः स्नानादिकर्मनिरोधः कर्म्मासेधः क्वचिदासेधनिषेधस्तेनैवोक्तः।

नदीसन्तारकान्तारदुर्देशोपप्लवादिषु।
आसिद्धस्तम्परासेध मुत्क्रामन्नापराध्नुयात्॥

आसिद्धस्यापराधाभावमुखेन निषेध उक्तः । दुर्दशेति माधवीयपाठो दुर्दशा दुरवस्थेति तत्त्वार्थः । अतएवासेधानर्हासेध एव प्रत्युत दण्ड उक्तः । कात्यायनेन । आसेधयं स्त्वनासेध्यं राज्ञा शास्य इति स्थितिरिति नारदोऽपि ।

यस्त्विन्द्रियनिरोधेन व्याहारोच्छादनादिभिः ।
आसेधयदनासेधैः स दण्ड्यो नत्वतिक्रमम् ॥

स एव । आसेधकाल आसिद्ध आसेधं योऽतिवर्त्तते ।
स विनेयोऽन्यथाकुर्वन् नासेद्धा दण्डभाग्भवेत् ॥

कात्यायनः । आसेधयोग्य आसिद्ध उत्क्रामन्दण्डमर्हति ।

अनासेध्या स्मृतास्तेनैव ।
वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिता ॥
विषमस्थाश्च ते सर्वे नासेध्याः कार्य्यसाधकैः ।
व्याध्यार्त्ता व्यसनस्थाश्च यजमानास्तथैव चेति ॥

निर्वेष्टुकाम इत्याद्याह्वाननिषेधप्रसङ्गेन आसेधकमपि नारदवचनं प्रागलेखि । वृहस्पतिरपि ।

शास्त्रोद्वाहोद्यतो रोगी शोकार्त्तोन्मत्तबालकाः ।
मत्तो वृद्धोऽभियुक्तश्च नृपकार्योद्यतो व्रती ॥
आसन्ने सैनिकः सङ्ख्ये कर्षको वापसंग्रहे ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैवचेति ॥

सङ्ख्ये युद्धे । वापसङ्ग्रह इत्येकवद्भावो द्वन्द्वे । तथा च वीजवापे तत्संग्रहे चेत्यर्थः । स्त्रियः सनाथाश्चेत्ययमपि द्वन्द्वः । स्त्रियः कुलस्त्रियः । अन्यासामाह्वानवदासेधेऽप्यविरोधात् । सनाथाः परतन्त्राः भृत्यादयः । स्वाम्याद्यनुमतिमन्तरेण न सेध्याः स्त्रिया सह रहसि स्थिताः ।

स्त्रीमनाथास्तत्काले नासेध्या इति तु पौलस्त्याः

आसेधस्य कालान्तरेऽपि सम्भवादनुचितदेशकालावस्था-स्वासेध कृतासेध्य पीडातिशयप्रसक्तौ वा नासेधः कार्य्यस्तादृ-शासेधे चासेध्या दण्ड्यो नासेध्यस्तदतिक्रमकरणाद्यथोचिता सेधे तदतिक्रमे स दण्ड्य इति सकलवचनतात्पर्य्यम् । अतएवा-र्थलिङ्गानामपि केषाञ्चिदासेधानां सेधनिमित्तानामप्रपञ्चनम् । राजपुरुषाय च साध्यपालनामकायाऽऽकृताह्वायकद्वारा भृति र्दापनीया देशकालाद्यनुसारेणेत्याह । कात्यायनः ।

एकाह द्व्यहाद्यपेक्षन्देशकालाद्यपेक्षया ।
दूताय साधिते कार्य्ये तेन भक्तम्प्रदापयेत् ॥
देशकालावयः शक्त्याद्यपेक्षम्भोजनं स्मृतम् ।
आकारकस्य सर्वत्र इति तत्त्वविदो विदुरिति ॥

आकारकस्याह्वानकर्त्तुः ।

अभियोक्त्रादीनामुक्ति क्रमः कात्यायनेनोक्तः ।
तत्राभियोक्ता प्राग्ब्रूयादभियुक्त स्त्वनन्तरम् ॥
तयो रन्ते सदस्यास्तु प्राड्विवाकस्ततः परम् ।

सभ्यप्राड्विवाकयोरिदम्पश्चादभिधानमनुयोगादिव्यतिरिक्त-प्रत्याकलितादिविषयक वचनपरमनुयोगादीनाम्प्रागेव तत्-कर्त्तव्यत्वादित्यवधेयम् । प्राग्ब्रूयात् प्रतिज्ञां वदेदित्यर्थः । अभियुक्तस्त्वनन्तरमुत्तरं ब्रूयादिति । वादिप्रतिवादिनोर्ध-र्माधिकरणम्प्राप्तयोः प्रतिभूः सभ्येन सभापतिना ग्राह्य-इत्याह । याज्ञवल्क्यः ।

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।

उभयोरर्थिप्रत्यर्थिनोः प्रतिभूस्तत् स्थाने प्रतिभवति तद्व-

ह्नवतीति प्रतिभूर्लग्नकः कार्यनिर्णये निर्णयकार्य्ये साधितफलदाने पराजयनिमित्तदण्डदाने जिताद्राजग्राह्यभागदाने च समर्थः। शक्तो ग्राह्यो व्यवहारद्रष्टासभ्येनेत्यर्थः। आहिताग्न्यादिषु पाठात्कार्यशब्दस्य परनिपाताईस्यापि पूर्वनिपात इति विज्ञानेश्वरः। नासिकास्तनयोर्ध्माधेटोरिति भगवतः पाणिनेरित्यादिसूत्रप्रयोगात्पूर्वनिपातशास्त्रानित्यत्वज्ञापनात्। तुल्यास्य प्रयत्नं सवर्णमित्यादिसूत्रे प्रारम्भो यत्नस्य प्रयत्न इति वदता श्रीमता भगवता महाभाष्यकारेण षष्ठीसमासे षष्ठ्यन्तस्यापि क्वचित्परनिपातज्ञापनाद्वा। कार्यशब्दस्य परनिपात इति मदनरत्नकारः। तत्त्वनुशासनाभावे ज्ञापकानुसरणमन्यथा प्रसङ्गादित्ययुक्तम्। केचित्प्रतिभुवो न ग्राह्या इत्याह। कात्यायनः।

न स्वामी नच वै शत्रुः स्वामिनाधिकृतस्तथा।
निरुद्धो दण्डितश्चैव संशयस्थो न कुत्रचित्॥
नैव रिक्थी न रिक्तश्च न चैवात्यन्तवासिनः।
राजकार्यनियुक्ताश्च येच वै प्रव्रजिता नराः॥
नाशक्तो धनिने दातुन्दण्डं राज्ञे च तत्समम्।
नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति॥

रिक्थी भ्रात्रादिः। रिक्तो निर्धनः। अत्यन्तवासिनो नैष्ठिकब्रह्मचारिण इति मिताक्षरादिषु। अन्यत्र वासिन इति पठित्वा देशान्तरवासिन इति मदनरत्ने व्याख्यातम्। अविज्ञातो विशेषतोऽपरिचितः। याज्ञवल्क्यः।

भ्रातृणा मथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्तेन तु स्मृतम्॥

नारदः। साक्षित्वम्प्रातिभाव्यञ्च दानं ग्रहणमेव च।
विभक्ताः भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम्॥

इदमपि दृष्टार्थम्। तथा प्रतिभूभेदात् तत्कार्य्यस्य ऋणादानप्रस्तावे वक्ष्यते प्रतिभुवो यद्यलाभोऽर्थिप्रत्यर्थिनो रन्यतरस्य तदा किं कार्य्यमित्यपेक्षित आह कात्यायनः।

अथचेत्प्रतिभूर्नास्ति कार्य्ययोग्यस्तु विवादिनः।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्॥

भृत्याय राजपुरुषाय रक्षकाय साध्यपालाख्याय।
अत्रैकत्वमविवक्षितम्।

वादिन इत्युपलक्षणं प्रतिवादिनोऽपि।

अथव्यवहारपादाः प्रतिज्ञादयः प्रस्तूयन्ते॥
ते चत्वारः।

परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु।
वाक्यान्न्यायाद्यवस्थानं व्यवहार उदाहृतः॥
भाषोत्तरक्रियासाध्य सिद्धिभिः क्रमवृत्तिभिः।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयत॥ इति वचनात्।
बृहस्पतिः।

भाषापादोत्तरपादौ क्रियापादस्तथैव च।
प्रत्याकलितपादश्च व्यवहारश्चतुष्पद इति॥
कात्यायनोऽपि पूर्वपक्षश्चोत्तरपक्षश्च प्रत्याकलितमेव च।
क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः॥
बृहस्पतिः। मिथ्यायां चतुरः पादाः प्रत्यवस्कन्दने तथा।
प्राङ्न्याये च सतु ज्ञेयो द्विपात्सम्प्रतिपत्तिषु॥
तृतीयतुरीयपादयोः सम्प्रतिपत्तावसम्भवात् द्विपात्त्वमिति।

अत्र विज्ञानयोगिना। साध्यसिद्धिस्तु त्सिद्धौ सिद्धिमाप्नोति। विपरीतमतोऽन्यथेति योगीश्वरोक्ते जयपराजयावधारणं तल्लक्षणं चतुर्थपादः इत्यभिधायोत्तराभिधानानन्तरमर्थिप्रत्यर्थिनोः कस्य क्रिया स्यादित्यादि परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानुक्ते र्व्यवहर्तृसम्बन्धाभावाच्च न व्यवहारपादत्वमित्युक्तम्। अपरार्कस्तु साध्य सिद्धिपदेन प्रत्याकलितमेव व्याचख्यौ। यदाह। अत्र सिद्धिशब्देन सभ्यानामर्थि प्रत्यर्थि जयपराजयोपायभूतप्रमाणस्येदं शास्त्रतः प्राप्नोतीति विचारकाणां परामर्शप्रत्याकलितादिशब्दवाच्य उच्यते सिद्धिफलत्वादिति। प्रागुदाहृतं कात्यायनवचनञ्च तत्र सम्वादितवान्।

पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा।
क्रियापादस्तृतीयस्तु चतुर्थो निर्णयस्तथेति॥

वृहस्पतिवचनस्थं निर्णयफलकपरामर्शरूप प्रत्याकलितपरमेव निर्णयपदमुपचारादित्याह।

इतरथा पूर्व्वोदाहृत तद्वचनविरोधः स्यात्।

तत्र प्रतिज्ञावादिकः स्यादित्यपेक्षिते। नारदः॥ राज्ञे कुर्य्यात् पूर्वमावेदनं यस्तस्य ज्ञेयः पूर्ववादो विधिज्ञैरिति पूर्ववादः प्रतिज्ञा। पूर्ववादिकस्यैव प्रतिज्ञावादिनेत्यस्यापवादमाह। स एव।

यस्य वाभ्यधिका पीडा कार्य्यं वाभ्यधिकम्भवेत्।
तस्यार्थिवादो दातव्यो नयः पूर्वं निवेदयेत्॥

अर्थिवाद प्रतिज्ञा। वृहस्पतिः।

अहं पूर्विकया यातावर्थि प्रत्यर्थिनौ तथा।
वादो वर्णानुपूर्व्वेण ग्राह्यः पीडामवेक्ष्यचेति॥

मनुरपि। अर्थानर्थावुभौ बुद्ध्वा धर्म्माधर्म्मौ च केवलौ।
वर्णक्रमेण सर्वाणि पश्येत्कार्य्याणि कार्य्यिणाम्॥

ब्राह्मणादीनां युगपद्धर्म्माधिकरणं प्राप्तानां वर्णानुक्रमेण ब्राह्मणस्यादौ ततः क्षत्रियस्येत्येवमादिक्रमेण चतुष्पाद्व्यवहारः प्रवर्त्तनीयो राज्ञा पीडाधिक्यकार्य्यगौरवे चेदर्थिप्रत्यर्थिनोरन्यतरस्य तदा न पूर्व्वावेदनक्रमो नापि वर्णक्रमः। यदा तु सर्वे सवर्णास्तदा आवेदनक्रमः। युगपदावेदने समानवर्णत्वे समानपीडत्वे च सभ्यः सभापतीच्छयेति निर्गलितोऽर्थः।

प्रतिज्ञालक्षणमाह याज्ञवल्क्यः।

प्रत्यर्थिनोऽग्रतो लेख्यं यथा वेदितमर्थिना।
समा-मासतदर्द्धाह र्नामजात्यादिचिह्नितम्॥

अर्थ्यत इत्यर्थः साध्यः। सोऽस्यास्तीत्यर्थी। तद्विपरीतः प्रत्यर्थी तस्याग्रतः पुरतो लेख्यं लिखनीयं सभ्येन सभापतिना। यथा वेदितं पूर्व्वावेदनमनतिक्रम्य येन प्रकारेणावेदनसमये स्ववचनं लेखितं तथैव प्रत्यर्थिसमक्षमपि न पुनरन्यथा। तथासत्यन्यवादित्वेन भङ्गप्रसङ्गात्। अन्यवादीत्यादि हीनलक्षणे वक्ष्यते। प्रागेवार्थिना स्वप्रतिज्ञातार्थस्य लिखितत्वादधुना लेखनमनर्थकमित्याशङ्कानिरासायाह। समामासेति। संवत्सरमासपक्षतिथिवारार्थिप्रत्यर्थिनामतदीयजातिभिरादिशब्दोपात्तैश्च द्रव्यसङ्ख्या तज्जाति ऋणग्रहणादिस्थान वेलाक्षमालिङ्गादिभिर्यथोपयोगं चिह्नितमिति कार्य्यमात्रमावेदनकाले लिखितमधुनोपयुक्तविशेषण सहितं लिख्यत इति नानर्थक्यमिति भावः।

आदिशब्दग्राह्याणि च कात्यायन आह।
निवेश्य कालं वर्षं च मासम्पक्षन्तिथिन्तथा॥
वेलाम्प्रदेशं विषयं स्थानं जात्याकृती वयः।
साध्यम्प्रमाणं द्रव्यञ्च सङ्ख्यानामतथात्मनः॥
राज्ञां च क्रमशो नाम निवासं साध्यनाम च।
क्रमात्पितॄणां नामानि पीडामाहर्त्त-दायकौ॥
क्षमालिङ्गानि चान्यानि पक्षं सङ्कल्प्य कीर्त्तयेत्।

कालो धनप्रयोगादिकालः। वर्षं पत्रलिखनकालीनं मासपक्षतिथयोऽपि सन्ध्यावन्दनादिक्रियोपलक्षितः कालो-वेला। प्रदेशः क्षेत्रादिस्थलविशेषः। विषयोऽन्तर्वेद्यादिदेशः। स्थानंविवादास्पदीभूत गृहादि ग्रामादि आकृतिरवयवसंस्थानविशेषः। वयस्तारुण्यादि। प्रमाणं निवर्त्तनप्रस्थादि। आत्मनोराज्ञां च क्षेत्रादि-भोगकालीनं बहुवचनन्तदीयपित्रादि प्राप्त्यर्थम् निवासो निकटगृहादिः। पितरोऽर्थिप्रत्यर्थिनोः। पीड़ाप्रतिभूप्रभृतीनान्धनिकादिकृता। आहर्त्ताप्रतिग्रहादिविषयवस्तूनि आनेता दायको दातृविक्रेत्रादिः। क्षमालिङ्गान्यात्मीयधनादेः। परोपभोगाद्यपराधसहनचिह्नानि।

अन्यत् सुबोधं संग्रहकारोऽपि।
अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम्।
साध्यवद्वाचकपदम्प्रकृतार्थानुबन्धि च॥
प्रसिद्धमविरुद्धञ्च निश्चितं साधनक्षमम्।
संक्षिप्तन्निखिलार्थं च देशकालाविरोधि च॥
वर्षर्त्तुमासपक्षाहो वेलादेशप्रदेशवत्।

स्थानावसथसाध्याख्या जात्याकारवयोयुतम् ॥
साध्यप्रमाणं सङ्ख्यावदात्मप्रत्यर्थि नाम च ।
परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीड़ावत् कथिताहर्त्त-दायकम् ।
यदा-वेदयते राज्ञे तद्भाषेत्यभिधीयते ॥

इति अर्थवत् । प्रयोजनवत् । धर्म्मसंयुक्तम् । अल्पाक्षरप्रभूतार्थत्वादि गुणयुक्तम् । परिपूर्णमध्याहाराद्यनपेक्षम् । अनाकुलमसन्दिग्धाक्षरम् । साध्यवत् । साधनीयार्थयुतम् । वाचकपदम् । गौणलाक्षणिकपदरहितम् । प्रकृतार्थाविरोधि प्रागावेदितार्थेन सह सम्वादि प्रसिद्धं लोकप्रसिद्धमनतिक्रान्तम् अविरुद्धम्पुरराष्ट्रप्राड्विवाकराजाद्यविरुद्धम् । पूर्वापराविरुद्धं व्यवहारिकधर्म्माविरुद्धञ्च । निश्चितं संशयरहितम् । साधनक्षमम् । साधनार्हम् । सङ्क्षिप्तं शब्दाड़म्बरशून्यम् । निखिलार्थं निरवशेषवक्तव्यार्थप्रतिपादकम् । देशलोकाविरोधि । मध्यदेशीयममुकक्षेत्रम् । शरत्कालीननामकसहस्रं च मदीयमपहृतमित्यादिदेशकालविरोधविधुरम् । परात्मनोः प्रतिवादिवादिनो र्येपूर्वजाः पित्रादय स्त्रयः अनेके राजानः तत्तादिभुक्तिकालीनास्तेषान्नामभिरङ्कितं युक्तम् । अत्रार्थवत्वादीनि देशकालविरोधित्वमर्थिप्रत्यर्थिनाम वेति सर्वत्र भाषायामवश्यम्भावानि । तैर्विना साध्यनिर्देशासिद्धेः वर्षादीनि तु यत्र यावन्त्युपयुज्यन्ते तत्र तावन्त्येव निवेशनीयानि सर्वाणि सर्वत्र अदृष्टार्थत्वप्रसङ्गात् । तत्र वर्षादीनां कालानां वृद्धिधनद्वैगुण्यादिविवादेन प्रतिग्रहक्रयादिपौर्वापर्य्यवादे वोपयोगः। देशप्रदेशस्थाननामाह । हर्त्तदायकयो रात्मादिपूर्वजराजादिनाम्नां

च स्थावरक्षेत्रादिविवादेषु । साध्याख्या जात्याकारवयसां चौर्य्यादिस्वाम्यविक्रियादिविवादेषु । प्रमाणसंख्ययोर्मेयतुलितादिद्रव्यविवादे चौर्य्यादिविवादे च क्षमालिङ्गानामुपेक्षित परोक्षभुज्यमानभूम्यादिविवादे । आत्मपीड़ाया ऋणिकप्रतिभ्वादिविवादे एव मन्यदप्युन्नेयम् । अतएवाशयादाह ।

कात्यायनः । देशश्चैव तथा स्थानं सन्निवेशस्तथैव च ।

जातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च ।
पितृपैतामहश्चैव पूर्वराजानुकीर्त्तनम् ।
स्थावरेषु विवादेषु दशैतानि निवेशयेदिति ॥

एतेषां तत्रोपयोगित्वात् । हारितोऽपि ।

आसनं शयनं यानन्ताम्रं कांस्यं मनोमयम् ॥
धान्यमश्ममयं यच्च द्विपदश्च चतुष्पदम् ।
मणिमुक्ता प्रवालानि हीरका-रूप्य-काञ्चनम् ॥
यदि द्रव्यसमूहः स्यात् संख्या कार्य्या तदैव तु ।
यस्मिन्देशे च यद् द्रव्यं येन मानेन मीयते ॥
तेन तस्मिंस्तदा सङ्ख्या कर्त्तव्या व्यवहारिभिरिति ।
मानसंख्याशब्दावत्रान्योऽन्योपलक्षणम् ॥

अत्रैतावद्विवक्षितं यत्र यावदुपयुज्यते तत्र तावन्निवेश्यं भाषापत्रे । अन्यथा साध्यनिर्देशस्यापूर्वत्वात् पक्षाभासतापत्ते रधिकनिवेशाद्दृष्टार्थतापत्तेरिति । कात्यायनोऽर्थत एवाह ।

देशकालविहीनश्च द्रव्यसङ्ख्याविवर्जितः ।
क्रियमानविहीनश्च पक्षो नादेय इष्यते ॥

क्रिया प्रमाणम् । मानं साध्यपरिमाणम् । यद्यपि पूर्वो-

क्तपक्षलक्षणरहितानाम्पक्षाभासत्वमर्थसिद्धं तथापि नारदादिभिः स्पष्टार्थं प्रपञ्चितम्। तत्र नारदः।

अन्यार्थमर्थहीनञ्च प्रमाणागमवर्जितम्।
लेख्यहीनाधिकं भ्रष्टं भाषादोषा उदाहृताः॥

एतान् स एव विवृतवान्।

अर्थे साधारणेऽप्येको सम्बन्धोऽप्यनियुक्तकः।
लेखयेद्यत्तु भाषार्थमन्यार्थन्तं विदुर्बुधाः॥

गणकार्य्यमेको वा यद्यसम्बन्धी तदनियुक्तो वा लेखयेद्यस्यां भाषायामित्यर्थः।

ब्रह्महायमिति द्वेषात् क्रोधाद्वापि वदेत्तु यः।
साध्यं च मोचयेत्पश्चादर्थहीनान्तु तां विदुः॥

उक्तं साध्यवादिना यस्यान्त्यज्यते सा भाषार्थहीनेत्यर्थः।

गणिते तु लिखिते मेये तथा क्षेत्रगृहादिषु॥
यत्र सङ्ख्या न निर्दिष्टा सा प्रमाणविवर्जिता॥

सङ्ख्यानं सङ्ख्येति व्युत्पत्त्या सङ्ख्याशब्देन गणनतोलनं मानानां परिग्रहः।

विद्यया प्राप्तमर्थिं लब्धं क्रीतं क्रमागतम्।
नत्वेवं लिख्यते यत्र सा भाषा स्यादनागमा॥
समामास स्तथा पक्ष स्तिथिर्वारस्तथैव च।
यत्रैतानि न लिख्यन्ते लेख्यहीनान्तु तां विदुः॥

अवश्यं यद्यत्र पूर्वोक्तरीत्यालेख्यन्तद्रहितो लेख्यहीनेत्यर्थः।

लेखयित्वा तु तां भाषामनिर्दिष्टे तथोत्तरे।
निर्दिशेत् साक्षिणः पूर्वमधिकान्तां विनिर्दिशेत्॥

साक्षिण इति प्रमाणोपलक्षणम्।

व्युत्क्रमादत्वाधिक्यन्तेनाप्राप्तकालता फलिता।
यत्र स्यात्तु यथा पूर्वं निर्दिष्टम्पूर्ववादिना॥
सन्दिग्धमेव लेख्येन भ्रष्टाम्भाषान्तु तां विदुः।

उभयम्पूर्वमितिपाठे पक्षद्वयमपि प्रतिज्ञावादिनैव निर्दिष्टं स्यादित्यर्थः। कात्यायनः।

अप्रसिद्धं निराबाधन्निरर्थन्निष्प्रयोजनम्।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत्॥

अप्रसिद्धमाह। बृहस्पतिः।

न केनचित् कृतो यस्तु सोऽप्रसिद्ध उदाहृतः।
यथा। फलसहस्रकृष्टश्चेत्वमपहृतमिति॥

मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि प्रसिद्धमित्याह विज्ञानेश्वरः। बृहस्पतिना त्विदमसाध्योदाहरणमुक्तन्तच्च वक्ष्यते। निराबाधन्निरुपद्रवमस्मिन्मन्दिरे दीप्यमानदीपकप्रकाशेनायं स्वमन्दिरे व्यवहरतीति प्रभृति निरर्थमभिधेयहीनं मदीयङ्कचटतपञ्जवगडदशं गृहीत्वा न ददातीत्यादि विज्ञानयोगी। बृहस्पतिवचनात्त्वन्यथा निरर्थकपदार्थः प्रतीयते। यथाह।

स्वल्पापराधः स्वल्पार्थो निरर्थक इति स्मृत इति।

एतस्योदाहरणं स्मृतिचन्द्रिकायाम्। अहमनेन सस्मितमीक्षितः। मामकी शिखा तेनापहृतेत्यादीनि। निष्प्रयोजनं यथायं देवदत्तोऽस्मद्गृहसन्निधौ सुस्वरमधीत इत्यादि मिताक्षरा स्मृतिचन्द्रिकयोदाहृतम्। बृहस्पतिना तथैव लक्षितम्।

कार्य्यबाधा विहीनस्तु विज्ञेयो निष्प्रयोजन इति।

स एव प्रकारान्तरेणापि निरर्थनिष्प्रयोजनौ लक्षितवान्।

कुसीदाद्यैः पदैर्हीनो व्यवहारनिरर्थकः।
वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः॥

कुसीदस्वण दानन्तत्प्रभृतिभि श्चतुर्दशभिरर्थविषय व्यवहारैर्हीनो निरर्थकः। वाक्पारुष्यादिभिर्हिंसात्मकैश्चतुभिर्हीनो निष्प्रयोजन इत्यर्थः। अष्टादश पदाविषयः पक्षो दुष्ट इत्याशयः। असाध्यविरुद्धावाह स एव।

समानेन प्रदातव्यं शशश्टङ्गकृतन्धनु:।
असम्भाव्यमसाध्यन्तं पक्ष माङ्क मनीषिणः।
यस्मिन्नावेदिते पक्षे प्राड्विवाकेऽथ राजनि।
पुरराष्ट्रे विरोधःस्याद्विरुद्धः सोऽभिधीयत इति॥

मिताक्षरायामसाध्यविरुद्धावन्यथोक्तौ। देवदत्तेनाहं सभ्रूभङ्गमुपहसित इत्याद्यसाध्यसाधनासम्भवात्। अल्पकालत्वान्न साक्ष्यादिसम्भवोत्पन्नत्वान्न दिव्यमिति। मूकेनाहं शप्त इत्यादिविरुद्धमिति। पुरराष्ट्रादिविरुद्धमपि विरुद्धपदेन व्याख्याय राज्ञाविवर्जित इत्यादिस्मृत्यन्तरञ्च तदर्थतयोदाहृतन्तञ्च पूर्वमस्माभि रनादेयमव्यवहारनिरूपणे लिखितम्। अन्येऽपि पक्षाभासाः स्मृतिचन्द्रिकोदाहृतवचनोक्ता ज्ञेयाः।

यथा भिन्न क्रमोव्युत्क्रमार्थः प्रकीर्णार्थो निरर्थकः।
अतीतकालो विद्दिष्टः पक्षो नादेय इष्यते॥
यथास्थानानिवेशेन नैवपक्षार्थकल्पना।
शस्यते तेन पक्षः स भिन्नक्रम उदाहृतः॥
व्यत्यस्ताक्षरसन्निवेशो भिन्नक्रम इति यावत्।
व्युत्क्रमार्थो व्यवहितान्वयेनार्थाबोधकः।

प्रकीर्णार्थोऽसङ्कलितार्थः।

मूलमर्थं परित्यज्य तद्गुणो यत्र लिख्यते ।
निरर्थकः सवै पक्षो भूतसाधन वर्जितः ।
भूतकालमतिक्रान्तं द्रव्यं यत्र हि लिख्यते ।
अतीतकालः पक्षोऽसौ प्रमाणे सत्यविस्मृतः ॥
यस्मिन् पक्षे द्विधा साध्यं भिन्नकालविमर्शनम् ।
विस्पष्यते क्रिया भेदाः सपक्षोद्दिष्ट उच्यते ॥
भूतसाधनं मूलभूतं साधनन्तेन वर्जितः ।

भूतकालः साध्यकालः । अन्यानपि पक्षाभासानाह स एव ।

अन्याक्षरनिवेशेन अन्यार्थगमनेन च ।
आकुलन्तु भवेल्लेख्यं क्रिया चैवाकुला भवेत् ॥
साधनं सह साध्येन निर्दिष्टं यत्र लेखयेत् ।
उक्तक्रमविहीनत्वात् सोऽपि पक्षो न सिध्यतीति ॥
विरुद्धश्चा विरुद्धश्च द्वावप्यर्थौ निवेशितौ ।
एकस्मिन् यत्र दृश्येते तं पक्षं दूरत स्त्यजेत् ॥
परस्परविरुद्धानि यः पदानि निवेशयेत् ।
विरुद्धपदसङ्कीर्णा भाषा तस्य न सिध्यतीति ॥

यत्तु । पुरराष्ट्र विरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनेकपदसङ्कीर्णः पूर्वपक्षो न सिद्ध्यतीति ॥

स्मरणात् तस्यायमर्थः । राज्ञा विवर्जितो राजत्यक्तशु-क्लादिविषयकर्णादानादिपदमिश्रितस्तु क्रियाभेदेन युगपन्न सिद्ध्यतीति । मदीयारूपका इयन्तोऽनया वृद्ध्यानेन गृहीताः सुवर्णञ्च यदस्मदस्ते मया निक्षेपीकृत मयमिदं मदीयक्षेत्र-मपहरतीत्यनेकपदविषयस्यापि पक्षस्य क्रमेणाप्यनुपादेयत्वे-तत्त्वनिर्णयाभावप्रसङ्गेन युक्तिविरोधात् ।

बहुप्रतिज्ञं यत्कार्य्यं व्यवहारेषु निश्चितम्।
काममन्तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सयेति॥

कात्यायनवचन विरोधाच्च।

तस्माद्युगपत् पक्षाभासतेत्येव रमणीयम्।
अनेकवस्तुसङ्कीर्णस्यापक्षत्वन्त्वत्पदसम्बद्धम्॥

हिरण्यरूपकवासांसि वानेन मत्तो हृत्वा गृहीतान्यस्य हस्ते मया निःक्षिप्तान्यनेनापहृतानि वेत्येकस्मिन्नपि पदे युगपदपीदृशपक्षोपन्यासस्यादुष्टत्वात्। साध्यञ्च विधिमुखेन प्रतिषेधमुखेन वा पक्षनिक्षेपणीयमित्याह कात्यायनः।

न्यायं संयच्छते कर्तुमन्यायं वा करोत्ययम्।
न लेखयति यस्त्वेवं तस्य पक्षो न सिद्ध्यति॥

न्यायं स्वमित्यनेन ममैतावद्धनमादाय न ददातीत्यादि प्रतिबन्धमुखतोऽपि लक्षिता। अन्यायं वेत्यनेन ममेदमपहरतीत्यादि विधिमुखता प्रदर्शिता। बृहस्पतिरपि।

प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्।
निश्चितं लोकसिद्धञ्च पक्षम्पक्षविदोविदुरिति॥

प्रतिज्ञादोषैः प्रतिज्ञासन्न्यासादिभिर्मुक्तं रहितम्। तेच दर्शिताः प्राक्। साध्यं साध्यार्हम्। प्रत्यर्थि धर्मविशिष्टधर्मिवचनमिति यावत्। सत्कारणान्वितं स्फुटदोषरहितहेतुसहितम्। निश्चितं सन्देहाजनकं वाक्यरचनायुक्तन्तु स्वयमेव निश्चितं विप्रतिपत्तावर्थनिश्चयाभावात्। लोकसिद्धं व्यवहारिकधर्माविरुद्धम्। अतएव मनुः।

सत्या न भाषा भवति यद्यपि स्यात् प्रतिष्ठिता।
बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात्॥

प्रतिष्ठिता प्रसिद्धत्वादिदोषनिर्मुक्तादिभाषा प्रतिज्ञाव्यावहारिकधर्माविरुद्धा च सत्याग्राह्या न भवति राजादीनामित्यर्थः। भवदेवस्तु। यत्र श्रुतमात्रमेव सति लोकानां सम्प्रत्ययस्तल्लोकसिद्ध न्तेन निर्धनकृतो लक्षादिसङ्ख्यधनाक्षेपो न पक्ष इति व्याचख्यौ तद्बाधरूपप्रतिज्ञादोषवत्वेनैव तादृशपक्षस्य निराकरणात्। प्रतिज्ञादोषनिर्मुक्तमित्यनेनैव गतार्थम्। अयञ्च पक्षः प्राक्पाण्डुलेख्यं भूमिफलकादौ कारयित्वा शोधितः पश्चात्पत्रे लेखनीयः। तथा च बृहस्पतिः।

अधिकाञ्शातयेदर्थान् न्यूनांश्च परिपूरयेत्।
भूमौ निवेशयेत्तावद्यावदर्थो विनिश्चितः॥

शातयेदुद्वपेत्। भूमाविति पाण्डुलेख्य योग्याधारोपलक्षणम्। अतएवाह। स एव।

पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत्।
पाण्डुलेखेन फलके ततः पत्रे विशोधितमिति॥

स्वभावोक्तन्नभयाद्युपाधिनोक्तम्। व्यासोऽपि।

पाण्डुलेखेन फलके भूमौ वा प्रथमं लिखेत्।
ऊनाधिकन्तु संशोध्य पश्चात्पत्रे निवेशयेत्॥

शोधनञ्चोत्तरयोग्यतावधि विधेयम्। न ततः पर-मनवस्थापत्तेरदृष्टार्थतापाताच्च। तथा च नारदः।

शोधयेत्पूर्ववादन्तु यावन्नोत्तरदर्शने।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनम्भवेत्॥

अवष्टब्धस्योत्तरयोग्यस्य यस्त्वर्थ्यप्रगल्भत्वात् पक्षदोषगुणहानादानाभ्यां शोधयितुमशक्तस्तस्य वक्तव्यार्थं निर्धार्य्य सभ्यैरेव संशोधनीयः। यथाह बृहस्पतिः।

अभियोक्ता प्रगल्भत्वाद्वक्तुन्नोत्सहते यदा।
सभ्यैस्तु शोधनन्तस्य कार्य्यमर्थानुरूपत इति॥

यदि भाषामशोधयित्वैवोत्तरन्दापयन्ति सभ्यास्तदा रागा-ल्लोभाद्भयाद्वापीत्याद्युक्तदण्डेन सभ्यान् दण्डयित्वा पुनः प्रतिज्ञालेखनपूर्वकं व्यवहारः। प्रवर्त्तनीयो राज्ञेति तात्पर्यम्। यदा त्वर्थिप्रत्यर्थिनोर्ल्लेखनापाठवद्राजकीयलेखकद्वारा तौ भाषोत्तरे लेखयतः। सचान्यतरपक्षपातेनान्यथा लिखत्यन्यत् स राज्ञा चौरवद्दण्ड्य इत्याह कात्यायनः।

अन्यदुक्तं लिखेदन्यद्योऽर्थिप्रत्यर्थिनां वचः।
चौरवत्त्रासयेत्तन्तु धार्मिकः पृथिवीपतिरिति॥

अत्र त्रासयेदित्युक्ते स्वात्प्रयोजनं पुनस्तादृशकार्य्ये प्रवृत्ति-निरोधे। स्मृतितत्त्वे तु चौरवच्छासयेदित्येवं पठितम्॥ एवमुक्तलक्षणः पक्षश्चतुर्विधः। तथाच बृहस्पतिः।

शङ्काभियोगस्तत्त्वञ्च लभ्ये ऽर्थेऽभ्यर्थिनन्तथा।
वृत्ते वादे पुन र्न्यायः पक्षो ज्ञेय श्चतुर्विधः॥
चतुर्विधः पूर्वपक्षः प्रतिपक्षस्तथैव च।
चतुर्धा निर्णयः प्रोक्तः कैश्चिदष्टविधः स्मृतः॥
भ्रान्तिः शङ्कासमुद्दिष्टा तत्त्वन्तत्त्वार्थदर्शनम्।
लभ्येऽर्थेऽभ्यर्थनं मोक्ष स्तथावृत्ते पुनः क्रियेति॥

नारदः। सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता।
तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्॥

उत्तर उत्कृष्टो विजयेति यावत्। यद्यपि न्यायाख्यपञ्चावयववाक्यान्तर्गतं प्रतिज्ञास्वरूपं साध्यधर्मविशिष्ट धर्मिवचनमात्र तथाप्यत्र सत्कारणान्वितमित्युक्तत्वात् सहेतुक-साध्य-

विशिष्टधर्मिवचनं प्रतिज्ञेति गम्यते। हेतोश्च पक्षभूताऽधमर्णादिनिष्ठत्वं तदनङ्गीकृतं क्रियापदेन सिद्ध्यतीति ध्येयम्। तथा सति स्थापनानुमानप्रयोग एव प्रतिज्ञा। प्रतिस्थापनानुमानप्रयोग एव चोत्तरमत्रपर्यवस्यति। अतएव स्मृत्युक्ता उभयभाषा यथायथमर्थान्तरमप्यनुयोज्यानुयोगासिद्ध्यादिनिग्रहस्थानहेत्वाभासादिष्वेव पर्यवस्यन्ति। ततश्च त्वं शतं मह्यं धारयसि। ऋणत्वेन मत्तो गृहीततावद्धनत्वादिति भाषाशरीरम्। न धारयामि गृहीतत्वात् प्रतिदत्तत्वादित्याद्युत्तरशरीरम्। अत्र च न साधुशब्दनियमस्तदनभिज्ञानामत्रार्थिप्रत्यर्थित्वदर्शनात्। बोधकास्तु येषां ये शब्दाः प्रसिद्धास्तैरेव भाषा लेखनीया। प्रतिवादिसभ्यादीनां तदभिज्ञत्वे भाषाद्वयाद्यभिज्ञैस्तैरेव बोधनीया इत्याद्यूह्यम्। अतएव विष्णुधर्मेऽध्यापनेऽपि साधुशब्दनियमान्नारद आह।

संस्कृतैः प्राकृतैर्वाक्यैर्यः शिष्यमनुरूपतः।
देशभाषाद्युपायैश्च बोधयेत् स गुरुः स्मृतइति॥

इति प्रतिज्ञापादो निरूपितः। अथोत्तरपादो निरूप्यते। तत्र निर्दोषायाम्भाषायां निश्चिततदर्थेन प्रत्यर्थिनोत्तरन्देयम्। तथा च बृहस्पतिः।

विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्य विशोधिते।
प्रतिज्ञार्थे स्थिरीभूते लेखयेदुत्तरन्ततः॥

विनिश्चिते संशयरहितज्ञानगोचरीकृतार्थे विशोधितेऽत एव स्थिरीभूते लेखयेदिति वाचयेदित्यस्याप्युपलक्षणं वाचनपूर्वकत्वाल्लेखनस्य। इदञ्चार्थिसन्निधावेव लेखनीयमित्याह। याज्ञवल्क्यः। श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ।

श्रुतो भाषार्थो येन प्रत्यर्थिना सः श्रुतार्थस्तस्येति कर्त्तरि षष्ठी। तेन लेख्यमित्यर्थः। पूर्वावेदकोऽर्थी पूर्वपक्षादुत्तरो-पन्यस्य इत्युत्तरम्पूर्वपक्षोपमर्दकमुच्यते यथाहतु नारद-प्रजापती।

पक्षस्य व्यापकं सार मसन्दिग्धमनाकुलम्।
अव्याख्यागम्यमित्येतदुत्तरन्तद्विदो विदुरिति॥

पक्षस्य व्यापकं निराकरणसमर्थम्। सारं न्याय्यम्। असन्दिग्धं सन्देहजनक-नानार्थादिशब्दरहितम्। अनाकुलं पूर्वापराविरुद्धम्। अव्याख्यागम्यमप्रसिद्धदेशभाषाभिधानेन प्रसिद्धार्थपद-दुश्लिष्टविभक्ति समासव्यवहितयोजना व्यवधा-रण-कल्पना विपरिणामसाध्याहाराभिधानेन वा यत् क्लिष्ट-व्याख्यानेन दुर्गमार्थं न भवति। हारीतोऽपि।

पूर्वपक्षार्थ सम्बन्धमनेकार्थमनाकुलम्।
उपयुक्तमव्यस्तपदं व्यापकं नातिभूरि च॥
सारभूतमसन्दिग्धं स्वपक्षैकान्तसम्भवम्।
अर्थिश्राव्यमगूढार्थन्देयमुत्तर मीदृशमिति॥

अनेकार्थमनेके ऽर्था उपयुक्ता विशेषणादयो यत्र तत्तथा। नत्वनेकार्थपदयुक्तन्तस्य सन्दिग्धत्वेन दुष्टत्वात्। अनाकुल-मुक्तार्थम्। उपयुक्तशब्दैरन्यूनमनल्पम्। अव्यस्तानि व्यत्या सयोजनानपेक्षाणि पदानि यत्र तदव्यस्तपदम्। व्यापकम्प-रिपूर्णार्थम्। नातिभूरि अनुपयोगि व्यस्तरहितम्। सारभूतत्वासन्दिग्धत्वे व्याख्याते। स्वपक्षैकान्तसम्भवम्। स्वपरिगृहीतपक्ष एवैकान्तेन नियमेन सम्भवति न कथ-

ञ्चिदपि पक्षान्तरकक्षामवगाहते तत्। अन्यद्व्यक्तार्थम्। शाठ्य-
दर्पादिभिर्य्यदोत्तरं न ददाति प्रतिवादी तदा कथञ्चित्
सभ्यप्राड्विवाकेन राज्ञा उत्तरं दापनीयमित्याह।
बृहस्पतिः। पूर्वपक्षे यथार्थन्तु न दद्यादुत्तरन्तु यः।

प्रत्यर्थी दापनीयः स्यात् सामादिभिरुपक्रमैः॥
प्रियपूर्वं वचः साम भेदस्तु भयदर्शनम्।
अर्थापकर्षणान्दण्ड स्ताडनं बन्धनं तथा॥
उभयैश्चोद्यमानस्तु न दद्यादुत्तरन्तु यः।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति॥
उभयैर्बहुभिस्तीव्रै श्चोपायैरित्यर्थः।

कात्यायनः। यथार्थमुत्तरं दद्यादयच्छत् तच्च दापयेत्॥

मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना।
उत्तरान्तर्गतं वापि तद्ग्राह्य मुभयोरपि॥

मोहादिवशात् पूर्ववादिना प्रागनुक्तमप्युत्तरान्तर्गत मुत्त-
राभिधानसमय एव प्रोच्यमान मुभयोरुत्तरवादिव्यवहार
दर्शिनो ग्राह्यं ग्रहणार्हम्भवतीत्यर्थः। उत्तरलेखनोत्तरन्तु
न ग्राह्यमित्यर्थसिद्धमपि स्पष्टार्थमाह।
स एव। उभयोर्लिखिते वाच्ये प्रारब्धे कार्य्यनिर्णये।

अयुक्तं तत्र यो ब्रूयात् तस्मादर्थात् स हीयते इति॥

अथोत्तरभेदाः। तत्रकात्यायनः।

सत्यं मिथ्योत्तरञ्चैव प्रत्यवस्कन्दनं तथा।
पूर्वन्यायविधिश्चैव मुत्तरं स्याच्चतुर्विधमिति॥

सत्यं सम्प्रतिपत्तिः। प्रत्यवस्कन्दनङ्कारणोत्तरम्।
व्यासः। साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता।

यथा रूपकशतं मह्यं धारयसीत्युक्ते सत्यन्धारयामि दास्यामीति च। यद्यपि भाषार्थस्यानिराकरणादनुत्तरत्वमस्याभाति। तथाप्यभियोक्ता साध्यतयोपन्यस्तस्य सिद्धत्वोपन्यासात् साध्यत्वनिराकरणादुत्तरत्वमस्यावसेयम्। तथा च स्मरणम्।

अनुक्त्वा कारणं यत्र पक्षवादी प्रपद्यते।
प्रतिपत्तिस्तु सा ज्ञेया कारणे दूषणं पृथक्॥

कारणं परोक्तहेतुदूषणम्। वादी प्रत्यर्थी। कारणे कारणोत्तरे पृथक् दूषणं भवेदित्यर्थः। नचास्याः सिद्धसाधनत्वेन सदुत्तरत्वे पूर्ववादिनो निग्रहस्थानं स्यादिति शङ्क्यं इष्टापत्तेः। पराजयेऽपि पूर्ववादिनोदण्डः परं न भवति अपराधाभावात्। वाचस्पतिस्तु तत्वनिर्णीनीपुकयायाः सिद्धसाधनस्यादोषत्वान्न निग्रहोऽपीत्याह। न चैवं धर्माधिकरणप्रवेशपक्षलिखने पूर्ववादिनो दृथेति वाच्यम्। प्राग्विप्रतिपन्नस्यानुतापवतः प्रत्यर्थिनः पश्चादपि सम्मति सम्भवात् सन्धिकरणोत्तरमिव। सन्धिकरणञ्च निरूपयिष्यते। मिथ्योत्तरन्तु न धारयामीत्यादि। यथाह कात्यायनः।

अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम्।
मिथ्या तत्तु विजानीया दुत्तरं व्यवहारत इति॥

व्यासोऽपि। मिथ्या स्यात् साध्यनिह्नुतिरिति। साध्यस्य सहेतुकसाध्यस्य शब्दतोऽर्थतो वा निह्नवो मिथ्योत्तरमित्यर्थः। केवलसाध्यनिह्नवस्य संप्रतिपत्तिभिन्नोत्तरान्तरेष्वपि प्रसङ्गादिति वाचस्पतिः। तच्चिन्त्यम्।

सहेतुक साध्यनिह्नवस्य तत्रापि सम्भवात् ।
तस्मादपह्नवमात्रं कारणाद्यसम्वलितं मिथ्योत्तरम् ।
कारणप्राङ्न्यायसम्वलितं तूत्तरान्तरे इति वयम् ॥

एतच्च मिथ्योत्तरञ्चतुर्विधम् । मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः । अजातश्चास्मि तत्काल इति मिथ्या-चतुर्विधमिति व्यासस्मरणात् । अत्र च मिथ्यैतदिति कण्ठतोऽपह्नवो न जानामीत्यादिरर्थतः । अतएवाह कात्यायनः ।

श्रुत्वा भाषार्थ मन्यस्तु यदि तत्प्रतिषेधति ।
अर्थतः शब्दतो वापि मिथ्या तज्ज्ञेय मुत्तर मिति ॥

अत्र वाचस्पतिः । भाषार्थस्य सहेतुसाध्यस्य मिथ्योत्तरेण निह्नवेऽपि हेत्वपह्नवांश एव स्वरूपासिद्धिरुपस्थापनादोषः । साध्यापह्नवांशस्तु कारणोत्तरादिव्यवच्छेदकतयाऽत्रान्तर्भाव्यते । तथा हि गृहीतत्वाद्वारणे भाषावादिना साध्य उपन्यस्ते कालदेशविशेषगर्भायान्तस्यां मया न गृहीत इति हेत्वभावशब्देनैवोच्यते । कालविशेषगर्भायान्तु तदा नाहं जात इत्यर्थात् देशविशेषगर्भायामपि तदा तत्राहं नासमित्यर्थात् । अतएवार्थिक भाषाप्रतिषेधस्त्रिविधः सोपादेशमिथ्योत्तरम् । आद्यस्तु केवलमिथ्योत्तरमिति । न चैवं ग्रहणास्कन्दनयो रसन्निधाना जन्मनोरेव प्रतिपाद्यतास्तु किमार्थिका ग्रहणापर्य्यन्ततात्पर्य्येणेति वाच्यम् । यद्यपि तदा जातस्तत्र संश्च तथापि न गृह्णाति तादृशां सर्वेषां ग्रहणाभावादतः सन्निधानजन्ममात्रस्य ग्रहणाव्याप्तत्वाद्यापकाभावात् । व्याप्यग्रहणाभावासिद्धे स्तत्कालीनजन्माभावसन्निधानाभावयोरेव ग्रहणाभावसाधकता । न ह्यनुत्पन्नो

गृह्णात्यसन्निहितो वेति सम्भवतीति तावत्पर्य्यन्ततात्पर्य्या-वस्थम्भावात् अतएव सर्व्वस्मिन्नपि मिथ्योत्तरे स्थापकस्य ग्रहण स्थापनायक्रियोपन्यास इत्याह। तत्तुच्छम्। साध्यानालिङ्गित-हेत्वभावभावोपन्यासे ऽर्थान्तरत्वापातात्। हेतुत्वस्य साध्य-निरूपितत्वेन तदभावमुखेन साध्यभावव्यवस्थापन एव स्थापनाद्गुणासम्भवात्। उत्तरान्तरव्यवच्छेदमात्रस्या-इष्टतार्थापत्तेश्च। यत्र तु पूर्व्ववादिनः पित्रर्णादिग्रहण-हेतुकधारणादिप्रतिज्ञा तत्राज्ञानद्वारकसाक्षाद्वा तदपह्नवो-मिथ्योत्तरम्। तत्कालाजन्मतद्देशाऽसन्निधानयो रेतदीययो स्तदीययो स्तदीयग्रहणाभावासाधकत्वात्। अतएव प्रकाश-स्वामिक्रयेनाष्टिकेनादत्तत्वादिकमपि प्रमापणीय मित्यभियुक्त-स्मरणमपि सङ्गच्छते अन्यथा दूषणदत्तत्वाद्युपन्यासा-ददत्तत्वादि प्रमापणमधिकं स्यात्। तेन तत्प्रतिपादने दत्तत्वादेर्नाष्टिकोक्तत् स्वत्वास्कन्दकत्वादस्य प्रत्यवस्क-न्दनरूपत्वात्तस्यैव तत्साधनापत्तौ मिथ्याक्रियापूर्व्ववाद इति विरुद्ध्येत। इष्टापत्तावुच्यमानायां मिथ्योत्तरभेदत्वोक्तिवि-रोधात्। प्रत्यवस्कन्दनं नाम सत्यं गृहीतं परन्तु प्रतिदत्तं प्रतिग्रहलब्धं वेत्यादि। यथाह नारदः।

अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तत्तथा।
प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं स्मृत मिति॥

प्रपद्य स्वीकृत्य। यद्यपि भाषार्थस्य न सर्व्वांशस्वीकारोऽत्र सम्प्रतिपत्तित्वापत्तेः। कारणोक्त्यानर्थक्यापाताच्च। तथा च ग्रहणेन धारणेन तेन च प्रत्यर्पणीयत्वे साध्यत्वेन प्रतिज्ञा-तेन ग्रहणांशमभ्युपेत्य प्रतिदानेन प्रतिग्रहादिना वा धारणं

प्रत्यर्पणीयत्वाभावं प्रत्यर्थी साधयति। मिथ्योत्तरादतएवास्य भेदः। तत्र भाषार्थस्य सर्वस्यापह्नवादत्र त्वेकदेशानपह्नवात् प्राङ्न्याये तु यथायथ मुभयसम्भव इति ततोऽपि भेदः। तञ्च तत्र विवच्यामः। यत्तु प्राङ्न्यायोधार्यमाणत्वादिसामान्याभाव ज्ञापकः। कारणोत्तरन्तु तद्धंसज्ञापकमिति तयोर्भेद इति वाचस्पतिनोक्तम्। तत्तुच्छम्। प्राङ्न्यायेनापि कारणमुखेनोभयोरपि ज्ञापनसम्भवात्। तस्मादस्मादुक्तमेव भेदकं ज्यायः। त्रिविधश्चैतत्। स्थापनाधिकबलन्तत् समबलवत् तदूनबलञ्चेति। उदाहृतमेवाधिकबलम्। तत्र हि सद्यमर्यंशतस्य धारयः। प्रतिदेयतया सत्तो गृहीततावद्धनत्वादित्यादि भाषायान्निर्य्यातनादिस्थले व्यभिचारवारणायेदानीन्तनधारणाद्यर्थापत्तिगम्यमपरिशोधितत्वादिविशेषणमर्थिनो ऽवश्यं हृदिस्थमास्थेयन्तयाच प्रतिदानाद्युपन्यासेन तदसिद्धिः प्रत्यर्थिनोक्ता भवतीति ध्येयम्। कात्यायनोऽपि स्पष्टमाचष्टे।

अर्थिनाभिहितो ह्यर्थः प्रत्यर्थी यदि तं तथा।
प्रपद्य कारणं ब्रूयादाधर्य्यं भृगुरब्रवीत्। इति।

आधर्यमधरत्वन्दुर्बलत्वमिति यावत्। पूर्वपक्षस्येति शेषः। पूर्वपक्षदौर्बल्यमुत्तरस्य प्राबल्यमर्थत उक्तम्। अतएव नारदः।

आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत्।
विवादे साक्षिग्रहणं प्रमाणमात्रोपलक्षणम्—

प्रदीपकृतस्तु। धार्यमाणत्वे कारणं गृहीतत्वं प्रपद्य ब्रूयात्। परिशोधनादिकमिति शेषः। अपरिशोधितत्वादिकञ्च स्थापनाहेतुविशेषणं कण्ठरवेण ज्ञेयमित्याहुः। तन्न

व्यवहितयोजनाध्याहारयोर्विना कारणमनुचितत्वात्। कारणं प्रपद्येत्यन्वये तमित्यस्य साकाङ्क्षत्वेनान्वयप्रसङ्गाच्च। अन्ये तु प्रपद्य स्थापनाहेतुमभ्युपेत्य यत्तद्विपरीतवचनं तत्कारणोत्तरमिति वितथपरमेवेदं वचनमिति वदन्ति। अत्राधिकसमबलकारणोत्तरयो: स्थापनाया आधर्य्यसम्भवेनैतद्वाक्यस्य वितथविषयत्वायोग इति वाचस्पत्युक्तम्। दूषणं कारणोत्तरस्य त्रैविध्यं तदुक्तं खण्डयद्भिरनुपदमेवोद्धरिष्यते। समबल मियम्भूर्मदीया क्रमागतत्वादित्येकेन भाषतेऽपरोऽपि तदेवोत्तरयति मत्प्रतिपन्नरीत्येति। दुर्बलं कारणोत्तरन्तु, मये यं विंशतिवर्षावधि भूमिरमुकस्वामिकाधीनेतिभाषायां स्वामिनैव पञ्चवर्षावधिमप्याहितत्वान्मदीयेति सत्प्रतिपन्नरीत्योत्तरितं आधौ प्रतिग्रहे क्रीते पूर्वानुबलवत्तरेति वचनादिदं दुर्बलम्। अत्र चाधिकबले प्रतिवादिन: प्रमाणोपन्यासाधिकार: प्रबलत्वसाधनाय। अन्ययोस्तु, पूर्ववादिन एव। गुराविभिहिते हेतौ प्रतिवादिक्रिया भवेत्। दुर्बले वादिन: प्रोक्तातुल्यै: पूर्वक्रियैव चेति स्मरणात्।

कारणात् पूर्वपक्षोऽपि उत्तरत्वम्प्रपद्यते।
अत: क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी॥

इति कारणाद्बलवत्त्वात्। उत्तरत्वमुत्तमत्वम्। पूर्वपक्षबलवत्त्वहेतुकां पूर्ववादिन: क्रियां प्रतिपादयिता कात्यायनेनोत्तरस्यापि बलवत्त्व उत्तरवादिन: क्रियेत्युक्तम्भवति। इदं वाचस्पतिमिश्रोक्तम्। व्यवहारतत्वकाराभ्युपेतञ्च कारणोत्तरत्रैविध्यमयुक्तम्। वचनानारूढत्वाद्युक्त्यभावाच्च। तथा हि अर्थिनालेखित इत्यादि नारदवाक्यस्याधिकबलकारणविषय-

त्वे न किञ्चिद्बीजमस्ति। प्रत्युत तस्य तन्मात्रविषयत्वे त्रितयसाधारणकारणोत्तरस्वरूपाभिधायकवचनान्तत्सामान्यस्वरूपाज्ञानप्रसङ्गः।

भवताप्येतस्य त्रितयसाधारण्यान्यभ्युपगमाच्च।

समानबलो न बलविषयवचनान्तराभावाच्च॥

यत्तोच्यते कात्यायनीये। अर्थिनाभिहितो ह्यर्थः प्रत्यर्थी यदि तत्तया प्रपद्य कारणम् इत्यादि वाक्ये नारदीये वाधर्यं पूर्वपक्षस्येत्यादि वाक्ये तावदाधर्यशब्दोपादानात्समो न बलकारणोत्तरे विषयी भवितु मनर्हैतदेकवाक्यतयार्थिना लिखितो योऽर्थः प्रत्यर्थी इत्यपि नारदवाक्यमधिकबलकारणोत्तरविषयमेवेति। तदबुद्धिपूर्वकम्। तथा सति नारदीयमेव वचनद्वयमनर्थकं प्रसज्यत इति सामान्यविशेषविषयत्वमेव तस्याभ्युपगन्तव्यम्। अस्त्वेवन्तथा सति सामान्यलक्षणानभिधानदोषोऽपि प्रतिक्षिप्तः। आधर्येऽपि तव वचनयोस्तूक्तयुक्त्योर्बलमात्रविषयत्वम्। समबलातिबलयोस्त्वाधर्य्याभावात्तदाक्षिप्तं लक्षणान्तरमूह्यमिति सर्वं सुस्थमिति चेन्न आधर्य्यमुपमर्दकत्वं वाद्युपन्यस्तग्रहणाङ्गीकारेणाधारणादिकारणप्रतिदानाद्युपन्यासे तस्यैव साध्यत्वाविर्भावे तदुक्तग्रहणयोः प्रमाणोपन्यासानपेक्षत्वमेव।

इदमेवाभिप्रेत्य कल्पतरौ लक्ष्मीधरोऽप्याह।

आधर्य्यं प्रमाणानर्हत्वं पूर्वपक्षस्येत्यर्थ इति॥

अतएव कारणे प्रतिवादिनीति सामान्यत एव कारणोत्तरे प्रतिवादिन एव क्रिया वक्ष्यते। तेन यत्त्रितयसाधारणत्वमस्य वचसोऽन्यमतमुपन्यस्याधर्य्योक्तिविरोधाद्दूषितम्। तद-

प्युक्तम् । वस्तुतस्तु प्रमाणोपन्यासे तत्सामीचीन्यासामीचीन्यकृतं त्रैविध्यमुत्तरान्तरेऽपि पारमार्थिकं सम्भवत्येवेति कारणोत्तरमात्रे तदभिधानमर्हन्तत: पूर्वं तत्रापि दुर्ज्ञेयम्। स्वस्वाभिमानेन तु पक्षोत्तरयो: सार्वत्रिकमधिकबलवत्वमेव। अन्यथा विवादाप्रवृत्तिप्रसक्ते: प्रमाणोक्तिप्रत्याकाङ्क्षितयोस्तद्विवेचनार्थयोरत एवोपयोगोऽन्यथाधिकबलकारणोत्तरे तयोरनुपयोगाद्विपाक्षप्रसङ्ग:। संप्रतिपत्तिवत्। गुरावभिहिते हेतावित्यादेस्तु स्मरणस्य न कारणोत्तरत्रैविध्येन क्रिया व्यवस्थापकत्वम्। कारणे प्रतिवादिनीति सामान्यवचनसङ्कोचस्य निर्युक्तिकस्य प्रसक्ते:। किन्तु मिथ्याद्युत्तरत्रैविध्येन। तथाहि गुरौ पूर्वपक्षोक्तहेत्वभ्युपगमेन कारणोत्तरे कारणोपन्यासात् प्राङ्न्याये च तदुपन्यासात्तयो: साध्यत्वाविर्भावे वाद्युक्तसाध्ये साध्यत्वतिरोधानात् प्रतिवादिन: क्रिया। दुर्बले तूत्तरे मिथ्याख्ये भावरूपत्वेन भावप्रमाणाभावमात्रेण सिद्धे:। साध्यत्वानर्हे वादिसाध्यत्वान्तिरोधानात्तस्य क्रिया। तुल्ये द्वयोरपि भावसाधकयोरर्थिप्रत्यर्थिनो: पूर्वक्रिया पूर्वं ममेदमिति वदतोऽन्यतरस्येत्यर्थ:। इदञ्च साक्षिषूभयत: सत्स्वित्यादिवचनं व्याचक्षणा निपुणतरमुपपादयिष्याम:। कारणात् पूर्वपक्षोऽपीति कात्यायनीयन्तु प्रामाणिकत्वनिबन्धनपूर्वपक्षस्योत्तमत्वं प्रतिपादयत: यद्यत्र पूर्ववादिन: क्रिया वाक्यान्तरेणोक्ता तद्विषयत्वेनाप्युपपद्यत इति न किञ्चिदेतत्। अतएव मिताक्षराकल्पतरुरत्नाकरमदनरत्नस्मृतिचन्द्रिकाकारादिभिरिदमुपेक्षितम्।

प्राङ्न्यायलक्षणमाह। हारीत:।

अस्मिन्नर्थे समानेन वादः पूर्वमभूत्तदा ।
जितोऽयमिति चेद्ब्रूयात् प्राङ्न्यायः स्यात्तदुत्तरम् ॥

कात्यायनबृहस्पती ।

आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यत इति ॥

अतः प्राङ्न्यायपदमन्वर्थम् । प्राङ्न्यायस्य च प्रागवस्थायां मिथ्याकारणान्यतरोत्तरोपादानेनैव व्यवहारप्रवृत्तिरिति प्राङ्न्यायसाधने तदेव सिद्धम्भवति इतिसम्भवति धार्यमाणत्वादिसामान्याभावतद्वंसोभयज्ञापकता प्राङ्न्यायस्येति मिथ्याकारणोत्तराभ्यामस्य भेदः । त्रिप्रकारश्च प्राङ्न्यायः । तथा च कात्यायनः । विभावयामि कुलिकैः साक्षिभिर्लिखितेन वा ।

जितश्चैव मयायं प्राक् प्राङ्न्यायस्त्रिप्रकारकः ॥

कुलिकैरिति प्राक्तनव्यवहारदर्शिनामुपलक्षणम् । इत्युत्तरभेदाः । अथोत्तराभासाः ।

यद्यप्युत्तरलक्षणराहित्यादेवोत्तराभासत्वमर्थसिद्धम्भवतीति नोत्तराभासाः पृथग्वाच्याः । योगीश्वरादिभिरत एव नोक्ताः । तथापि स्पष्टीकरणाय कैश्चिदुक्ताः । तथा च मिताक्षराधृतवचनम् ।

सन्दिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्यन्यत्तथा नैवोत्तरम्भवेत् इति ॥

एतच्च तत्रैवोदाहरणनिष्ठतया व्याख्यातम् ।

सुवर्णशतमनेन गृहीतमिति उक्ते सत्यं गृहीतं सुवर्णशतं माषकशतञ्चेत्येवं सन्दिग्धमुत्तरम्भवेदिति । प्रकृतादन्यत्सुवर्णशताभियोगे पणशतन्धारयामीति । अत्यल्पं सुवर्णशताभि

योगे पञ्च धारयामीति। सुवर्णशताभियोगे पञ्चशतानि धारयामीत्यतिभूरि। पक्षैकदेशव्यापि हिरण्यवस्त्राभियोगे हिरण्यं गृहीतमित्येतावन्मात्राभिधानम्। व्यस्तपदं पदान्तरेणाभियोगे पदान्तरमादायोत्तरम्। यथा मदीयमेतावद्द्रव्यं धारयतीत्यभियोगेऽनेनाहन्ताडित इत्यादि। अव्यापि देशस्थानादिभाषाविशेषेणाव्यापि। यथा मध्यदेशे वाराणस्यां पूर्वदिगवस्थितं मदीयमनेन क्षेत्रमपहृतमिति। निगूढार्थं मह्यं सुवर्णशतं धारयतीत्यभियोगे किमहमेवास्मै धारयामीति। अत्र ध्वनिना प्राड्विवाकः सभ्यावर्थीवन्यस्मै कस्मैचिद्धारयतीत्यादि सूचनसम्भवान्निगूढार्थमिदम्। पूर्वापरविरुद्धसाकुलं यथा सुवर्णशतं मह्यं धारयतीत्यभियोगे धारयामि परन्तु गृहीतमेव नेति गृहीतं परन्तु न धारयामीति वा कारणाद्युपन्यासमधारणादावक्तृत्वैवोत्तरम्। व्याख्यागम्यम्। दुःश्लिष्टसमाध्याहारादिसापेक्षत्वेन मेयार्थम्। यथा सुवर्णशतविषये पितृकृतर्णाभियोगे गृहीतवचनात् सुवर्णानां पितुर्नजानामीति। अत्र गृहीतशतसुवर्णस्य पितुर्वचनात्सुवर्णानां शतं गृहीतमिति न जानामीत्यर्थविवक्षायामीदृशमसमर्थसमासाध्याहारादिसापेक्षत्वादुक्तकृतस्वाभिमतार्थपरव्याख्यावगम्यार्थम्। असारम्। न्यायविरुद्धम्। यथा सुवर्णशतमनेन मत्तो वृद्ध्या गृहीतन्तस्य वृद्धिरेव दत्ता न मूलमित्यभियोगे सत्यं वृद्धिर्मयादत्ता मूलन्तु नगृहीतमिति। अत्र क्वचित्पूर्वपक्षानिराकरणात् क्वचिदसम्बद्धार्थत्वात् क्वापि विलम्बितार्थप्रत्यायकत्वाद्यथायथमनुत्तरत्वमवसेयम्। यद्यप्युदाहृतमसारं पूर्वापरविरोध एव पर्य्यवस्यति। तथापि

क्वचित्साक्षात् क्वचिन्न्यायविरोधात्तथात्वमिति भेदकं द्रष्टव्यम्।
स्मृतिचन्द्रिकाकारस्तु काकदन्तसद्भावोत्तरमिष्यत इति।
कात्यायनवचनञ्च तत्र सम्वादितवान्।

काकस्य दन्ता नो सन्ति सन्तीत्यादि यदुत्तरम्।
असारमिति तत्तेन समं नोत्तरमिष्यत इति॥

कात्यायनेनान्येऽप्युत्तराभासा उक्ताः।

अप्रसिद्धं विरुद्धं यदत्यल्पमतिभूरि च।
सन्दिग्धासम्भवाव्यक्तमन्यार्थञ्चातिदोषवत्॥
यच्चस्तपदमव्यापि निगूढार्थं तथाकुलम्।
व्याख्यागम्यमसारञ्च नोत्तरं स्वार्थसिद्धय इति॥

एतान् स्वयमेव स व्याचष्टे।

चिह्नाकारसदृक्षन्तु समयञ्चाविजानता।
भाषान्तरेण वा प्रोक्तमप्रसिद्धन्तदुत्तरम्॥
प्रतिदत्तं मया बाल्ये प्रतिदत्तं मया नहीति।
यदेवमाह विज्ञेयं विरुद्धन्तदिहोत्तरम्।
जितः पुरा मया वायमस्मिन्नर्थे विवक्षिते।
पुरा मयाऽयमिति यत्तदूनञ्चोत्तरं स्मृतम्॥
गृहीतमिति वाच्ये तु कार्यन्तेन कृतं मया।
पुरा गृहीतं यद्द्रव्यमित्येतदिति भूरि तु॥
देयं मयेति वक्तव्ये मया देयमितीदृशम्।
सन्दिग्धमुत्तरं ज्ञेयं व्यवहारे वुधैः सदा॥

मयादेयमित्यत्राकारप्रश्लेषस्यापि सम्भवात्सन्दिग्धमिदम्।
असम्भवमस्माभिर्दैयन्धनमस्मत्प्रपौत्रपुत्रेण दत्तमित्येवमादि।

श्यक्तं सुखेन यदक्षराख्येव निर्णेतुमशक्यानि। एतानुत्तराभासावुद्दिष्टावपि स्पष्टाविति तेन न लक्षितौ।

बलावलेन चैतेन साहसं स्थापितं पुरा।
अनुक्तमेतन्मन्यन्ते तदन्यार्थमितीरितम्॥

एतेन च बलेन प्राबल्येन अबलेन दौर्बल्येन च पुरा साहसं मनुष्यमारणादिस्थापितं कृत्वा गोपितमिति यावत्। इत्यादि प्रकृतानुपयोगित्वादन्यार्थमित्यर्थः। व्यस्तपदं पदान्तरेणाभियोगे कृते पदान्तरसंक्रमेणोत्तरमिति सोदाहरणं मिताक्षरायां व्याख्यातं तत्प्रागेवोक्तम्। स्मृतिचन्द्रिकायान्तु पूर्वपक्षनिश्चयात् प्रागुच्यमानं सर्वमेवोत्तरं व्यस्तपदमिति व्याख्यातम्। व्यस्तम्पदं स्थानमुपन्यासावसरो यस्येति व्युत्पत्तेः। भवदेवेन तु अव्यस्तपदव्यापीति पाठं लिखित्वाऽनन्वितार्थपदव्याप्तमिति व्याख्यातं व्यवहारतिलके। तत्तु दोषान्तरसङ्करादयुक्तमिति प्राच्यमेव व्याख्याद्वयमनुसन्धेयम्। उत्तरमित्येकवचनाद्याज्ञवल्कीयाद्युत्तरसङ्करादप्युत्तराभासत्वं सूचितम्। कात्यायनादिभिः स्पष्टमुक्तम्।

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम्।
मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरमिति॥

सङ्करादनुत्तरत्वे वीजं कात्यायनेनैवोक्तम्।

नचैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः।
नचार्थसिद्धिरुभयोर्न्नचैकत्र क्रियाद्वयमिति॥

मिथ्याकारणोत्तरयोः सङ्करेऽर्थिप्रत्यर्थिनोर्द्वयोरेकस्मिन् व्यवहारे क्रियोपन्यासः प्रसज्यते। मिथ्याक्रियापूर्ववादे कारणे प्रतिवादिनीति स्मरणात्। मिथ्या मिथ्योत्तरे। पूर्ववादे

क्रियार्थिनः क्रियोपन्यास इत्यर्थः। यथा सुवर्णशतं रूपकशतञ्चानेन गृहीतमित्यभियोगे सुवर्णशतं न गृहीतं रूपकशतं तु गृहीतं किन्तु प्रतिदत्तं प्रतिग्रहलब्धमित्यादि। द्वयोरेकक्रियोपन्यासाभावे च व्यवहारघटकभेदे व्यवहारद्वयप्रसक्तावेकसमाप्तौ व्यवहारान्तरप्रवर्त्तनौचित्याद्युगपद्व्यवहाराऽसम्भवरूपा युक्तिर्वीजम्। अतएव तस्य तस्यांशस्य तत्प्रमाणमात्रसाध्यत्वे क्रमेणोत्तरत्वमेवेति क्रमिकं व्यवहारद्वयं तयोरेव प्रवर्त्तनीयमित्युक्तं मिताक्षरास्मृतिचन्द्रिकादिग्रन्थेषु। कारणे प्राङ्न्यायसङ्करे तु प्रत्यर्थिनएव क्रियाद्वयं प्रसज्यते। कारणे प्रतिवादिनि प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियामिति स्मरणात्। यथा पूर्वोदाहरणमेव। यद्येवं ब्रूयात् सुवर्णशतं गृहीतं प्रतिदत्तं रूपकशते तु प्रागयं व्यवहारमार्गेण मया पराजित इति। अत्र यद्यप्येकस्यैव प्रमाणद्वयोपन्यासस्तथापि प्रागुक्तया युक्त्या युगपद्व्यवहारासम्भव एवोनुत्तरत्वे वीजमतोऽत्रापि क्रमिकव्यवहारप्रवृत्तिरिष्टैव। कारणोत्तरे साक्षिलेख्यादिभिस्तद्विभावनीयम्। प्राङ्न्यायस्तु तद्दर्शिभिर्जयपत्रेणैवेति क्रम आवश्यकः। एवमुत्तरत्व सङ्करेऽपि। यथानेन सुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगे सत्यं सुवर्णं गृहीतं प्रतिदत्तञ्च रूपकशतं न गृहीतं वस्त्रविषये प्राक् पराजित इति। अत्र द्वयोः क्रिययोः पूर्वन्यायेन एकस्य क्रियाद्वयमिति द्वयमप्यनुत्तरत्वे वीजम्। सम्प्रतिपत्तौ क्रियाभावाच्चतुःसङ्करो नोदाहार्यः। सङ्करसम्भवमात्रेण तु मिताक्षराकारेणैवं चतुःसङ्करेऽपीत्युक्तम्। अतएवाग्रे यत्र सम्प्रतिपत्तेरुत्तरान्तरेण सङ्करस्तत्रोत्तरान्तरोपादानेन व्यव-

हारः प्रवर्त्तनीयः । सम्प्रतिपत्तौ क्रियाभावादिति तेनैवोक्तम् । सङ्करस्थले क्रमिकव्यवहार आवश्यके क्रमोऽर्थिप्रत्यर्थिसभ्यानामन्यतरेच्छया बोध्यः । यत्र तु प्रभूतार्थविषयत्वमन्यतरोत्तरस्य फलवत्तरत्वं वा व्यवहाराकरणेऽन्यतरस्य पीड़ातिरेकादिकं वा प्राप्तेर्विनिगमकमस्ति तत्र तदुत्तरोपादानेनैव प्रथमो व्यवहारः प्रवर्त्तनीय इत्याह । हारीतः ।

यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम् ।
उत्तरन्तत्र तज्ज्ञेयमसङ्कीर्णमतोऽन्यथा ॥

असङ्कीर्णं सङ्करप्रयुक्तव्यवहार-यौगपद्यासम्भव-दोषाभावात् । अतोऽन्यथा सङ्कीर्णमिति शेषः । तेन तत्रेच्छाक्रमेण व्यवहारक्रम इति भावः । सङ्करादनुत्तरत्व प्रागुक्तयुक्तिरनेन सूचिता । अतएव मिथ्योत्तरं कारणञ्च स्यातामेकत्र चेदुभे । सत्यं वापि सहान्येन तत्र ग्राह्यं किमुत्तरमित्युक्त्वा तदुक्तं हारीतेन । उदाहरणन्तु यथानेन सुवर्णं रूपकशतं वस्त्राणि च गृहीत्वा यन्न प्रयच्छतीत्यभियोगे सुवर्णं रूपकशतञ्च न गृहीतं वस्त्राणि गृहीतानि प्रतिदत्तानीत्युत्तरेऽत्र मिथ्योत्तरस्य प्रभूतार्थविषयत्वात् तदुपादाय क्रियार्थिनः प्रथमं व्यवहारो द्रष्टव्यः । पश्चाद्वस्त्रविषये कारणोत्तरमादाय प्रत्यपरक्रियाऽवलम्बनो व्यवहारः । एवं मिथ्याप्राङ्न्यायसङ्करेऽपि बोध्यम् । सम्प्रतिपत्तिर्यदि सुवर्णादौ तत्र क्रियाफलाभावादल्पविषयमप्युत्तरोत्तरमादायैव व्यवहारो भवति । एवं तुल्यार्थविषयत्वेऽप्युत्तरयोर्यत्र प्रथमदृष्टे फलन्तदुत्तरावलम्बनेन व्यवहारो द्रष्टव्यः । तथाचोक्तम् । यत्र वा स्यात्क्रियाफलमिति ।

अहं पूर्विकया याता वर्थिप्रत्यर्थिनौ यदा ।

वादो वर्णानुपूर्व्येण ग्राह्यः पीड़ामवेक्ष्य चेति वृहस्पतिः। अत्र वाचस्पतिमिश्राः। भिन्नभिन्नावच्छेदेन कारणादिसंस्पर्शिसङ्करादनुत्तरमिति। पक्षैकदेशे यत्सत्यमित्यादि वाक्यार्थ एव न सम्भवति। अवच्छेदभेदेन साङ्कर्य्यस्यैवाऽभावात्। किन्तु पक्षस्यैकदेशे विषये यदुत्तरं सङ्कीर्य्यते न तदनुत्तरम्। शेषमेकदेशपदद्वयंमनुवादः यथा शतं न गृहीतमपि परिशोधितं वा न धारयाम्येवेत्यादि। यत्तु। शताभियोगे पञ्चशतं परिशोधिताः पञ्चविंशतिस्तु नैव गृहीताः। पञ्चविंशतिस्तु धार्य्यन्ते देया इत्युत्तरम्। यच्च वस्तुभेदेन प्रागुदाहृतं तत्र यत्प्रभूतार्थविषयमिति वचनात्। कारणोत्तरमादाय प्रथमं विचारः कार्य्यः। पश्चात् पञ्चविंशतिरपह्नुता अर्थिप्रमाणेन वा साध्याः प्रत्यर्थिप्रमाणेन वा साध्याः। नचैवं नचैकस्मिन्नित्येतद्वचनविरोधः। न्यायमूलकत्वेनैतद्वचनस्य लब्धार्थप्रमाणपरिग्रहाबाधकत्वात्। सति च निर्णयप्रमाणे तदंशसंशयस्यावश्यनिरस्यत्वात्। न च यत्प्रभूतार्थविषयमित्येतद्वचनवशादेव लब्धार्थप्रमाणग्राह्यता। तथा सत्ये तत्स्मृतीनां श्रुतिमूलकतापत्तेः न चेष्टापत्तिः। असम्भवं मूलान्तरत्वस्यैव श्रुतिमूलकत्वप्रयोजकत्वात्। यूपहस्त्यादिस्मृतौ तथा सिद्धान्तवचनात्। अत्र च न्यायमूलकत्वस्यैव सम्भवात्। न च तादृशविषयासम्भव एव न चैकस्मिन्निति वचनस्य मूलमिति युक्तम्। वङ्गशोपविषयदर्शनात्। न चेद्दृशमुत्तरं न देयमित्युपदेशार्थमिदम्। यथावस्थितार्थकथनस्य निषेद्धुमशक्तेः। विज्ञा एव विवदन्ते न त्वज्ञा इत्यापि वक्तुमशक्यम्। न चातएव ते पर्य्यनुयोज्याः। छलं निरस्य भूतेभ्यः व्यवहारान्नयेन्नृप इति वचनात्तादृशा-

मपि तत्त्वतो वेध्यत्वात् । नच वचनादेवास्योत्तरस्य हेयता । वचनस्यादृष्टार्थतापत्तेः । अपि च । शतत्र गृहीतमित्यस्य नाग्रहणमात्रमर्थः । शतपदानर्थक्य प्रसङ्गात् । नापि शताग्रहणम् । विशेषनिषेधे शेषाभ्यनुज्ञापत्तेः । नापि शतपदन्यत्तप्राप्तानुवादः । एवं सत्येकदेशस्य गृहीतत्वविभावनादेव स्थापको निह्नुते लिखितेनैकमिति वचनादेतावद्धनन्निरपवादमेव लभेतेत्यनिष्टापादकमेवेदमुत्तरं स्यात् । मिथ्या कारणयोर्वापीत्यादि वचनमप्येवन्नेयम् । तस्माद्यावत्प्रकृतविषयः संशयोऽनुवर्त्तते-निर्णायकञ्चप्रमाणं लभ्यते तावद्विचारणीयमिति परमार्थः । भवदेवप्रदीपादयोऽप्येवम् । तस्मादस्मदुक्तमेव पक्षैकदेशे यत्सत्यमित्यादेरर्थमिति । तदेतद्वागाडम्बरमात्रार्थचोद्यमस् । तथाहि । मिताक्षराद्युक्तरीत्या दृष्टार्थतयैव सकलवचनस्वरसाभङ्गसम्भवात् । नचैकस्मिन्नित्यादि वचनपर्यालोचनया युगपदनुत्तरत्वस्यैवास्य वर्णितत्वात् । क्रमिकान्तरत्वस्य सर्वैरपीष्टत्वात् । नचायौगपद्यमेव निर्बीजम् । युगपद्यवहारासम्भवस्यैतादृशि विषये उपपादितत्वात् । व्यवहारस्य चतुष्पात्त्वात् । क्रियारूपपादभेदे साध्यभेदेन भाषारूपपादभेदे चातद्घटित व्यवहारभेदप्रसङ्गस्य सचेतसा दुरपह्नवत्वात् । किञ्च भवदुक्तरीत्या न्यायाभासमूलकतया नचैकस्मिन्नित्यादेरप्रामाण्यप्रसङ्गः । यच्चैकदेशपदस्यैकविषयपदपरत्ववर्णनमेकदेशपदद्वयस्य चानुवादत्वप्रतिपादनं तदतिमन्दम् । एकदेशपदे रूढित्यागप्रसङ्गात् । सम्भवत्यस्मदर्थनार्थवत्त्वे निरर्थकानुवादस्यानर्थक्यापरपर्य्यायस्याभ्युपगमानौचित्याच्च । यच्चेक विषयसङ्कर उदाहृतन्तदपि सन्दिग्धादिदोषस-

ङ्गीर्णमसाधारण्येनैतद्वचनविषयतानर्हमिति समस्तवचनानर्थक्यम्। यदप्युक्तम्। असम्भवं मूलान्तरत्वस्य श्रुतिमूलकत्वं प्रयोजकत्वमिति। तदपि मीमांसानध्ययननिबन्धनम्। नह्यसम्भवमूलकत्वमष्टकादिस्मृतीनां श्रुतिमूलकत्वे प्रयोजकम्। तथा सति तुलापुरुषादिस्मृतीनाम् लोभादिमूलकत्वस्य सुतरां सम्भवाच्छ्रुतिमूलकत्वाभावप्रसङ्गः। यथाहु वार्त्तिककाराः।

रागद्वेषमदोन्माद प्रमादालस्य लुब्धता।

का वा नोत्प्रेक्षितुं शक्याः स्मृत्यप्रामाण्यहेतव इति॥

यूपहस्त्यादिस्मृतीषु मुक्तकत्वेनाप्तप्रणीतत्वानवधारणान्मूलभूतश्रुत्यकल्पनं कर्त्तृसामान्याभावादिति। भाष्याभिमता प्रामाण्ये मूलयुक्तिः। हेतुदर्शनन्तदुपष्टम्भकमन्वाचयमात्रमिति तत्रैव व्याचक्षाणमाकरे। वार्त्तिककाराणान्तु दृढतरवैदिकं परिग्रहीतुं प्रामाण्यमेव तासामभिमतमित्यपि तदभियोगभाजां न दुर्लभम्। यद्यप्यपि वेत्याद्यसम्भवदुक्तिकस्वकपोलकल्पितविकल्पजालमुन्नाद्य खण्डितन्तदपि प्रस्तुतप्रतीपम्। तादृशोत्तरस्य सर्वैरभ्युपगन्तव्यत्वात्। शतग्रहणाभावस्य तदर्थस्यादुष्टत्वाच्च। अयमत्र सकलवचनसन्दर्भसमाधानान्निष्कृष्टोऽर्थः। क्रिया लिखितादिप्रमाणरूपा प्रत्यवस्कन्दने प्राङ्न्याये च प्रत्यर्थिन एव भवति। मिथ्योत्तरे चार्थिन एव। सम्प्रतिपत्तौ न कस्यापीति व्युत्पादयिष्यते। एवञ्च सत्येन यत्रेतरेषान्त्रयाणामुत्तराणां सङ्करस्तत्र प्रत्यर्थिनः कारणप्राङ्न्यायसाधनाय प्रमाणद्वयमर्थिनश्च स्वसाध्यसाधनायैकं प्रमाणं प्राप्नोति यत्र कारणप्राङ्न्याययोस्तत्र प्रत्यर्थिनः प्रम-।

णद्वयम्। यत्र पुनर्म्मिथ्याकारणनिययाप्राङ्न्यययोर्वा तत्रार्थि-प्रत्यर्थिनोरेकैकम्प्रमाणम्। न च यथा प्राप्तमेव मेवाऽस्त्वि-ति वाच्यम्। प्रमाणं हि साध्यसिध्यर्थं एकस्मिन् व्यवहारे-चैकमेव साध्यमेकस्यैवोचितम्। तेन तत्र नोभयोः प्रमा-णमेकस्य वा प्रमाणद्वयम्भवितुमर्हम्। उभयोः साध्या-भावादेकसाध्यस्य चैकेनैव प्रमाणेन सिद्धावितरवैयर्थ्यात्। तस्माद्युक्तमुक्तं सङ्करात्तदनुत्तरमिति। तथा च सर्वत्र पचव्यापकमेवोत्तरं देयन्दापनीयञ्च। यत्र पुनः सर्वथा तथाविधमुत्तरन्न लभ्यते किन्त्वेकैकांशव्यापकमेवोत्तरम्। तत्र नानोत्तरवशेन नानाप्रतिज्ञाः कृत्वा क्रमेणैकैकप्रतिज्ञा-यामेकैकोत्तरोपादानेन व्यवहारः प्रवर्त्तनीयोऽन्यथा तत्र निर्णयाभावप्रसङ्गः स चानुचितः। छलं निरस्येत्यादि-वचनात्। सङ्करादनुत्तरमिति हेतूपादानादुक्तविषया सङ्करे निराकृते स्यादेवोत्तरत्वमित्यभिप्रायः। एतदेव व्यतिरेक-मुखेनोक्तम्।

यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम्।
उत्तरन्तत्र तज्ज्ञेयमसङ्कीर्णमतोऽन्यथेति॥

अतोऽन्यथा यौगपद्ये सङ्कीर्णः स्यादिति प्रागेव व्याख्या-तम्। पचव्यापकानेकोत्तरविकल्पे तु न जातुचित्सङ्कराव-सरः। तस्मान्न क्वापि सङ्करे सदुत्तरत्वमिति।

अथ क्रियापादः। तत्र तदुपयोगिप्रत्याकलितं प्रथमं निरूप्यते। विज्ञानयोगिना तस्य व्यवहारपादत्वानभ्युपगमेऽपि क्रियादानोपयोगित्वाभ्युपगमात्। अन्यैस्तु व्यवहारपादत्वस्यैव स्वीकारात्। क्रियापादप्रागभावस्तूभयसम्मतः। प्रत्याकलि-

तन्नाम भाषोत्तरयोरर्थिप्रत्यर्थिभ्यां लेखितयोः क्रियोपन्यासन-
मन्ययोर्मध्ये कस्य स्यात्काचास्मिन्पदे क्रिया स्याद्धीनवादी वा-
नयोर्मध्ये क इत्यादिः सप्तभ्यप्राड्विवाकस्य सभापतेः। सभ्यस्य
प्राड्विवाकस्य वा परामर्श उच्यते। तथाच बृहस्पतिः।

ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना।
कलयित्वोत्तरं सभ्यैर्दातव्यैकस्य वादिनः॥

करणे धर्माधिकरणे। ये तिष्ठन्ति वादिनः प्रतिवादिनश्च
तेषामुत्तरं मिथ्यादिचतुर्भेदं कलयित्वा विचार्य्य एतदुत्तरे
कस्य क्रियोपन्यास उचित इति। निर्धार्य्य विभाव्यते साध्य-
मनयेति विभावना क्रियाप्रमाणमिति यावत्। एकस्य वादि-
नोऽर्थिप्रत्यर्थ्यन्यतरस्य सभ्यैर्दातव्या। उपन्यसनीयत्वेनाज्ञाप-
यितव्येत्यर्थः। कात्यायनोऽपि।

लिखिते शोधिते सम्यक् सति निर्दोष उत्तरे।
अर्थिप्रत्यर्थिनोर्वापि क्रियाकरणमिष्यते॥

क्रियाकरणं क्रियोपन्यासः। पुनर्बृहस्पतिः।

श्रुत्वा पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना।
विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिना॥

विभाव्यते साध्यते साध्यमनयेति विभावना क्रियैव। पूर्वो-
त्तरं पूर्वपक्षमुत्तरञ्चेत्यर्थः। द्वन्द्वैकवद्भावः। निर्दिष्टा ब्रूही-
त्युपदिष्टा। कस्मिन्नुत्तरे कस्य क्रिया क्रिया रहितञ्च किमु-
त्तरमित्यपेक्षायामाह। व्यासः।

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्।
मिथ्योक्तौ पूर्व्ववादीतु प्रतिपत्तौ न सा भवेत्॥

प्राङ्न्यायकारणोत्तरयोः प्राङ्न्याये कारणे च साधिते-

ऽर्थो साध्यस्य ग्रहणस्य धारणासाधकत्वाद्यर्थं साधनं प्रत्यर्थिनाऽभ्युपगमाच्चेति तत्रैव साध्यत्वाविर्भावात्तदुपन्यासकारिण एव प्रत्यर्थिनः प्रमाणोपन्यासस्तत्साधनायोचितः। अर्थिसम्बन्धविरहप्रत्यर्थिसम्बन्धयोर्द्वयोरपि तेनैव निर्णयात्। मिथ्योत्तरे तु वादिनः प्रमाणदुर्भिक्षं यदि प्रतिज्ञातेऽर्थे प्रमाणाभावादेव प्रत्यर्थ्यभिमतोऽर्थिप्रतिज्ञातसाध्याहेत्वभावः सिध्यतीति तत्परिहाराय भावाभावयोर्भावस्यैव साध्यत्वौचित्यादर्थिन एव क्रिया। सम्प्रतिपत्तौ तु नैकस्यापि साध्यमस्तीति निरर्थकत्वात् क्रियैव नास्तीत्यर्थः। बृहस्पतिः।

प्रतिज्ञाम्भावयेद्वादी प्रत्यर्थी कारणान्तथा।
प्राग्वृत्तवादिविजयं जयपत्रेण भावयेदिति॥

प्राग्वृत्तं प्राङ्न्यायः प्रतिज्ञाप्रतिज्ञातार्थम् इदञ्च परिशेषान्मिथ्योत्तरविषयम्। जयपत्रेणेति प्राङ्न्यायदर्शिप्रभृत्युपलक्षणम्। मनुः।

अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि।
अभियोक्ता दिशेद्देश्यं कारणं वान्यदुद्दिशेत्॥

दिशति कथयति यथादृष्टमर्थमिति देश्यः साक्षी। मेधातिथिस्तु। ऋणादिप्रयोगदेशवर्त्तिनः। साक्षिणो देश्यशब्देन लक्ष्यन्त इत्याह। अन्यत्कारणं प्रमाणं साक्षिभिन्नं लेख्यादि। मेधातिथिना तु करणं वा समुद्दिशेदिति पठित्वा करणशब्दः। प्रमाणसामान्यवाचकोऽपि गोबलीवर्दन्यायेन साक्षिभिन्नकरणमाचष्टे। पृथगुपादानात्। कारणं वा समुद्दिशेदिति पाठेऽप्ययमेवार्थ इत्युक्तम्। एवं मिथ्याप्रत्यवस्कन्दनयोः क्रतुरूपचस्थापिताः। यथा कश्चिच्छृङ्ग्राहिकया कञ्चिदभियुङ्क्ते मदीये-

यद्गौरमुकस्मिन् काले नष्टास्य गृहे दृष्टा यतः। तत्राभियुक्त उत्तरयति मिथ्यैतत्। एतत्प्रदर्शितनाशकालात्प्रागेवास्य मद्गृहेऽवस्थितत्वादिति इदन्तावत्पत्तप्रतिक्षेपक्षमतमित्यनुत्तरत्वानर्हम्। कारणोपन्यासान्नशुद्धमिथ्योत्तरम्। एकदेशाभ्युपगमाभावाच्चार्थिना लेखितोऽर्थ इत्यादि प्रागुक्तप्रत्यवस्कन्दनलक्षणं नास्कन्दति। साध्यभेदायप्रतिज्ञाभेदापादकत्वाभावाच्च न पक्षैकदेशे यत्सत्यमित्युक्तसङ्करवद्युगपद्व्यवहारासम्भवस्ततं युगपदनुत्तरम्। तस्मात्कारणं मिथ्योत्तरमेवेदम्। अन्यतरसाधनेनापि विवादपर्यवसानात्। अत्र मिथ्याक्रियापूर्ववाद इति वचनात्करणे प्रतिवादिनीति वचनाच्चान्यतरस्य यथारुचिक्रियोपन्यास इति भाति यद्यपि तथापि मिथ्याक्रियेत्यादेः शुद्धमिथ्याविषयत्वेनैतद्विषयत्वाभावात्कारणे प्रतिवादिनीति वचनात्। प्रतिवादिन एवात्र क्रिया। नचास्यापि शुद्धप्रत्यवस्कन्दनविषयत्वादेतद्विषयत्वाऽभावप्रसङ्गेन कस्यापि क्रिया प्राप्नोतीति निर्णयप्रतिबन्ध एवेति वाच्यम्। यतः प्रसिद्धप्रत्यवस्कन्दनेऽपि ग्रहणाद्यभ्युपगमेन प्रतिदानादिकारणोत्तरतैवास्यासम्भाविनीति वाच्यम्। एकदेशाभ्युपगमस्य प्रायिकत्वात्। कारणोपन्यासस्यैवोत्तरान्तरासङ्कीर्णतया तल्लक्षणत्वावश्यम्भावात्। एवं कृत्स्नपक्षव्यापि समाङ्न्यायं मिथ्योत्तरमपि द्रष्टव्यम्। यथा प्राक्तनाभियोग एव। यद्येवं प्रतिवदति मिथ्यैतत्। यतः प्रागयमस्मिन्नभियोगे मया व्यवहारमार्गेण पराजित इति। अत्रापि प्राङ्न्यायकारणोक्तावित्यादि प्राक्प्रदर्शितवचनात्प्रत्यर्थिन एव क्रियोपन्यासः। प्राङ्न्यायसिद्धौ प्रतिज्ञायाः प्रकटमेव मिथ्यात्वपर्यवसानादस्य शुद्धप्राङ्न्याय-

विषयत्वासम्भवादेतादृशप्राङ्न्यायविषयताया अथ वर्जनीयत्वात्। पक्षप्रतिक्षेपपक्षमस्यास्य प्रागेवदेवानुत्तरत्वानर्हत्वात्। यत्र तु कारणप्राङ्न्याययोः क्त्रपक्षस्यापितयैकोत्तरत्वन्तत्र प्रत्यर्थिना प्राङ्न्याय एव साधनीयः। कारणसाधनस्य तदन्तर्भूतत्वात्। यथारूपकशतमनेन मामकं गृहीतमित्यभियुक्तः प्रतिवदति सत्यं गृहीतं प्रतिदत्तत्वादिदानीमस्मै न धारयामि। अस्मिन्नेवार्थे प्रागमुनाहमभियुक्तश्चतुष्पाद्व्यवहाररीत्यामुम्पराजितवानिति। इदानीं हीनपरिज्ञानोपायः। तत्र मनुः।

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च॥

स्वरो विकृतो गद्गदत्वादिः। वर्णोऽप्यस्वाभाविकः कृष्णत्वादिः। इङ्गितं स्वेदवेपथुरोमाञ्चादि। आकारो विकृतो भ्रुवः क्रियादिः। चक्षुः कातरम्। चेष्टितं हृथास्थानात् स्थानान्तरगमनादि। याज्ञवल्क्यः।

देशाद्देशान्तरं याति सृक्कणी परिलेढि च।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्य मेति च॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धम्बहु भाषते।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः।
अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्त्तितः॥

मनोवाक्कायकर्मभिर्यः स्वभावाद्विकृतिं गच्छेत न भयादिनिमित्तमसावभियोगे साक्ष्ये वा दुष्टः परिकीर्त्तितः। मनः प्रकृतिविकृतिरेव विविच्य दर्शयति। देशान्तरं याति नचैकत्रावतिष्ठते। सृक्कणी ओष्ठप्रान्तौ परिलेढि जिह्वया पुनः परि-

घटयतीति कर्मणो विकृतिः। अस्य ललाटं स्विद्यते स्वेद-बिन्दुसन्दोहाङ्कितम्भवति। मुखं वैवर्ण्यं वर्णान्यत्वं पाण्डुत्वकृष्ण-त्वादि। एति प्राप्नोतीति। कायश्च परिशुष्यत्स्खलद्वाक्यः। परिशुष्यत्सगद्गदं स्खलद्व्यत्यस्तपदवर्णं वाक्यं यस्य सः। बहु अनुपयुक्तं विरुद्धं पूर्वापरविरोधवद्भाषत इति वाचः। प-रोक्तां वाचम्प्रतिवचनदानेन। चक्षुश्च परस्य प्रतिवीक्षणेन न पूजयति नाभिनन्दतीति मनोविकृतेर्लिङ्गम्परकीयमनोविकृ-तेरप्रत्यक्षत्वात्। तथा ओष्ठौ निर्भुजति वक्रयत्युपर्यधो भावेन चालयतीति कायस्यैव विकृतिः॥ मनुरेव।

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च।
नेत्रवक्त्रविकारैश्च ज्ञायतेऽन्तर्गतं मनः॥

कात्यायनः।

आकारेङ्गितचेष्टाभिस्तस्य भावं विभावयेत्।
प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते॥
कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्षणम्।
भूलेखनं स्थानहानि स्तिर्यगूर्द्ध्वनिरीक्षणम्।
स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः॥

प्रतिवादीशब्देन परस्परप्रतिपक्षवादित्वादुभयोर्ग्रहणम्। अ-भिमर्षणञ्जिह्वयोष्ठप्रान्तावलेहनं द्वन्द्वैकवद्भावः। श्रीरामायणे।

आकारं छाद्यमानोऽपि न शक्यो विनिगूहितुम्।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम्॥

अनेन च पराजयसम्भावनामात्रम्प्रतिपाद्यते तस्य च फलं क्रियादिपरामर्शे सभ्यादीनामत्यवधानेन व्यवहारशेषविचारः। नचैतावता पराजयनिश्चयो साध्यनिर्णयो वा नैसर्गिकनैमि-

त्विकविकारयोर्वैलक्षण्यस्य विवेक्तुमशक्तत्वात्। यद्यपि कोऽपि निपुणतममतिर्विवेक्तुं शक्नुयात् तथापि न पराजयनिमित्तमसाक्षित्वनिबन्धनं वा दण्डादिकार्यं सम्भवति। न हि निपुणभिषगभियोगमूलकमरणनिश्चयेऽपि मृतकार्य्यमार्याः समाचरन्ति। योगीश्वरः।

सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत्।
नचाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः॥

सन्दिग्धमधमर्णादिभि रनभ्युपगतमेवार्थं यः स्वतन्त्रः। प्रमाणनिरपेक्ष एव साधयेदासेधादिना राजादिभ्यो ऽनिवेद्यैव तस्माज्जिघृक्षति तदुपरि दण्डाद्यादयति वा स हीनो-दण्ड्योभवति। न परं प्रकृतार्थहानिमाप्नोति प्रत्युत स्वातन्त्र्यनिबन्धनं राजदण्डमपि दातुमर्हति। यश्च स्वयमभ्युपेतं साधनेन वा साधितयाच्यमानो निष्पतेत्। पलायेत सोऽपि तथा दण्ड्यः। साधितं धनञ्च दाप्यः। यश्चाहूतोऽभियुक्तो राज्ञा चाहूतः सदसि न किञ्चिद्वदति स प्रकृतार्थहानिं दण्डञ्च प्राप्नोति। प्रकरणात् दुष्टपरिज्ञानमेव माभूदिति दण्ड्यग्रहणं दण्ड्योऽपि शास्त्रोऽप्यर्थान्न हीयत इतिस्वार्थान्नहीयत इत्यर्थादहीनत्वदर्शनादत तन्माभूदिति हीनग्रहणं नारदोऽपि।

अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः।
आहूत प्रपलायी च हीनः पञ्चविधः स्मृतः।
अन्यवादी तथा हीनः स एव विहतानृतः॥
पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः॥

कात्यायनेनापि।

श्रावयित्वा यदा कार्यन्त्यजेदन्यद्वदेदसौ।
अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते॥

यश्च कश्चिदभियुज्य नाहमेनमभियुञ्ज इत्येवं विरुद्धमभिदधीत सोऽप्यन्यवादीतथा हीन इत्याह स एव।

न मयाऽभिहितं कार्यमभियुज्य परं वदेत्।
विब्रुवंश्च भवेदेवं हीनन्तमपि निर्दिशेत्॥

तथा पत्रे लिखितं पूर्वपक्षमप्यन्यथा कुर्वन्नन्यवादी तथा हीन इत्यथाह स एव।

लेखयित्वा तु यो वाक्यमूनं वाऽभ्यधिकं पुनः।
वदेद्वादी स हीयेत नाभियोगन्तु सोऽर्हति।

अभियोगं पूर्वपक्षं नार्हति वादित्वयोग्यो न भवतीत्यर्थः। क्रियाद्वेषिणो ऽनुपस्थातुश्च हीनताया स्तेनैव विवरणं कृतम्।

सभ्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः।
तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते॥
आह्वानादनुपस्थानात् सद्य एव स हीयते।

निरुत्तरतया हीन मप्याह स एव॥

ब्रूहीत्युक्तोऽपि न ब्रूयात् सद्यस्तद्धनमर्हति।
द्वितीयेऽहनि दुर्बुद्धेर्विद्यात्तस्य पराजयम्॥

पराजयं पराजयचिह्नहीनताम्। अतएव हारीतः।

सोपदेशं हरेत्कालमब्रुवं श्चापसंसदि।
उक्ता वक्ती विब्रुवंश्च हीयमानस्य लक्षणम्॥

सोपदेशं सव्याजम्। यथाह कात्यायनः।

व्याजेनैव तु यत्रासौ दीर्घकालमतिक्रमेत्।
सोपदेशन्तु तद्विद्याद्वादहानिकरं स्मृतमिति।

आहूत-प्रपलायी । अभियोगपरिहारार्थं माह्वानबुद्ध्या-प्रच्छन्नचारी । एतेषा मुत्तरोत्तरस्य हीनता गुर्वीति ज्ञाप-यितुं हीनं पञ्चविध इत्युक्तं न परिसंख्यार्थमन्येषामपि हीनत्व स्मरणात् । हीनता गुरुत्वज्ञापनं दण्डभूयस्त्वार्थम् । यच्चोक्तं कात्यायनेन ।

अन्यवादी पणान् पञ्च क्रियाद्वेषी पणान्दश ।
नोपस्थाता दश द्वे च षोडशैव निरुत्तरः ॥

आहूतप्रपलायी च पणान्दाप्यस्तु विंशतिम् । अत्रापि विशेष उक्तस्तेनैव ।

त्रिराहूत मनायात माहूत प्रपलायिनम् ।
पञ्चरात्र मतिक्रान्त विनयेत्तं महीपतिः ॥

कात्यायनेनैव प्रकारान्तरेणापि हीन उक्तः—

अवितव्यवहाराणामेकं यत्र प्रभेदयेत् ।
वादिनं लोभयेच्चैव हीनस्तमपि निर्दिशेत् ॥

आवितव्यवहाराणां सभ्यादीनां मध्ये एकमपि यः प्रभे-दयेत् । अन्यद्वारानुरोधाद्युत्पादनेनेत्यर्थः । बृहस्पतिरपि ।

भयं कुर्वति भेदं वा भीषणं वा निरोधनम् ।
एतानि वादिनो यस्य व्यवहारे स हीयते ॥

भयादीनि व्यस्तसमस्तानि येन कृतानि स हीयत इत्यर्थः । भयं करोति भीषण मन्यमुखेन भयोत्पादनमिति शेषः । मनुरपि । अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः ।

यश्चाधरोत्तरानर्थान् विगीतान्नाववुध्यते ॥
अपदिश्यापदेश्यञ्च पुनर्य्यस्त्वपधावति ।
सम्यक् प्रणिहितञ्चार्थं पृष्टः सन्नाभिनन्दति ॥

श्रावयित्वा यदा कार्यन्त्यजेदन्यद्वदेदसौ ।
अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते ॥

यश्च कश्चिदभियुज्य नाहमेनमभियुञ्ज इत्येवं विवदमानः भिदधीत सोऽप्यन्यवादीतया हीन इत्याह स एव ।

न मयाऽभिहितं कार्यमभियुज्य परं वदेत् ।
विब्रुवंश्च भवेदेवं हीनन्तमपि निर्दिशेत् ॥

तथा पत्रे लिखितं पूर्वपक्षमप्यन्यथा कुर्वन्नन्यवादी तया हीन इत्यथाह स एव ।

लेखयित्वा तु यो वाक्यमूनं वाऽभ्यधिकं पुनः ।
वदेद्वादी स हीयेत नाभियोगन्तु सोऽर्हति ।

अभियोगं पूर्वपक्षं नार्हति वादित्वयोग्यो न भवतीत्यर्थः । क्रियाद्वेषिणो ऽनुपस्थातुश्च हीनताया स्तेनैव विवरणं कृतम् ।

सभ्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः ।
तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते ॥
आह्वानादनुपस्थानात् सद्य एव स हीयते ।

निरुत्तरतया हीन मप्याह स एव ॥

ब्रूहीत्युक्तोऽपि न ब्रूयात् सद्यस्तद्धनमर्हति ।
द्वितीयेऽहनि दुर्बुद्धेर्विद्यात्तस्य पराजयम् ॥

पराजयं पराजयचिह्नहीनताम् । अतएव हारीतः ।

सोपदेशं हरेत्कालमब्रुवं श्चापसंसदि ।
उक्ता वची विब्रुवंश्च हीयमानस्य लक्षणम् ॥

सोपदेशं सव्याजम् । यथाह कात्यायनः ।

व्याजेनैव तु यत्रासौ दीर्घकालमतिक्रमेत् ।
सोपदेशन्तु तद्विद्याद्वादहानिकरं स्मृतमिति ।

आहूत-प्रपलायी। अभियोगपरिहारार्थं माह्वानबुद्धा-प्रच्छन्नचारी। एतेषा मुत्तरोत्तरस्य हीनता गुर्वीति ज्ञाप-यितुं हीनं पञ्चविध इत्युक्तं न परिसंख्यार्थमन्येषामपि हीनत्व स्मरणात्। हीनता गुरुत्वज्ञापनं दण्डभूयस्त्वार्थम्। यच्चोक्त ङ्कात्यायनेन।

अन्यवादी पणान् पञ्च क्रियाद्वेषी पणान्दश।
नोपस्थाता दश द्वे च षोडशैव निरुत्तरः॥

आहूतप्रपलायी च पणान्दाप्यस्तु विंशतिम्। अत्रापि विशेष उक्तस्तेनैव।

त्रिराहूत मनायात माहूत प्रपलायिनम्।
पञ्चरात्र मतिक्रान्त विनयेत्तं महीपतिः॥

कात्यायनेनैव प्रकारान्तरेणापि हीन उक्तः—

अवितव्यवहाराणामेकं यत्र प्रभेदयेत्।
वादिनं लोभयेच्चैव हीनन्तमपि निर्द्दिशेत्॥

आवितव्यवहाराणां सभ्यादीनां मध्ये एकमपि यः प्रभे-दयेत्। अन्यद्वारानुरोधाद्युत्पादनेनेत्यर्थः। बृहस्पतिरपि।

भयं कुर्वति भेदं वा भीषणं वा निरोधनम्।
एतानि वादिनो यस्य व्यवहारे स हीयते॥

भयादीनि व्यस्तसमस्तानि येन कृतानि स हीयत इत्यर्थः। भयं करोति भीषण मन्यमुखेन भयोत्पादनमिति शेषः। मनुरपि। अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः।

यश्चाधरोत्तरानर्थान् विगीतान्नावबुध्यते॥
अपदिश्यापदेश्यञ्च पुनर्यस्त्वपधावति।
सम्यक् प्रणिहितञ्चार्थं पृष्टः सन्नाभिनन्दति॥

असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः ।
निरुच्यमानं प्रश्नञ्च नेच्छेद्यश्चापि निष्पतेत् ॥
ब्रूहीत्युक्तश्च न ब्रूयादुक्तञ्च न विभावयेत् ।
न च पूर्वापरं विद्यात्तस्मादर्थात् स हीयते ॥
ज्ञातारः सन्ति मेत्युक्का दिशेत्युक्तो दिशेन्न यः ।
धर्मस्थः कारणैरेतैर्हीनन्तमपिनिर्दिशेत् ॥

अदेश्य मनुपयोगासभ्यत्वादिना निर्देशानर्हं दिशति कथयति यः। यश्च कथितमपि नमयेदमुक्तमित्यपलपति । यश्चा धरोत्तरानर्थान् पूर्वापराभिहितान्विगीतान्विरुद्धांस्तत्त्वेन नाववुध्यते। यश्चापदेशं व्याजं पीडादिकमपदिश्योद्भाव्याप-धावति अपसरति सभातः। यश्च सम्यक् प्रणिहितं सम्यक् प्रणिधानेनाकलितमपि परोक्तमर्थं पृष्टः सन्नाभिनन्दति अनु-वादप्रत्युत्तरदानादिना नाद्रियन्ते । मेधातिथिस्त्वदेशमिति पठित्वा भाषावादिलिखितदेशभिन्नमसम्भावितं वा ·देशम् । यद्वाभियोक्तादिशेद्देशमित्यत्र व देशशब्देन साक्षिणो व्याख्याय साक्षिनिर्देशः। अकाले असम्भावितः साक्षिणो निर्दिशति-व्याचख्यौ । यश्च ज्ञातारः साक्षिणो मदुक्तेऽर्थे सन्तीति सभा-यामुक्का के ते वदेत्युक्तो न वदेत्तान्। अत्र मा मां ज्ञातारः। यथार्थवाद्यहमिति जानानाः साक्षिण इति यावत्। द्विती-यैकवचनान्तस्यास्मच्छब्दस्य द्वितीयाया इत्यनेन मां इत्यस्य मा इत्यादेशः।[९] नतु मे इति षष्ठ्यन्तमेतत्। खलर्थक्तृनमिति तन्निषेधात्। तेनमेति सन्धिरपि समाहित इति मेधातिथिः। आचार्यास्तु। व्याकरणाधिकरणे सन्धिकरणमत्रापशब्द इति पूर्वपक्षप्रसङ्गेन वदन्तः षष्ठ्यन्ततामेवास्य मन्यन्ते मे सन्तीति

सम्बन्धान्न तृतीयसम्बन्धप्रयुक्तषष्ठीप्रतिषेधावकाश इति तेषामभिसन्धिः। सन्ति ज्ञातार इत्युक्तेति कल्पतरुलिखितपाठस्त्वनाकर एवाचार्य्यमेधातिथिव्यासमधृतत्वादिति ध्येयम्। सिद्धान्ते त्वाचार्य्याणां छान्दसत्व मत्र समाधिरभिमतः। एतैः कारणैर्य्यैस्तैः समस्तैर्वा वादिप्रतिवादिनोरन्यतरं हीनन्निर्दिशेदित्यर्थः। हीनवादितया दण्डार्हतामात्रन्न प्रकृतार्थहानिरिति प्रमादपरिहारार्थमेवायं प्रपञ्चः। छलन्निरस्येत्यादि वचनात्। अतएव नारदोऽपि।

सर्वेष्वर्थविवादेषु वाक्छलेनावसीदति।

परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयत इति।

अस्यार्थः। अर्थविवादेषु सर्वेषु वाक्छले प्रमादाभिधाने पूर्वप्रपञ्चितेऽपि नावसीदति प्रकृतादर्थान्न हीयते। अत्रोदाहरणमात्रं परस्त्रीत्यादि। एतेषु प्रमादाभिधानेऽपि शास्योदण्ड्योऽपि यथा न प्रकृतार्थाद्धीयते इति। एवं सर्वेष्वर्थविवादेष्वित्यर्थः। अन्यथा परस्त्रीत्यादेरानर्थक्यमेव भवेत्।

अर्थविवादोपादानान्मन्युकृतेषु प्रकृतार्थादपि हीयत इत्यर्थादुक्तं भवति। यथाह मनेन शिरसि ताड़ित इत्यावेद्य भाषादिसमये हस्तेन पादे ताड़ित इति वदन् दण्ड्यः पराजितश्च भवति। मन्युकृतावेषादशदेवताड़नादिकमयमस्मिन्नारोप्यावेदितवान् धर्म्माधिकरणे इति प्रतीतेः। अतएव दोषानुरूपं संग्राह्यं पुनर्वादो न विद्यत इति वार्हस्पत्यः पुनर्वादनिषेधोऽपि मन्युकृतव्यवहारविषय एव। ग्राह्यो दण्डमित्यर्थात्। असम्भाष्ये सम्भाषमाणनर्हे विजन इति यावत्। नेच्छेत् श्रुतमप्यश्रुतवत्कुर्य्यात्। राजकार्य्यादिव्याज-

मुत्पाद्य ग्रामान्तरङ्गच्छेत्। ब्रूहीत्यादिगतार्थम्। अन्वा-देयमित्यादौ ब्रूहीत्यादौ च बहुक्तत्वोऽपि पथ्यं वदितव्य-मिति शावरभाष्योक्तरीत्याऽस्मिन् प्रकरणे पुनरुक्ति र्नदोष इति भगवान्मेधातिथिराह। क्वचिदर्थविवादेऽप्यर्थहानिः। सन्दि-ग्धार्थमित्यनेन दर्शिता। नारदोऽप्याह।

अनिवेद्य तु यो राज्ञे सन्दिग्धेऽर्थे प्रवर्तते।
प्रसह्य स विनेयः स्यात्सचाप्यर्थे च सिध्यति॥

प्रवर्त्तते साधयति बलादिनेत्यर्थः। बृहस्पतिरपि।

आहूतप्रपलायी च मौनी साक्षी पराजितः।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः॥
साक्षी पराजितः साक्षी वचनाद्ये पराजितः,
स्ववाक्यप्रतिपन्नः सः प्रतिपत्युत्तरदाता,

अनयोर्दृष्टान्तत्वेनोपादानम्। यथाऽनयो रविप्रतिपन्नार्थ-हानि स्तथान्ययोरपीत्यर्थः। अत्राप्युत्तरोत्तरहीनताधिक्यप्रति-पादनार्थं चतुर्विधग्रहणान्नपरिसङ्ख्यार्थमन्यथाऽन्येषान्तत्कथनं विरुध्येत। कस्मिन् कदाहीनकार्य्यमित्यत्र कालावधिरुक्तस्ते-नैव।

प्रपलायी त्रिपक्षेण मौनश्चसप्तभि र्दिनैः।
साक्षिभिन्न स्तत्क्षणेन प्रतिपन्नश्च हीनत इति॥

साक्षिभिन्नस्तत्पराजितः यश्च सामान्यः साक्षिणो निर्दिश्य पश्चाद्विशिष्यानिर्दिशन्ननुनाद्भातार इत्यनेन, हीनतयोक्तिस्त-त्रापि कालावधि बृहस्पतिरेवाह।

साक्षिणस्तु समुद्दिश्य यस्तु तान्न विवादयेत्।
त्रिंशद्रात्रिपक्षाद्वा तस्य हानिः प्रजायत इति।

दैविकराजिकान्तराये त्ववध्यतिक्रमेऽपि न दोष इत्यप्याह स एव।

आचारकरणे दिव्ये कृत्वोपस्थाननिर्णयम्।
नोपस्थितो यदा कश्चिच्छलन्तत्र न कारयेत्॥
दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत्।
अवधित्यागमात्रेण न भवेत् स पराजित:॥

इति आचारकरणे व्यवहारकारणे। छलन्तत्र कारयेदिति वदता यत्र वचने नार्थहानि: प्रतिपादिता तत्रैव पुनर्विवादाभावोऽन्यत्र तु हीनतानिमित्तं दण्डं कृत्वा पुनर्वाद: प्रवर्त्तनीय एवेति सूचितं यत आह। कात्यायन:।

पलायनानुत्तरत्वादन्यपक्षाश्रयेण वा।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च॥

स्ववाक्यजितस्येति प्रकृतार्थहानिनिमित्तोपलक्षणन्तेनैव विवृतमिदम्।

यो हीन चिह्नेन जित स्तस्योद्धारंविदुर्बुधा:।
स्ववाक्यहीनो यस्तु स्यात् तस्योद्धारो न विद्यत इति॥

उद्धार: पुनर्व्यवहार:। अत्रापि स्ववाक्यहीन इति प्रकृतार्थहानिनिमित्तोपलक्षणम्। विवादमुपक्रम्य राजानं वञ्चयित्वाऽन्योन्यं यौ वादिप्रतिवादिनौ स्वयमेव विवादान्निवर्त्तेते तयोरुभयोरपि दण्ड्यत्वमाह बृहस्पति:।

पूर्वोत्तरे सन्निविष्टे विचारे सम्प्रवर्त्तिते।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणन्दमम्॥

मिथ इत्यनेन राज्ञो निवेदनमकृत्वैवाऽन्योन्यमित्युक्तो राजवचनमवगम्यते। कात्यायनस्तु स्पष्टमाह।

आवेद्य प्रगृहीतार्थं प्रशमं यान्ति ये मिथः ।
सर्वे द्विगुणदण्डाः स्युर्विप्रलम्भान्नृपस्य त इति ॥

द्विगुणो दण्डस्तु पराजयनिमित्तदण्डापेक्षया । नतु विवादास्पदीभूतद्रव्यापेक्षया अद्रव्य विवादेष्वव्याप्तेः । राज्ञे निवेद्याऽन्योन्यरुच्या राजानुरोधेनैव वा सन्धिकरणे तु न दण्ड इत्यर्थः । सिद्धं स्फुटीकृतं बृहस्पतिना ।

पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्य्यनिर्णये ।
द्वयोरुत्तरयोः सन्धिः स्यादयः खण्डयोरिव ॥
साक्षिसभ्य विकल्पस्तु भवेत्तत्रोभयोरपि ।
दोलायमानौ यौ सन्धिं कुर्यातान्तौ विचक्षणौ ॥
प्रमाणसमता यत्र भेदः शास्त्रचरित्रयोः ।
तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते ॥
धर्मार्थोपग्रहः कीर्त्तिर्भवेत्साम्येन भूभृतः ।
न क्लिश्यन्ते साक्षिसभ्या वैरञ्च विनिवर्त्तते ॥
निग्रहानुग्रहं दण्डं धर्मं प्राप्य यशोऽयशः ।
विग्रहाज्जायते नृणां पुनर्दोषस्तथैव च ॥
तस्मात्कुलगणाध्यक्षधर्मज्ञाः समदृष्टयः ।
अद्वेषलोभाद्ब्रूयुस्तत्कर्त्तव्यं विजानतेति ॥

साक्षिसभ्य विकल्प इति । उभयोरप्यर्थिप्रत्यर्थिनोः किमेते वक्ष्यन्तीति साक्षिसभ्यविषयको विकल्पो भवेत् तत्र कार्य्यनिर्णये दोलायमानौ सन्देहदोलारूढौ यावर्थिप्रत्यर्थिनौ सन्धिं कुर्य्यातान्तौ विचक्षणौ चतुरौ पराजयजनिताऽप्रतिष्ठादितिरोधानादित्यर्थ इति कल्पतरुः । रत्नाकरस्तु साक्षिणां सभ्यानाञ्च विकल्पः परस्परविरोध इत्याह । प्रमाण-

समतेति। यत्र सभ्यानां वादिद्वयपक्षे प्रमाणं साम्यं प्रतिभाति। यत्र च शास्त्रचरित्रयोर्भेदः शास्त्रे शास्त्रान्तरेण चरित्रे व्यवहारे चरित्रान्तरेण भेदो विप्रतिपत्ति र्न तु शास्त्रव्यवहारयोः परस्परम्भेद इति व्याख्यानं धर्मशास्त्राविरोधे व्यवहारस्यार्थशास्त्रत्वेन दुर्बलत्वात्।

तत्र राजाज्ञया सन्धिः कार्य्यत्वेन प्रशस्यते।

धर्म्मार्थोपग्रहादिहेतुत्वात्। निग्रहानुग्रहाद्य व्यवस्थानिवर्त्तकत्वाच्च। तस्मादित्यादिना राजाज्ञैव केवलं न सन्धिहेतुः कुलगणाध्यक्षादिवचोऽपि राजवचश्च नयेति प्रतिपाद्यते। एतच्च प्रत्याकलितं सभ्यैरवश्यमादर्त्तव्यमित्याह नारदः।

प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः।
सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः॥

अस्यार्थः स्मृतिचन्द्रिकाकारेणैवमुक्तः। अव्यवस्थितैः प्रमाणैः प्रमाणानि प्रमाणकर्त्तारः प्रमाणशब्देन लक्ष्यते। ते सीदन्ति विनश्यन्ति निर्णयं नाप्नुवन्ति। अतः प्रत्याकलनकौशलेन प्रमाणज्ञैः सभ्यैर्यत्नतस्तानि प्रमाणानि परिपाल्यानि यथा व्यवस्थादुःस्थितानि न भवन्ति तथा विवेचनीयानीत्यर्थ इति। वयन्तु अव्यवस्थितैर्मूलशैथिल्यादिना दुःस्थितैः प्रमाणैः प्रमाणानुग्राहकैस्तर्कैः प्रमाणानि साक्ष्यादीनि सीदन्ति निर्णयाक्षमाणि भवन्ति। हि यतोऽतः प्रमाणज्ञैः प्रमाणानि यत्नतः परिपाल्यानि सत्तर्कपरिशुद्ध्यनुग्रहेण तत्त्वनिर्णयफलानि कार्य्याणीति व्याचक्ष्महे। अनयोश्च व्याख्यानयोस्तारतम्यन्तत्त्वविद्भिर्विवेचनीयम्। इदञ्च प्रत्याकलितव्यवहर्त्तृसम्बन्धाभावाऽव्यवहारदर्शिमात्रकर्त्तृकत्वान्न व्यवहारपाद-

चतुष्टयान्तर्भूतमिति मिताक्षराकारस्य सम्मतम्। नत्वनुपादेयमेतदन्तरेण तृतीयक्रियापादानवतारात्। यथाह। उत्तराभिधानानन्तरमर्थिप्रत्यर्थिनोः कस्य क्रिया का वा क्रियेति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानाद्यवहर्तृसम्बन्धाभावाच्च न व्यवहारपादत्वमिति। अपरार्कस्तु। साध्यसिद्धिपदेन जयपराजयावधारणं लक्षणं प्रत्याकलितं योगीश्वरवचने लक्षणया गृह्यत इति वदन् क्रियोपन्यासोत्तरकालीनविचारस्य सभ्यैः क्रियमाणस्य प्रत्याकलितरूपतामभिप्रैति। सम्प्रतिपत्त्युत्तरेण क्रियापादेनापि जयपराजयावधारणलक्षणप्रत्याकलितपाद इति द्विपात्त्वमेवेति ब्रुवाणो वाचस्पतिरपि तदेवानुबध्नाति। कल्पतरुस्मृतिचन्द्रिकाकारौ मिताक्षराकारवदेवोत्तरलेखनानन्तर-भावितानां हीनपरिज्ञानसन्धिकरणक्रियादानानां क्रियापादप्राग्भाविनां प्रत्याकलितत्वमभिहितवन्तौ। व्यवहारोपयोगित्वाद् बृहस्पत्यादिवचनानां प्रागस्मल्लिखितानामनुरोधाच्च व्यवहारपादत्वं परन्तदनभ्युपगतमभ्युपगतवन्तौ क्रियापादप्राग्भावित्वमेव तु तस्य युक्तम्। ये तु तिष्ठन्ति करण इत्यादि वचनात् व्यवहारपादत्वमस्तु नवेत्यन्यदेतत्। यत्तु। साध्यसिद्धे व्यवहारफलत्वान्न व्यवहारपादत्वं युक्तमिति। तन्न। व्यवहारभावनया फलापवर्गिण्याः फलनिरूप्यत्वेन फलस्य तदंशत्वेन तत्पादत्वे बाधकाभावात्। अतएव त्र्यंशाभावनेति मीमांसकानामुद्घोषः। तात्पर्य्यपरिशुद्धावुदयनाचार्यस्तु प्रमाणोपन्यासमेव प्रत्याकलितमभिमन्यन्ते। तदाहुः। यद्यपि परीक्षायां न वादिप्रतिवादिनौ स्तः। पृच्छोपक्रममात्रेण

द्वितीयोपयोगात्। सम्भवेऽपि तयोर्विषयोपस्थापनमात्र पर्य्यवसानात् स्थेयस्यैव परीक्षकत्वम्। तथापि पूर्वपक्षोत्तरपक्षप्रत्याकलितनिष्कर्षभेदेन चतुष्पाद्व्यवहारपूर्वप्रवर्त्तनात् फलतो न कश्चिद्विशेषः। एककर्त्तृकत्वेऽपि तावत एव व्यापारकलापस्य विचारे विद्यमानत्वात्। तस्मादप्यनिपुणो देशकस्तथापि देश्यं सावगममेवेति। वस्तुतस्तु न प्रमाणोपन्यासस्तेषां प्रत्याकलितत्वेनाभिप्रेतः। किन्तु सभिकस्तत: प्रमाणोपष्टम्भकस्तत्त्कादिपरामर्श एव। यतो न शास्त्रीयकथायां व्यवहारवत्पूर्वपक्षोत्तरपक्षौ स्वाभिमत सहेतुकसाध्यनिर्देशमात्रपरौ। किन्तु पूर्वपक्षिणा कण्टकोद्धारोत्तरपक्षदूषणपुरःसरं स्वपक्षे स्थिरीकृते सिद्धान्तवादिना तदुभयप्रतिक्षेपेण स्वपक्षसाधकप्रमाणकप्रमाणप्रथमप्रख्यापनं क्रियते। ततः स्थेयैस्तदुभयविवेकाख्य प्रत्याकलितेन निष्कर्ष एकतरपक्षनिर्द्धारणरूपः क्रियते। तावता कथासमाप्तिर्वादे जल्पवितण्डयोस्तु सभिकादीनामुत्तरोऽपि व्यापारो विद्यत इत्यादि लक्षणमाकरे। अत्र तु साक्ष्यादिविलक्षणं मानमुत्तरभेदेन नियतं प्रागुपन्यासानर्हमिति न पूर्वोत्तरपादान्तर्गतिरस्य। अतएवात्र प्रत्याकलितस्यात्रोत्तरे कस्य क्रियेत्यादि विमर्शस्य स्थेयकृतस्य प्रत्याकलितस्य शाब्दत्वं प्रमाणोपन्यासान्तत्र तु प्रतीच्यत्वमेव स्थेयकृतप्रमाणसाध्वसाधुताविवेकरूपताचेत्यस्तु विस्तरः। एवं प्रत्याकलितमाकलितम्। अधुना क्रियापादो विविच्यते। तत्र कात्यायनः।

वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम्।
तत्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम्॥

सारभूतं पदम्भुक्त्वा निःसाराणि बह्वन्यपि ।
संसाधयेत् क्रियायान्तु ताञ्जह्यात्सारवर्जिताम् ॥
पक्षद्वयं साधयेद्या ताञ्जह्याद्दूरतः क्रियाम् ।
क्रियां बलवतीमुक्त्वा दुर्बलं योऽवलम्बते ।
स जयेऽवधृते सभ्यैः पुनः स्तान्नाप्नुयात् क्रियामिति ॥

ताम्बलवतीम्। तेन प्रागेवप्रबलं प्रमाणमुद्भाव्यं दुर्बलप्रमाणालम्बनेन पराजितस्य पश्चात्प्रबलोपप्रमाणोपन्यासावसरो नास्तीत्यर्थः। अतएवाह नारदः।

निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्वमावेदितं नवेति ॥

निर्णिक्ते शोधिते। अन्यतरजयपराजयान्यतरावधारणं प्रापित इति यावत्। पूर्वमेव दुर्बलप्रबलसकलप्रमाणोपन्यासकृते तु सर्वप्रमाणानुसारेण फलं निरस्येत्यभिधानात्। पश्चादुद्भावितन्तु कृत्रिमत्वादिशङ्काकलङ्कितमित्यनुपादेयमेवेत्यर्थः। अतएव पूर्ववाक्येऽपि भुक्तेति पुनरिति चोक्तम्। सएव यथा।

पक्वेषु धान्येषु यथा निष्फला प्रावृषो गुणाः ।
निर्णिक्तव्यवहाराणां प्रमाणमफलं तथेति ॥

उत्तरे यत्र निवेशिते साध्यसिद्धे साधनाय तत्साधननिर्देशङ्कः कुर्य्यादित्यपेक्षिते याज्ञवल्क्य आह।

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।
तत उत्तरलिखनान्तरमर्थी अर्थ्यत इत्यर्थः ॥

साध्यं सोऽस्याऽस्तीत्यर्थी साध्यवान्। सद्य एवाविलम्बेन प्रतिज्ञातस्य प्रतिज्ञाविषयस्यार्थस्य साध्यस्य साधनम्। सा-

ध्यतेऽनेनेति साधनं प्रमाणम्। साध्यादि लौकिकमलौकिकं वा लेखयेत्। लेखकद्वारा स्वयंवा लिखेदित्यपि द्रष्टव्यम्। दृष्टार्थत्वात्। अत्र सद्य इति वदन्नुत्तराभिधाने कालविलम्बनमप्यनुमन्यते। तच्च विशेषपरिभाषायां विवक्ष्यते। अर्थी लेखयेदित्यनेन सम्प्रतिपत्तौ न कस्याप्यर्थित्वमिति न कोऽपि साधनं लेखयेदिति पादद्वयेनैव व्यवहारनिर्वाहः। तथाचोक्तम्। द्विपात्सम्प्रतिपत्तिस्तिष्ठति मिथ्योत्तरे पूर्ववादिन एवार्थित्वात् सएव साधनं लेखयेत्। कारणोत्तरप्राङ्न्यायोत्तरयोस्तु प्रत्यर्थ्यैव साध्यवान् कारणप्राङ्न्याययोस्तस्यैव साध्यत्वादिति सएव लेखयेदित्युक्तं भवति। तेन।

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम्।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्।
मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि।
प्राङ्न्यायेऽपि तथैव स्यात्प्रतिपत्तौ न सा भवेदिति॥

व्यासादि स्मृत्युक्तोऽर्थोऽर्थिपदेन सङ्क्षेपतः। सर्व एवोक्तो भवति। अत्र चण्डेश्वरः।

साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम्।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृत॥

इत्यत्र सद्यो विवादयेदुत्तरन्दापयेदित्यनेन प्रत्यर्थिपक्षस्य लिखने विलम्बप्राप्तौ साहसादिषु तत्पक्षमपि सद्य एव लेखयेदिति योऽपवादः स यदि प्राग्भाषावादिपक्षलिखने विलम्बोक्त्यार्थप्राप्तः। प्रत्यर्थिपक्षलिखनविलम्बः स्यात् तदैव घटते नान्यथेत्येतद्वाक्यव्याख्याने यदर्थिपदेन प्रत्यवस्कन्दनप्राङ्न्याययोः प्रत्यर्थ्येवाऽर्थीजात इति स एव साधनं लेखये-

दिति। प्रत्यर्थिनोऽपि ग्रहणमिति मिताक्षराकारव्याख्यातं तत्पूर्वापरविरोधान्मन्दमित्याह। तदति साहसम्। भाषोत्तरवादिपक्षमात्र लेखनपरत्वं यद्यनयोर्वाक्ययोस्तर्हि साधनपदान्वये समासानुपपत्तेः। सन्दर्भविरोधाच्च। साधनलेखनस्यैवोत्तरं लिखनोत्तरमाकाङ्क्षितत्वात्। साहसादिष्वप्युत्तरभेदव्यवस्थया द्वयोरपि पूर्ववाक्योपात्तसाधनलेखनं सद्यस्त्वर्थाच्चिरोक्तलेखनविलम्बापवादोपपत्तेः। नचोत्तरलेखनं सर्वत्र प्रत्यर्थिन एवेति तद्विलम्बानुमतिविमत्योस्तं प्रत्येव प्रतिपादनमर्हमिति वाच्यम्। एतावतापि क्रियोपन्यासप्रतिपादकवचनस्यार्थिपदेन भाषावादिमात्रग्रहणाग्रहे नियामकाभावात्। प्रत्युत मिथ्याक्रियेत्यादिवचनार्थसंग्रहाय द्वयोरपि ग्रहणमर्थिपदेनेत्यस्यैव युक्तत्वात्। एवं सति मिताक्षरायां पूर्वापरविरोधापादनमज्ञानबिलसितमेवेत्यास्तां तावत्। वृहस्पतिः।

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा।
एकैकानेकधा भिन्ना मुनिभिस्तत्त्ववादिभिः॥
साक्षिलेख्यानुमानञ्च त्रिविधा मानुषी क्रिया।
साक्षिलेख्यानुमानमिति द्वन्द्वैकवद्भावः॥
साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम्।
अनुमानन्तुद्विविधन्नवधा दैविकी क्रिया॥

इदं संख्याभिधानन्न नियमाय भेदान्तराणामपि प्रमाणप्रकरणे वक्ष्यमाणत्वात्। कात्यायनः।

लिखितं साक्षिणोभुक्तिः प्रमाणन्त्रिविधं विदुः।
लेख्योद्देशस्तु युक्तिः स्याद्दिव्यानीह विषादयः॥

लेशोऽन्यथानुपपन्नो धर्मस्तस्योद्देशोविमर्शो युक्तिरित्यर्थः।

पूर्ववादेऽपि लिखिते यथाऽक्षरमशेषतः।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत्॥

पूर्ववादो भाषालिखितं पूर्वपक्षतया लिखितं उत्तरमिति यावत्। तृतीयपादः प्रत्याकलिताख्यः तस्मिन् सति क्रियया प्रमाणेन प्रतिपादयेत् साध्यमितिशेषः। भाषोत्तरप्रत्याकलिताख्यपादत्रये सति क्रियया स्वकार्य्यमर्थी साधयेदिति तात्पर्य्यार्थः। कार्य्यक्रियाशब्दौ व्याचष्टे व्यासः॥

कार्य्यं हि साध्यमित्युक्तं साधनन्तु क्रियोच्यते।
द्विभेदा सा पुनर्ज्ञेया मानुषी दैविकी तथेति॥

साधनं प्रमाणं प्रत्याकलितस्य तृतीयव्यवहारपादत्वमभ्युपगच्छता स्मृतिचन्द्रिकाकारेणैवमिदं वचो व्याख्यातम्। मिताक्षराकारमते तु तृतीयपादक्रिययेति संमुख एवार्थः। साक्षीद्वादशभेद इत्यादिप्रमाणप्रकरणे प्रपञ्चयिष्यामः। याज्ञवल्क्यः। प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्।

एषामन्यतमाभावे दिव्यान्यतममुच्यत इति॥

दिव्येष्वन्यतममित्यर्थः कात्यायनः।

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम्।
मानुषीं तत्र गृह्णीयान्नतु दैवीं क्रियां नृपः॥
यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी।
सा ग्राह्या नतु पूर्णापि दैविकीं वदतां नृणाम्॥

एकदेशप्राप्ता साध्यैकदेशविषया। अत्र यद्येको वादी मानुषीं साक्ष्याद्यन्यतमां क्रियां स्वपक्षसाधकतयोपन्यसत्यन्यस्तु तत्प्रतिपक्षतया दैविकीन्तदर्यांदितरवादि-पक्षसिध्यसिध्योः

सुलभत्वेन न दिव्यापेक्षेति प्रथमवचनार्थः। एवमेकोऽपि वादी साध्यानेकत्वे साध्यैकदेशमपि यदि प्रमाणेन साधयति तदैकदेशविभावितन्यायेनैकदेशान्तरस्यापि सिद्धेर्वक्ष्यमाणत्वान्न दिव्यावसर इति द्वितीयवाक्यार्थः। दिव्यस्वरूपप्रमाणयो रागमैकगम्यत्वान्मानुष प्रमाणासम्भव एव दिव्यस्य प्रामाण्यमिति मुनिवचननिचयपर्य्यालोचनयावगम्यते। अन्यान्यपि क्वचित् क्वचित्केषाञ्चित् प्रमाणानां प्राधान्याभिप्रायेण व्यवस्थापकानि वचनान्यृषीणां यथा।

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु।

लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिण इति कात्यायनः। पितामहः।

स्थावरेषु विवादेषु दिव्यानि परिवर्ज्जयेत्।
साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत्॥

इदमपि साक्ष्यादिसमक्षस्थावरविषयविवादेषु सुलभमतस्तत् सम्भवान्वेषणमेव कार्यमित्येवम्परन्न सर्वथा दिव्यपरिहारपरम्। सर्वथा साक्ष्याद्यसम्भवेऽपि दिव्याग्रहणेति निर्णयाभाव प्रसङ्गात्। कात्यायनः।

दत्तादत्तेषु भृत्यानां स्वामिनां निर्णये सति।
विक्रीयादानसम्बन्धे क्रीत्वा धनमनिच्छति॥
द्यूते समाह्वये चैव विवादे समुपस्थिते।
साक्षिणः साधनं प्रोक्तन्नदिव्यं नच लेख्यकम्॥
पूगश्रेणीगणादीनां या स्थितिः परिकीर्त्तिता।
तस्यास्तु साधनं लेख्यन्नदिव्यन्न च साक्षिणः।
द्वारमार्ग क्रियाभोग जलवाहादिषु क्रिया।

भुक्तिरेव तु गुर्व्वी स्यान्न दिव्यं नच साक्षिणः।

दत्तादत्ते प्रतिश्रुत्या प्रदाने दत्वा पुनः प्रत्याहृत्य ग्रहणे वाग्दत्ताप्रदानिके विवादपद इति यावत्। भृत्या॰मित्यादिना वेतनादाने। विक्रीयादानेत्यादिना क्रयविक्रयानुशये इतरद्व्यक्तम्। दत्तादत्तादिषु बहूनां लिखितकरणा प्रसिद्धे र्भुक्तेश्चासम्भवात् साक्षिणश्चैतादृशि विषये सुलभत्वान्मानुषप्रमाणसम्भवे च दिव्यासम्भवान्न दिव्यं नच लेख्यकमित्युक्तम्। पूगादीनां सम्विदि तु बहुकर्तृकायां लिखितं विना न निर्वाहः। सर्वेषां व्यवहर्तृत्वान्नोदासीन साक्षिसम्भवो मानुषसत्वे च दिव्यानवकाश इत्यभिसन्धायाभिहितन्न दिव्यं च साक्षिण इति। द्वारमार्गादिष्वपि गमनागमनादिरूपभोगस्यैव परं भावाल्लेख्यस्य चाप्रसिद्धे र्मानुषाभाव एव च दिव्यावकाशान्न दिव्यमित्यादिभुक्तिरेव तु गुर्व्वीति चोक्तम्। एवं सर्ववचनानि विवेचनीयानि। अतएव

अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे।
न्यासापह्नवने चैव दिव्या सम्भवति क्रियेति॥

नारदेन। सम्भवतीत्युक्तं स एव।

यदा साक्षी न विद्येत विवादे वदतां नृणाम्।
तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः॥
स्त्रीणां शीलानियोगे च स्तेयसाहसयोरपि॥
एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु चेति॥

कात्यायनः। गूढसाहसिकानान्तु प्राप्तं दिव्यैः परीक्षणम्।
युक्तिलेशेङ्गिताकार वाक्चक्षुश्चेष्टितैर्नृणाम्॥
अलेख्य साक्षिके दैवीं व्यवहारे विनिर्दिशेत्।

दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् ॥

वृहस्पतिः । मणिमुक्ताप्रवालानां कूटकृन्न्यासहारकः ।

हिंसकोऽन्याङ्गनासेवी परीक्ष्यः शपथैः सदा ।
महापापाभिशापेषु निक्षेपहरणे तथा ॥
दिव्यैः कार्य्यं परीक्षेत राजा सत्स्वपि साक्षिषु ।
चिरन्तनो पांशुकृतचिरनष्टेषु साक्षिषु ।
प्रदुष्टेषु समानेषु दिव्यैः कार्य्यं विशोधयेत् ॥

अत्र सत्स्वपि साक्षिष्वित्यनेनैतादृशि विषये साक्षिण एव तावन्न सम्भवन्ति । सम्भवन्तोऽपि वा कथञ्चित्कूटतया प्रायः प्रदुष्टा इति विवक्षितं नतु यथाश्रुतम् । चिरन्तनकृते उपांशुकृते रहसि कृत इत्यनेन लेख्याद्यसम्भवमेवोपलक्षयति । अतएवाग्रे चिरनष्टेषु प्रदुष्टेषु समानेष्वित्यनेनासाक्षिरन्निमित्तान्युपलक्षितवान् । व्यासः ।

प्रथमे यत्र भिद्यन्ते साक्षिणश्च तथाऽपरे ।
परेभ्यश्च तथाचान्ये तं वादं शपथैर्नयेत् ॥

भिद्यन्ते प्रतिपद्यन्ते । कात्यायनः ।

समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत् ।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ॥
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ॥

साक्षिषु विद्यमानेष्वपि तत्र दोषावष्टम्भेन दिव्यमालम्बत इत्यर्थः । समत्वं साक्षिणां यत्रेति । यत्रोभाभ्यां भाषावादिभ्यामुपन्यस्तानां साक्षिणां गुणतः सङ्ख्यातश्च तुल्यत्वमित्यर्थः । व्यासः ।

न मयै तत्कृतं लेख्यं कूटमेतेन कारितम् ।

अधरीकृत्य तत्पत्रमर्थे दिव्ये न निर्णयः॥

लेख्यदोषोद्भावनेन लेख्ये निर्णयाक्षमे तदारूढसाक्षिषु सुतरां दण्डापूपकन्यायेन दोषोद्भावनान्मानुषासम्भवे दिव्येन निर्णयः कार्य्य इत्यर्थः। प्रजापतिः।

यन्नामगोत्रैर्य्यल्लेख्यं तुल्यं लेख्यं क्वचिद्भवेत्।
अगृहीतधने तत्र कार्य्यो दिव्येन निर्णयः॥

मूललेख्येन नामगोत्रैस्तुल्यं लेख्यान्तरविपरीतार्थं यदा तदा-तदप्रमाणीकृत्य दिव्येन निर्णयः कार्य्य इत्यर्थः। कात्यायनः।

यत्र स्यात्सोपधं लेख्यं तद्वाच्ये श्राविते यदि।
शोधयेत्तत्तु दिव्येन राजा धर्मासनस्थितः॥

सोपधं यत्र छलकृतं यच्च मिथ्योत्तरे पूर्ववादिनः क्रियादानं नोत्तरवादिन इति प्रागुक्तं तत्र भाषावादिनो मानुषप्रमाणसम्भवादुत्तरवादिनश्च तदसम्भवान्मानुषसम्भवे च दिव्यानवसरादिति न्यायो मूलमिति। यदि तदापि भाषावादिनो दिव्यभिन्नप्रमाणाभावस्तदा।

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत्।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैरिति॥

कात्यायनीयादुत्तरवादिन एव दिव्यं देयम्। पूर्वार्द्धे नार्थिना दिव्यनिषेधात् प्रत्यर्थिनोऽर्थात्सिद्धौ पुनः परार्द्धेन तद्विधानस्य सिद्धे सत्यारम्भो नियमायेति न्यायेन निषेधदार्ढ्यार्थत्वात्। प्राड्न्यायकारणोत्तरयोः क्रियापदमुभयक्रियापरमपि मिथ्योत्तरे मानुषमात्रपरं कात्यायनीयानुरोधात्। नचैवमनुषङ्गानुपपत्तिः। तदर्थकतयोभयान्वयस्यानुषङ्गहेतुत्वन्न यावदर्थकत्वस्य विरुद्धार्थकत्वे व्यवायवत्सन्निधिबाधे

नानुषङ्गस्य तुल्ययोगितानिबन्धनस्य भङ्गः। किञ्चिदर्थानन्वेऽपि तुल्ययोग्यतायाः सत्वात्तदभङ्गात्। यदा तु प्रत्यर्थी सन्दिहान स्तदा तस्याधिकारनिश्चयाभावान्मानुषप्रमाणाभावेऽपि न दिव्यं किन्त्वर्थिनोऽधिकारनिश्चयादिति ध्येयम्। नच न कश्चिदिति कात्यायनवचनविरोधः। अधिकारानिश्चये तत्प्रवृत्त्यसम्भवात्। धनं धनी साधयतीति लोकप्रवादोऽपीदृग्विषयाभिप्रायक एव। यत्र विवादविषये प्रत्यर्थी सन्दिहानस्तत्र तस्योत्तरानर्हतयेति व्यवहारतत्त्वलिखनन्त्वतत्त्वमेव। अज्ञानरूपमिथ्योत्तरार्हत्वात्। अज्ञानस्य निश्चयाभावरूपस्य सन्देहेऽपि सम्भवात्। प्रत्यर्थिन एव सर्वत्रोत्तरकर्त्तृत्वाच्च। यदातु द्वयोरपि मानुषप्रमाणाभावो दिव्यानध्यवसायश्च तदा निर्णयोपायमाह। पितामहः।

लेख्यं यत्र न विद्येत नभुक्तिर्न च साक्षिणः।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः॥
निश्चेतुं येन शक्याः स्युर्वादाः सन्दिग्धरूपिणः।
तेषां नृपः प्रमाणं स्यात्सर्वस्य प्रभुरिष्यत इति॥

तादृग्व्यवहारे नृपेणैवोभया पीड़या स्वेच्छया काञ्चन व्यवस्थां कृत्वा देया सोभाभ्यान्नातिक्रमणीयेत्यर्थः। दिव्यावान्तरभेदादिसर्वदिव्यप्रकरणे वक्ष्यामः।

अथ निर्णयापरपर्य्यायः सिद्धिपादः। येषां प्रत्याकलितं व्यवहारपाद इत्यभिमतन्तेषां सिद्धेः फलत्वाद्व्यवहारपृथग्भावोऽन्येषां प्रत्याकलितस्य चतुष्पात्त्वमेव तु सर्वमते व्यवहारस्य। याज्ञवल्क्यः। तत्सिद्धौ सिद्धिमाप्नोति विपरीतमथोऽन्यथेति। तस्य प्रमाणस्य सिद्धौ निःशङ्कप्रामाण्य व्यवस्थितौ सत्यां प्रमा-

णोपन्यासकर्त्ता सिद्धिं जयलक्षणामाप्नोति। अन्यथा प्रामाण्यसिद्धौ विपरीतमसिद्धं पराजयलक्षणमाप्नोति।

नारदः। सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता।

तद्धानौ हीयते वादी तरंस्तामुत्तरो भवेत्॥

तरन्निर्वाहयन्। उत्तरः उत्कृष्टो विजयीति यावत्। निर्णयप्रकारानाह।

व्यासः। प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया।

वादी सम्प्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः॥

विवृतवानेतत्स एव।

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्।

अनुमानं विदुर्हेतु स्तर्कश्चेति मनीषिणः॥

देशस्थितिः पूर्वकृताश्चरितं समुदाहृतम्।

अर्थानुरूपाशपथाः स्मृताः सत्यघटादयः॥

तेषामभावे राजाज्ञां निर्णयन्तु विदुर्बुधाः।

इति प्रमाणत्रयं स तर्कोपष्टब्धमनुमानं चरितादिचतुष्टयमित्यष्टविधहेतुकत्वान्निर्णयस्याप्यष्टविधत्वं यद्यपि भुक्तिरप्यनुमानमेव। तथापि प्रत्याकलितकालीनं सभ्यानामनुमानमिहानुमानपदेन विवक्षितम्।

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया।

चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः॥

इति वृहस्पत्युक्तानां धर्मादीनां निर्णयहेतुत्वं प्रागेव तत्र सत्ये स्थितो धर्म इत्यादिना तेनैव विवृतं प्रागेव निरूपितं स एव।

एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः ।

क्रियाभेदात्मानुषदैविक क्रिया भेदात् धर्मनिर्णयस्य द्वैधमाह स एव ।

सम्यग्विचार्य्य कार्य्यन्तु युक्त्या सम्परिकल्पितम् ।
परीक्षितन्तु शपथैः स ज्ञेयो धर्मनिर्णयः ॥
प्रतिवादी प्रपद्येत यत्र धर्मः सनिर्णयः ।
दिव्यै र्विशोधितः सम्यक् द्वितीयः स उदाहृतः ॥

प्रतिवादी प्रपद्येतेत्यस्य काकाक्षिवदुभयत्र सम्बन्धः । यत्र प्रतिवादी युक्त्या सम्यग्विचार्य सम्परिकल्पितन्निर्धारितं पुनः शपथैः पुत्रशिरःस्पर्शादिभिः परीक्षितं कार्य्यं प्रपद्येताङ्गीकुर्य्यात् स आद्यो धर्मनिर्णयः दिव्यैर्घटादिभिर्विशोध्यतः प्रतिवादी यत्र कार्य्यं प्रपद्येत स द्वितीयो धर्माख्यो निर्णयः इत्यर्थः । व्यवहारनिर्णयस्यापि द्वैविध्यमाह स एव ।

प्रमाणैर्निश्चयो यस्तु व्यवहारः स उच्यते ।
वाक्छलानुत्तरत्वेन द्वितीयः परिकीर्त्तितः ॥

प्रमाणपदेनात्र साक्षिणो लिखितञ्च । व्यक्त्यभिप्रायेण च बहुवचनम् । भुक्तेरनुमानत्वाद्दिव्यस्य धर्मनिर्णयान्तर्भावात् । वाक्छलानुत्तरत्वेन । वाक्छलेनानुत्तरत्वेन च यो निश्चयो द्वितीयो व्यवहारः स इत्यर्थः । चरित्र निर्णयस्यापि भेदद्वयन्तेनैवाभिहितम् ।

अनुमानेन निर्णीतं चरित्रमिति कीर्त्तितम् ।
देशस्थित्या द्वितीयन्तु शास्त्रविद्भिरुदाहृतम् ॥

अनुमानेन भुक्तिमुक्तिस्वरूपेण यो निर्णयस्तदेकं चरि-

त्रम्। देशस्थित्या यो निर्णयस्तद्द्वितीयं चरित्रमित्यर्थः। राजाज्ञानिर्णयस्यापि द्विभेदता-भिहिता तेनैव।

प्रमाणसहिताद्यस्तु राजाज्ञानिर्णयः स्मृतः।
शास्त्रसभ्य् विरोधे च तथान्यः परिकीर्त्तितः॥

प्रमाणसहिता राजाज्ञा आद्यो निर्णय इत्यन्वयः। शास्त्राणां सभ्यानाञ्च विरोधे परस्परं विप्रविपत्तौ या राजाज्ञा स द्वितीयो राजाज्ञारूपो निर्णय इत्यर्थः। ननु शास्त्राणां सभ्यानाञ्च विरोधएवा सम्भवो स्मृत्यपेताधिकारिणां सभ्यानां दण्डात्वात्। न च शास्त्राणां परस्परविरोधे सभ्यानाञ्चेत्यर्थ इति वाच्यम्। सभ्यविरोधोपन्यासानर्थक्यात्। शास्त्रविरोधे न्यायोपलब्धशास्त्रानुसारेण निर्णयः कार्य्य इत्यस्यार्थस्य स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः।

धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिःस्मृतः।
केवलं शास्त्रमाश्रित्य न कर्त्तव्यो हि निर्णयः॥
युक्तिहीन विचारे हि धर्महानिः प्रजायते॥

न्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्यूह्य यथास्थानं गमयेदित्यादि योगीश्वरनारदबृहस्पति गौतमादिवचोभिर्निर्धारितत्वात्। तादृशि विषये राजाज्ञानवसरात्।

अनीदृशराजाज्ञाया निषिद्धत्वाच्चेति चेत्।

उच्यते। यत्र शास्त्रविरोधे बलवान्न्यायो न्यतरार्थविनिगमकः ससभ्य प्राड्विवाकस्य सभापते र्न हृदयमारोहति चिरन्तरं मीमांसितोऽपि तादृशशास्त्रविरोधे तन्मूलके वा समाधेये सभ्य विरोधे राजकृतव्यवस्थावादिप्रतिवादिभ्यां मन्तव्येत्येतदर्थकमिदं वचनम्। अतएव पितामहः। वचनं प्राग्लिखि-

तन्निश्चेतुं येन शक्याः स्युरित्यादि। धर्मादीनां चतुर्णां पूर्वस्योत्तरोत्तरापेक्षया दुर्बलत्वमाह नारदः।

धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधक इति॥

व्यवहारस्य धर्मबाधकतामाह। बृहस्पतिः।

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते।

शास्त्रशब्देन शास्त्रोक्तं साक्ष्यादिप्रमाणं तेन यो निर्णयः क्रियते स व्यवहारः। तेन धर्मः शपथादिकृतो निर्णयोऽवहीयते। बाध्यते। मानुषप्रमाणे सति दिव्यानवसरात्। अतएवाह कात्यायनः।

युक्तियुक्तन्तु कार्य्यं स्याद्दिव्यं यत्र विवर्जितम्।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा॥

चरित्रस्य व्यवहारबाधकमाह। बृहस्पतिः।

देशस्थित्यानुमानेन नैगमानुमतेन वा।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते॥

नैगमाः पौरवणिजः। नैगमानुमते नानुमानेनेति सम्बन्धः सामानाधिकरण्येन। वा शब्दाद्देशस्थित्यपेक्षः। अमुमेवार्थं स्फुटयति कात्यायनः।

प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु।
विरुद्धं नियतं प्राज्ञस्तं धर्मं न विचालयेत्॥
निर्णयन्तु यदा कुर्य्यात्तेन धर्मेण पार्थिवः।
व्यवहारश्चरित्रेण तदा तेनैव बाध्यते इति॥

स्मृतिविरुद्धमपि नियतत्वान्न विचालयेद्राजा। राजशासनस्य चरित्र बाधकमाह बृहस्पतिः।

विहाय चरिताचारं यत्र कुर्य्यात् पुनर्नृपः।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तयेति॥

चरिताचारं पूर्वपूर्वाचरितमाचारम्। यद्यपि तं धर्मं न विचालयेदित्युक्तमत्रतु विहाय चरिताचार मित्युच्यते। तेनविरोधः प्रतिभाति। तथापि यदि तद्विचालने पुरराष्ट्रादिक्षोभो न भवति। तदा स्मृत्यादिविरुद्धत्वात्तं दूरीकृत्यस्मृत्याद्यविरोधो राजाज्ञया निर्णयः कार्य्य इति तात्पर्य्यम्। अतएव पुरराष्ट्रस्य विरुद्धस्य विवादस्यानादेयत्वमुक्तम्। पुरराष्ट्रक्षोभापादकतया तदनापादकतया तु स्मृत्याद्यनुरोध एव कार्य्यो राज्ञेति। अतएवाह कात्यायनः।

विरुद्धं न्यायतो यत्तु चरित्रं कल्प्यते बुधैः।
एवन्तत्र निरस्येत चरित्रन्तु नृपाज्ञयेति॥

नृपैर्यन्न्यायविरुद्धं चरित्रं न ग्राह्यमिति कल्प्यते। तत्र नृपाज्ञया तच्चरित्रं निरस्यते बाध्यत इत्यर्थः। यथोक्तप्रकारातिरिक्त प्रकारेणैषां बाध्यबाधकता कल्पने दोषमाह। कात्यायनः। अनेन विधिना युक्तं बाधकं यद्यदुत्तरम्।

अन्यथाबाधकं यत्र तत्र धर्मो विहन्यत इति॥

इति निर्णयपादः। पुनर्न्यायः यद्यपि निर्णयानन्तरं जयपत्रे दत्ते पराजितस्य दण्डार्हत्वं तथापि यदि स पराजितमपि स्वयमपराजितमेव मनुते पूर्वव्यवहारे कुदृष्टबुद्धा तर्हि द्विगुणदण्डमभ्युपगमय्य राज्ञा सभ्यान्तरोपादानेन पुनर्व्यवहारं तदीयो द्रष्टव्य इत्याह नारदः।

तीरितञ्चानुशिष्टञ्च यो मन्येत विधर्मतः।
द्विगुणन्दण्डमादाय पुनस्तत्कार्यमुद्धरेत्॥

तीरितं समापितं निर्णयपर्यन्तं प्रापितमिति यावत्। पारतीरकर्मसमाप्ता वित्यस्य निष्ठान्तं रूपम्। अनुशिष्टमर्थि-प्रत्यर्थिनौ प्रति कथितं जयपराजयफले वा रोपितम्। विध-र्मतो धर्मविपरीतं कुदृष्टमिति यावत्। अर्थि प्रत्यर्थिनोर-न्यतरोमन्येत स पराजयनिमित्तं दण्डं द्विगुणमादायाङ्गीकृत्य तत्कार्यं पुनरुद्धरेत्। चतुष्पाद्व्यवहारप्रवर्त्तनेन निर्णयेत्। याज्ञवल्क्यः। दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु।

सभ्याः सजयिनोदण्ड्या विवादाद्द्विगुणन्दमम्॥
यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः।
सभायां तं पुनर्जित्वा दापयेद्द्विगुणन्दमम्॥

अस्यापवादमाह मनुः। तीरितञ्चानुशिष्टञ्च यत्र क्वचन यद्भवेत्।

कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्त्तयेत्॥
धर्मतः कृतञ्चेत्कृतमेव विद्यादित्यर्थः।

नारदः। साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः॥

स्वचर्य्यावसितानान्तु प्रोक्तः पौनर्भवो विधिः।

साक्षि सभ्यावसन्नानां साक्षिद्वारेण सभ्यद्वारेण वाऽवस-न्नानां पराजितानां दूषणे साक्षिषु सभ्येषु वा दोषोद्भावने ऽन्यतरेण कृते पुनर्दर्शनं व्यवहारदर्शनम्। राज्ञा कार्य्यमिति-शेषः। स्वचर्य्यावसितानां स्वचर्यया स्वव्यापारेण पूर्वापरवि-रुद्धभाषणादिना ऽवसितानां पराजितानान्तु पौनर्भवः पुन-रुद्भवः पुनर्भवः पुनर्व्यवहारप्रवृत्तिरिति यावत्। तत्सम्बन्धि विधिनोक्तः कर्त्तव्यत्वेनाभिहितो मुनिभिरित्यर्थः। बृहस्पतिः।

पलायनादनुत्तरत्वा दन्यपक्षाश्रयेण च।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु॥

वादो गृह्यते पुनर्न्यायो भवतीत्यर्थः। स्ववाक्येन पूर्वापरविरुद्धेनोत्तरापरिस्फुर्त्या-स्खलितेन वा योजितस्तस्य तु न भवतीत्यर्थः। बृहस्पतिकात्यायनौ।

कुलादिभिर्निश्चितेऽपि सन्तोषं न गतस्तु यः।
विचार्य्य तत्कृतं राजा कुरुतम्पुनरुद्धरेत्॥

बृहस्पतिः। निश्चित्य बहुभिः सार्द्धं ब्राह्मणैः शास्त्रपारगैः।
दण्डयेज्जयिना सार्द्धं पूर्वसभ्यांस्तु दोषिणः॥

जयिना पूर्वव्यवहारजयिना। नारदः।

दुर्दृष्टे व्यवहारे तु सभ्यास्तन्दण्डमाप्नुयुः।
नहि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते॥

मनुः। अमात्यःप्राड्विवाकोवा ये कुर्य्युःकार्य्यमन्यथा।
तं सर्वन्नृपतिः कुर्य्यात् तान् सहस्रन्तु दण्डयेत्॥

सहस्रपणान् दण्डव्यवहारे ऽनुक्तसङ्ख्या सङ्ख्यायाः पणगतत्वेन परिभाषितत्वात्। एतच्च दण्डनिरूपण प्रस्तावे विवेचयिष्यामः। यत्र द्विगुणदण्डः सहस्राधिकस्तत्रामात्यप्राड्विवाकयोरपि स एव। अन्यत्र सहस्रमेव। अमात्यप्राड्विवाकयोर्म्मुख्यत्वेन दण्डाधिक्यस्योचितत्वात्। इति पुनर्न्यायः॥ निर्णयानन्तरं कृत्यन्तजयिने जयपत्रदानम्। पराजिताद्दण्डादानम्। सपणविवादे पणादानम्। धनिने धनदापनञ्च। तथा च व्यासः। व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः।
जयपत्रं ततो दद्यात्परिज्ञानाय पार्थिवः॥

पुनर्न्यायादिप्रसक्तौ प्राड्न्यायपरिज्ञानाय। बृहस्पतिः।

प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानाज्जयी लोके निगद्यते ॥

योगीश्वरः । सपणश्चेद्विवादः स्यात्तत्र हीनन्तु दापयेत् ।
दण्डञ्च सपणञ्चैव धनिने धनमेव च ॥

बृहस्पतिः । अपराधानुरूपश्च दण्डोऽत्र परिकल्पित इति ।

तत्र जयपत्र प्रकारं लेख्यप्रस्तावे । दण्डपणादाने दण्डनिरूपणे धनिने धनदानस्वरूपं दानप्रकारं वक्ष्यामः । अथ सभ्यः प्राड्विवाकसहितस्य सभापतेरन्यथा व्यवहारदर्शने सर्वथादर्शनाभावे च दोषकथनम् । तत्रान्यथा दर्शने दोषमाह ।

मनुः । यस्त्वधर्मेण कार्य्याणि मोहात्कुर्य्यान्नराधिपः ।
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥

कात्यायनः । अस्वर्ग्या लोकनाशाया परानीकभयावहा ।
आयुर्बीजहरी राज्ञामस्ति वाक्येष्वियं कृतिः ॥
तस्माच्छास्त्रानुसारेण राजा कार्य्याणि साधयेत् ।
वाक्याभावे तु सर्वेषां देशदृष्टे न संनयेत् ॥

अदर्शने दोषमाह । महाभारते कृष्णद्वैपायनः ।
अर्थिनामुपसन्नानां यस्तु नोपैति दर्शनम् ।
सुखेषु सक्तो नृपतिः स तप्येत नृगो यथेति ॥

नृगो नाम राजा । रामायणे वाल्मीकिः ।
पौरकार्य्यं हि यो राजा न करोति समास्थितः ।
व्यक्तं स नरके घोरे पच्यते नात्र संशय इति ॥

समास्थितः सुस्थितः । अनेन दुःस्थितस्यादर्शनेन दोष इति सूचितम् । अतएवानुकल्पतया दुःस्थितस्य स्वप्रतिनिधिप्राड्विवाकनियोगः प्रागुक्तः । प्राड्विवाकस्य सभ्यानाञ्चान्यथा

दर्शनादर्शनयोर्दोष इति प्रागेव प्रपञ्चितं व्यवहारदर्शनविधिविचारप्रस्तावे। सम्यग्व्यवहारदर्शने फलमप्याह मनु:।

कामक्रोधौ तु संयम्य योऽर्थान् धर्म्मेण पश्यति।
प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धव:॥

इदं दृष्टफलम्। अदृष्टमपि फलमाह नारद:।

एवं पश्येत् सदा राजा व्यवहारान् समाहित:।
वितत्येह यशो लोके दृष्ण: प्राप्तस्त्रिविष्टपम्॥

बृहस्पति:। एवं शास्त्रोदितं राजा कुर्वन्निर्णयपालनम्।
वितत्येह यशो लोके महेन्द्रसचिवो भवेत्॥

फलान्तराण्यपि व्यवहारदर्शनविधिप्रस्तावेऽभिहितानि। अथकृतनिवृत्ति:। तत्र मनुविष्णू।

यस्मिन् यस्मिन् विवादे तु कौटसाक्ष्यं कृतम्भवेत्।
तत्तत्कार्य्यं निवर्त्तेत कृतं चाप्यकृतम्भवेत्॥

नारद:। स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु।
व्यवहार: कृतोऽप्येषु पुन: कर्त्तव्यतामियात्॥

मनुनारदौ। सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता।
बहिश्चेद्भाष्यते धर्म्मान्नियताद्व्यावहारिकात्॥

नियताद्व्यावहारिकात्। नियतव्यावहारिकधर्मवाह्यविषया या भाषा सा यद्यपि प्रतिष्ठिता साक्षिलेख्यादिप्रमाणवती भवति तथापि सत्याग्राह्या न भवति। यथा पुत्राद्यन्वयोपेतं कश्चिदभियुक्ते सर्वस्वं मह्यमनेनप्रतिश्रुतमिदानीं न ददातीति मनु:। योगाधमनविक्रीतं योगदानप्रतिग्रहम्।

यत्र वाप्युपधिं पश्येत् तत्सर्वं विनिवर्त्तयेत्॥
बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम्।

सर्वान् बलकृतानर्थान् कृतान्मनुरब्रवीत् ॥

योगश्चश्च । आधमनमाधीकरणम् । उपधिः छलम् । पूर्वोक्तार्द्धाभ्यां छलकृतसर्वव्यवहाराणां निवर्त्तनं सार्वत्रिकमित्युक्तं भवति । एवमुत्तरश्लोकेऽपि बलकृतसर्वव्यवहाराणामपि । योगीश्वरः । मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थविरेण वा ।

असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ॥

अध्यधीनो दासः । अधिकमधीन इति व्युत्पत्तेः । असम्बद्धेन वादिप्रतिवाद्यसम्बद्धेन कृतस्तत्प्रतिनिधिभूय सम्पादितः । समासान्तर्गतमपि कृतपदं प्राक्तनतृतीयान्तैरपि बुद्ध्या निष्कृष्य सम्बन्धनीयम् ।

नारदः । यद्बालः कुरुते कार्य्यमस्वतन्त्रस्तथैव च ।
अकृतन्तदपि प्राहुः शास्त्रे शास्त्रविदो जनाः ॥
स्वतन्त्रोऽपि हि यत्कार्य्यं कुर्य्यादप्रकृतिङ्गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रः स हेतुतः ॥
कामक्रोधाभिभूतार्त्ता भयव्यसनपीड़िताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिङ्गताः ॥
तथा दासकृतं कार्य्यमकृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशान्नदासः प्रभुरात्मनः ॥
पुत्रेण च कृतं कार्य्यं यत्स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासः पुत्रश्च तौ समौ ॥

कात्यायनः ।नचेत गृहदासानां दानाधमनविक्रिया ।
अस्वतन्त्रकृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः ॥

नानुवर्णिताः स्वतन्त्रेण पित्रादिना नानुमताः । अनुमताः सिद्ध्येयुरेवेत्यर्थादुक्तं भवति ॥ अतएवाह । स एव ।

प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारांस्ते कुर्वन्तोऽह्यनुमोदिताः ॥
क्षेत्रादीनान्तथैवस्तु क्रीता भ्रातृसुतः सुतः ।
विसृष्टार्थस्तु यो यस्मिं स्तस्मिन्नर्थे प्रभुस्तु सः ।
तद्भर्त्ता तत्कृतं कार्य्यं नान्यथा कर्त्तुमर्हति ॥

वृहस्पतिरपि । यः स्वामिना नियुक्तस्तु धनाय व्ययपालने ।
कुसी कृषी च वाणिज्ये निसृष्टार्थस्तु सः स्मृतः ॥
प्रमाणं तत्कृतं सर्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा स्वामी तन्न विसंवदेत् ॥

अनुमत्यभावेऽपि कुटुम्बभरणार्थमस्वतन्त्रकृतमृणादिव्यवहारं स्वतन्त्रो न निवर्त्तयेदित्याह । मनुः ।

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ।
स्वदेशे वा विदेशे वा तं स्वामी न विचालयेत् ॥

अध्यधीनः पुत्रभ्रातृपुत्रदासादिः । अथ स्वतन्त्रास्वतन्त्रलक्षणम् ।

तत्र नारदः । स्वातन्त्र्यं तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयः कृतम् ।
तथा । अस्वतन्त्रः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ।
अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता ॥
अस्वतन्त्राः स्त्रियः पुत्रादासाद्याश्च परिग्रहः ।
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ॥
बाल आषोड़शाद्वर्षात् पौगण्डश्चेति शब्द्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥
जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः ।
तयोरपि पिता श्रेयान् वीजप्राधान्य दर्शनात् ।

अभावे वीजिनो माता तदभावे तु पूर्वजः ॥

कात्यायनः । पिता स्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव च ।

कनिष्ठो वाऽविभक्तस्वो दासः कर्मकरस्तथा ॥

पितृमान् पितायस्वतन्त्र इत्यर्थः । अविभक्तस्वः अविभक्तधनः ।

हारीतः । दानार्थे वा धनार्थे वा धर्मार्थे वा विशेषतः ।

आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति ॥

नारदः । स्वतन्त्राः सर्व एवैते परतन्त्रेषु नित्यशः ।

अनुशिष्टौ विसर्गे च विक्रये चेश्वरा मताः ॥

एते पूर्वोक्ता राजादयः । स्वतन्त्रस्य पित्रादेरपि विषयविशेषेण स्वातन्त्र्यमित्याह । कात्यायनः ।

सुतस्य सुतदाराणां वशित्वमनुशासने ।

विक्रये चैव दाने च वशित्वन्न सुते पितुः ॥

एतदप्यनापदीति बोध्यते । इति सामान्यं परिभाषा । अथ विशेषपरिभाषा । तत्र याज्ञवल्क्यः ।

अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत् ।

अभियुक्तञ्च नान्येन नोक्तं विप्रकृतिन्नयेत् ॥

अभियुज्यत इत्यभियोगोऽपराधः ऋणं मदीयं गृहीत्वा न प्रत्यर्पयत्ययमित्यादिरर्थिनोपन्यस्तस्तमनिस्तीर्य्यापरिहृत्यैन मभियोक्तारन्नप्रत्यभियोजयेत् । युगपद्व्यवहारस्य प्रतिज्ञाभेदेनासम्भवात् । प्रत्यभियोगादनर्थक्यात् । इत्ययं प्रत्यभियोगानर्थक्यादित्ययं प्रत्यर्थिनं प्रत्युपदेशोऽन्यवादित्वेन हीनता परिहार्य्यार्थः । यद्यपि प्रत्यवस्कन्दनं प्रत्यभियोगरूपमेव । तथापि स्वापराधपरिहारार्थत्वादनेन प्रतिषिध्यते । अन्येनाभियुक्तञ्चानिस्तीर्णतदीयाभियोगमर्थी नाभियुञ्जीत । अन्याभियोगापेक्ष-

यात्र प्रत्यभियोगशब्दोऽनुवादत्वेन यथा कथञ्चिन्नेयः। अयमपि युगपद्व्यवहारासम्भवनिबन्धनोऽर्थिनं प्रत्युपदेशः। किञ्च दृक्तमावेदनसमये यदुक्तं तद्विप्रकृतिं विरुद्धस्वभावतां न नयेत्। न प्रापयेत्। यद्वस्तु यत्प्रकारेणावेदनसमये निवेदितं तत् तथैव तद्भाषायां लेखनीयं नान्यथेत्ययमप्यर्थिन एवान्यवादित्वनिबन्धनहीनता परिहारार्थ एवोपदेशः। यद्यपि यथावेदितमर्थिनेत्यत्रैवेदमुक्तमिति पुनरुक्तमाभाति तथापि तद्वस्त्वन्तरावेदनप्रतिषेधकमिदन्तु पदान्तरसंक्रमनिवारकमित्यपुनरुक्तता। तद्यथा रूपकशतं मदीयं हृत्वानुगृहीत्वा न प्रयच्छतीत्यावेद्य भाषायां वस्त्रशतं हृत्वा गृहीत्वा न प्रयच्छतीति ऋणादानपद एव वस्त्वन्तरगमनम्। रूपकशतं हृत्वा गृहीत्वा मदीयं न प्रयच्छतीत्यावेद्य भाषायां रूपकशतं मदीयबलादपहृतवानिति तस्मिन्नेव वस्तु साहसाख्यं विवादपदं लेखयतीति। तत्र यथा शब्दोपादानादत्र च विप्रकृतिपदोपादानात्। वस्त्वन्तरगमने ह्येकत्रैव विवादपदे प्रकारभेदमात्रं प्रकारवाचियाल्प्रत्ययेन प्रत्ययस्यते। पदान्तरसंक्रमे तु विरुद्धस्वभावता व्यक्तेति भावः। अभियोगमनिस्तीर्य्येत्यस्यापवादमाह स एव। कुर्य्यात्प्रत्यभियोगन्तु कलहं साहसेषु च।

कलहे वाग्दण्डपारुष्यरूपे। साहसेषु च। विषशस्त्रादिकृतप्राणिव्यापादनादिषु यदि सम्भवति प्रत्यभियोगस्तदा स्वाभियोगमनिस्तीर्य्याप्यभियोक्तारं प्रत्यभियोजयेत्। ननु प्रतिज्ञान्तरत्वापत्तौ युगपद्व्यवहारासम्भवस्य प्रत्यभियोगप्रतिषेधवीजस्यात्रापि तौल्यात्कथं तत्प्रतिप्रसवः। प्राङ्न्यायप्रत्यवस्कन्दनयोस्तु पूर्वपक्षोपमर्दकत्वेनोत्तरलक्षणलक्षितयोः प्रत्यभियोगत्वेऽपि न

प्रतिज्ञान्तरापत्त्या युगपद्व्यवहारासम्भवदोष इति वैषम्यम्। अन्यथा तयोरुत्तरत्वमेव न स्यात् सर्व्वैतत्प्रतिषेधग्रस्तत्वादिति चेत् न यद्यप्यत्रापि युगपद्व्यवहारासम्भवस्तुल्यस्तथापि न्यूनदण्डप्राप्तयेऽधिकदण्डनिवृत्तये च कलह साहसयोः प्रत्यभियोगः॥ सार्थकोऽन्यत्र निरर्थक इति प्रतिप्रसवोपदेशः॥ तथाहि। अनेनाहन्ताडितः शप्तो वा पूर्वमयं मत्प्राणव्ययाय व्यापारं कृतवानित्यभियुक्तो यद्याह। सत्यमेतत्तथापि मत्तः पूर्वतर मयन्ताड़नादिममकृतवानिति प्रत्यभियोगे तस्मिंश्च साधिते दण्डाल्पत्वं प्रत्यभियोक्तुः फलम्। तथा च नारदः। पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्।

पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुरिति॥

विनयोदण्डः। यदा तु युगपद्द्वयोस्ताड़नादिषु प्रवृत्तिस्तत्राधिक दण्डनिवृत्तिः प्रत्यभियोग फलम्। तदप्याह स एव।

पारुष्ये साहसे चैव युगपत् सम्प्रवृत्तयोः।

विशेषश्चेन्नलभ्येत विनयः स्यात्समस्तयोरिति॥

तेनाय मत्र तात्पर्य्यार्थः॥ पूर्वपक्षोपमर्दनरूपप्रत्यभियोगस्य प्रतिज्ञोत्तरत्वे न युगपद्व्यवहारा ऽसम्भवरूप प्रत्यभियोगस्य प्रतिज्ञोत्तरत्वेन युगपद्व्यवहारासम्भव रूपदोषाभावादेवा ऽप्रतिषिद्धत्वम्। कलहादिषु युगपद्व्यवहारासम्भवे सत्यप्यर्थवान् प्रत्यभियोगः क्रियमाणो न दुष्यति। पूर्वपक्षानुपमर्दनरूपो ऽनर्थकश्च प्रत्यभियोगो न कार्य्यं ऋणादानादिषु विवादेष्विति। यथायं मदीयमृणमियदि यत्ता वृद्ध्या गृहीत्वा न प्रयच्छतीत्यभियोगे मह्यमप्ययं धारयतीति प्रत्यभियोगो न कार्य्यो निष्प्रयोजकत्वात्प्रतिज्ञान्तरत्वा

श्चेति। इति प्रत्यभियोग निर्णयः॥ अथ निह्नवादिविधिर्निह्न वादिविवेचनञ्च। तत्र याज्ञवल्क्यः।

निह्नुते लिखितं नैकमेकदेशविभावितः।
दाप्यः सर्वं नृपेणार्थो न ग्राह्यस्त्वनिवेदितः।

नैकमनेकं निषेधार्थे नकारस्यासमासत्वान्नलोपो नञ् इति नकारलोपाभावे नैकधेतिवद्रूपम्। अर्थिनाभियुक्तं सुवर्णरजतवस्त्रादि वस्तुभाषालिखितमुत्तरलेखन वेलायाम्प्रत्यर्थी यः सर्वमेव निह्नुते मिथ्यैतदित्यपलपति। सोऽर्थिनैकदेशे प्रतिज्ञाविषय वस्तुनि भाविते लिखितं साक्ष्यादि प्रमाणबलादङ्गीकारितः सर्वमप्यर्थिप्रतिज्ञातं नृपेण दाप्योऽर्थिने दापनीयः। यस्त्वर्थोऽर्थिनैव व्यामोह प्रमादादिना भाषा पत्रशोधनावधि न निवेदितः पश्चान्निवेद्यते प्राक्प्रमादादिना विस्मृतं मयेदमिति सनृपेण न ग्राह्यो नादर्त्तव्यः प्रमाणादिप्रत्याकलनेनेत्यर्थः। ननु छलं निरस्य भूते न व्यवहारान्नयेन्नृप इत्यनेन विरुद्धमिदम्। तथा हि। मूलन्तत्वार्थयुक्तं यत्प्रमादाभिहितं छलमित्युक्तेभूतेन वस्तु तत्त्वानुसरणेन छलम्प्रमादामर्षाद्यभिहितं निरस्य व्यवहारान्नृपोनयेन्निर्णयपर्य्यन्तम्प्रापयेत्। तस्माद्यथार्थि प्रत्यर्थिनौ सत्यमेव निवेदयतः। साक्ष्यादिनैरपेक्ष्येण स्वयमेव साक्ष्यादयोऽपि शपथादिभिर्भीषितास्सत्य मेव प्रतिपादयन्तितया स सभ्येन सभापतिना यतितव्यमिति भावः। एवञ्चैकदेशस्य प्रमाणसिद्धावप्येकदेशान्तरस्य सिद्धिः कुतस्त्या अन्यविषयप्रमाणेनान्यसिद्धेरसम्भवात्। छलप्रसक्तेर्दुर्वारत्वाम्। एवं प्रमादादिविस्मृतस्य प्रामाणिकस्यार्थस्यानादरे छलं व्यक्तमेव। कात्यायनवचनविरोधश्चैवं सति। यदाह।

अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनमिति ॥

साक्षिग्रहणं लेख्याद्युपलक्षणम् । अत्रापरार्कः । अपह्नववादिनः सावष्टम्भयन् मिथ्योत्तरं तद्विषयं निह्नुत इत्यादि । यथाद्यर्थिनाभियुक्तः प्रत्यर्थैवमुत्तरयति भवदभियुक्तानामर्थानां मध्ये यद्येकमपि भवान् साधयति तदा सर्वमहं दास्यामीति छलोदाहरणत्वादस्य कात्यायनवचनन्त्वसावष्टम्भमिथ्योत्तरविषयन्तेनासाधितांशेऽर्थिना प्रमाणान्तरमुपादेयं तदभावेऽपि साधितमात्रलाभेन सन्तोष्टव्यम् ।

अनेकार्थाभियोगे तु सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यत इति ॥

नारदवचोऽपि सावष्टम्भमिथ्योत्तरविषयमेवेत्याह । तदनुपपन्नम् । सपणश्चेद्विवादः स्यादित्यनेनास्य गतार्थतापत्तेः । ईदृशावष्टम्भस्य पणादनतिरेकात् । नच पणस्य राज्ञा ग्रहणमस्य त्वर्थिनेति भेद इति वाच्यम् । एतादृशभेदस्याप्रयोजकत्वात् । स्वपणन्दापयेदित्ये तावन्मात्रस्यैव तदर्थत्वात् । प्रतिज्ञानुरोधित्वात् पणत्वस्य निह्नवमात्रस्यात्र प्रतीतेः सावष्टम्भ निह्नवविषयत्वाकल्पनाया अप्रमाणकत्वाच्च । एवं नारदवाक्येऽपि न च तत्र व्यपलापिनेति विशब्दोपादानादवष्टम्भसहित निह्नवप्रतीतिरिति वाच्यम् । अन्यथा सिद्धतात्पर्यग्राहकाभावे सावष्टम्भत्वरूपविशेष परत्वस्य नियतत्वात् । वाचस्पति चण्डेश्वरौत्वाहतुः । यत्रैकदेश सिद्धिरेकदेशान्तरसिद्धि विनाभुता तद्विषयं योगीश्वरनारदयोर्वचनं तदतिरिक्तविषयन्तु कात्यायनीयमिति । तदप्यसत् । निह्नवोपा-

हानवैयर्थ्यात्। अनिह्नवेऽपि तस्य युक्तियुक्तत्वात्। प्रत्यवस्कन्दन प्राङ्न्यायोत्तरयो रप्येकदेशे कारणादिसाधने तद्विना भूतैकदेशान्तरे कारणादि सिद्धेर्दुर्वारत्वात्। यत्तु वाचस्पतिना ऽपसक्तात्पेत्यादिना सपणश्चेदित्यादि तत्र योगीश्वर वचन एव संवादितत्त्वेन स्पष्टमेव गतार्थत्वं प्रदर्शितमिति महान् प्रमादः विज्ञानयोगिनस्त्वाङ्कः। यथा भूतानुसरणेन छलनिरासेन च व्यवहारनिर्णयो भवति तथा विधेयमिति मुख्यः कल्पः। तत्र हेतुः। भूतमप्यनुपन्यस्तं हीयते व्यवहारत इति तस्यायमर्थः। यतोभूतं वस्तु तत्त्वमप्यनुपन्यस्तमकथितं वादि प्रतिवाद्यन्यतरेण साक्ष्यादिना वा तद्व्यवहारतो व्यवहाररीत्या हीयते। यद्यपि पश्चात् प्रमाणेन साध्यते प्रमाणं विनैव चैकदेशविभावनेन तथापि वादिप्रतिवादिसम्बन्धत्वेन हीनम्भवति। पश्चाद्वादिना प्रमाणान्तरेण साधितमपि प्राक्प्रतिज्ञाकालेन निवेदितत्त्वेन्न लभ्यते। तथा सर्वापह्नवकारिणा कतिपयानि वस्तूनि साक्ष्यादिभिरङ्गीकारितेनाऽन्यान्यपि साक्ष्यतु प्रमाणेना साधितान्यप्यभियोक्त्रे दातव्यतया प्रतिवादिनः सकाशाद्गीयन्त इति। तस्माद्वादिप्रतिवादिनोः साक्ष्यादिषु वादिगूढाशयताकूटकारित्वादिना यदा भूतानुसरणमशक्यं तदा चतुष्पाद्व्यवहारमार्गेण प्रवर्त्तिते व्यवहारे भूतानुसरणाभावेऽपि सभ्यसभापते र्दोषलेशो नास्ति। रागलोभादिभिरन्यथा शास्त्रकारित्वा भावादित्यर्थः। अत्रोदाहरणम्। निह्नुते लिखितं नैकमिति। एकदेशे प्रत्यर्थिनोमिथ्यावादित्वे निश्चितेऽन्यविषयेऽपि मिथ्यावादित्वसम्भवात्। अर्थिनश्चैकदेशे सत्यवादित्वनिश्चयेऽन्यविषयेऽपि सत्यवादित्वस-

म्भ=ादितीहशसम्भावनानामकतर्कानुगृहीता दस्मादेव वचनात् सर्वमर्थिने प्रत्यर्थी राज्ञा दापनीयः। प्रतिज्ञाकाले वा निवेदितमिदानीमुपन्यसन्नेकदेशे विभावनानिमित्तान्यलाभे नेदानीमुपन्यस्यनीति सम्भावनारूप तर्कानुगृहीतमेतदेव वचनमनिवेदितस्यादापने प्रमाणमित्येतत्तर्कवाक्यानुसारेण सभ्येन सभापतिना निर्णये क्रियमाणे यदि सहस्रशतं भेप्यंशे वस्तुनोऽन्यथात्वम्भवति। तर्हि तस्य न दोष इति तात्पर्यं एतदभिप्रायकमेव गौतमवचनम्। न्यायाधिगमस्तर्कोभ्युपायस्तेनाभ्यूह्य यथा स्थानं गमयेदिति। अग्रे च तेनैवोपसंहृतं तस्माद्राजाचार्य्याविनिन्द्याविति, नचैकदेशविभावित प्रागनिवेदित निवेदकयोर्वादिप्रतिवादिनो र्हीनतामात्र प्रतिपादकमिदं याज्ञवल्क्यादिवचनमिति वाच्यम्। सर्वं दाप्यो न ग्राह्यः देयं यदभियुज्यत इति वचनात्। हीनतामात्र प्रतिपादनपरत्वे तदभिधानानर्थक्यात्। कात्यायन वचनन्तु। यत्र पित्यादिगृहीत बह्वर्थविषयाभियोगः पुत्रादेस्तद्व्यवहारस्य क्रियते। सचाभियुक्तो ऽहन्तावदत्र किमपि न जानामि यावत् प्रमाणेनार्यं साधयति तावद्दास्यामीत्युत्तरयति। तत्रासौ निह्नववादी न भवति। तेनैकदेशविभावितोऽपि न क्वचिदप्यसत्यवादीति पूर्वोक्ततर्कानवतारात् तदनुगृहीतमेतद्वचनमत्र न प्रवर्त्तेत इति सामान्यविषयत्वात् निह्नवोत्तरमपहायाज्ञानोत्तर ईदृशे प्रवर्त्तेत इति न तेन सहास्य विरोधः भिन्नविषयत्वात्।

ननु। ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम्।
ऊने वाभ्यधिके वार्थे प्रोक्ते साध्यन्नसिध्यति॥

अर्थिना यावानर्थो भाषायां लिखितस्ततोन्यूने ऽधिके वार्थे साक्षिभिः प्रोक्ते सर्वमेव साध्यं न सिध्यतीति प्रतिज्ञाप्रमाणयो र्विसंवादादित्यर्थकेनानेन कात्यायनवचनेन प्रत्युत साक्ष्यादि-विभावितैकदेशस्याप्यसिद्धिरायाति। तस्मिद्धा तदविभावितैक-देशसिद्धिर्दूरापास्ता। उच्यते। यत्र वादी सकलप्रतिज्ञातार्थ साधनत्वेन साक्षिलेख्यादिकमुपन्यस्यति। ततश्च न्यूनोऽधिको-वार्थोविभाव्यते। तत्र कूटसम्भावनया कृत्स्नसाध्यासिद्धिः। तत्रापि निश्चितं न सिध्यतीति वचनात् संशयतादवस्थे प्रमाणा-न्तरेण सम्भावनानिर्णयः कार्य्यः। छलं निरस्येति नियमात्। इतिकात्यायनीयस्यास्य वचनस्यार्थः। यत्र तु वाद्येवम्वदति। एतावत्यंशे ममैते साक्षिणोलेख्यं वास्ति। अन्यमंशमलौकि-कप्रमाणेन विभावयिष्यामीति तत्रोक्ततर्कानुगृहीतान्नित्याङ्गुत इत्यादियोगीश्वर नारदवचनादेकदेशविभावनेपि कृत्स्नसाध्य-सिद्धिर्नालौकिकप्रमाणं प्रतीक्षेत। योगीश्वरवचनस्य अज्ञा-नोत्तरे तु यावानंशो लौकिकेनप्रमाणेन प्रमितस्तावानेव ततो निधार्य्योऽन्यस्तु दिव्यान्ततदसम्भवेन सिध्यत्येव। अनेकार्थाभि-योगेपीति वचनात्। अतएवाभिप्रायात्। प्रागुपन्यस्तं वचनम्।

यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी।
सा ग्राह्या तु न पूर्णापि दैविकी वदतां नृणामिति॥
कात्यायनीयन्तेन न क्वापि विरोधलेश इति।

वयन्तुच्छलं निरस्येत्यस्य विधेर्हेतुरयं भूत मप्युनुपन्यस्त-मित्युपोद्बलकः। यतोभूतन्तत्त्वमप्यनुपन्यस्तं व्यवहारतो हीयते वादिप्रतिवादिभ्यामनुपन्यस्तं प्रमाणतोऽसाधितं हीयते हानिमाप्नोति व्यवहारतो व्यवहारचैत्येति तस्यार्थः। तदु-

पपादनं निह्नुते लिखितं नैकमित्यादि तस्यायमर्थः। वादिनः कतिपयांशे सत्यवादिनोऽन्यांशेऽपि सत्यवादित्वसम्भवात् प्रतिवादिनश्च सर्वापह्नववादिनः कतिपयांशे मिथ्यावादित्वनिश्चयादन्यांशेऽपि तत्सम्भवात् सर्वमर्थं नृपेणार्थिने दाप्योदापयितुं योग्योभवति। निरुत्तरत्वात्। एवं प्रागनिवेदितोऽर्थिनार्थीभूतोऽपि प्रामाणिकोऽपि न ग्राह्यः। ग्रहणादीनि यदि तवायमर्थः सत्यः स्याद्भाषायामेव निवेदितः स्यादित्याक्षेपे ऽर्थिनोऽपि निरुत्तरत्वात्। तस्मादुत्तरदानसमये प्रत्यर्थिराजादिभिरेवं बोधनीयो यावत्येवांशे तव मिथ्यात्वनिश्चयस्तावदेवापह्नोतव्यमन्यत्सम्प्रतिपत्तव्यम्। क्वचिदप्यंशेन भवदुपरिसाधिते तव निरुत्तरत्वापत्तेः। एवं वाद्यपि भाषा समये सावधानेन त्वया स्वीयं यावदस्ति साध्यमेतदुपरि तत्सर्वं स्मारं स्मारं लेखनीयमन्यथा तदंशे निरुत्तरता तवापद्येतेति बोधनीयः। एवं साक्षिणोऽपि प्रमादादिभ्यः प्रच्यावनीयाः। तथा सत्यनायासेन तत्वानुसरणम्भवति। तच्चावश्यक मन्यथा दिव्यादिना तत्वानुसरणं कर्त्तव्यं स्यादिति सर्वथा तत्वानुसरणेनैव व्यवहारपर्य्यवसानं विधेयमिति छलं निरस्येत्यस्यैव विधेः सर्वोऽयं शेषो न स्वतन्त्रोविधिर्येन दापनं सर्वस्य विधीयते अनिवेदित ग्रहणं वा प्रतिषिध्येत। नारदवाक्येऽपि देयन्दानयोग्य मित्येवार्थः। नचैवं दाप्यइत्यादीनामानर्थक्यमेव स्यादिति वाच्यम्। यतो लौकिक व्यवहारापष्टम्भेणैवमेवं प्रतिभाति तस्मात्तत्त्वानुसरणायान्यतरस्मादीदृशि विषये दिव्यमेव ग्राह्यमित्यत्र तात्पर्य्यात्। कात्यायनादि वचनाना मप्यत्रैव तात्पर्य्यम्। ऋणादिषु विवादेष्वित्यतोऽप्यय मेवार्थो दृढता मुपैति। यतः प्रमाण

प्रतिज्ञाविसम्वादिमते निश्चयाभावस्तत स्तत्वानुसरणाय प्रमाणान्तरादर आवश्यक इति। अतएवाह साहसादौ प्रतिज्ञार्थैकदेशविभावनेऽपि नैकदेशे प्रमाणान्तरानुसरणे साहसिनो हि राजदण्डमात्रं न प्रत्यर्पणं कस्मै चिद्यद्यपि चौर्य्याय प्रत्यर्पणमस्ति। तथापि कतिपयचौरः सर्वं दाप्यत इति लोके प्रसिद्धतरत्वाद्यदि मद्गृहात्तावदिय च्चौर्य्येण गतमस्यच सविधे प्रमाणमित मियदस्तीति चौराभियोक्ता साधयति तदा ततएव सर्वं लभ्यते। यदि त्वनष्टमपि कियन्नष्ट साधनावष्टम्भेन लघुमुपन्यस्यति तर्हि मिथ्यावादित्वान्नाष्टिक एकदण्डो भवति इत्यपि लोके प्रसिद्धतरम्। अनेनैवाभिप्रायेणाह कात्यायनः॥

साध्यार्थां ऽशेऽपि गदिते साक्षिभिः सकलम्भवेत्।
स्त्रीसङ्गे साहसे चौर्य्ये यत्साध्यम्परिकीर्त्तित मिति।

तत्त्वानुसरणं स्मृत्योर्विरोधे कथं स्यादित्यपेक्षायामाह। स्मृत्योर्विरोधेन्यायस्तु बलवान् व्यवहारत इति। व्याख्यातञ्चैतत्प्रागेव। अर्थशास्त्र धर्मशास्त्रयोर्विरोधे धर्मशास्त्रानुसरणेनैव तत्वानुसरणमित्याह। अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिरिति। इदमपिप्रपञ्चितम्प्राक्। तस्मादस्मन्मते च्छलं निरस्येत्याद्ये तदन्तप्रघट्टकेन छलनिरासतत्वानुसरणावश्यम्भात्र प्रतिपादनमेवैकवाक्यतया लभ्यत इति ब्रूमः। इति निह्नवादिविचारः।

अथोत्तरदाने विलम्बाविलम्बव्यवस्था। ततोयोगीश्वरेण। ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधन मितिक्रियोपन्यासे सद्यस्त्वं,विदधतोत्तरदाने विलम्बोयमनुमत इति प्रतीयते।

तदाह बृहस्पतिः। शालीनत्वाद्भयार्त्तत्वात्प्रत्यर्थी स्मृतिविभ्रमात्।
कालम्प्रार्थयते यत्र तत्रेमं लब्धुमर्हति॥
एकाहत्र्यहपञ्चाह सप्ताह म्पक्षमेव वा।
मासं ऋतुत्रयं वर्षं लभते शक्त्यपेक्षयेति॥
कात्यायनः। समंक्रतेषु कार्य्येषु सद्यएव विवादयेत्।
कालातीतेषु वा कालं दद्यात् प्रत्यर्थिने प्रभुः।
प्रभुर्विचारकः। श्रुत्वा लेखयतो ह्यर्थं प्रत्यर्थी कारणाद्यदि।
कालं विवादं याचेत तस्य देयो न संशयः॥
सद्यो वैकाह पञ्चाहौ त्र्यहं वा गुरुलाघवात्।
लभेतासौ त्रिपक्षं वा सप्ताहं वा ऋणादिषु॥
अत्र व्यवस्था तेनैवोक्ता।
सद्य स्कृते सद्यो वादः समातीते दिनं क्षिपेत्।
षड़ब्दिके त्रिरात्रन्तु सप्ताहं द्वादशाब्दिके॥
विंशत्यब्दे दशाहे तु मासार्द्धं वा लभेत सः।
मासं विंशत्समातीते त्रिपक्षं परतो लभेत्॥
कालं शक्तिं विदित्वा तु कार्य्याणाञ्च बलाबलम्।
अल्पं वा बहुकालं वा दद्यात्प्रत्यर्थिने प्रभुः॥
यो वा यस्मिन् समाचारः पारम्पर्य्यक्रमागतः।
तम्प्रतीक्ष्य यथान्यायं दापयेदुत्तरं नृपः॥
मूलं वा साक्षिणो वाथ परदेशस्थिता यदा।
तत्कालो हि भवेत्पुंसां स्वदेशे वक्तुमागमात्॥
दिनमासार्द्धमासं वा ऋतुः संवत्सरोऽपि वा।
क्रियास्थित्यनुरूपस्तु देयः कालः परेण तु॥
लेखयतः अर्थिन इति शेषः। अर्थं श्रुत्वेत्यन्वयः। कालो-

देयो राज्ञेति शेषः। समातीते संवत्सरातीते। यस्मिन् देश-कुलादौ मूलशब्देन विवादास्पदीभूतधनममुष्मात्पुरुषाल्लब्धव्य-मिति वादी यं कथयति स उच्यते। तत्र विषये पुंसां मूलभूता-नां साक्षिणां वा स्वदेशे आगमाद्आगमनावधि वक्तुमुत्तरन्दातुं कालो भवेत्। दातव्य इत्यर्थः। अत्रापवादमाह याज्ञवल्क्यः।

साहसस्तेय पारुष्यगोभिशापात्यये स्त्रियाम्।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः॥

साहसं विषशस्त्रादिभिः प्राणिव्यापादनमित्यादि। सहसा बलावष्टम्भस्तेनापल्कृतम्। गौर्दोग्ध्री। अभिशापः पातकाभि-शंसनम्। अत्ययः प्राणधनातिपातः। इन्द्वैकवद्भावादेकवच-नम्। स्त्रियां कुलस्त्रियां चारित्रविषये विवादे। दास्यां स्त्रियां स्वत्वविवादे कर्मकरणकालातिपातविषये विवादे। सद्य एव प्रागुक्तकालप्रतीक्षामकृत्वैव विवादयेदुत्तरन्दापयेत्। अन्यत्रैतद्भिन्न ऋणादि विवादे काल उत्तरदानकाल इच्छ-याधिसभ्यसभापतीनामनुमत्या स्मृत उक्तो मन्वादिभिः। अत्य-यो विवादविषयीभूतवस्तु विनाश इति। कल्पतरौ साहसादि-पूत्तरकालदानविलम्बेऽन्यतरस्य क्षतिरवश्यम्भाविनीति सद्य एवोत्तरलेखनमनादिषु विलम्बेऽपि न क्षतिस्तथेति सोऽप्यनु-मतः। सचैकाहादिरूपेण प्रागुक्तवचनैर्विवक्षितो यत्र तु न वाचनिकी व्यवस्था तन्त्यार्थ्यादीक्षयेति तात्पर्य्यम्। अतएवाह नारदः। गहनत्वाद्विवादानामसामर्थ्यात् स्मृतेरपि।

ऋणादिषु हरेत्कालं कामं तत्त्वबुभुत्सयेति॥

नारदः। गोभू हिरण्यस्त्रीस्तेयपारुष्यात्ययिकेषु च।
साहसेष्वभिशापे च सद्य एव विवादयेत्॥

अभिशापः पापाभिसंशनम्। तस्य पारुष्यशब्देन ग्रहणेऽप्यादरार्थं पुनर्वचनम्। आत्ययिकं कात्यायनेनोक्तम्।

व्यपैति गौरवं यत्र विनाशस्त्याग एव च।
कालं तत्र न कुर्वीत कार्य्यमात्यन्तिकं हि तदिति॥

अन्यत्रापि सद्य एवोत्तरदानमाह। कात्यायनः।

धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा।
विनाशे याचितके दत्ते तथैव क्रयविक्रये॥
कन्याया दूषणे चैव कलहे साहसे निधौ।
उपधौ कौटसाक्ष्ये च सद्य एव विवादयेत्॥

प्रजननमत्र विवाहः। अन्यत्र विवादासम्भवात्। उपधिः कूटगणिकादिकृतव्यवहारः।

विनाशे त्याग इति न सामानाधिकरण्यम्॥

किन्तु विनाशे सति यत्र त्याग एव सम्पद्यत इत्यर्थेनैक एव विषय इति कल्पतरुरत्नाकरौ। तन्न। सति सप्तम्यनुषङ्गयोः प्रतीति विपरीतयोः कल्पनानुपपत्तेर्वा शब्दस्वरसाच्च पृथग्विषयताया एवौचित्यात्। वस्तुतस्तु विनाशस्त्याग एव वेति प्रथमान्त एव पाठस्तथाचायमर्थः। यत्रोत्तरदानविलम्बे सति गौरवं वस्तुनो मूल्यादिकृतं व्यपैति वस्तुन एव वा विनाशो ध्वंसः त्यागः प्रच्यवो वा भवति तत्रोत्तरदानकालमेकाहादिरूपं न कुर्वीत सद्य एवोत्तरं दापयेदित्यभिप्रायः। बृहस्पति कात्यायनौ।

साहसस्तेयपारुष्यगोऽभिशापे तथात्यये।
भूमौ विवादयेत् क्षिप्रमकालेऽपि बृहस्पतिः॥

अभियापान्तो द्वन्द्वैकवद्भावः । अकाले रात्र्यादावपि । बृहस्पतिरिदमाहेत्यर्थः । इत्युत्तरदाने विलम्बाविलम्बव्यवस्था समाप्ता च विशेषपरिभाषा ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमञ्जरीनीराजितचरणकमल श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज श्रीमन्महाराजमधुकरसाहसूनु श्रीमन्महाराजाधिराजचतुरुदधिजलवलयवसुन्धराहृदयपुण्डरीकविकाशदिनकरश्रीवीरसिंहदेवोद्योगित श्रीहंसपण्डितात्मज श्रीपरशुरामसूनु सकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु श्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे परिभाषा परिष्काराख्यं व्यवहारमातृका पर-पर्य्यायं प्रथमप्रकरणम् ॥ १ ॥

## अथ प्रमाणनिरूपणाख्यं द्वितीयं प्रकरणमारभ्यते।



तत्र प्रमाणभेदप्रमाणविषयव्यवस्थे क्रियापादप्रस्तावे विविक्ते। अधुना साक्ष्यादिप्रमाणानामवान्तरभेदः प्रस्तूयते। तत्र साक्षिस्वरूपमाह मनुः। समक्षदर्शनात् साक्ष्यश्रवणाच्चैव सिद्ध्यति।

समक्षदर्शनस्य साक्ष्यहेतुत्वं पाणिनिरपि स्मरति। साक्षाद्द्रष्टरि संज्ञायामिति। तत्तु व्युत्पत्तिमात्रमव्यापकत्वात्। श्रुतसाक्ष्यादीनामपि साक्षित्वव्यवहारविषयत्वात्। अतएव श्रवणादित्युपलक्षणं प्रमाणमात्रस्य विवादविषयप्रमाता साक्षीति विवक्षितम्। साक्षिप्रयोजनमाह।

नारदः। सन्दिग्धेषु तु कार्य्येषु द्वयोर्विवदमानयोः।

दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्शनमिति॥

दृष्टश्रुताभ्यामनुभूतत्वादित्यर्थः। यद्वा। दृष्टत्वात् श्रुतत्वादनुभूतत्वाच्चेत्यर्थः। अनुभूतत्वादित्यनेन च गोष्टपन्यायेन प्रमाणान्तरजन्योऽनुभवो गृह्यते। व्यक्तिदर्शनं विवेकज्ञानम्।

कात्यायनः। अर्थि प्रत्यर्थि सान्निध्यादनुभूतन्तु यद्भवेत्।

तद्ग्राह्यं साक्षिणो वाक्यमन्यथा न बृहस्पतिः॥

अर्थि प्रत्यर्थि सान्निध्यादनुभूतमिति मुख्यः कल्पः। तदसान्निध्येऽपि श्रवणादिना साक्ष्यस्य वचनान्तरैरनुमतत्वात्। तच्च साक्षिभूतनिरूपणे व्यक्तो भविष्यति। गौतमः। विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्थेति। स च साक्षी प्रथमं द्विविधः। कृतो ऽकृतश्च। साक्षित्वेनार्थि प्रत्यर्थिभ्यान्निरूपितः कृतः।

अनिरूपितोऽकृतः। पुनश्च कृतस्य पञ्चविधत्वादकृतस्य षड्-विधत्वादेकादशविधः। यथाह नारदः।

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः।
कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते॥
लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृत इति॥

पञ्चानामपि कात्यायनेन स्वरूपमभिहितम्।

अर्थिना स्वयमानीतो यो लेख्ये सन्निवेश्यते॥
स साक्षी लिखितो नाम स्मारितः पत्रकादृत इति।

स्मारितः पत्रकादृते इत्यपि विवृतन्तेनैव॥

यस्तु कार्य्यप्रसिद्ध्यर्थं दृष्ट्वा कार्य्यं पुनः पुनः।
स्मार्य्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते॥

दृष्ट्वेति दर्शयित्वेत्यन्तर्भावितण्यर्थम्। कार्य्यं व्यवहार-पदं दर्शयित्वा प्रमापय्य कार्य्यप्रसिद्ध्यर्थं कालान्तरे व्यवहार-निर्णयसिद्ध्यर्थं पुनः पुनः स्मार्य्यते कार्य्यते च विस्मरणनिरा-साय यः स स्मारितो नाम साक्षीत्यर्थः। यस्तु यदृच्छया प्रसङ्गा-दागतस्त्वमत्र साक्षी भवेति साक्षित्वेन निरूपिते स यदृच्छा-भिज्ञः स्मारितस्यास्य च पत्रानारूढत्वेन साम्येऽपि स्वरूप-भेदः। स्पष्टोऽपि तेनैव विवृतः।

प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः।
द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकाविति॥

गूढमाह। अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थि वचनं स्फुटम्।

यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यत इति।

उत्तरसाक्षिस्वरूपमाह।

साक्षिणामपि यः साक्ष्यमुपर्य्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञित इति ॥

षड्विधस्याप्यकृतस्य भेदो नारदेनैव दर्शितः ।

ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्य्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः ॥

प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणम् ।

लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ॥

नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृता इति वचनात् । बृहस्पतिस्तु लेखितमधिकमादायैतानेव द्वादश साक्षिणआह ।

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।
याद्दच्छश्चोत्तरश्चैव कार्य्यमध्यगतोऽपरः ॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृत इति ।

तल्लक्षणान्यपि कानिचिद्विलक्षणानि कानिचित्पूर्वसंवादीन्याह स एव ।

प्रभेदमेषां वक्ष्यामि यथावदनुपूर्वशः ।
जाति नामाभिलिखितं येन स्वं पित्र्यमेव च ॥
निवासश्च स विज्ञेयः साक्षिलिखितसंज्ञकः ।
अर्थिना च क्रियाभेदैरास्य कृत्वा ऋणादिकम् ॥
प्रत्यक्षं लिख्यते यस्तु लेखितः स उदाहृतः ।
कुड्य व्यवहितो यस्तु श्राव्यते ऋणिभाषितम् ॥
विनिह्नुते यथाभूतं गूढसाक्षी स कीर्त्तितः ।
आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ॥
स्मार्यते यो मुहुश्चैव स्मारितः सोऽभिधीयते ।

विभागदाने विपणे ज्ञाति र्यद्रोपदिश्यते ॥
द्वयोः समानो धर्मज्ञः स कुल्यः परिकीर्त्तितः ।
अर्थि प्रत्यर्थि वचनं शृणुयात्प्रेषितस्तु यः ॥
उभयोः सम्मतः साधुर्दूतकः स उदाहृतः ।
क्रियमाणे च कर्त्तव्ये यः कश्चित्स्वयमागतः ॥
अत्र साक्षित्वमज्ञाकमुक्तो याद्दच्छिकस्तु सः ।
यस्तु साक्षी दिशङ्गच्छन् मुमूर्षुर्वा यथाश्रुतम् ॥
अन्यं संश्रावयेत्तन्तु विद्यादुत्तरसाक्षिणम्।
साक्षिणामपि यः साक्ष्यमुपर्य्युपरि भाषताम् ॥
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ।
उभाभ्यां यस्य विश्वस्तं कार्य्यं वापि निवेदितम् ॥
गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ।
अर्थि प्रत्यर्थिनो र्वाक्यं यच्छ्रुतम्भूभृता स्वयम् ॥
स एव तत्र साक्षी स्याद्विसम्वादे द्वयोरपि ।
निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ॥
अध्यक्षः सभ्यसहितः साक्षी स्यात् तत्र नान्यथा ।
दूषितञ्ज्ञातितं यच्च सीमायास्तु समन्ततः ॥
अज्ञतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशय इति ॥

लिखितलेखितयोः स्वपरलिखनमात्रभेदादेकादशद्वादश-संख्ययोरविरोधः। सर्वे च यथासम्भवं दृष्टश्रुतरूपद्विविध-साक्षिभेदा ज्ञेयाः। क्रियाभेदैर्व्यवहारप्रकारभेदैस्तु प्रत्यर्थिनः। ऋणादिकमित्यादि शब्दात् यथासम्भवं सर्वविवादपदनिदर्श-नम्। कुड्यग्रहणं व्यवधायकोपलक्षणम्। विनिह्नुते इति भावे क्तः निह्नवे सम्भावित इति शेषः। इत्युक्त इतीति शब्दा-

ध्याहारः। दिगन्देशान्तरमन्यमित्यर्थः। उभाभ्यामर्थि प्रत्यर्थिभ्यां यस्य विश्वस्तं यदीयो विश्वासः कृत इति सम्बन्धसामान्यविवक्षया षष्ठी भावे क्तश्चाभ्युपेत्य व्याख्येयम्। गूढचारी कार्य्यमध्यगतस्येत्येकस्यैव संज्ञाद्वयमिति द्वादशत्वाविरोधः। दूतग्रहणं लेखकस्यापि प्रदर्शनार्थं दूतकः खटिकाग्राहादिति बृहस्पति वचनाद्ग्रामग्रहणमथ कृतसाक्ष्युपलक्षणम्। येन योऽर्थः प्रमितस्तत्र साक्षित्वेन प्रागनिरूपितोऽपि पश्चात्साक्षित्वेन विज्ञायोपन्यस्तः। दृष्टश्च सभायां साक्ष्यन्दातु मर्हतीति फलितोऽर्थः। इतरथा वेतनादानादिषु लिखिताद्यसम्भवे साक्ष्यभावप्रसङ्गः। इदमेवाभिसन्धायाह मनुः।

यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किञ्चन।
दृष्टस्तत्रापि तद्ब्रूयात् यथादृष्टं यथाश्रुतम्॥

अनिबद्धोऽकृतः। कल्पतरुमदनरत्नयोरर्थिक्रियां क्रियाभेदैरिति पठितं तत्रार्थि क्रियाप्रत्यर्थिव्यवहारक्रियाभेदैः प्रमाणविशेषैराप्तवाक्यादिभिस्तस्य कृत्वा तत्सम्बन्धितयावधार्य्य ऋणादिके विवादविषये यः प्रत्यक्षं प्रत्यर्थि समक्षं लेख्यतेऽर्थिनेत्यर्थात्। स तत्र लेखितः साक्षीति व्याख्येयम्। कालादावत्रधिरपि साक्ष्ये स्मर्य्यते।

सुदीर्घेणापि कालेन लिखितः सिद्धिमाप्नुयात्।
सञ्जानन्नात्मनो लेख्यमजानन्नतु लेखयेत्॥

सम्यग्जानन्नात्मनो लेख्यं कुर्य्यादिति शेषः। अजानन्तं लिप्यनभिज्ञमात्मानमन्यद्वारा सत्यङ्कह मत्रेति लेखयेत्। स द्विविधोऽपि लिखितः साक्षी चिरकालेनापि सिद्धिन्निर्णायकतामाप्नुयादित्यर्थः।

कात्यायन:। अथ स्वहस्तेनारूढ स्तष्टंस्वेक: स एव तु।
नचेत्प्रत्यभिजानीयात् तत्स्वहस्तै: प्रसाधयेत्॥

नारद:। आष्टमाद्वत्सरात्सिद्धि: स्मारितस्येह साक्षिण:।
आपञ्चमात् तथा सिद्धि र्यदृच्छोपगतस्य तु।
आत्मनीयात् तथा वर्षात् सिद्धिर्गुढस्य साक्षिण:॥
आसंवत्सरात्सिद्धिन्तु वदत्युत्तरसाक्षिण इति॥

इदञ्च प्रायोवादेन यत: स एवाह।
अथवा कालनियमो न दृष्ट: साक्षिण: प्रति।
स्मृत्यपेक्षं हि साक्षित्वमाहु: शास्त्रविदो जना:॥
यस्य नोपहता बुद्धि: स्मृति श्रोतञ्च नित्यश:।
सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति॥

ते च साक्षिण: कीदृशा: कार्य्या इत्यपेक्षायामाह मनु:।
यादृशा अर्थिभि: कार्य्या व्यवहारेषु साक्षिण:।
तादृशान् संप्रवक्ष्यामि यथा वाच्यमृतञ्च तै:॥
गृहिण: पुत्त्रिणो मौला: क्षत्रविट् शूद्रयोनय:।
अर्थ्युक्ता: साक्ष्यमर्हन्ति न ये केचिदनापदि॥
आप्ता: सर्वेषु वर्णेषु कार्य्या: कार्य्येषु साक्षिण:।
सर्वधर्म्मविदो लुब्धा विपरीतांस्तु वर्जयेत्॥

मौला: प्रख्यातकुलोद्भवा इति कल्पतरु:। मूलं पूर्ववृत्तान्तस्तद्विदन्तीति मौला:। तदधीते तद्वेदेत्यणिति मदनरत्ने। वक्ष्यमाणयाज्ञवल्क्यवचनसंवादात्साक्षित्वेनैव पूर्ववृत्तान्तवेदित्वाज्ञेयात्तदर्थकमौलपदानर्थक्यप्रसङ्गाच्च कल्पतरुव्याख्यानमेव सम्यक्। रत्नाकरोऽपि मौला: कुलीना इत्येवं व्याख्यातम्। मूलं प्रतिष्ठा सा येषामस्ति ते मौला: अर्थकथन-

मेतत्। तद्भिन्नस्तु भवार्थम् एव कर्त्तव्यः, यो हि यत्र भवः सोऽपि तस्यास्तीत्यविरुद्धमिति वदन्मेधातिथिरपीममर्थमनुमन्यते। प्रतिष्ठान्तरस्य साक्षिलक्षणानुपयोगात्। पुत्रादिप्रतिष्ठायाः पदान्तरैरेवोपादानात्। अत्र क्षत्रियादिग्रहणं नात्यन्तिकब्राह्मणव्युदासपरं, किन्तु सति सम्भवेऽनेकाध्यापनाग्निहोत्रादिकार्यव्यग्रस्य तस्य न साक्षित्वं साक्ष्यन्तरासम्भवे तु तस्यापि साक्षित्वम्भवत्येव। अतएव ब्रूहीति ब्राह्मणं पृच्छेदिति तस्यापि साक्षित्वेन प्रश्नप्रकारविधिरुपपद्यत इति ध्येयम्। अर्थ्युक्ता अर्थिना ममैते साक्षिणः सन्तीति निर्दिष्टा नतु स्वयमेवागत्य वयमत्र साक्षिणः स्म इति वदन्तः। याज्ञवल्क्यः।

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः।
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्त्तक्रियापराः।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः॥

त्र्यवरास्त्रिभ्यो न्यूना न भवन्ति परतस्तु यथेच्छं भवन्तीत्यर्थः। जातयो मूर्द्धावसिक्तादयः। वर्णा ब्राह्मणादयः। यथाच मूर्द्धावसिक्तादीनां मूर्द्धावसिक्तादयो ब्राह्मणादयो ब्राह्मणादीनां साक्षित्वेनोपादेयाः। असम्भवे सर्वे सर्वजातीयाः सर्वेषु जातीयेषु वादिप्रतिवादिषु साक्षिणो ग्राह्या इत्यर्थः।
व्यासः। धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः।
श्रौतस्मार्त्तक्रियायुक्ता विगतद्वेषमत्सराः॥
श्रोत्रियानपराधीनाः सूरयश्चाप्रवासिनः।
युवानः साक्षिणः कार्य्या ऋणादिषु विजानतेति॥

कात्यायनः। प्रख्यातकुलशीलाश्च लोभमोह विवर्जिताः।
आप्ताः शिष्टा विबुद्धा ये तेषां वाक्यमसंशयम्॥
विभाव्यो वादिना यादृक् सदृशैरेव भावयेत्।
नोत्कृष्टश्चावकृष्टस्तु साक्षिभिर्भावयेत्सदेति॥

आप्ताः यथार्थवादिनः। विबुद्धा विवादविषयीभूतार्थ-ज्ञानवन्तः शास्त्रार्थज्ञानवन्तश्च। मतिबुद्धिः पूजार्थेभ्यश्चेति कर्त्त-रि क्तः। आदिकर्मणीति मदनरत्ने तेषां वाक्यमसंशयं यथा भवति तथा वादिनो विभाव्योऽङ्गीकारयितव्योऽर्थात्प्रति-वादी। तत्र विशेषमाह। यादृक् प्रतिवादितत्सदृशैस्तज्जाती-यैरेव भावयेत्। वादयेत्युपलक्षणम्। वाद्यपि प्रतिवादिना तज्जातीयैरेव विभाव्यः।

तथा च नारदः। श्रेणीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः।
बहिर्वासिषु वाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिण इति॥

मनुरपि। स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युर्द्विजानां सदृशाः द्विजाः।
शुद्राश्च सन्तः शुद्राणामन्त्यानामन्त्ययोनयः॥

श्रेणिपुरुषाणां सत्यपि वर्गित्वे पृथङ्निर्देशो गोवृषन्यायेन। प्रयोजनं चात्राप्यभ्यर्हितत्वबोधनम्। वर्गिणश्च दर्शिताः।

कात्यायनेन। लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे।
समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्भृगुः।
दासचारणमल्लानां हस्त्यश्वायुध जीविनाम्॥
प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः।
तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः॥

अत्र सर्वत्र न्यूनाधिकविशेषणोपादानन्न दोषाय अनृत-भाषणभीरुत्वसत्यवदन शीलत्वस्य च साक्षित्वप्रयोजकस्यो-

पलक्षणार्थत्वात्तेषाम्। ते च साक्षिणः कियत्सङ्ख्याकाः कुत्र-ग्राह्या इत्यपेक्षायामाह।

बृहस्पतिः। नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा।

उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत्कदाचन॥

लिखितादिषु स एवाह

लिखितौ द्वौ तथा गूढौ त्रिचतुष्पञ्च लेखिताः।

यदृच्छाः स्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः॥

दूतकः खटिकाग्राही कार्य्यमध्यगतस्तथा।

एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च॥

खटिकाग्राही गणकः एक एवेत्येवकारो वाद्यपेक्षया नै-कम्पृच्छेत्कदाचनेनोक्ताया अनावश्यकत्वार्थो न नियमार्थो ऽदृ-ष्टार्थत्वप्रसङ्गात्। त्र्यवराः साक्षिणो ज्ञेया इति योगीश्वरीय-मप्येतदभिप्रायकमेव लिखितादीनामुभयानुमतत्वग्राह्यत्वमेक-स्यापीत्याह योगीश्वरः।

उभयानुमतः साक्षी भवत्येकोऽपि धर्म्मवित्।

यद्यपि श्रौतस्मार्त्तक्रियापरा धर्मप्रधाना इत्यादिविशेष-णोपादानात् त्र्यवराणामपि धर्मवित्त्वं समानन्तथापि तेषा-मुभयाननुमतानामपि भवत्येव साक्षित्वं द्वयोरेकस्य चोभया-नुमत्यैवेति भेद इति मिताक्षरा।

नारदोऽपि। उभयानुमतो यः स्याद्द्वयोर्विवदमानयोः।

स साक्ष्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात्तु संसदि।

आप्तत्वेन राजादिभिरवधारितोऽप्येकः साक्षीत्याह व्यासः।

शुचिक्रियश्च धर्मज्ञः साक्षी यस्त्वनुभूतवाक्।

प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः। इति॥

अनुभूता यथार्थत्वेन प्रमितवरा वाग्यस्येत्यनुभूतवाक् ।
कात्यायनः । अभ्यन्तरस्तु निःक्षेपे साक्ष्यमेकोऽपि वाच्यते ।

अर्थिना प्रहितः साक्षी भवेदेकोऽपि याचिते ॥

याचित इति निःक्षेपविशेषणम् । न्यायतोऽन्यादन्यत्रापीति वाचस्पतिः । मदनरत्नस्तु याचितं विवाहाद्यर्थं याचितम् गृहीतमाभरणादिकं याचितकमिति यावदित्याह । निःक्षेपविशेषणवैयर्थ्यादयाचिते तस्मिन्नभ्यन्तरस्यैकस्यासाक्षित्वप्रसङ्गाद्यवहितान्वयप्रसक्तेश्चोत्तरैव व्याख्याप्रख्याकुण्डलादिपण्यविवादे तन्निर्मातैकोऽपि साक्षीत्याह । स एव ।

संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्त्तितः ॥

इदञ्च बहूनामसम्भवे सत्यवादिनोर्द्वयोरेकस्य वानुमतिप्रदर्शनार्थं न नियमार्थम् । अदृष्टार्थत्वप्रसङ्गादिति ध्येयम् । उक्तलक्षणसाक्ष्यसम्भवे प्रतिषेधरहितानां साक्ष्यनुकल्पनां सूचयितुमसाक्षिणोऽपि स्मृतिषूक्ताः । उक्तलक्षणविप्रालाभेऽप्रतिषिद्धानुमत्यै श्राद्धे कतिपयप्रतिषेधवत् ।

नारदः । असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः ।
वचनाद्दोषतो भेदात् स्वयमुक्तिर्मृतान्तर इति ।
श्रोत्रियाद्यास्तु वचनात्स्तेनाद्यादोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम् ॥
स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्य यो वदेत् ।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥
मृतान्तरोऽर्थिनि प्रेते मुमूर्षुः श्राविताद्दते ।
वचनादसाक्षिणः श्रोत्रियाद्यानाह । स एव ।

श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृत इति ॥

तापसा वानप्रस्थाः प्रव्रजितादय इत्यादि शब्देन शङ्खेनैकयोग्योपात्ताः पिता विवदमानादयो गृह्यन्ते । तथाच शङ्खः । पिता विवदमानगुरुकुलवासिपरिव्राजकवानप्रस्थनिर्ग्रन्थाश्चासाक्षिण इति । पिता विवदमाननिर्ग्रन्थयोर्दोषादप्यसाक्षित्वसम्भवे वचनादप्यसाक्षित्वेन विरोधः । दोषादसाक्षिणोऽपि तेनैव दर्शिताः ।

स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा ।
असाक्षिणस्ते दुष्टत्वात् तेषु सत्यं न विद्यते ॥

चण्डाः कोपनाः । कितवा द्यूतकृतः । योगीश्वरस्त्वसाक्षित्वमात्र विवक्षया सर्वानेतानेकीकृत्याह ।

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारिपाषण्डिकूटकृद्विकलेन्द्रियाः ॥
पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः ।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिण इति ॥

अत्र वृद्धग्रहणं श्रोत्रियादीनां वचनादसाक्षिणां नारदाद्युक्तानामुपलक्षणं स्त्रीबालादिग्रहणमन्येषामपदोषादसाक्षिणां स्मृत्यन्तराभिहितानाम् । आद्यग्रहणाद्भेदादसाक्षिणां स्वयमुक्ते मृतान्तरस्य च ग्रहणम् । तत्र स्त्रिया असाक्षित्वं स्त्रीकृतव्यवहारातिरिक्ते स्त्रीणां साक्ष्यं स्त्रियः कुर्युरिति वचनात् । बालोऽप्राप्तव्यवहारः वृद्धोऽशीतिकावधिः मत्तो मदनीयद्रव्येण । उन्मत्तो ग्रहाद्याविष्टः । अभिशस्तको महापातकाभिशस्तः स्वार्थे कः । रङ्गावतारी चारणः । पाषण्डिनो निर्ग्रन्थप्रभृतयः । कूटकृत्क-

पटलेख्यादिकारी । विकलः श्रोत्रेन्द्रियादि दोषवान् । पतितो निश्चितब्रह्महत्यादिः । आप्तः सुहृत् । अर्थसम्बन्धिविप्रतिपद्यमानार्थसम्बन्धी सहाय एककार्यकारी रिपुः शत्रुरन्यतरस्य । साहसी बलावष्टम्भेन कार्य्यकारः । दृष्टदोषो दृष्टासत्यवचनः । निर्द्धूतो बन्धुभिस्त्यक्तः । भेदादसाक्षित्वं च संख्यागुणसाम्ये ।

अन्यथा द्वैधे बहूनां वचनं समेषु गुणिनामपि ॥
गुणि द्वैधे तु यत्र स्यात् ग्राह्या ये गुणवत्तमाः ।
बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमानिति ॥

याज्ञवल्क्यमन्वादिवचनविरोधापत्तेः ।

ननु साक्षिणां लिखितानाञ्च निर्दिष्टानाञ्च वादिनाम् ।
तेषामेकोऽन्यथा ब्रूते भेदात्सर्वेऽथ साक्षिण इति ।

कात्यायनेनैकस्यान्यथावादित्वे सर्वेषामेव भेदादसाक्षित्वमुक्तं तद्विरोध इति चेन्न । त्रयाणां साक्षिणामेकस्यान्यथा वादे द्वितीयस्य तत्तुल्यस्य सत्प्रतिपक्षितत्वात्तृतीयस्य चैकतया तत्र साक्षितो न निर्णय इत्यत्र कात्यायनतात्पर्यात् । सत्प्रतिपक्षितावशिष्टानान्त्वनेकत्वे तत एव निर्णय इत्यत्र च याज्ञवल्क्यतात्पर्य्यात् । मूलभूतन्यायविरोधेऽनयो र्वचनयोरेवमवश्यं संकोच्यत्वादिति वाचस्पतिः । पञ्चषष्ठोऽपि साक्षिष्वधिकगुणस्य चैकस्याप्यन्यथावादित्वे तद्विरुद्धार्थाभिधायिनां सर्वेषामन्येषामसाक्षित्वम् । अधिकगुणस्याप्येकस्य बहुवाक्यविरुद्धाभिधानादसाक्षित्वमिति सर्वेऽपि तेन साक्षिण इति न मन्वादिविरोध इति मदनरत्नकारः । वयन्तु गुणवत्त्वस्यैव शत-

मप्यन्यानां न पश्यति एकेनापि बहूनां प्रतिबन्धाच्चेत्यादि न्यायेन प्राधान्यात् गुणवतः साम्येवादिनिर्दिष्टानामेकस्या-प्यन्यथा वादित्वे संख्याधिक्येऽपिगुणवत्तरत्वाभावे सर्वेष्वसा-क्षित्वं द्वैधे बहूनामित्यत्रापि विनिगमकान्तराभावे बहुत्वमेव विनिगमकमत एव संख्यानपेक्षमेवगुणवत्तमत्वमात्रं ग्राह्य-वचनत्वे हेतुमाहेति ब्रूमः। स्वयमुक्तेरसाक्षित्वमपि विवृतं कात्यायनेन॥

यः साक्षिनैव निर्दिष्टो नाहूतो नैव देशितः।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधम इति॥

अयमत्र साक्षीति ज्ञानवानान्तरोऽर्थिप्रत्यर्थिनोरन्यतरः स मृतो यस्येति मृतान्तरस्तस्यासाक्षित्वमपि सहेतुकं विवृतं नारदेनैव।

योऽर्थस्त् श्रावितव्यः स्यात्तस्मिन्नसति चार्थिनि।
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तर इति॥

येनार्थिना प्रत्यर्थिना वा योऽर्थः स्वीयः श्रावयितव्यः स्यात् श्रावणीयत्वेनाभिमतो भवेत्तस्मिन्नर्थि प्रत्यर्थिनोरन्यतरस्मिन्न-सति मृते प्रोषिते वाऽभिमतार्थे वा निरूपिते स साक्षित्वं क्व कस्मिन्नर्थे वदतु कस्य वा कृते वदत्वित्यर्थः। सामान्यतो य आवयोः कश्चिद्व्यवहारसम्बन्धोऽस्ति तत्र त्वं साक्षिणा भाव्य-मित्येतावन्मात्रमुक्तं विशिष्य च व्यवहारविषयो न तस्मै श्रा-वितः श्रावयिता च नास्ति स दृष्टोऽपि विशिष्य विषयाज्ञा-नादसाक्षीति यावत्। इदमेवाभिप्रेत्योक्तं मुमूर्षुः श्रविता-हत इति। मुमूर्षुग्रहणमश्रावणप्रयोजकाभावपरम्। तथा च स एव।

आवितो नातुरेणापि यस्त्वर्थो धर्मसंहितः।

मृतेऽपि तत्र साक्षी स्याद्दसु चान्वाहितादिष्वित्याह॥

अत्र श्रोत्रियादयो न साक्षिणः कार्य्यास्तेषां रागादिशून्यानां सत्यवादित्वातिशयेऽपि तपःस्वाध्यायाग्निहोत्रादिव्यासङ्गेन आवितार्थविस्मरणसम्भवादतिपूज्यानां धर्माधिकरणप्रवेशाह्वानाद्यनौचित्याच्चेत्यर्थः। अकृतास्तु तत्त्वं जानन्तो भवन्त्येव साक्षिणः। अतएवोक्तमुभौ तु श्रोत्रियौ ग्राह्यावित्यादि॥ अन्यथा सर्वथा साक्षित्वनिषेधे तद्विरोधः स्यात्। तथा च नात्र हेतुरसत्यवादित्वप्रयोजको हेतुः स्तेनत्वादिनोदाहृत इत्यर्थः। वचनादित्यस्यापि साक्षित्वकरणनिषेधकवचनादित्यर्थः।

एको लुब्धस्त्वसाक्षीस्याद्बह्व्यः शुच्योऽपि न स्त्रियः।

स्त्रीबुद्धेरस्थिरत्वाच्च दोषैश्चान्येऽपि ये वृता इति मनुः।

अलुब्ध एकोऽपि पुमान् साक्षी भवति बह्व्यः शुच्यो लोभादिदोषरहिता अपि स्त्रियः साक्षिण्यो न भवन्ति तत्र हेतुः स्त्रीबुद्धेरिति। एको लुब्धस्त्वसाक्षीति मेधातिथिनान्याभिमतत्वेनैमम्पाठमभिप्रेत्यान्येत्वकारप्रश्लेषेणालुब्धोऽप्येको न साक्षी किं पुनर्लुब्ध इत्येवं व्याचक्षते। तथा द्वयोरभ्युज्ञानम्भवति स्त्रियस्त्वलुब्धा बह्व्योऽपि न साक्ष्यार्हाः किन्तुताशुचय इति भणितम्। तत्रान्येत्वित्यस्वरसबीजमेकस्य प्रागेव निरस्तत्वात् स्त्रीसाक्ष्यपर्युदासायानुवादे तु यथोक्तपातेऽप्युपपन्ने सत्र चैकस्यालुब्धस्य पुंस्त्वेन प्रतिप्रसवपूर्व्वकं स्त्रीणां सर्व्वथा निषेधपरत्वे सन्दर्भसाभङ्गस्य मिति। अलुब्ध इत्यकारप्रश्लेषं विनैव पूर्व्वपाठ एव लुब्धश्चेदेको न साक्षी अलुब्धस्त्वेकोऽपि पुमान् साक्षीति

जीमूतवाहनेनैवं व्याख्यातम्। तत्र लुब्धानां बहूनामप्यसाक्षित्वे एकपदवैयर्थ्यमिति व्यवहारतत्त्वे दूषणमुक्तं तदप्युत्तरवाक्यशेषत्वादस्य न सम्यगिति द्रष्टव्यम्। शुच्य इति ङीप् छान्दसो गुणवचनादुकारान्तादेव वोतो गुणवचनादिति तद्विधानात् कृदिकारादक्तिन इति वा समर्थनीयम्। अन्येऽपि स्त्रीव्यतिरिक्ता अपि रागद्वेषादिदोषो ये हता आक्रान्तचित्तास्तेऽपि न साक्षिणः। यद्यपि केचनैष्टा असाक्षितया पृथगप्युक्ता स्तथापि सर्वेषां दृष्टाकोटेन वक्तुमशक्यतयाऽनुक्तानां सङ्ग्रहार्थमिदमुक्तम्। अतएव मेधातिथिः। सामान्यविशेषाभिधानं हि सर्वे ग्रन्थकारा अमन्यन्त इत्याह।

मनुरेव। नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः।

न दृष्टदोषाः कर्त्तव्या न व्याध्यार्त्ता न दूषिताः॥

न साक्षी नृपतिः कार्य्यो न कारुककुशीलवौ।

न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः।

अध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत्।

न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः॥

नार्त्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः।

न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्कर इति॥

अत्र सर्वैर्विशेषणै रसत्यसम्भावना विस्मरणादिकमसाक्ष्यनिमित्तमुपलक्ष्यते। अतएव वृद्धविकलेन्द्रियविकर्मकृत् तस्करादीनां गोबलीवर्दन्यायेन पुनरुपादानं अत्र बहवः शब्दाः स्पष्टार्थाः। अन्ये मेधातिथ्यनुसारेण विव्रियन्ते। अर्थसम्बन्धिन उत्तमर्णाधमर्णाद्याः उत्तमर्णोह्यधमर्णवचनेन पराजीयमान स्तदानीमेव रोषाविष्टोऽधमर्णादृणं प्रत्यादातुं प्रयतत

इति तच्चित्तानुवृत्तिरधमर्णस्य तदनुगुणकौटसाक्ष्यहेतुत्वेन संभाव्यते। उत्तमर्णो निर्धनो ऽधमर्णो स्वस्मात्सितदा धनं प्राप्य स्वस्मै तदर्पयिष्यतीति बुद्ध्या तदनुगुणवादी सम्भाव्यते। तथार्थः प्रयोजनन्तत् सम्बन्धिनो वादिप्रतिवादिनोरन्यतरस्मा-द्येषां स्वप्रयोजनं सिसाधयिषितन्तेऽप्युपकारगन्धान्न साक्ष्या-र्हा इत्यादि सर्वत्र कौटसाक्ष्यसम्भावनोन्नेया दृष्टदोषा अन्यत्र कृतकौटसाक्ष्याः। व्याध्यार्त्तां वचन विसंवादापादक व्याधि-पीडावन्तः। दूषिता अभिशस्ताः। नृपतेरसाक्षित्वं कृताभिप्रा-येणातो न प्राक्तन नारदोक्ति विरोधः लिङ्गस्थोऽपत्यादिः। सङ्गेभ्यो विनिर्गतः परित्यक्तः पित्रादिगुरुजनसंसर्गात् वृद्धा-नुपसेव्य नादस्याऽसत्यसम्भावना। अध्यधीनो वन्धकीकृतः तस्य तदाज्ञावशवर्त्तित्वात्। वक्तव्यो निन्दास्पदम् विकर्मकृत् अध-र्म्माभीरुः। वृद्धविकलेन्द्रियो वार्द्धकस्वभावहेतुकेन्द्रियवैक-ल्येन भेदः। आर्त्तः शोकेन।

नारदोऽपि। दास नैः कृतिकाश्चाज्ञ वृद्धस्त्रीबालचाक्रिकाः।

मत्तोन्मत्तप्रमत्तार्त्त कितवग्रामयाजकाः॥

महापथिक सामुद्रवणिक् प्रव्रजितातुराः।

व्यङ्गैक श्रोत्रियाचार हीनक्लीवकुशीलवाः॥

नास्तिकव्रात्यदाराग्नित्यागिनो याज्ययाजकाः।

एकस्थाली सहायारिचर ज्ञातिसनाभयः॥

प्राग्दृष्टदोषशैलूषविषजीव्यहितुण्डिकाः।

गरदाग्निदकीनाश शूद्रापुत्रोपपातिताः॥

क्लान्तसाहसिकाश्रान्त निर्द्धूताग्न्यावसायिनः।

भिन्नवृत्तासमावृत्तजडतैलिकमूलिकाः।

भूताविष्ट नृपद्विष्ट वर्णनक्षत्र सूचकाः ।
अधर्मंस्थात्मविक्रेतृहीनाङ्ग भगद्दत्तयः ॥
कुनखिश्यावदन् श्वित्रिमित्रधुक् शठशौण्डिकाः ।
ऐन्द्रजालिक लुब्धोग्र श्रेणीगण विरोधिनः ॥
बधकश्चित्रकृत्शङ्कः पतितः कूटकारकः ।
कुहकः प्रत्यवसित स्तस्करो राजपूरुषः ॥
मनुष्यपशुमांसास्थि मधुक्षीराम्बुसर्पिषाम् ।
विक्रेता ब्राह्मणश्चैव द्विजो वार्द्धुषिकश्च यः ।
च्युतः स्वधर्मात्कुलिकः सूचको हीनसेवकः ॥
पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः ।
श्रेण्यादिषु तु वर्गेषु कश्चिच्चेद्द्वेष्यतामियात् ॥
तस्य तेभ्यो न साक्ष्यं स्याद्द्वेष्टारः सर्व एव ते ॥

नैःकृतिकः परापकारशीलः । चाक्रिकस्तैलिकः । प्रमत्तः सदाऽनवहितः महापथिको महापथगामी । सामुद्रवणिग्व-ह्नित्र वाही एकः श्रोत्रियो द्वयोरनुमतः । एकः श्रोत्रिय इति पृथग्वा प्रायश्चोक्तं च प्रागेव तत् । अपरार्केण तु युग्मै-केति पठित्वा युग्मौ द्वाविति व्याख्यातम् । एकस्थाली सहाय एकपाकभोजीति । सहायन्यतरसाहाय्यकारी मिश्रचण्डे-श्वरौ । मदनरत्नाकरस्तु । एकस्थाली सहाय इति विशेषण-द्वयं पृथक्कृत्य एकस्थाली स्थाल्यधिकरणकः पाकोलक्ष्यते । स एको दस्येत्येकस्थालीति व्याचख्यौ । समासान्तविधेरनि-त्यत्वादेकस्थालीत्यत्र नद्यृतश्चेति न कप् । अर्द्धपिप्पलीत्या-दिवन्न ह्रस्व इति च समादधे । अरिचरः भूतपूर्वः शत्रुः । भूतपूर्वे चरट् । कल्पतरौ त्वरिधर इति पठित्वा

शास्त्रधर इति व्याख्यातम्। ज्ञातयः सगोत्राः सनाभयो मातुलतत्सुतमातृष्वस्रीयादयः। शैलूषः स्त्रीणां नर्तयिता। कुशीलवस्तु रङ्गोपजीवी नट इति भेदः। विषजीवी विषक्रयजीवीति मदनरत्ने। विषवैद्य इति जीवी रत्नाकरे। अहितुण्डिकः। सर्पक्रीड़ोपजीवी व्यालग्राही। कीनाशः कर्कशः क्षुद्रो वा। कृपण इति तु मदनरत्ने। उपपातित उपपातकीति कल्पतरुः। मदनरत्ने तूपपातक इति पठितम्। उप समीपम्पातकं यस्येति विरुद्धपातकयुक्त इति व्याख्यातञ्च। क्लान्तोऽतिखिन्नः अश्रान्तोऽनवरतकर्मकारीति मदनरत्ने। अशान्त इति पठित्वाऽयोग्यकर्मकारीति रत्नाकरे। निर्द्धूतो बान्धवैस्त्यक्त इति मदनरत्ने। ग्रामराजकुलश्रेण्यादिभिर्निःसारित इति रत्नाकरे। लोकभयशून्य इति भवदेवः। मूलं विप्रलम्भस्तत्कारीति कल्पतरुः। मूलकर्म तु कार्मणमित्यमरकोशात्तत्कारीति तु युक्तम्। अपरार्केण तु पौपिक इति पठित्वा पौपिकपूपादिविक्रयीति व्याकृतम्। वर्षसूचको दृष्टीशकुनवेदी। नक्षत्रसूचको ज्यौतिषिकः। अवशंसी परकीयपापप्रकाशकः। हीनाङ्ग उचितपरिमाणाति न्यूनाङ्गः। व्यङ्गस्तु छिन्नाङ्गुल्यादिरिति भेदः। भगवृत्तिर्भार्य्यादास्यादिसम्भोगशुल्कोपजीवी शङ्कः वृषभनर्त्तनजीवीति मदनरत्नरत्नाकरयोः। कुहको दाम्भिकः। प्रत्यवसितः प्रव्रज्यादिच्युतः। कुलिको राज्ञा व्यवहारपरिच्छेदकतया नियुक्तः। अस्य च साक्षित्वकरणे निषेधो विधिस्त्वकृतसाक्ष्य इति कल्पतरुः। मदनरत्ने तु कुलं ब्राह्मणादिगणास्तदधिकारी कुलिक इति व्याख्यातम्।

सूचको राज्ञा परदोषान्वेषणपूर्वकं स्वस्मै तन्निवेदने नियुक्तः। भेदकृन्मित्रादि प्रीतिभङ्गकर्त्ता। श्रेण्यादिष्वित्यस्यायमर्थः। येषु श्रेण्यादिषु यस्यैकापि द्वेष्यतां गतु तामाप्तस्तदीयविवादे तच्छ्रेण्यादिनिविष्टाः सर्वे एव न साक्षिणस्तत्र हेतुर्द्वेष्टारः सर्वे एव त इति। तच्छ्रेण्यान्तर्गतैकद्वेष्यनुरोधकृतवैरनिर्य्यातनार्थमन्यथा वादित्वसम्भवात्। अतएव नारदः।

बालोऽज्ञानादसत्यात् स्त्रीपापाभ्यां स्याच्च कूटकृत्।
विब्रूयाद्बान्धवस्नेहाद्वैरनिर्य्यातनाद्धरिरिति।

कात्यायनः। तद्वृत्ति जीविनो ये च तत्सेवाहितकारिणः।

तद्बन्धु सुहृदो भृत्या आप्तास्ते तु न साक्षिणः।
मातृष्वसुः सुताश्चैव पितृष्वसृसुतास्तथा।
मातुलस्य सुताश्चैव सोदर्य्यसुतमातुलाः॥
एते सनाभयः प्रोक्ताः साक्ष्यन्तेषु न योजयेत्।
कुल्याः सम्बन्धिनश्चैव विवाह्यो भगिनीपतिः॥
पिता बन्धु पितृव्यश्च श्वशुरो गुरवस्तथा॥

तथा बृहस्पतिः। मातुःपिता पितृव्यश्च भार्य्यायाभ्रातृमातुलौ।

भ्राता सखा च जामाता सर्ववादेष्व साक्षिणः॥
परस्त्रीपानसक्तश्च कितवाः सर्वदूषकाः।
उन्मत्तार्त्ताः साहसिका नास्तिकाश्च न साक्षिण इति॥

अत्र मातृष्वस्रादिशब्दानां सम्बन्धिशब्दत्वादर्थिनोरन्यतरस्य एतादृशसम्बन्धिनो न साक्षिणः सम्बन्धिनि स्नेहादन्यत्र वैरसम्भवादिति ध्येयम्। शङ्खलिखितौ। शुल्कगुल्माधिकृतौ दूतो वेष्टितशिराः स्त्रियोगुरुकुलवासिनः परिव्राजकश्रमणप्रस्यनिर्ग्रन्थाः शङ्का व्यालग्राहिण इति अत्राऽसाक्षिण इति प्रकृतं

शुल्काधिकृतः शुल्कग्रहणस्थानाधिकारी गुल्मः स्वस्थाननिवेशितः पदातिसमूहस्तदधिकृतः वेष्टितशिराः उद्धतवेषो-मूर्द्ध्याध्यभिभूतो वा इतरे प्रसिद्धा व्याख्याततराश्च। अनेन प्रपञ्चेन लोभादिकमसाक्षित्वनिमित्तमेव व्यक्तीकृतम्।
यथाह मनुः। लोभान्मोहाद्भयात्क्रोधान्मैत्र्यात्कामात्तथैव च।

अज्ञानाद्बालभावाच्च साक्षी वितथ उच्यत इति॥

असाक्षित्वेनोक्तानां क्वचित्प्रतिप्रसवमाह नारदः।

असाक्षिणो ये निर्दिष्टा दासनैष्कृतिकादयः।
कार्य्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः॥
स्त्रियाप्यसम्भवे कार्य्यं बालेन स्थविरेण वा।
शिष्येण बन्धुना वापि दासेन भृतकेन वा॥

मनुरप्येवमेव द्वितीयं वचनं पठितवान्। इदञ्चाऽसत्यवादित्वनिश्चयाभावे साक्ष्यन्तरस्य तद्गुणविशिष्टस्यासम्भवे बोध्यम्। स्त्रीसंग्रहणादिषु योगीश्वरः।

सर्वः साक्षी संग्रहणे चौर्य्ये पारुष्य साहसे।

अत्र च मनुष्यमारणञ्चौर्य्यं परदाराभिमर्शनम्। पारुष्यमुभयञ्चेति साहसं स्याच्चतुर्विधमिति वचनात् स्त्रीसंग्रहदीनां सत्यपि साहसत्वे बलानवष्टम्भेन क्रियमाणानान्तेषामसाहसत्वात् तल्लङ्ग्रहार्थन्ततः पृथगुपादानम्। उशनाः।

दासोऽन्धोवधिरः कुष्ठी स्त्री बालः स्थविरादयः।
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः॥

अनभिसम्बन्धा विवादगोचरीभूतार्थाऽसम्बन्धिनः। अपक्षपातिन इति मदनरत्ने।

मनुनारदौ। साहसेषु च सर्वेषु स्तेयसङ्ग्रहणेषु च।

वाग्दण्डयोश्च पारुष्ये न परीक्ष्येत साक्षिणः।

मनुः। अनुभावीति यः कश्चित्कुर्य्यात्साक्ष्यं विवादिनाम्।

अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये॥

अनुभावी तदर्थानुभवशीलः। यत्तु।

ऋणादिषु परीक्ष्येत साक्षिणः स्थिरकर्मसु।

साहसात्ययिके चापि परीक्षा कुत्रचित्स्मृतेति।

परीक्षाभिधानन्तस्य स्पष्टाऽसत्यवादिदोषविषयमत एव कुत्रचिदित्युक्तम्। अस्मिंश्च प्रघट्टके प्रकटदोषानभिषङ्गे क्वचित्कविसम्वादादिदोषपुरस्कारेण सहसादिसाक्षिता न कथा करणीयेत्यत्र तात्पर्य्यम्। अतएव विज्ञान योगिनोक्तम्। दोषादसाक्षिणो भेदादसाक्षिणः स्वयमुक्तिश्चात्रापि न साक्षिणो भवति सत्याभावादिति हेतोरनपगमादिति। अपराकोऽपि सर्वो न तु गुणवानेवेत्यर्थः। दोषवां स्तत्रापि परिहरणीय एव। वक्तृदोषाणां वचनप्रामाण्यहेतुत्वादित्याह। तस्यापि सर्वदोषाभावेन तात्पर्य्यं प्रतिप्रसवानुपपत्तेः। यत्तु केनचिदुक्तं साक्षिगुणदोषप्रतिप्रसवा यथाश्रुता एव ग्राह्या अन्यथा तत्र तत्र तत्तद्विशेषणोपादानमनर्थकमुपलक्षणं वा प्रसज्येतेति। तच्चाश्लिष्टम्। न्यायमूलकत्वात्तेषान्तदविरोधेनैव नेयत्वात्। अतएव न्यूनाधिकविशेषणोपादानमविरुद्धम्। अदृष्टार्थत्वे तद्विरोधो दुष्परिहरः स्यात्। एवमन्यतरेण साक्षिपूपन्यस्तेषु सत्सु तद्दोषेष्वपरस्तासुपन्यस्तोऽसदुद्भावने दण्ड इत्याह।

हृहस्पतिः । साक्षिणोऽर्थी समुद्दिष्टान् सत्सु दोषेषु दूषयेत् ।

अदुष्टान् दूषयन्वादी तत्समं दण्डमर्हति ॥

तत्समं विवादविषयसममिति बहवस्तूर्थी विषयविवादेष्व-व्यापकमिति तत्समं कूटसाक्षिदण्डसममिति व्याख्येयम् । साक्षिदूषणेऽन्यतरेणोद्भाविते प्रत्यक्षेषु बाल्यादिदूषणेषु तेनैव निर्णयः । अयोग्येषु लोकप्रसिध्यादिना न साक्ष्यन्तरेण अन-वस्थापत्तेः । तथा च व्यासः ।

सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।

साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात् ॥

अन्यैस्तु साक्षिभिः साध्ये दृष्टे पूर्वमसाक्षिणाम् ।

ह्यनवस्था भवेद्दोषस्तेषामप्यन्यसम्भवादिति ॥

असाध्यं लोकादि सिद्धत्वात्साधनार्हं यत इति हेतु-गर्भमिति । दोषवर्जनादनवस्थादोषाभावादित्यर्थः । यद्यपि लोकसभ्यप्रसिद्धिरपि साक्षिप्रसिद्धिरेव पर्य्यवस्यति । तथापि तत्र साक्षित्वोद्भावनानपेक्षत्वान्नानवस्था । अतएवाति गूढ-वादिमात्र विदितदूषणं साधनमन्यतरेणालौकिकप्रमाणेन क्रियमाणं न दुष्यतीत्यभिप्रायः । न च साक्षिदूषणविभावनं व्यवहारान्तरत्वादयुक्तमिति वाच्यम् । प्रकृतोपयोगित्वेनार्था-न्तरत्वानापत्तेः । कात्यायनः स्फुटमेतदेवाह ।

प्रत्यर्थिनार्थिनावापि साक्षिदूषणसाधने ।

प्रस्तुतार्थोपयोगित्वाद्व्यवहारान्तरं नचेति ॥

अविद्यमानदोषोद्भावनेऽर्थिप्रत्यर्थिनो वैकल्पिकौ हानि दण्डौ अन्यतराज्ञाता राज्ञा सभ्यैरेव वा ज्ञाताः साक्षिदोषा-स्तदा तैरेव साक्षित्वेनोपादेया इति । स एवाह ।

नातथ्येन प्रमाणन्तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात्साध्यार्थाद्वापि हीयते ॥
प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनादिति ॥

ये गूढाः प्रत्यर्थिना नज्ञातास्ते काले साक्षिवादात्पूर्वकाले कार्य्य इति शेषः । शास्त्रप्रदर्शनात् । दुष्टानां शास्त्रे साक्षित्वेनानुपादेयत्वदर्शनात् । छलं निरस्येति च छल निरासस्यावश्यकत्वादिति तात्पर्य्यार्थः । साक्षिभिरुक्ते शास्त्रे दोषोद्भावनन्तेषां न कार्य्यमित्याह ।

बृहस्पतिः । लेख्यदोषास्तु ये केचित्साक्षिणाञ्चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तान्नदूषयेत् ॥

न दूषयेद्दोषत्वेन नोपादद्यात्सभ्यो राजेत्यर्थात् । पश्चादुक्तौ दण्डमप्याह ।

कात्यायनः । उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान् ।
न च तत्कारणं ब्रूयात् प्राप्नुयात्पूर्वसाहसम् ॥

तच्च दण्डनिरूपणप्रस्तावे विवेचयिष्यामः । अन्यतरोद्भाविता दोषाः स्वीयास्तेरेव यः साध्यद्भावयिता तत्राह विष्णुः ।
लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।
तस्य कार्य्यं न सिध्येत यावत्तन्न विशोधयेत् ॥

पत्रेऽभिलिखितान् सर्वान् दोषान् प्रतीते साक्षिणम् उत्तरं परिहारं वाच्याः । वाच्नीया इति पूर्ववचनार्थः । यस्य साक्षिणो लेख्यं वा यदुद्भावितं परेण दूषितं स यावत्तन्नविशोधयेत्तद्दोषरहितन्नकुर्य्यात्तावत्तत्र प्रमाणाभासत्वसाक्षीवनपातेन प्रमाणेन तस्य तत्कार्य्यं न सिद्ध्येदिति द्वितीयवचनार्थः ।

इदञ्च सभाक्षोभादिना साक्षिणां स्वदोषपरिहारासमतायां द्रष्टव्यम् । तदिति लेख्यञ्च साक्षिणश्चेति द्वन्द्वे नपुंसकमनपुंसकेनैकवच्च तस्यान्यतरस्यामिति नपुंसकैकवद्भावौ । अन्यतरः साक्षिदोषमुद्भाव्य यदि तं भावयितु न शक्नोति तदा स दण्ड्यः। साधिते तु दोषे त्याज्याः । अथापि प्रमाणान्तरमनुपन्यस्यन् पराजीयत इत्येतदाह व्यासः ।

असाधयन्दमन्दाप्यो दूषणं साक्षिणं स्फुटम् ।
भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥
जितः सविनयन्दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षित्वे व्यवस्थित इति ॥

विनयं दण्डं स वादी । मदनरत्ने तु सविनयं विनयः शिक्षा तत्सहितं यथा तथा दाप्यो विवादविषयीभूतधनमिति शेष इति व्याख्यातं तज्जित इत्यनेनैव साधितधनदानस्यार्थसिद्धत्वेन निरर्थकाध्याहारदोषापत्तेः क्लिष्टत्वाच्चोपेक्ष्यम् । यस्तु विवादविषयीभूतार्थानभिज्ञान् विपरीताभिज्ञान्वा भयलोभादिप्रदर्शनेन स्वानुकूलं वादयति । तस्य दण्डमाह । कात्यायनः। येन कार्य्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।

गृहीत्वा तस्य सर्वस्वं कुर्य्यान्निर्विषयन्तत इति ॥

सर्वस्वमिति गुरुलघुपराधानुसारेण दण्डतारतम्योपलक्षणम् । निर्विषयं विवादविषयीभूतार्थशून्यम् । ततः कूटसाक्ष्यकरणात् । साक्षि दोषानुद्भावनेऽपि सभ्येन सभापतिनैवैते परीक्ष्योपादेयाः । तथाच कात्यायनः ।

उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् ।

बृहस्पतिरपि । उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गि-

तादिभिरिति। स्वरवर्णेङ्गितानि मनुयोगीश्वरोक्तानि हीन-निरूपणविरुद्धानि। नारदोऽप्याह।

यस्मात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते।
स्थानात् स्थानान्तरं गच्छेदेकैकञ्चानुधावति॥
कासत्यकस्माच्च भृशमभीक्ष्णन्निश्वसत्यपि।
विलिखत्यवनीं पद्भ्यां बाहू वासश्च धूनयेत्॥
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा।
शोषमागच्छतश्चोष्ठावूर्द्ध्वं तिर्य्यङ्निरीक्षते॥
त्वरमाण इवाबद्धमपृष्टो बहु भाषते।
कूटसाक्षी स विज्ञेयस्तं पापं विनयेद्भृशम्॥

अबद्धमसम्बद्धम्। विनयेच्छिक्षयेद्यथा कौटसाक्ष्याद्बिभेतीत्यर्थः। न तु दण्डयेदित्यर्थः। प्राकृत वैदिकविकारविवेकस्य दुःखशक्यत्वात्। सम्भावनामात्रेण च दण्डनस्यान्याय्यत्वादिति उक्तम्। मदनरत्ने त्वाविद्धमिति पठित्वा कुलमिति व्याख्यातम्। शङ्खलिखतावपि मन्त्रिभिः शास्त्रसामर्थ्यादुष्टलक्षणं ग्राह्यन्तिर्यक्प्रेक्षते समन्तादेवावलोकयति। अकस्मान्मूत्रं पुरीषं विसृजति देशाद्देशङ्गच्छति पाणिना पाणिं पीडयति नखान्निकृन्तति मुखमस्य विवर्णतामेति प्रस्विद्यति चास्य ललाटन्न चक्षुर्न्नच वाचं प्रतिपूजयत्यकस्माद्दाति प्रशंसति पुनः पुनरन्यमपवदति बहिर्निरीक्षते शस्त्रं परामृशति शिरः प्रकम्पयत्योष्ठौ निर्भुजति सृक्कणी परिलेढि ग्रथति विस्मितः कर्म्मस्वमहत्स्वपि भ्रुवौ संहरति तूष्णीं ध्यायति पूर्वोत्तरविरुद्धं व्याहरति एव मादिदुष्टलक्षणं क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलादिति। अकस्मादिति तूष्णीमिति

च यथा योगमनेकत्र सम्बन्धनीयम्। अन्यत्र प्रकृतिशीला-दिति। प्रकृत्या स्वभावान्वशीलन्तिर्यक् प्रेक्षणादिधर्मो यस्य स तथोक्तस्ततोऽन्यत्रैतानि दुष्टकृल्लक्षणानि एते अवान्तरवैल-क्षण्यस्य दुर्ज्ञेयत्वादित्यवधानेन परीक्ष्य वस्तु तत्त्वानुसरणङ्कर-णीयमिति सूचितम्। एवं गुणवत्तया दोषाभाववत्तया च परीक्षितान् साक्षिणो विवादास्पदीभूतमर्थं पृच्छेदित्याह। कात्यायनः। देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृते द्विजान्।

उदङ्मुखान् प्राङ्मुखान् वा पूर्वाह्ले वा शुचिः शुचीन्॥
सभान्तः साक्षिणः प्राप्तानर्थि प्रत्यर्थिसन्निधौ।
प्राड्विवाके नियुञ्जीत विधिनानेन सान्त्वयन्॥
यद्द्वयोरनयोर्वेत्थं कार्य्येऽस्मिंश्चेष्टितं मिथः।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता॥

अर्थि प्रत्यर्थि सन्निधिवद्ब्रह्माद्विगोचरविवादेषु केषु चित्तत् सान्निध्यमपेक्षितव्यमित्यप्याह। सएव।

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ।
प्रत्यक्षं वादयेत्साक्ष्यं न परोक्षे कथञ्चन॥
अर्थस्योपरि कर्त्तव्यन्तयोरपि विना क्वचित्।
चतुष्पादेषु धर्म्मोऽयं द्विपादस्थावरेषु च॥
तौल्यङ्गणिम मानार्हमभावेऽपि हि वादयेत्।
क्रियाकारकेषु सर्वेषु साक्षित्वं न त्वतोऽन्यथा॥

तयोर्वादिनोर्विनापीति सम्बन्धमात्र विवक्षया षष्ठी अपि शब्दात् कैमुतिकन्यायेन तदुभयसन्निधानेन तात्पर्य्यम्। किन्तु साध्यार्थसान्निध्यावश्यकतायाम्। यद्वोभयासन्निधिप्रत्यर्थ्यसा-न्निध्यानुसात्यर्थः। तेन कथञ्चित्प्रत्यर्थ्यं सन्निधानेऽपि साक्षि

प्रश्ने न दोषः। क्वचिदित्यस्यैव विवरणं चतुष्पादेष्वित्यादि। तौल्यन्तोलनार्हं सुवर्णादिं। गणिमङ्गणनार्हं वराटकादि-मेयं मानार्हं गोधूमादि अभावेऽपि साध्यार्थ्यसान्निध्यभावेऽपि क्रियाकारक व्यवहारास्तेषु बधरूप विवादपदे साक्षिणः शिवलिङ्गप्रतिमादिसन्निधाने प्रष्टव्या इत्यथाह। स एव।

बधे च प्राणिनां साक्ष्यं वादयेच्छव सन्निधौ।
तदभावे तु चिह्नस्य नान्यथैव प्रवादयेत्॥

चिह्नस्य बधचिह्नस्याभियोज्यसम्बंधिनोऽभावे तत्साक्ष्यं वादयेत्। अन्यथा तत्सद्भावे नैव वादयेत्साक्ष्यं बधचिह्नेनैव निर्णय सम्भवादित्युत्तरार्थानुवादः॥ विधेयस्तु पूर्वार्द्धार्थः। स तुष्ट एव उपस्थापिताः साक्षिणोऽविलम्बेन प्रष्टव्या इत्यप्युक्तन्तेनैव।

न कालहरणं कार्य्यं राज्ञा साक्षिप्रभाषणे।
महान्दोषो भवेत्कालाद्धर्मव्यावृत्ति लक्षणः॥

ते च साक्षिणः शपथैः पूर्वकं प्रष्टव्या इत्याह नारदः।

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम्।
समस्तान् विदिताचारान् विज्ञातार्थान् पृथक् पृथगिति॥

तत्र साक्ष्यं क्वचिद्विषये मिलितैर्वक्तव्यं क्वचित्प्रत्येकम् इत्याह। वशिष्ठः।

समवेतैस्तु यद्दृष्टं वक्तव्यन्तु तथैव तत्।
विभिन्नैरेव यत्कार्य्यं वक्तव्यं तत्पृथक् पृथक्॥
भिन्नकाले तु यत्कार्य्यं विज्ञातं यत्र साक्षिभिः।
एकैकं वादयेत् तत्र विधिरेषः प्रकीर्त्तितः॥

यत्कार्य्यं इत्यनुषङ्गः। यत्तु गौतमेनोक्तम्। नासमवेताः

ष्टाः प्रब्रूयुरिति तदपि वशिष्ठोक्तिसमवेतसाक्ष्यविषयम्। हर-दत्तस्तु नासमवेताः ष्टाः प्रब्रूयुरिति पाठन्धृत्वा समवेता अष्टाश्च न ब्रूयुरिति व्याचख्यौ पूर्वपाठस्तु मिताक्षरापाठधृते सम्यगिति। धर्म्मोपदेशकैरधर्म्मगर्हा वचनैस्तेऽनृतभाषणाद्-भीषणीया इत्याह। नारदः।

पौराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्त्तनैः।
अनृतस्यापवादैश्च भृशमुत्त्रासयेदपि॥

शपथे च विशेषो दर्शितो मनुना।

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।
गोवीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैरिति॥

अन्यथा ब्रुवतस्तेन सत्यं नङ्क्ष्यतीति ब्राह्मणे शपथो देयः। क्षत्रिये वाहनायुधानि ते विफलतामेष्यन्तीति। वैश्ये गोवीज-काञ्चनानि त्वापचयमुपयास्यन्तीति। शूद्रेऽन्यथा वादिनस्तव सर्वाणि पातकानि भविष्यन्तीत्यर्थः। ब्राह्मणविशेषस्याप-वादं स एवाह।

गोरक्षकान्वाणिज्यकां स्तथा कारुकुशीलवान्।
प्रेष्यान्वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्॥

इति विप्रग्रहणं क्षत्रियवैश्ययोरपि तद्वृत्तिजीविनामुपा-धेस्तुल्यत्वात्। विशेषान्तरानुक्तेश्च साक्षिणां श्रावणं विधाय श्रावणीयमाह याज्ञवल्क्यः।

साक्षिणः श्रावयेद्वादी प्रतिवादी समीपगान्।
ये पातककृतांल्लोका महापातकिनां तथा॥
अग्निदानाञ्च ये लोका येच स्त्री बालघातिनाम्।
स तान् सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत्॥

सुकृतं यत्त्वयाकिञ्चिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वन्तस्य जानीहि यम्पराजयसेत्वृषा॥

शूद्रं सर्वैस्तु पातकैरिति मानवसंवादात् पातकश्रावणं शूद्रविषयकमिति मिताक्षराकारपरार्कौ। शपथदान श्रवण विधिभेदान्मानवे च शपथदान एव तन्नियमादस्य सर्वविषयतान्तु युक्तामुन्नयामः। मनुरपि। तत्र प्रसिद्धिवाकोऽनुयुञ्जीतेत्यादिसार्द्धश्लोकः कात्यानीयः पूर्वलिखित एव।

सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान्।
इह चानुत्तमां कीर्त्तिंवागेषा ब्रह्मपूजिता॥
साक्ष्ये ऽनृतं वदन् साक्षी पाशैर्बध्येत वारुणैः।
विवशः शतमाजातीस्तस्मात् साक्ष्ये वदेदृतम्॥
सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते।
तस्मात् सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः॥
आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः।
मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम्॥
मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः।
तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः॥
द्यौर्भूमिरापोहृदयं चन्द्रार्काग्नियमानिलाः।
रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम्॥

अजातीरजननानि जन्मानीतियावत्।

वृहतिस्मृतिरपि। आजन्मनश्चामरणात् सुकृतं यदुपार्जितम्।
तत् सर्वं नाशमायाति अनृतस्य तु शंसनात्॥

वशिष्ठोऽपि। अथचेदनृतं ब्रूयात् सर्वतो मिथ्यलक्षणम्॥
मृतो नरकमायाति तिर्य्यग्गच्छत्य संशयम्।

शूकरो दशवर्षाणि दशवर्षाणि गर्दभः ॥
श्वा चैव दशवर्षाणि भासोवानिजविंशतिम्।
कृमिकीटपतङ्गेषु चत्वारिंशत्तथैव च ॥
मृगस्तु दशवर्षाणि जायते मानव स्तत:।
मानुष्यन्तु यदाप्नोति मूकोऽन्धस्तु भवेद्धि सः ॥
पामरो जायते पश्चात् सपरित्यक्तबान्धवः।
पङ्‌ग्वन्धबधिरो मूकः कुष्ठी नग्नः पिपासितः ॥
वुभुक्षित:शत्रुगृहेभिक्षते भार्यया सह।
ज्ञात्वैतानन्टते दोषान् ज्ञात्वासत्ये च सद्गुणान् ॥
श्रेयस्करमिहान्यत्र सत्यं साक्षी वदेदतः।
बौधायनः। त्रीनेवच पितॄन् हन्ति त्रीनेव प्रपितामहान् ॥
सप्तजातानजातांश्च साक्षीसाक्ष्यं मृषा ब्रुवन्।
मनुनारदौ। यावतो बान्धवानस्मिन् हन्ति साक्ष्येऽनृतं वदन्।
तावतः संख्यया तस्मिन् शृणु सौम्यानुपूर्वशः।
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ॥
शतमश्वानृते हन्ति सहस्रं पुरुषानृते।
हन्ति जातान जातांश्च हिरण्यार्थेऽनृतं वदन् ॥
सर्वम्भूम्यनृतेहन्ति माश्मभूम्यनृतंवदेः।
अप्सु भूमिवदित्याहुः स्त्रीणां भोगेऽथ मैथुने ॥
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च।
पशुवत्क्षौद्रघृतयोर्यानेषु च तथा स्मृतम् ॥
गोवद्रजतवस्त्रेषु धान्ये ब्रह्मणि चैव हि ॥
एतान्दोषा नवेक्ष्य त्वं सर्वानन्टतभाषणे।
यथा श्रुतं यथा दृष्टं सत्यमेवाञ्जसा वदेत् ॥

अज्ञेषु रत्नेषु मुक्ताफलादिषु। ब्रह्मणि वेदे। अत्र हरदत्तेन क्षुद्रपश्वनृते दश हन्तिगोऽश्वपुरुष भूमिषु दशगुणोत्तरानिति गौतमवचनव्याख्याने मनुवचः। पञ्च पश्वनृते हन्ति इत्याद्युपन्यस्य पञ्चसंख्याहननदोषोत्पन्न शूद्रपशुविषय इति गौतमवचोविरोधम्परिहृत्य यद्विषयमनृत साक्ष्यं दत्तं तत्तत्प्राणिनां दशादिसंख्यकानां हनने यो दोषस्तमाप्नोति। भूम्यनृते तु यदीया भूमिस्तज्जातीय लक्षहनन दोषः। सर्वप्राणिहनन दोषो वेति व्याख्यातं तत्तु यावतो बान्धवानिति मानवोपक्रमानां लोचननिबन्धनमित्यपेक्ष्यम्। तस्मात् साक्षिसम्बन्धिपित्रादिगतसंख्यापरतयैव व्याख्यानं सूचितम्। गौतमीयमपि मानवसम्वादेनैव व्याख्येयमेकमूलकल्पनालाघवाय। त्रीनेव च पितॄन् हन्तीत्यादि वौधायनादिवचनसंवादोऽप्येवम्। भूयस्तु जानन्नपि दौरात्म्यात् साक्षित्वमेव नाङ्गीकुरुते तम्प्रत्याह। योगीश्वरः। न ददातीह यः साक्ष्यं जानन्नपि नराधमः।

सकूटसाक्षिणाम्पापै स्तुल्यो दण्डेन चैव हि॥

दृष्टाः साक्षिणो येन विधिना ब्रूयुस्तमाह,

बृहस्पतिः। विहायोपानदुष्णीषं दक्षिणम्पाणिमुद्धरन्॥

हिरण्यगोसकृद्दर्भान् समादाय नृतम्वदेत्।

साक्ष्यभिहितस्य वचनस्य परीक्षाविधानमप्याह॥

बृहस्पतिः। देशकालवयोजाति संज्ञाद्रव्यप्रमाणतः।

अन्यूनश्चैन्निगदितं सिध्यं साध्यं विनिर्दिशेत्॥

तत्र नारदः। निर्दिष्टेष्वर्थ जातेषु साक्षी चेत् साक्ष्यमागतः।

न ब्रूयादक्षरसमं न तन्निगदितम्भवेत्॥

देशकालवयोद्रव्य प्रमाणकृतिजातिषु।

यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि कुत्सितम् ॥
ऊनमप्यधिकं वापि प्रब्रूयुर्यत्र साक्षिणः।
तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृत इति।

नचाधिकाभिधानमसम्भविवादिनः प्रतिवादिनो वा श्रुतेऽदृष्टे वानुभवमूलकसंस्काराभावेनास्मृत तत्प्रतिपादनासम्भवादिति वाच्यम्। करणापाटवादिना श्रुतिदृष्ट्योरुभयोरपि सम्भवात्। अतएव भ्रान्तिमूलत्वेन प्रामाण्यात्। तदुक्तमप्यनुक्तमित्युक्तम्। नच तथाप्यूनाभिधाने कुत उक्तिः साक्षि वचनात्तावतः सिद्धावेकदेशविभावितन्यायेनान्यांशस्यापि सिद्धेर्जयफलकतया न्यूनतोक्तेरदुष्टत्वादिति वाच्यम्। प्रतिज्ञात सकलसाध्यसाधकतयोद्दिष्टेषु न्यूनमभिहित वन्न्यूनतन्न्यायावसर इति प्रागावेदितत्वात्। साक्ष्यमन्वित्यश्रावणविधिना श्रावितश्चेन्नाभिधत्ते। तदा किं कर्त्तव्यमित्यत आह। प्रोक्षिते याज्ञवल्क्य आह।

अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम्।
राज्ञा सर्वप्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि।

सर्वं सवृद्धिकं सदशबन्धकं राजदेयदशमांशसहितम्।
राज्ञे दशमांशदानमृणादान प्रस्तावे वक्ष्यते॥

षट्चत्वारिंशकेऽहनि इत्यभिधानात्ततोऽर्वाग्नदाप्यः। तदपि व्याध्याद्युपद्रवराहित्ये।

यदाह मनुः। त्रिपक्षादब्रुवन् साक्ष्य मृणादिषु न रोगदः।
तदृणमाप्नुयात् सर्वं दशबन्धश्च सर्वत इति॥

राजदैवोपद्रवविरहस्याप्युपलक्षणम्। साक्षिवचनाज्जयपराजय व्यवस्थां स्पष्टमाह। योगीश्वरः।

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजय इति ॥

उत्तरार्धापवादमुखेन कूटसाक्षिण आह स एव ।

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिण इति ।

अन्यथा अन्यतरप्रतिज्ञातार्थविपरीतम् । यद्यप्यर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः साक्षिगुणलक्षितसाक्षिवचनानन्तरप्रमाणान्तरान्वेषणमेवा नर्हमनवस्थाप्रसङ्गात् । निर्णिक्ते व्यवहारेत्यादि प्रागुक्तनारदवचनविरोधाच्च । तथापि वादिप्रतिवाद्यन्यतरस्य स्वोक्तार्थान्तरालसाक्षितया तद्विसम्वादिवचनसाक्षिषु यदि दोषाध्यवसायस्तदा प्रमाणान्तरान्वेषणं वारयितु मशक्यमतएव तदा दिव्येनान्यतरेण स्वसाध्ये साधिते साक्षिणः कूटत्वेन दण्ड्या इति वक्ष्यते । अर्थविसम्वादिनि चक्षुरादौ स्पष्टदोषादर्शनेऽपि यथा तज्जनितज्ञानाप्रामाण्यमेव दोषकल्पकं तथाऽत्रापि । यथाहुः । यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्यय इति । अतएव, साक्षिपरीक्षातिरेकेण तद्वाक्यपरीक्षोद्देशोऽपि घटते ।

साक्षिभिर्भाषितम्वाक्यं सह सभ्यैः परीक्षयेदिति ।

कात्यायनोऽप्याह ।

यदा शुद्धा क्रिया न्यायात्तदा तद्वाक्यशोधनम् ।
शुद्धाच्च वाक्याद्यः शुद्धः शुद्धोऽर्थ इति संस्थितिरिति ॥

क्रियासाक्षिरूपान् यत्रार्थिसम्बन्धिनो नाम्ना इत्याद्युक्तसाक्षिदोषराहित्यलक्षणाद् ग्राह्यिणः पुत्रिण इत्याद्युक्तसाक्षिगुणसाहित्यलक्षणाच्च न्याया द्यदा शुद्धा परीक्षिता भवति तदा तद्वा-

क्यस्य साक्षिवाक्यस्य शोधनङ्कार्यमिति शेषः। वाक्यशुद्धिश्चार्था विसम्वाद एव। सत्येन शुद्ध्यते वाक्यमिति स्मरणात्। एवं क्रियावाक्याभ्यामुभाभ्यां शुद्धाभ्यां सकाशाद्यः शुद्धः साधुरवगतो ऽर्थः स शुद्धस्तात्त्विक इति स्थिति र्मर्य्यादा इति कात्यायनवचनार्थः। कारणदोषबाधकप्रत्ययप्रत्ययार्थे तथाभूत एवार्थ इति तात्पर्य्यम्। नारदवचनन्तु जयावधारणोत्तरन्नप्रमाणान्तरपरिग्रह इत्येतत्परं निर्णीतपदोपादानात्। ततः प्रागुक्तप्रमाणान्तराऽन्वेषणेन क्षतिरिति तत्तद्विरोधः। एवञ्च सति दत्तनिगदेभ्यः साक्षिभ्योऽन्ये गुणवत्तमा द्विगुणा वा पूर्वनिर्दिष्टा स्तदभावे पूर्वा निर्दिष्टा अपि साक्षिण एव वादिना वादनीया तद्दिव्यमप्यवलम्बनीयम्। सम्भवे साक्षिणां प्राज्ञो दैवकीं वर्जयेत् क्रियामिति वचनात् यदा तु तदसम्भवस्तदादिव्यमप्यवलम्बनीयं सम्भव इति वचनात्। यदि दिव्येऽपि वादिनो ऽपरितोष स्तदाप्रमाणान्तरस्या वाचनिकत्वात्सभ्यैः समापनीयो व्यवहारः। यदि तु वाद्युद्भावितसाक्षिभि स्तदनुगुणेऽभिहिते प्रत्यर्थिन एव स्व प्रत्ययविसम्वादेन तेषु दोषाध्यवसायस्तदा प्रत्यर्थिनः क्रियावसराभावाद्दैविकराजिकयो र्महाव्यसनयोः सप्ताहाभ्यन्तरोपनिपातेन ते परीक्षणीयाः। यथाह मनुः।

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः।
रोगाग्निर्ज्ञातिमरणमृणन्दाप्यो दमञ्च स इति॥

दमं कौटसाक्ष्ययुक्तन्दण्डम्। असति सप्ताहाभ्यन्तरव्यसनोपनिपाते प्रत्यर्थिना तावता सन्तोष्टव्यन्दिव्यं वा सत्यध्यवसायमवलम्बनीयमित्यर्थसिद्धम्। यत्तु। केचिदुक्तेऽपीत्यादि वचनमर्थि निर्दिष्टसाक्षिभिस्तदनुगुणेऽभिहितेऽपि प्रत्यर्थि-

निर्दिष्टयद्यन्ये ततो गुणोत्तमात्द्विगुणान्वान्यथा वाद्यन्ते तदा पूर्ववादिनः साक्षिणः कूटा इति व्याख्यातन्तदयुक्तम् । किमिदं मिथ्योत्तरविषयं कारणाद्युत्तरविषयं वा नाद्यः ।

तत्र प्रत्यर्थिनः क्रियोपन्यासानवसरात् ॥

अभाववादित्वात् । अभावस्य च भावज्ञान सापेक्षत्वाद् भावाभावयो र्भावस्यैव साध्यतौचित्यात् । अतएव मिथ्योक्तौ पूर्ववादिक्रियां निर्दिशेदित्युक्तम् । नचैकस्मिन्विवादे तु क्रिया स्याद्वादिनो र्द्वयोरिति वचनादेकस्मिन् व्यवहारेऽर्थि प्रत्यर्थिनो र्द्वयोः क्रियोपन्यासानुपपत्तिश्च । न द्वितीयः ततोऽर्थी लेखयेदित्यनेन पौनरुक्त्यात् । अर्थ्यत इत्यर्थः साध्यं सोऽस्यास्तीत्यर्थी साध्यवान् प्रतिज्ञातार्थसाधनं साध्यतयोपन्यस्तस्यार्थस्य साध्यं प्रमाणं लेखयेदिति प्राङ्न्यायकारणोत्तरयोश्च तयोरेव साध्यत्वात् । प्रत्यर्थ्ययोर्वार्थी सम्पन्न इति स एव क्रियान्निर्दिशेदिति । स्पष्टीकृतश्चायमर्थः स्मृत्यन्तरे ।

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्॥

इति उक्तोऽपीत्यादि सङ्गतेश्च । प्राङ्न्यायादौ स्थितस्यैव साक्षिण इत्यन्य इत्यसङ्गतमेव भवेत् । अन्ये तु यत्र द्वावपि भावप्रतिवादिनौ तावपि द्विविधौ केचित्पूर्वोत्तरकालभेदेन प्रतिजानाते एको वदति । इदं क्षेत्रं मया पूर्वं प्रतिग्रहादिना लब्ध्वा कियत्कालम्भुक्त्वा देशान्तरं सकुटुम्बेन गतम् । अन्यस्तु वदति सत्यमनेन पूर्वं प्रतिग्रहादिना लब्धम्परन्तु पश्चादित एव राज्ञा क्रीत्वा मह्यन्दत्तमन्येन वास्मात्प्रतिगृह्य क्रीत्वा वा मह्यन्दत्तमित्यादि । केचित्तु पूर्वोत्तरकालभेदं विनैव वदन्तः । तत्र

प्रथमौ साक्षिषूभयतः सत्सु साक्षिणः। पूर्वपक्षे ऽधरीभूते भवत्युत्तरवादिन इत्यस्य याज्ञवल्क्य-वचनस्य विषयौ। पूर्वकालं ममेदमिति यो वदति स पूर्ववादी तस्य साक्षिणः प्रमाणतयाङ्गीकार्य्याः। तदीयस्वत्वानपगमेऽन्यस्य प्रतिग्रहादिस्वत्वोपायासम्भवादिति तत्रोपपत्तिः। तस्य क्रयादिना स्वत्वापगमेऽन्येनोपन्यस्ते तत्पक्षो ऽधरीभूत इत्युत्तरकालं ममेदमिति यो वदति स उत्तरवादी। तस्य साक्षिणोऽङ्गीकार्य्याः पूर्ववादी स्वत्वस्य सापवादत्वादिति मिताक्षराकारोक्ततदर्थात्। ननु पूर्वं यो निवेदयति स पूर्ववादी प्राङ्न्यायकारणोत्तराभ्यां तत्पक्षे ऽधरीभूते उत्तरवादिनः प्रतिवादिन इति व्याख्येयम्। ततोऽर्थी लेखयेदित्यनेनैवास्यार्थस्योक्तया पौनरुक्त्यापत्तेः। नचैकस्मिन्नित्यादि निषेधाद्वादिद्वयस्य क्रियोपन्यासानुपपत्तेश्च। यत्त्वत्र परार्केणोक्तं सम्भवत्येव क्वचित्प्रत्यवस्कन्दनप्राङ्न्यायोत्तरवत्यपि न्याये वादिद्वयस्य क्रियोपन्यासावसरो यत्र प्रतिवादी सत्यन्त्वदीयमृणन्धारितवानहं किन्तु प्रत्यर्पितवान् किल्वत्तरयति। तत्र वादी चेत्प्रत्युत्तरयति सत्यन्त्वयार्पितन्तत्तु प्रयोगान्तरेणास्मिन् प्रयोग इति तदा तत्साधनाय द्वयोरपि साक्ष्युपन्याससम्भवः। परस्परोपमर्दकत्वेन युगपद्व्यवहारासम्भवस्यैकविवादे द्वयोः क्रियानिषेधवीजस्या-भावात्। एवं प्रतिवादिना प्राङ्न्यायोत्तरे दत्ते यदि वादी तदैव वदति न्यायान्तरे त्वया'हम्पराजितो नास्मिन्न्याय इति। तदापि पूर्वोक्तरीत्या द्वयोः साक्षी सम्भवः। तत्राग्र साक्षिसत्वे पूर्ववादिनः साक्षिणः प्रथमं स्वीकार्य्याः। प्राग्वादिनो निरुत्तरीभावेन पूर्वपक्षे ऽधरीभूते उत्तरवादिनः

प्रत्यवस्कन्दनप्राङ्न्यायसाधकसाक्षिण इति न विरोध इति तत्रापि वक्तव्यम्। तादृशविषयेऽपि प्रत्यवस्कन्दनप्राङ्न्याययो-रसाध्यतया प्राग्वादिन एवार्थिन इति विज्ञाते तस्य निरु-त्तरतायान्तु प्रत्यर्थिन एवाऽपि द्वेधापि ततोऽर्थी लेखयेदित्य-नेन गतार्थतास्य नापैति। मिताक्षराव्याख्याने तु द्वयोरपि भाववादितयार्थित्वसाम्ये ततोऽर्थी लेखयेदित्येतद्वचनाविषय-त्वात्कस्यात्र क्रियेत्यपेक्षायामेतद्वचनारम्भो घटते। तथाच मिताक्षराया मुक्तमेतस्य सर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यास इति। नारदेन तु स्पष्टमेवायमर्थ उक्तः।

मिथ्याक्रिया पूर्ववादे कारणे प्रतिवादिनि।
प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रियाभवेदिति॥

इत्युक्ता। द्वयोर्विवदतोर्युद्धे द्वयोः सत्सु च साक्षिषु।
पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिण इत्यभिधानात्॥

द्वितीयौ त्वपीत्यस्य वचनस्य विषयौ। पूर्वोत्तरवादिनोः समगुणेषु समसङ्ख्येषु च साक्षिषु सत्सु पूर्ववादिनः साक्षिणोऽभ्युपेयाः। यदात्तूत्तरवादिनो गुणवत्तमा द्विगुणा वा तद्विपरीतमभिद-धति तदा त एव पूर्ववादिनस्तु साक्षिणः कूटा विज्ञेया इति च तदर्थः। एवं वा नाभावस्य साध्यतापत्तिर्द्वयोरपि भाव वादि-त्वात्। चतुर्विधोत्तरविलक्षणत्वाच्च नात्र मिथ्याक्रिया पूर्व-वाद इत्याद्युक्ता क्रियाव्यवस्था यथा वा तएव तथा त्वेकस्य क्रियाद्वयप्रतिषेधो न प्रवर्त्तते तथा ममापि द्वयोः क्रिया प्रतिषेध इति वदन्ति तदप्यापातमनोहरम्। उक्तोऽपीत्यादि वचनादेतावतोऽर्थस्य च शब्दतः प्रकरणादर्थाद्वा ऽनवगमात्। साक्षिषूभयतः सत्स्वित्यस्य योगीश्वरवचनस्य द्वयोर्विवदतो-

रित्यादि नारदवचनस्य च पूर्वोपपादितरीत्या पूर्वापरकालालिङ्गितभाषावादिविषयत्वे तदनालिङ्गितविषयस्यास्य तदपवादत्वासम्भवाच्च । नचान्यमते परार्कादिमतवत्तयोरपि वादिविषयत्वमेवास्त्विति वाच्यम् । तस्योक्तदुषणत्वात् । ईदृश्यपि विषये वादिप्रतिवाद्यन्यतरस्योक्तौ मिथ्यात्वकारणान्यतरपर्य्यवसानावश्यम्भावे चतुर्विधोत्तरविलक्षणत्वासम्भवाच्च । द्वयोरपि भाववादितयार्थित्वसाम्यमेव केवलं व्यवहारान्तरवैलक्षण्यमस्य विधा चतुष्कभिन्नविधोत्तरासम्भवाच्च । ननु कात्यायनेनाप्युपन्यस्तसाक्षिभिस्तद्गुणगुणेऽभिहिते प्रत्यर्थी यदि ततो गुणवत्तमान् बहुधान्यथा वादयति तदा वादिनः साक्षिणः कूटा इति स्फुटमुक्तम् । यथाह ।

यत्र वै भावितं कार्य्यं साक्षिभिर्वादिनाम्भवेत् ।
प्रतिवादी यदा तत्र वादयेत्कार्य्यमन्यथा ।
बहुभिस्तत्कुलीनैर्वा कूटाः स्युः पूर्वसाक्षिण इति ॥

तत्कार्यमिति सम्बन्धः । बहुभिरिति पूर्वसाक्ष्यपेक्षया बहुत्वं कुलीनैरित्यनेन तदपेक्षया गुणवत्तरत्वं विवक्षितम् । अपरार्कमदनरत्नकराभ्यामेतत्स्मादादेव योगीश्वरवचोऽप्युक्तेऽपीत्यादिकमेतदर्थकतयैव व्याख्यातम् । न च कथमेकविवादे द्वयोः क्रियेति वाच्यम् । यतस्तुल्यवदुभयोर्मास्तु क्रियाप्राप्तियुगपद्व्यवहारासम्भवात् । यदा शास्त्रतः प्राप्तक्रिये नैव क्रियोपन्यासे कृते परेण तद्दूषणायैव क्रियान्तरमुपन्यस्य ते तदा को दोषः । अनवस्था प्रसङ्गेषु सङ्ख्यागुणसाम्ये न तु वैषम्ये तेन जयावधारणात्प्राग्यथैकस्य क्रियाद्वयमेवं द्वयोरपि क्रियाद्वयेन विरोध इत्यपरार्केण समाहितमिति उच्यते । अस्तु वचनात्

कात्यायनीयादेवमपि। योगीश्वरवचस्तु ततोऽर्थी लेखयेदिति तद्वचस्यैव सर्वस्यार्थस्य सह सम्भवादगतार्थविज्ञानयोगिव्याख्ययैव सङ्गच्छते। साधनपदेन साधनक्षममेवोच्यते। प्रतिवादिना तस्मिन्नाभासीकृते साधनत्वमेव तस्याप्यमतमिति तेनैव तदर्थलाभात्। अतएवाह। स एव तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथेति। कूटसाक्षिणो दण्डार्हाः प्रायश्चित्तार्हाश्च। तथाच याज्ञवल्क्यः।

पृथक् पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा।
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः॥

नारदः। अवीची नरके कल्पं वसेयुः कूटसाक्षिणः।

बृहस्पतिः। कूटसत्यः कूटसाक्षी ब्रह्महा च समाः स्मृताः॥

मनुस्तु उक्त्वा चैवानृते साक्ष्ये कृत्वा च स्त्रीसुहृद्वधमित्यादिना कूटसाक्षिणां ब्रह्महत्याप्रायश्चित्तमाह। तत्तत्रैव विवेचयिष्यामः। दण्डस्तत्र विविच्यते। विवादात्तत्पराजयनिमित्तदण्डात्। न तु विवादास्पदीभूता। अवधनव्यवहारेष्वव्याप्तेः। कूटः कृत्स्नो लोभभयादिप्रदर्शनेन साक्षिणः कूटात्करोति न तु सुवर्णादिकूटकृदत्र गृह्यते। अप्रकृतत्वात् विवास्यो राष्ट्रात्। एतच्च लोभादिकारणाविशेषाज्ञाने ऽनभ्यासेऽवबोध्यम्। लोभादौ ज्ञातेऽभ्यासे तु मनूक्तम्।

लोभात्सहस्रन्दण्ड्यः स्यात् मोहात्पूर्वन्तु साहसम्।
भयाद्वै मध्यमो दण्डो मैत्र्यात्पूर्वं चतुर्गुणम्॥
कामाद्दशगुणम्पूर्वं क्रोधात्तु त्रिगुणम्परम्।
अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेवत्विति॥

तत्र मोहो विपर्ययज्ञानं अज्ञानमस्फुटज्ञानम्। तात्का-

खिको भ्रम इति कल्पतरुः। बालिश्यं ज्ञानानुत्पाद इति तेषां भेदः। स्फुटमन्यत्। पौलस्त्यनिबन्धेषु रत्नाकरादिषु बालभाव बालिश्यपदार्थत्वेन यौवनोन्मेष प्राप्तो मद इति व्याख्यातम्। तद्शब्दार्थत्वात् सन्दर्भविरोधाच्चोपेक्ष्यम्। सहस्रादिसङ्ख्याश्च तान्त्रिकाः पणव्यवहारविषये तथैव परिभाषणात् इति मिताक्षराकारः। आहापरार्कः। नेयं व्यवस्था युक्ता लोभादिनिमित्तकमेव हि कौटसाक्ष्यमुपन्यस्तं मनुना नच सम्भवत्यन्यत्र निमित्तम्।

यथाह सः। लोभान्मोहाद्भयान्मैत्र्यात् कामात्क्रोधात्तथैव च।

अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते॥

अज्ञानं किञ्चिज्ज्ञानम्। बालभावो अपरिणतत्वम्। तस्माद्योगीश्वरोक्तो दण्डः स्वल्पापराधेऽनभ्यासे च ज्ञेयः। गुर्वपराधे अभ्यासे च मनूक्त इति न्याय्या व्यवस्थेति। तत्रेदं वाच्यम्। लोभादौ सहस्रादिदण्डस्य मानवस्य विवादपराजयहेतुक द्विगुणदण्डाद्याज्ञवल्कीयोऽत्राधिक्य नियमो येन गुर्वपराधविषयताभ्यासविषयता वा कल्प्येत क्वचिद्वैपरीत्यस्यापि सम्भवात्। नच कौटसाक्ष्ये लोभाद्यतिरिक्त कारणासम्भवात् मनुनापि तावतामेव परिगणनाच्च न कारणभेदे कृत व्यवस्था युक्तेति वाच्यम्। वस्तुतो हेत्वन्तरासम्भवे तु हेतु विशेषपरिज्ञानतदज्ञानयोः सम्भवात् तत्कृतव्यवस्थायामदोषात्। अतएव मिताक्षरायां लोभादिति विशेषज्ञानाज्ञाने एव व्यवस्थापकत्वेनोक्ते न तु लोभादितद्भिन्नहेतु—सत्वासत्वे या तु मिताक्षराकृताभ्यासानभ्यासकृता व्यवस्थोक्ता सा क्वचित् त-

थापि सम्भवतीत्याशयेन। ज्ञानाज्ञानकृतैव तु तात्त्विकी अत-एव मदनरत्नकृतापि सैवादृता। तथा मनुरेव।

कौटसाक्ष्यन्तु कुर्वाणां स्त्रीन् वर्णान् धार्म्मिको नृपः।
प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्॥

ब्राह्मणभिन्नांस्त्रीन् क्षत्रियादीन् प्रागुक्तदण्डेन दमयित्वा प्रवासयेन्मारयेत्। प्रपूर्वस्य वसतेरर्थशास्त्रे मारणे प्रयोगात्॥ प्रवासनमप्यपराधानुरोधे नोष्ठच्छेदजिह्वाच्छेदप्राणवियोजनरूपं वेदितव्यम्। ब्राह्मणं विवासयेत् विवासनमपि राष्ट्रान्निष्काशनम्। विगतवासा विवासास्तं करोतीति व्युत्पत्या नग्नीकरणम्। वसत्यस्मिन्वासोगृहं तद्वियुक्तं करोतीति व्युत्पत्या गृहभङ्गकरणं वा कौटसाक्ष्यविषयानुसारेण गुणागुणद्रव्यानुबन्धानुसारेण चार्थदण्डसहितं यथायथं विज्ञेयम्। दण्डयित्वेत्यंशस्याप्यनुसङ्गात्। एतच्चाभ्यासविषयम्। कुर्वाणानिति वर्त्तमाननिर्देशात्। न च वर्त्तमाननिर्देशादतीतादि व्यावृत्तिमात्रं व्यवसीयते न त्वभ्यास इति वाच्यम्। तद्व्यावृत्तेरनुपयोगात् प्रत्युत कौटसाक्ष्यमभ्यासेन कृत्वोपरतस्य पश्चादेतद्दण्डाभावप्रसङ्गात् तस्मात्कौटसाक्ष्यमत्यजत इत्यर्थकतयाभ्यासावगतिः। न च दण्डयित्वेत्यस्यात्रानुषङ्गे प्रमाणाभावात्तु शब्दवशाच्च विवासमेव कूटसाक्षित्वाभ्यासकारिणो ब्राह्मणस्य दण्डो न त्वर्थदण्ड इति वाच्यम्।

न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्।

न शारीरो दण्डो ब्राह्मणस्येत्यादि वचनैः शारीरदण्डनिषेधादर्थदण्डस्याप्यभावे स्वल्पविषयेऽपि कौटसाक्ष्याभ्यासे निर्वासननग्नीकरणगृहभङ्गादि प्रसङ्गात्। दण्डाभावस्य चा

प्रसक्तेः तत्र तत्रार्थदण्डस्य ब्राह्मणविषयस्यापि वक्ष्यमाणत्वाच्च। तु शब्दस्य प्रधानविषयप्रवासनक्रियामन्वाद्यभिप्रायकत्वेनाप्यविरुद्धा। याज्ञवल्क्यः।

यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः।
स दाप्योऽष्टगुणन्दण्डं ब्राह्मणन्तु विवासयेत्॥

यः साक्ष्यमङ्गीकृत्य अन्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन्निगदासमये तमोगुणेनावृतो रागद्वेषाद्याक्रान्तचित्तस्तत्साक्ष्यमन्येभ्यो निह्नुते नाहमत्र साक्ष्यं स्वीकरोमीति प्रकाशयति। यथा तेन तदनुरोधात्तन्न स्वीकुर्वते कूटतां वा कुर्वन्ति स विवादपराजयनिमित्तकदण्डापेक्षयाष्टगुणदण्डन्दाप्योऽपराधमहत्त्वात्। अन्येभ्य इति श्रीमतः भगवतः पाणिनेः सूत्रेणकेन इत्याह श्लाघह्नुङ्स्थाशपाञ्ज्ञीप्स्यमान इत्यनेन सम्प्रदानसंज्ञायां चतुर्थी तेन पूर्वोक्तार्थलाभः। ब्राह्मणन्तु तथा कुर्वाणं विवासयेत्। विवासनञ्च व्याख्यातरीत्या देशनिर्वासननग्नीकरणगृहभङ्गान्यतररूपमनुबन्धाद्यपेक्षया व्यस्तसमस्तविषयां ज्ञेयम्। यत्तु मिताक्षराकृताष्टगुणदण्डदानासमर्थमिति व्याख्यातन्तत्प्रधानक्रियानिरूपितं वैलक्षण्यप्रतिपादकं तु शब्दविरोधादुपेक्ष्यम्। नचैवमल्पविषयेऽपि विवासनमदण्डता वा प्रसज्येतेति वाच्यम्। वचनोपात्ते विषयस्यैव दण्डस्य युक्तत्वात्। अतएवाह नारदः।

श्रावयित्वा ततोऽन्येभ्यः साक्षित्वं यो विनिह्नुते।
स विनेयो भृशतरं कूटसाक्ष्यधिको हि स इति॥

तथा चापरार्कोऽपि। ब्राह्मणश्चेदेवंविधः स्तं विवासयेन्नतु दण्डयेदित्येवं व्याचख्यौ। क्षत्रियादीनान्तु दण्डदानासामर्थ्ये

स्वजात्युचितकर्मकरणनिगड़बन्धनकारागृहनिरोधनादितावद्द्रव्यसमीकरणानुरूपं बोध्यम्। सर्वेषामपि निह्नवकारित्वे समानदोषत्वात्सर्वेऽपि प्रत्येकमष्टगुणन्दण्ड्याः। प्रागन्ययोक्ता पुनरन्यथोक्तौ कात्यायन आह।

उक्तान्यथा ब्रुवाणाश्च दण्ड्याः स्युर्वाक्छलान्विताः।
अनुबन्धादितारतम्येनात्र दण्डतारम्यं कल्पनम्

अन्यतरेणोपन्यस्ताः साक्षिणोऽन्येन यदि रहसि सम्बाद्यन्तेऽन्यद्वारेण भेद्यन्ते वा तदा प्रकृतार्थहानिस्तस्येत्याह। नारदः। न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः।

भेदयेच्चैव नान्येन हीयेतैवं समाचरन्निति

साक्षिणामवचनानृतवचने प्रतिषिद्धे क्वचित् तत्प्रतिप्रसवमाह। याज्ञवल्क्यः।

वर्णिनान्तु बधो यत्र तत्र साक्ष्यनृतं वदेदिति।

साक्षिणा सत्ये उक्ते यत्र वर्णवतां ब्राह्मणादीनां राजदण्डरूपो बध आपद्यते तत्र बध प्रयोजकताख्य महादोषपरिहाराय साक्ष्यनृतं वदेत्। सत्यन्न वदेदित्यर्थः। तथा चावचनानृतवचनयोर्द्वयोरप्यभ्यनुज्ञा लभ्यते शङ्काभियोगादिस्थले साक्षिसत्यवचनेन यद्यभियुक्तस्य बधः प्रसज्यतेऽभियोक्तुश्च शङ्काभियोगकारित्वान्न तत्प्रसक्तिस्तत्रानृतवचनाभ्यनुज्ञातत्वा--भियोगादौ च सत्यासत्यवचने यत्रान्यतरबधप्रसक्तिरपरिहार्या तत्र तूष्णीम्भावोऽभ्यनुज्ञायते। यदि तु राजा कथञ्चिदप्यकथनं नानुमन्यते तदा साक्षिता सम्पादनीयेत्यर्थसिद्धम्। तदसम्भवे सत्यमेवाभिधेयं वर्णिबधप्रयोजकत्वदोषापरिहारेऽनृतवचनदोष-स्वीकारस्यानुचितत्वात्प्रायश्चित्तद्वयम--

सक्तेः। वणिग्वधप्रायश्चित्तपरं यथाशास्त्रमादरणीयमिति वि-
ज्ञानयोगिनः। मनुरपि।

शूद्रविट्क्षत्र विप्राणां यत्रार्त्तोक्तौ भवेद्वधः।

तत्र वक्तव्यमनृतन्तद्धि सत्याद्विशिष्यत इति॥

इदमपि योगीश्वरवचनवद्विशिष्टाभावपरतया व्याख्येयम-
वचनानृतवचनाभ्यनुज्ञालाभाय सत्याद्विशिष्यत इत्यस्यायमर्थः।
ब्राह्मणादिवधप्रयोजकता निबन्धनाधिकदोषपरिहारायावच-
नानृतवचनप्रयुक्ताल्पदोषस्वीकार उचित एवेति प्रशंसार्थम्।
यद्यपि। न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्।

राष्ट्रादेनं बहिः कुर्य्यात्समग्रधनमक्षतम्॥

न ब्राह्मणवधाद्भूयान् योऽधर्मो विद्यते क्वचित्।

तस्मादस्य बधं राजा मनसापि न चिन्तयेत्॥

इत्यादि मन्वादि वाक्यैर्ब्राह्मणबधदण्डनिषेधाद्विप्रग्रहण-
मनर्हन्तथापि तस्य बधस्थानीयदण्डप्रसक्तेस्तत्परिहारार्थे वा
वचनानृतवचनाभ्यनुज्ञा। तथाच मनुः।

मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते।

इतरेषान्तु वर्णानां दण्डः प्राणान्तिको भवेदिति॥

स्मृत्यन्तरेऽपि। ब्राह्मणस्य बधो मौण्ड्यं पुरान्निर्वासनन्तथा।

ललाटे चाङ्कारणम्प्रयाणो गर्दभेन चेति॥

न च बधशब्देनार्थद्वयपरिग्रहे वैरूप्यम्। निमित्तांश-
पातिनि तत्प्रसक्तावपि विधिवैषम्याऽप्रसक्तेः। यद्वा

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान्।

प्रेष्यान्वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेदिति॥

मानवात्तेषां शूद्रवद्बधाभ्यनुज्ञाप्रतीते स्तत्परं विप्र-

ग्रहणम्। तथा च बधपदमुभयत्र मुख्यार्थकमेव। अर्थ-न्त्वपराक्तोक्तसमाधिरनुपादेयः तस्य मानवस्य प्रकरणाच्छ-पथपरत्वेन दण्डविषयत्वाऽभावात्। सर्वपापेष्वपि स्थितम्। तस्मादस्य बधं राजा मनसापि न चिन्तयेत् इत्यादि श्रवणाद्-विप्रबधमात्रस्यैव परिहरणीयत्वप्रतीतेश्च अथवा यत्र क्रोधा-द्यावेशवशेनातिक्रम्य निषेधं विप्रस्यापि राज्ञा म्लेच्छादिना वा बधदण्डः कर्त्तव्य इति सम्भावना तत्रैवेदमस्तु, यथा कथ-ञ्चित्प्रसक्त्युपजीवकत्वादस्य राज्ञोऽस्तु, परन्दोषः। पापीयसस्तु क्षत्रियादे र्बधप्रसक्तावपि नोभयाभ्यनुज्ञेत्याह गौतमः। नानृतवचने दोषो जीवतश्चेत्तदधीनं न तु पापीयसो जीवन-मिति। नचैवमवचनानृतवचनयोरभ्यनुज्ञानात्प्रत्यवाय एव तत्र सर्वथा नास्तीति सत्यन्तं प्रायश्चित्तस्मरणात्। तथा च याज्ञवल्क्यः। तत्पावनाय निर्वाप्यश्चरुः सारस्वतोद्विजैरिति। मनुरपि। वाग्दैवतैश्च चरुभिर्यजेरंस्ते सरस्वतीम्॥

अनृतस्यैनस स्तस्य कुर्वाणा निष्कृतिम्पराम्।
कूष्माण्डैर्वापि जुहुयात् घृतमग्नौ यथाविधि॥
उदित्यृचा वा वारुण्यात्तृचेनाब्दैवतेनवेति।

ते इति प्रक्रमाज्जुहुयादिति छान्दसो वचनव्यत्ययः॥ उदुत्तमश्चेति पाठे उदुत्तमं वरुणपाशेति ऋक्। तदित्यृ-चेति पाठे तत्त्वायामि ब्रह्मणेति वारुणी ज्ञेया। न चाभ्य-नुज्ञावचसार्थक्याय प्रत्ययाभाव कल्पनमावश्यकमिति प्राय-श्चित्तविधानं नैमित्तिकं क्षामवत्यादिवत् पुंश्चलीवानरदं-शादिनिमित्तक द्वादशरात्रातिदृब्धेति वाच्यम्। तत्पाव-नाय एनसस्तस्य कुर्वाणा निष्कृतिम्परामित्यस्य वैयर्थ्यापत्तेः।

न चैवं प्रतिप्रसववैयर्थ्यापत्तेः । यतोऽनृतवचन प्रतिषेधो द्विविधः पुरुषमात्रसाधारणः साक्ष्यप्रयुक्तश्च तत्र प्रकरणात् साक्ष्यप्रयुक्तप्रतिषेध निबन्धनप्रत्यवायस्य प्रतिप्रसवादभावो नतु साधारणनिषेधनिबन्धन प्रत्यवायस्यापीति प्रायश्चित्तविधिबलात् कल्प्यते । यद्यपि भूयसः साक्ष्यनृतप्रभवप्रत्यवायस्यापगमे ऽल्पस्यानृतमात्र प्रभवस्य तस्याभावोऽप्य विनाभावादानुषङ्गिको ऽवश्यम्भावी । ब्रह्मवधसुरापानादि प्रभवप्रत्यवायनाशक द्वादशाब्दादिना गोवधादिप्रभवतन्नाशवत् तथाप्यत्राभ्यनुज्ञायाः प्रायश्चित्तविरुद्धयोरुभयोरपि सार्थक्याय भूयो निवृत्तयोरप्यानुषङ्गिकोप्यविना भूतोऽपि स्वल्पोऽपि न निवर्त्तेत इति गम्यते । अत्र च चरुरिति योगीश्वरवचन एकवचनाद्दैवतैक्याच्च मानवे चरुभिरिति बहुवचनं कर्त्तृबहुत्वे दंष्ट्या प्राप्तबहुत्वानुवादकम् । द्विजग्रहणान्न शूद्रस्यैतत्प्रायश्चित्तङ्किन्त्वन्यत् । तथा च विष्णुः ।

तत्पावनाय कूष्माण्डीभिर्द्विजोऽग्निं जुहुयात् ।
शूद्रश्चैकाह्निकं गोदशकस्य ग्रासन्दद्या दिति ॥

एकाह्निकमेकाह्न भक्षणपर्य्याप्तम् । वयन्तु तत्पावनाय अनृतस्यैनस स्तस्येत्यादियोगीश्वरमन्वादिवचनेषु तच्छब्दोपादानात् साक्ष्यनृतपातकमेव गृह्यते तन्निरसनायैवेदं प्रायश्चित्तम् नच तस्याभ्यनुज्ञावचनेनाभावावगमात् कथमेतदिति वाच्यम् वर्णिवधदोषापेक्षया साक्षिवितथवचनदोषस्याल्पस्य सह्यते तद्धि सत्याद्विशिष्यत इति वाक्यशेषपर्य्यालोचनेन तस्य तात्पर्य्यात् अतएवावचनदोषपरिहारोऽप्यनेन प्रायश्चित्तेन सामान्यतः साक्षिभिन्नस्यावचनदोषाभावात् नचानुवन्धि-

ब्रुवापीति वचनमवचने सामान्यतो दोष प्रतिपादकमिति वाच्यम्। तस्य प्रकरणात् सम्भावना प्रवेष्टव्येति वाक्यशेषाच्च स्वल्पपरत्वात् अतएव साक्षिणां पृथग्वचने दोषवचनं सफलम्। नच साक्षिणा मवचनानृतवचनयोर्दोषाधिक्यादिदमल्पप्रायश्चित्त मनुचिन्तितमिति वाच्यम्। अभ्यनुज्ञाविधेरस्मिन्विषयेऽल्पदोषपरत्वस्योक्तत्वात् एतेन भूयोदोषनिवृत्तावल्पदोषनिवृत्तिरविनाभावादन्यत्र नतु विधिद्वयसाफल्याय न तथेत्यपि कल्पनायास्ततश्च वर्णिवधप्रसक्तौ साक्षिणोऽप्यनृतं वचनावचनयोर्वधप्रयोजकतादोषापेक्षायाल्पो दोषस्तत्र चेदम्प्रायश्चित्तन्तेन च ततोऽप्यल्पं सामान्यानृतवचनप्रतिषेधातिक्रमनिबन्धनो दोषः सुतरामुपैति तात्पर्यमिति ब्रूम इति साक्षिनिरूपणम्।

अथ लेख्यं निरूप्यते।

तत्र बृहस्पतिः। साक्षिणामेष निर्दिष्टः संख्यालक्षणनिश्चयः।

लिखितस्याधुना वच्मि विधानमनुपूर्वशः॥

षाण्मासिकेऽपि समये भ्रान्तिः सञ्जायते नृणाम्।

धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा॥

राजलेख्यं स्थानकृतं स्वहस्तलिखितन्तथा।

लेख्यन्तु त्रिविधम्प्रोक्तं भिन्नन्तद्बहुधा पुनः॥

भागदानक्रियाधान संविद्दास ऋणादिभिः।

सप्तधा लौकिकं लेख्यन्त्रिविधं राजशासनम्॥

मरीचिरपि। स्थावरे विक्रयाधाने विभागे दान एव च।

लिखितेनाप्नुयात् सिद्धिमविसंवादमेव च॥

भाग आधानमाधीकरणञ्च संविल्समयः आदिशब्देन विशुद्ध्यादिग्रहणम्। भागपत्रादीनां लक्षणमाह।

बृहस्पतिः। भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम्।
विभागपत्रं कुर्व्वन्ति भागलेख्यन्तदुच्यते॥
भूमिन्दत्त्वा तु यत्पत्रं कुर्य्याच्चन्द्रार्ककालिकम्।
अनाच्छेद्यमनाहार्य्यन्दानलेख्यन्तु तद्विदुः॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्।
पत्रं कारयते यत्तु क्रयलेख्यन्तदुच्यते॥
जङ्गमं स्थावरम्बन्धं दत्त्वा लेख्यङ्करोति यः।
गोप्यभोग्यक्रियायुक्त माधिलेख्यन्तदुच्यते॥
ग्रामो देशश्च यत्कुर्य्यात् सत्यलेख्यम्परस्परम्।
राजाविरोधिधर्म्मार्थं संवित् पत्रं वदन्ति तत्॥
वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यः।
कर्म्माणि ते करिष्यामि दासपत्रन्तदुच्यते॥
धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्य्याच्च कारयेत्।
उद्धारपत्रन्तत्प्रोक्त मृणलेख्यं मनीषिभिरिति॥

विशुद्धिपत्रमुक्तङ्कात्यायनेन।
अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते बुधैः।
विशुद्धिपत्रकन्देय न्तेभ्यः साक्षि समन्वितम्॥

सन्धिपत्रमप्याह। स एव।
उत्तमेषु समस्तेषु अभिशापे समागते।
वृत्तानुवादलेख्यं यत् तज्ज्ञेयं सन्धिपत्रकम्॥

अन्वाधिपत्रमाह प्रजापतिः।
धनी धनेन तेनैव परमाधिन्नयेद्यदि।
कृत्वा तदाधिलिखितं पूर्व्वं वाऽस्य समर्पयेत्॥

पूर्व्वमाधिपत्रम्। सीमापत्रमप्याह।

कात्यायनः। सीमाविवादे निर्णीते सीमापत्रं विधीयत इति।

ऋणशोधने कृते ऋणपत्रनाशादौ सति प्राप्तिपत्रमुत्तमर्णेनाधमर्णाय देयमित्याह याज्ञवल्क्यः।

दत्वर्णम्पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्।

अत्र लौकिकं सप्तविधलेख्यं स्वकृतान्यकृतभेदेन द्विविधन्नारदेनोक्तम्।

लेख्यन्तु द्विविधं प्रोक्तं स्वहस्तान्यकृतन्तथा।

स्वकृते साक्ष्यनियमोऽन्यकृते तन्नियम इत्याहोत्तरार्द्धेन स एव।

असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोरिति।

असाक्षिमदपीत्यर्थः। तथा च याज्ञवल्क्यः।

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितञ्च यत्।

तत्प्रमाणं स्मृतं सर्वम्बलोपधिकृतादृते॥

इत्यपि शब्दः प्रागुक्तबलोपधिकृतत्वपर्य्युदासः। सर्वलेख्यविषयो न स्वकृतमात्रविषयः। तथा च मनुः।

बलाद्भुक्तं बलाद्दत्तं बलाद्यच्चापि लेखितम्।

सर्वान् बलकृतानर्थान कृतान्मनुरब्रवीत्॥

नारदोऽपि। मत्ताभियुक्तस्त्रीबालबलात्कारकृतञ्च यत्।

तदप्रमाणं लिखितं भयोपधिकृतन्तथेति॥

अन्यकृते विशेषान्तरमाह। योगीश्वरः।

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम्।

लेख्यन्तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम्॥

समामास तदर्द्धाह र्नामजाति स्वगोत्रकैः।

स ब्रह्मचारिकात्मीय पितृनामादि चिह्नितम्॥

धनिकनामपूर्वकमित्यनेनोत्तमर्णनामोपरिलेख्यमधमर्ण--

नामतदर्द्ध इत्यर्थः। एतदधमर्णपत्रादिविषयमन्यत्राऽसम्भवात्। समामासादि यथा सम्भवमन्यत्रापि सब्रह्मचारिकस्वहृचादि शाखाप्रयुक्तगुणनामबहृचः कठ इत्यादि। वशिष्ठोऽपि।

कालं निवेश्य राजानं स्थानं निवसनन्तथा।
दायकं ग्राहकञ्चैव पितृनाम्ना च संयुतम्॥
जातिङ्गोत्रञ्च शाखाञ्च द्रव्यमाधिं ससङ्ख्यकम्।
वृद्धिं ग्राहकहस्तञ्च विदितार्थौ च साक्षिणौ॥

स्थानं जनपदः। निवसनं पुरग्रामादिकं ग्राहकोऽधमर्णः ग्राहकस्तन्निवेशनप्रकारमाह योगीश्वरः।

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्।
मतं मे मूकपुत्त्रस्य यदत्रोपरि लेखितमिति॥

साक्षिणावित्यनेन द्वयोरभ्यनुज्ञानात्। अवरत्वनियमो नात्रेत्युक्तमेकस्तु न भवत्येवेति अत्र साक्षिलेखकस्वहस्तचिह्नं कार्य्यमित्यप्याह। स एव।

साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः॥
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत्॥

समा इत्यनेन गुणसाम्यं सङ्ख्यासाम्यञ्च वैषम्यानियमाय-विवक्षितम्। असमा इत्यकारप्रश्लेषस्तु वैषम्य सामान्यत एव साक्षिषु प्राप्तेर्नोपादेयः। ऋणि साक्षिणोः सर्वथा लिप्यनभि-ज्ञत्वे नारद आह।

अलिपिज्ञ ऋणी यः स्यात्स्वमतं स तु लेखयेत्।
साक्षी वा साक्षिणान्येन सर्वसाक्षी समीपत इति॥

त्रिविधं राजशासनमित्युक्तम्। त्रैविध्यं विविनक्ति बृहस्पतिः।

दत्वा भूम्यादिकं राजा ताम्रपट्टे पटेऽथ वा।
शासनं कारयेद्धर्मं स्थानवंश्यादि संयुतम्॥
मातापित्रोरात्मनश्च पुण्यायामुकसूनवे।
दत्तम्मयामुकायाद्य दानं सब्रह्मचारिणे।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम्।
अनाच्छेद्य मनाहार्य्यं सर्वभागविवर्जितम्॥
दातुः पालयितुः स्वर्ग्यं हर्त्तुर्नरकमेव च।
षष्टिं वर्ष सहस्राणि दानोच्छेदफलं लिखेत्॥
ज्ञातं मयेति लिखितं सन्धि विग्रहलेखकैः।
समुद्रं वर्षमासादि धनाध्यक्षाक्षरान्वितम्॥
एवंविधं राजकृतं शासनं समुदाहृतम्।
देशादिकं यस्य राजा लिखितं न प्रयच्छति॥
सेवाशौर्य्यादिना तुष्टः प्रसादलिखितन्तथा।
पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते॥

स ब्रह्मचारिणे। अमुकशाखाध्यायिने। सर्वभागविवर्जितम्। सकलराजपुरुषादि देयांशरहितम्। योगीश्वरः। शासनमाह।

भूमिन्दत्वा निबन्धं वा कृत्वा लेख्यन्तु कारयेत्।
आगामि भद्रनृपति परिज्ञानाय पार्थिवः॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरि चिह्नितम्।
अभिलेख्यात्मनोऽवंश्यानात्मानञ्च महीपतिः॥

प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।
स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरमिति ॥

इयन्ति पर्णक्रमुकभारादा-वियन्ति पर्णक्रमुकादीन्यस्तोदेयानीति राज्ञो नियतदानाज्ञानिबन्धं कारयेत् सन्धिविग्रहादधिकारिद्वारेत्यर्थात् । तथा च व्यासः ।

राज्ञा तु स्वयमुद्दिष्टः सन्धिविग्रहलेखकः ।
ताम्रपट्टे पटे वापि प्रलिखेद्राजशासन मिति ॥

प्रतिगृह्यत इति ग्रहो भूम्यादिस्तत्परीमाणं प्रतिग्रहपरीमाणं उपसर्गस्य दीर्घो बाहुलकः । दीयत इति दानम् । भूम्यादि तस्य च्छेदः चेत्रादे र्मर्य्यादा तदुपवर्णनं तन्निर्देशम् । आत्मवंश्यादीनभिलिख्येत्यन्वयः । इदञ्च साधुशब्दै रेव लेखनीयं न लौकिकवत्तदनियमः । तथा च संग्रहकारः ।

राजा स्वहस्तचिह्नेन राजादेशेन संयुतम् ।
युक्तं राजाभिधानेन मण्डितं राजमुद्रया ॥
सुलिप्यनपशब्दोक्ति सम्पूर्णावयवाक्षरम् ।
शासनं राजदत्तं स्यात् सन्धिविग्रहलेखकैः ॥

अन्तिमपदोत्तरं लिखितायेति शेषः । तस्मिन्निव लौकिके देशभाषादिप्रतिषेधो नेत्याह नारदः ।

देशाचाराविरुद्धं यद्व्यक्ताधि विधिलक्षणम् ।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरमिति ॥

शासने राज्ञा स्वहस्तेनैव स्वसम्मतं लेख्यमित्यप्याह व्यासः ।

सन्निवेश्यं प्रमाणञ्च स्वहस्तेन लिखेत्स्वयम् ।
मतम्मे ऽमुकपुत्रस्य अमुकस्य महीपतेः ॥

सन्निवेशं प्रमाणञ्चेत्यस्य पूर्ववाक्ये प्रलिखेदित्यत्रान्वयः। तयोराजस्वहस्तलिखनानियमात्। इदञ्च राज्ञा प्रतिग्रहीत्रे समर्पणीयमित्याह विष्णुः। पटे वा ताम्रपट्टे वा लिखितं स्वमुद्राङ्कमागामि नृपति परिज्ञानार्थं दद्यादिति। अतएव दत्तापहारदोषप्रतिपादनमपि भाविनृपप्रत्यायनार्थं तत्राव-श्यकमित्यप्याह। व्यासः।

षष्टिवर्षसहस्राणि दानाच्छेदफलन्तथा।
आगामि नृपसामन्तबोधनायाभिलेखयेत् इति॥

षष्टिवर्षसहस्राणीत्यादि पुराणवचनप्रसिद्धन्दानाच्छेदयोः दानापहारयोः स्वर्गादिनरकादिफलं लेखयेद्राजेत्यर्थः। जयपत्रे विशेषमाह व्यासः।

व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः।
जयपत्रन्ततो दद्यात् परिज्ञानाय पार्थिवः॥
जङ्गमं स्थावरं येन प्रमाणेनात्मसात्कृतम्।
भागाभिशापसन्दिग्धे यः सम्यग्विजयी भवेत्॥
तस्मै राज्ञा प्रदातव्यं जयपत्रं सुनिश्चितम्।
पूर्वोत्तरक्रियापादं तत्प्रमाणं परीक्षणम्॥
निगदस्मृतिवाक्यञ्च यथासभ्यं विनिश्चितम्।
एतत्सर्वं समासेन जयपत्रेऽभिलेखयेदिति॥

प्रमाणस्य पृथक्ग्रहणात्क्रियापदेन प्रत्याकलितमत्र गृह्यते। परिज्ञानाय प्राड्न्यायस्य बोधनाय। भागेऽभिशापे वा सन्दिग्धे। विवादपदमात्रोपलक्षणम्। एतेन विवाद-विषयो यो यत्र विवादे स तत्र लेखनीयः। जयपत्रं राज-मुद्राङ्कितं कार्य्यमित्याह। वृद्धवशिष्ठः।

यथोपन्यस्तसाध्यार्थं संयुक्तं सोत्तरक्रियम्।
सावधारणकञ्चैव जयपत्रकमुच्यते॥
प्राड्विवाकादि हस्ताङ्कं मुद्रितं राजमुद्रया।
अत्र च राज्ञ: सभ्यानाञ्च स्वहस्तोऽप्यपेक्षित इत्याह।
कात्यायन:। सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम्।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिव:॥
सभासदश्च ये तत्र स्मृतिशास्त्रविद: स्थिता:।
यथा लेख्यविधौ तत्र स्वहस्तन्दद्युरेव ते॥
क्वचित्पश्चात्काराख्योऽपि जयपत्रभेद उक्तस्तेनैव।
अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधा:।
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना॥
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते।
अन्यवाद्यादि हीनेभ्य इतरेषां प्रदीयते॥
वृत्तानुवादसंसिद्धन्तच्च स्याज्जयपत्रकमिति॥
वशिष्ठे राजपत्रस्य लक्षणाभिधानापूर्वकन्तस्य चातुर्विध्य-
मुक्तम्।
राज्ञ: स्वहस्तसंयुक्तं स्वमुद्रा चिह्नितन्तथा।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत्॥
शासनं प्रथमं ज्ञेयं जयपत्रं तथा परम्।
आज्ञाप्रज्ञापनापत्रं राजकीयञ्चतुर्विधमिति॥
आज्ञाप्रज्ञापनापत्रयो: स्वरूपमुक्तन्तेनैव।
सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च॥
कार्य्यमादिश्यते येन तदाज्ञापत्रमुच्यते।

ऋत्विक्पुरोहिताचार्य्यमान्येष्वभ्यर्चितेषु तु ॥
कार्य्यं निवेद्यते येन पत्रं प्रज्ञापनाय तदिति ॥

लेख्यप्रयोजनमाह। मरीचिः।

स्थावरे विक्रयाधाने विभागे दान एव च।
लिखिते नाप्नुयात्सिद्धिमविसंवादमेव च ॥
सिद्धते वाचिकोऽप्याधिः स्थावरेषु दशाब्दिकः।
प्रतिग्रहे च क्रीते च न लेख्यं सिध्यति क्रियेति॥

पूर्वलेख्ये कथञ्चन व्यवहाराक्षमतामुपगते तद्विधमेवापरं लेख्यमधमर्णोनोत्तमर्णाय लिखित्वा देयम्। शासनादौ तथाभूते राजादि द्वारान्यत्करणीयमित्याह योगीश्वरः।

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा।
भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत्।

सर्वैरेतैर्विशेषणैर्व्यवहाराक्षमता विवक्षिता दुष्टं लिप्यक्षरपरिलोपेनावाचकतया वा यल्लेख्यं तत्तु दुर्लेख्यं नष्टं सर्वथा नाशमुपगतम् उन्मृष्टं मसीदोषादिना स्फुदितलिप्यक्षरम्। यद्यपि दग्धमपि नष्टमेव तथापि कालमात्र कृता शीर्णता नष्टपदेनात्र विवक्षिता। पत्रान्तरकरणञ्चार्थि प्रत्यर्थिनोः परस्परसम्प्रतिपत्तौ। विमतौ तु देशान्तरस्थपत्रानयनाय कालोदेयोऽध्वापेक्षया व्यवहारो वा प्रवर्त्तनीयः दुर्लेख्यादौ तु सम्प्रतिपत्तौ पत्रान्तरकरणमन्यथा व्यवहारदृष्टत्तिरेवेत्यवसेयं साक्षिषु सत्सु तैरेव निर्णयः। तथा च नारदः।

लेख्ये देशान्तरस्थे तु शीर्णे दुर्लिखिते हृते।
सत स्तत्कालकरणमसतो द्रष्टृ दर्शनमिति ॥

सतो विद्यमानस्य लेख्यस्यानयनाय कालकरणम्। असत

इत्यनादरे षष्ठी। तद्विनापीत्यर्थः। द्रष्टारः साक्षिणस्तैर्दर्शन-न्निर्णयः कार्य्यः। तत्र लेख्यं परीक्ष्यैवप्रमाणी करणीय-मित्याह कात्यायनः।

राजा क्रियाः समाहूय यथान्यायं विचारयेत्।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः॥
दर्पणस्थं यथाविम्बमसत्सदिव दृश्यते।
तथा लेख्यस्य विम्बानि कुर्वन्ति कुटिला नराः॥

व्यासः। लेख्यमालेख्यवत्केचित् कुर्वन्ति कुशला नराः।
तस्मान्न लेख्यसामर्थ्यात्सिद्धिरैकान्तिकी मता॥

बृहस्पतिः। ज्ञात्वा देशञ्च कालञ्च कुशलाः कूटकारकाः।
कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत्॥
स्त्रीबालार्त्ता लिपिज्ञांश्च वञ्चयन्ति स्वबान्धवा।
लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्यागमैस्ततः॥

कात्यायनः। साक्षि दोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य च।
धनिकस्यापि वै दोषात् तथा धारिणकस्य च॥
दुष्टैर्दुष्टम्भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत्।
तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः॥

उपधात्र दुष्टान्तःकरणता। स एव।

धनिकेन स्वहस्तेन लिखितं साक्षि-वर्जितम्।
भवेत् कूटं नचेत्कर्त्ता कृतं हीति विभावयेत्॥
देशाचारविरुद्धं यत्सन्दिग्धं क्रमवर्जितम्।
कृतमस्वामिना यच्च साध्यहीनञ्च दुष्यति॥

नचेदित्यादेरयमर्थः। कर्त्ता लिखनकर्त्ता धनिकाधमर्ण-

सम्प्रतिपत्त्या मयैतल्लिखितमिति यदि न विभावयेत्तदा तत्-पत्रं कूटं भवेदप्रामाण्यशङ्कास्कन्दितं स्यादिति । व्यासः ।

अदृष्टं श्रावितं लेख्यं प्रमीतधनिकर्णिकम् ।
अबन्धलग्नकस्यैव बहुकालं न सिध्यति ॥

एतदपवादमाह बृहस्पतिः ।

उन्मत्तजड़बालानां राजभीति प्रवासिनाम् ।
अप्रगल्भभयार्त्तानां न लेख्यं हानिमाप्नुयात् ॥

उन्मत्तादीनां लेख्यन्तदृदर्शनादिनापि हानिं नाप्नुयादित्यर्थः । बृहस्पतिः ।

दूषितो गर्हितः साक्षी यत्रैकोऽपि निवेशितः ।
कूटलेख्यन्तु तत्प्रोक्तं लेखको वापि तद्विधः ॥

कात्यायनः । न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनो लेख्यं कूटलेख्यं प्रकीर्त्तितमिति ॥

कूटमप्रामाण्यशङ्काकलङ्कितमित्यर्थः । तस्माद्दुष्टलेख्यपरीक्षाऽवश्यापेक्षणीयेत्यभिप्रायः । परीक्षाप्रकारमाह । कात्यायनः ।

त्रिविधस्यापि लेख्यस्य भ्रान्तिः सञ्जायते नृणाम् ।
ऋणि साक्षि लेखकानां हस्तोक्त्या साधयेत्ततः ॥

स एव । अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुद्धिः स्यान्नसंशयः ॥
ऋणी स्वहस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥

याज्ञवल्क्यः । सन्दिग्धे लेखशुद्धिः स्यात् स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः ॥

एतद्देशकालयोरस्येदन्द्रव्यं घटत इति युक्त्या प्राप्तिः युक्तिप्राप्तिः

क्रिया साक्ष्यादिभिः। चिह्नमसाधारणं यस्य यच्छीकारादि। सम्बन्धपूर्वमपि परस्परविश्वासकृतस्तयोर्दानग्रहणादि सम्बन्धः। आगम एतावता द्रव्यस्यास्मिन्देशे कालेऽस्य सम्भावितः प्राप्त्युपायः। एतैर्हेतुभिः हेतुरसाधारणोऽन्यो गोवृषनयेन पृथगेव वा। प्रतिवादिना लेख्यदोष उद्भाविते वादिना तत्पुत्त्रेण वा तदुद्धारः करणीय इत्याह। बृहस्पतिः।

उद्धरेल्लेख्यमाहर्त्ता तत्पुत्त्रो भुक्तिमेव तु।
अभियुक्तः सभातश्चेत् तत्पुत्त्रोऽपि तदुद्धरेत्॥

यत्तु कात्यायनः। साक्षि लेखक-कर्त्तारः कूटतां यान्ति ते यथा।

तथा दोषाः प्रवक्तव्या दुष्टैर्लेख्यं प्रदुष्यति।
आहर्त्ता भुक्तियुक्तोऽपि लेख्यदोषान् विशोधयेत्॥
तत्सुता भुक्तिदोषांस्तु लेख्यदोषानवाप्नुयात्॥

तदनभियुक्तपितृमरणे वेदितव्यम्। दोषानुद्धारे दण्डमाह। कात्यायनः।

कूटोक्तौ साक्षिणां वाक्याल्लेखकस्य च पत्रकम्।
नयेच्छुद्धिन्नयेत्कूटं स दाप्यो दममुत्तममिति॥

उत्तमं साहसमिति शेषः। राजशासने निर्णयप्रकारमाह। प्रजापतिः। कार्य्यो यत्नेन महता निर्णयो राजशासनात्।

राज्ञः स्वहस्ततो मुद्रालेखकाक्षरदर्शनात्॥

मुद्रालेखकाक्षरयोर्दर्शनान्निर्णयाद्राजस्वहस्ततश्च निर्णय इत्यर्थः। स्थावरविक्रयबन्धकादौ कूटत्वेन लेख्यं दूषयतो साधयतश्च दोषं शरीरदण्डमाह। व्यासः।

स्थावरे विक्रयाधाने लेख्यं कूटङ्करोति यः।
स सम्यग्भावितः कार्य्यो जिह्वापाण्यङ्घ्रिवर्जितः॥

सम्यगभावितः प्रमाणेन सल्लेखत्वमङ्गीकारितः। अनेन कूटलेखकर्त्तुर्नायन्दण्डः किन्तु कूटत्वोद्भावनकर्त्तुरिति गम्यते। तथा च लेखं परकीयं यः कूटङ्करोति कूटमेतदिति वदतीत्यर्थः। कूटलेखकर्त्तुस्तु दण्डान्तरं वक्ष्यते। ऋणादानादावपि लेखदोषोद्भावयितुस्तदसाधयतो विषयानुबधानुरोधेन दण्डः कल्प्यः। लेखप्राबल्यमथाह। बृहस्पतिः।

कुलश्रेणिगणादीनां यथाकालं प्रदर्शयेत्।
श्रावयेत् स्मारयेच्चैव यथा स्याद्दलवत्तरम्॥

नारदः। ये दर्शितं प्रतीकालं श्रावितं स्मारितञ्च यत्।
लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिषु॥

कात्यायनः। दृष्टे पत्रे स्फुटन्दोषन्नोक्तवानृणिको यदि।
ततो विंशतिवर्षाणि स्थितं पत्रं स्थिरम्भवेत्॥

ऋणिकग्रहणं प्रतिवादिमात्रोपलक्षणम्। स एव।

शक्तस्य सन्निधावर्थो यस्य लेख्येन भुज्यते।
विंशद्वर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितम्॥
अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः।
तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते।
तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशति॥
प्राप्तं वा तेन ते किञ्चिद्देयं वाथ निरूपितम्।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम्॥
अपिशब्दो मृतसाक्षिकमित्यत्राप्यन्वेति।

व्यासः। स्वहस्तकाज्जानपदन्तस्मात्तु नृपशासनम्॥
प्रमाणान्तरमिष्टं हि व्यवहारार्थमागतम्।

द्वितलिपिञ्च स्वकृत मन्यल्लिख्येत युक्तितः ॥
कुर्य्याद्विसदृशं लेख्यन्तस्माज्जानपदं शुभम् ।
अप्रकाशात् साक्षियुक्तं लेखकाक्षरमुद्रितम् ॥
लोकप्रसिद्धं स्वकृतादरमन्यत्कृतं शुभम् ।
देशाध्यक्षादिलिखितं तत्र जानपदं कृतम् ॥
समकालम्पश्चिमं वा तत्र राजकृतं शुभम् ।
स्मृतः । लेख्ये लेख्यक्रिया प्रोक्ता वाचिके वाचिकी मता ॥
वाचिकी तत्र सिद्ध्येत्सा लेख्यस्योपरि या क्रिया ।
लेख्यस्योपरि यत्साक्ष्यं कूटन्तदभिधीयते ॥
अधर्मस्य हि तद्द्वारमतो राजा विवर्जयेत् ।
वाचिकी यदि सामर्थ्यं मक्षराणां विहन्यते ॥
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ।

अस्यार्थः । लेख्ये सति लेख्यक्रिया प्रोक्ता सैव वलीयसीत्यर्थः ॥ वाचिके साक्षिरूपे प्रमाणे सति वाचिकी क्रिया साक्षिरूपा-क्रिया सैव मता वलीयसी । लेख्यस्योपरि या वाचिकी साक्षिरूपा क्रिया लेख्यानारूढेति यावत् तत्र सा सिध्येत् । लख्यस्योपरि यत्साक्ष्यं लेख्यसाधकतयोपन्यस्तमित्यर्थः । अध-र्मस्य च तद्द्वारमित्यत्र हेतु वाचिकीति ।

तत्रापि हेतुः क्रियाणामिति । तत्राप्युपपत्तिरनवस्थेति । प्रमादपरिहारमति यत्नेन कृत्वा हि प्रायशो लेख्यं भवति तेन तत्राप्यप्रमाण्यशङ्कापि सापि नोचिता । साक्ष्यादावपि तत्सम्भवादिति तात्पर्य्यम् नतु सर्वथा तत्र साक्ष्यादिनिवर्त्त-नमभिप्रेतं लेख्यपरीक्षोपदेशविरोधात् । इति लेख्यनिरूप-णम् । अनयोश्च साक्षिलेख्ययोः शब्दाभिव्यञ्जकत्वाच्छब्द प्रमा-

णोऽन्तर्भावः। तथा हि। यथोक्तगुणवतां दोषरहितानाञ्च साक्षिणामाप्तवाक्यावश्यम्भावात् आप्तवाक्यस्य च प्रामाण्यात्। तदुभयविशेषणत्वांस्तु निर्धारणायैव साक्षिपरीक्षोपदेशः। आप्तवाक्यस्य च वक्तृज्ञानुमापकत्वेन स्वातन्त्र्येण वा प्रामाण्यमित्यन्यदेतत्, लेखान्तु स्वस्य हितकारित्वेन स्वस्मिन्नासत्वात् तद्वचनाभिव्यञ्जकमित्याप्तवाक्यमेव तत्रापि प्रमाणम्। अतएव तत्रानामक कृतकृतत्वशङ्कानिरासाय उन्मत्तादेः स्वहितानभिज्ञतया स्वस्मिन्नप्यनाप्तत्वाच्छङ्कानिरासाय च लेखपरीक्षोपदेशोप्यर्थवान्। अथभुक्तिः। इयञ्च याज्ञवल्क्यादिभिरेकैव त्रिविधमानुषप्रमाणान्तर्गततयोक्ता।

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्त्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते॥

इत्यादिवचनैः वृहस्पत्यादयः मानुषप्रमाणभेदतयोपन्यस्ततद्भेदवैविध्यं भुक्तियुक्तिचोदनाऽप्रतिकालाख्यातवन्तः।

साक्षिद्वादशभेदन्तु लिखितन्दशधा स्मृतम्।
अनुमानं त्रिधाभिन्नं नवधा दैवकी क्रिया॥

इत्युक्त्वा भुक्तियुक्तिचोदनाऽप्रतिकालान् वृहस्पतिर्विहितवान्। तत्र युक्तिचोदनाऽप्रतिकालयोः प्रमाणान्तरसहकारितयैव प्रामाण्यं भुक्तेश्चवक्ष्यमाणविशेषणवत्याः स्वत्वहेत्वविनाभावा स्वत्वानुमापकत्वं स्वत एवेत्यभिसन्धाय योगीश्वरादिभिर्भुक्तिरेव प्रमाणतयोक्ताऽन्यैस्तु यथा कथञ्चिदनुमापकतामभिसन्धाय युक्तिचोदनाऽप्रतिकालसंग्रहायानुमानत्वेनैव सोक्तेति सौकर्याय वयमपि निरूपयामः। तत्र क्वचित् सागमाया भुक्तेः प्रामाण्यं

मनसि सन्दधानः। सप्तस्थावरागमोपायान् प्रदर्श्य तत्र भुक्तेः प्रामाण्यमाह। बृहस्पतिः।

एतद्विधानमाख्यातं साक्षिणां लिखितस्य च।
साम्प्रतं स्थावरे प्राप्ते भुक्तेश्च विधिरुच्यते॥
विद्यया क्रयबन्धेन शौर्य्यभार्य्यान्वयागतम्।
सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा स्मृतम्॥
पित्र्ये लब्धक्रयाधाने रिक्थशौर्य्यप्रवेदनात्।
प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात्॥

स्थावरग्रहणमत्र भुक्तेरावश्यकत्वसूचनाय न तु तत्रैव भोगस्य प्रामाण्यनियमाय जङ्गमेऽपि तत्सम्भवात्, तदेतदुत्तरत्र विवेचयिष्यामः। विद्यया प्रतिग्रहादिकप्रयोजकतया स्वत्वोपायक्रयप्रसिद्धः। बन्धो बन्धकं सोपाधिकं स्वत्वहेतु नष्टाधिविधौ चात्यन्तिकस्वत्वहेतुस्तदप्युत्तरत्र विवेचनीयम्। क्रयबन्धेनेति समाहारद्वन्द्व एकत्वम्। शौर्य्यागतं युद्धार्जितम्॥ भार्य्यागतं विवाहकाले प्राप्तम्। अन्वयागतं पित्रादिक्रमोपात्तम्। अप्रजस्य सपिण्डस्यांशं रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तम्। पित्र्य इत्यादिना प्रागुक्तानेव सप्तस्थावरागमोपायाननूद्य तत्र भोगस्य प्रामाण्यं विधीयते। तत्र प्रवेदनं विवाह स एव।

क्रमागतः शासनिकः क्रयाधानागमान्वितः।
एवंविधस्तु यो भोगः स तु सिद्धिमवाप्नुयात्॥
संविभागक्रयप्राप्तं पितृलब्धञ्च राजतः।
स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया॥
प्राप्तमात्रं येन भुक्तं स्त्रीकृत्यापरिपन्थिनं।

तस्य तत्सिद्धि माप्नोति हानिस्त्वोपेक्षया तथा ॥
अध्यासनात् समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ॥

अपरिपन्थिनम् । विरोध्य प्रतिबद्धम् । अध्यासनात्परीग्रहात् ।
नारदः । आगमेन विशुद्धेन भोगोयाति प्रमाणताम् ।

अविशुद्धागमो भोगा प्रामाण्यन्नैव गच्छति ॥
आगमस्याःविशुद्धत्वं विरोध्यास्कन्दनं भवेत् ।

व्यासः । सागमो दीर्घकालस्य विच्छेदोपरवोज्झितः ।
प्रत्यर्थिसन्निधानस्य परिभोगोऽपि पञ्चधा ॥

विच्छेदान्तरो य उपरव आक्रोशस्ताभ्यामुज्झितो रहितः । यद्वा छेदो व्यवधानन्तद्विगमवान् विच्छेदो निरन्तर इति यावत् । अपरवो वर्जनविषयो रवः । मदीयं चेत्रादि त्वया किमिति भुज्यत इति प्रतिषेधः । अपशब्दस्य वर्जनार्थत्वात् । तेनोज्झितः । नारदः ।

सम्भोगं केवलं यस्तु कीर्त्तयेन्नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः ॥

इदं सागमत्वविशेषणं तदनुपन्यासे दूषणञ्च स्मरणञ्च स्मरणयोग्यता यत्रागमस्य तत्र काले बोद्धव्यम् । सच कालः शतवर्षावधिकः शतायुर्वै पुरुष इति श्रुतेरिति विज्ञानयोगिनः । पुत्रादिक्रमेणापि स्मरणासम्भवाद् यावति काले स्मरणन्तावानेव विवक्षितो ऽस्मार्त्त इति तु वयम् । अनेनाभिप्रायेणाह स एव ।

स्मार्त्ते काले क्रियाभुक्तेः सागमा भुक्तिरिष्यते ।
अस्मार्त्ते ऽनुगमाभावात् क्रमात्त्रिपुरुषागतेति ॥

भुक्ति: प्रमाणमिति शेष:। अनुगम आगमाभावनिश्चय:। कल्पतरुकारस्त्वनुगम आगमानुसन्धानमिति व्याचख्यौ। तत्रा-गमाभावनिश्चयस्य बाधत्वेनानुमिति प्रतिबन्धकस्याभाववच-नस्यावश्यकत्वाऽऽगमानुसन्धानस्य च भोगेनैव क्रियमाणत्वेन तदभावासम्भवाच्च हेयम्। याज्ञवल्क्य:। आगमोऽभ्यधिको भोगं विना पूर्वक्रमागतात्। पूर्वेषां त्रयाणां क्रमेणागतोऽस्मार्त्तकाल इति यावत्। तस्माद्भोगाद्विना स्मार्त्तकालाद्भोगादागमो दान-क्रयादिरूप: स्वत्वहेतुरभ्यधिक उपजीव्यत्वात्। आगमं विना-भोगमात्रात् स्वत्वानुत्पत्ते:। स्मरणयोग्ये च काले स्मर्त्तव्यास्मर-णरूपया योग्यानुपलब्ध्या तदभावनिश्चयभोगेनागमानुसन्धान-मित्यसम्भवात्॥ अस्मार्त्ते तु तदभावनिश्चयाभावे नि:प्रतिपक्षेण नैरन्तर्य्यादिविशेषणवता भोगेन स्वत्वहेत्वाक्षेपद्वारा स्वत्वा-क्षेप इति तात्पर्य्यम्। अनेनैवाभिसन्धिनाह। नारद:।

अन्यायेनापि यद्भुक्तं पित्रा पूर्वतनैस्त्रिभि:।
न तच्छक्यमपाहर्त्तुं क्रमात्त्रिपुरुषागतम्॥

पूर्वतनैस्त्रिभि: सह पित्रा भुक्तमन्यायेनापि यदि किमुत-न्यायानिश्चये तदपाहर्त्तुं नशक्यमर्थिना स्वाध्यक्षं निराक्रोशत्व-निरन्तरोपभोगे सति तस्य निरुत्तरत्वात्। अत्र च सर्ववच-नेषु त्रिपुरुषागतत्वम्भोगस्य स्मार्त्तकालीनत्वोपलक्षणं न तु यथाश्रुतं स्मरणयोग्येऽपि द्वितीयादिवर्षरूपे काले पुरुष-त्रयात्ययसम्भवात्। तत्र च बाधेनानुमित्यर्थापत्त्योरनुदयात्। इदमेवाभिप्रेत्याह। व्यास:।

पिता पितामहो यस्य जीवेच्च प्रपितामह:।
त्रयाणां जीवताम्भोगो विज्ञेयस्त्वेकपूरुष:॥

पितामहेन यद्भुक्तं तत्पुत्रेण विना च तम्।
तौ विना यस्य पिता च तस्य भोगस्त्रिपूरुषः॥

कात्यायनोऽपि। मुख्या पैतामही भुक्तिः पैतृकी चापि संमता।
वयोऽपेतैरविच्छिन्ना स्थिरा षष्ठ्याब्दिका मता॥

व्यास एव। वर्षाणि विंशति भुक्ता स्वामिना व्याहता सती।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी॥
त्रिपौरुषी च त्रिगुणा न तत्रान्वेष्य आगमः॥

भुक्ता भुक्तिः पाकम्पचतीति वत्प्रत्ययानुग्रहाय धातोरनुवादः। तत्रागमस्ताइशभोगेनैवाच्छिद्यते। आगमाभावनिश्चये तु सर्वं न भोगो निष्फल एव।

अनागमन्तु यो भुङ्क्ते बहून्यब्दशतान्यपि।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः॥

न च यो भुङ्क्ते इत्येकवचनश्रवणादेकपुरुषोपभोग एतद्दण्डविधानमनेकपुरुषोपभोगे तु भोगस्य प्राबल्यमिति वाच्यम्। द्वितीयः पृथिवीपतिः न च यो भुङ्क्त इत्यादावप्यागमाभावनिश्चये भोगस्याप्रयोजकत्वात्। इदमेवाभिप्रेत्याह नारदः।

आदौ तु कारणान्दातुं मध्ये भुक्तिस्तु सागमा।
कारणं भुक्तिरेवैका सन्तता या चिरन्तनी।

यदपि वचनं, यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत्।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतमिति।

तदप्युत्पन्नंमुपलभ्यमानम् आगमं विना आगमाभावनिश्चयाभाव इति व्याख्येयम्। ननु स्मार्त्ते काले आगमत्वं भुक्तिविशेषणमसम्बद्धम्। सिद्धं प्रमाणान्तरादागमे तेनैव स्व स्वसिद्धौ भोगस्य विशेष्यांशस्यानुमानार्थापत्त्योरनुपयोगात्।

असिद्धे विशेषणादिति चेत् न। प्रमाणान्तरसिद्धागमसहित एव विशेषणान्तरविशिष्टो भोगः। कालान्तरे स्वत्वमवगमयति भोगरहितोऽवगतोऽप्यागमः साक्ष्यादिभिन्नकालान्तरे स्वत्वमवगमयितुमाचष्टे मध्ये दानक्रयादिना स्वत्वापगमसम्भवादिति विशेषणविशेष्ययोर्द्वयोरपि नानर्थक्यमसिद्धिर्वा इदमिदानीं मम स्वमिति साध्ये स्वत्वभागे आगमे आगमस्तत्र तस्येदानीं पर्यन्तमनुवृत्तौ भोग इति निगर्वः। याज्ञवल्क्यादिभिः सर्वप्रकारकानुपभोगे पूर्णस्वत्वोत्पादकता दानाद्यागमस्य नास्तीत्युक्तम्।

आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो।

बलं पूर्णता। नारदः।

विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु।
विशेषतः स्थावराणां यन्न भुक्तन्न तत् स्थिरम्॥

दानविक्रयादेरुपभोगनिरपेक्षस्यैव स्वत्वोत्पादकत्वात् किमिति भोगलक्षोऽप्यवश्यं तत्रापेक्ष्यत इत्याशङ्कायामुपपत्तिरुक्ता विज्ञानेश्वराचार्य्यैः। दानादेः परस्वत्वापादनम्परकर्त्तृकस्वीकारापेक्षाऽवश्यम्भावनीया। स्वीकारश्च त्रिविधो मानसो वाचिकः कायिकः। ममेदमित्यध्यवसायो मानसः। ममेदमित्याद्यभिलापो वाचिकः। उपादानाभिमर्शनादिरूपेणानेकप्रकारकः कायिकः। तत्र मानसं विना स्वत्वासम्भवात् स्वत्वावश्यक एव। दानविशेषपुरस्कारेण शब्दप्रयोगविशेषनियमपाददर्शनादिचेष्टाविशेषनियमाच्च वाचिककायिकावप्यावश्यकावित्यवसीयते तत्र हिरण्यवस्त्रादौ दातृकर्तृकजलत्यागादनन्तरमेव प्रतिग्रहीतु रुपादानादिसम्भवात् त्रिविधोऽपि व्यापारः

सम्पद्यते। क्षेत्रादौ तु फलोपभोगं विना कायिकस्वीकारा-सम्भवादल्पेनाप्युपभोगेनावश्यम्भवितव्यमन्यथा दानक्रयादेः सम्पूर्णता न भवत्युत्तरकालीनाकाराभावात्। तेन तत्सहिता-दागमान्तराद्विकल आगमो दुर्बलो भवति। एतच्च द्वयोराग-मयोः पूर्वापरभावानवगमे तदवगमे तु स्वल्पभोगविकलोऽपि प्राक्तन एवागमो बलवान्। पूर्वेण दानादिना स्वत्वागमे दाना-द्यन्तरासम्भवात्। नचैवन्तस्य क्षेत्रादेर्मध्यकत्वापत्तिः। पूर्व-स्याप्यागमादुत्तरस्वाम्यानुत्तरस्येति वाच्यम्। प्रतिश्रुतन्यायेना-वेक्षणीयस्वत्वस्य सत्वात्। पूर्वस्वाम्य सत्वेऽपि राज्ञेव प्रति-गृहीतादेः कायिकस्वीकारस्यानिःप्रतिपक्षस्य सम्पादनीय-त्वात्। अथवा साक्षादेवानेन योगीश्वरवचनेन साक्ष्यादीनां युक्तानां मानुषप्रमाणानां बलाबलमुच्यते। पूर्वव्याख्याने वा-र्थिकम्। द्वितीयव्याख्याने चेत्थम्। आद्ये पुरुषे साक्षिले-ख्याभ्यां विगत आगमो भोगादभ्यधिको बलवान्। तेन भुक्तितः साक्षिलेख्ययोस्तत्र बलवन्मुक्तम्भवति। पूर्वक्रमागतस्तु भोगो-विनापि भावितादागमाच्चतुर्थे वर्षे पुरुषेऽधिको मध्यमे तु पुरुषे भोगरहितागमात् स्तोकभोगसहितोऽप्यागमो बलवा-निति स्पष्टञ्चेदमादौ तु कारणं दानमित्युदाहृते नारदवाक्ये। प्रथमपुरुषेऽपि स्वाम्यनुपभोगेन समक्षनिराक्रोशपरोपभोगेन क्षेत्रादिभूमेर्हिरण्यादेश्च कियताचित्कालेन स्वाम्यहानिः पूर्वस्वामिन आह। याज्ञवल्क्यः।

पश्यतो ब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी।
परेण भुज्यमानस्य धनस्य दशवार्षिकी॥

मनु नारदौ। यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्ष्यते धनी।
भुज्यमानम्परैरर्थं न स तं लब्धुमर्हति॥
व्यासः। उपेक्षिता यथा धेनुर्विना पालेन नश्यति।
पश्यतोऽन्यैस्तथा भुक्ता भूमिः कालेन हीयते॥
वर्षाणि विंशतिर्यस्य भूर्भुक्ता तु परैरिह।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति॥
नारदः। भुज्यमानान् परैरर्थान् यस्तान्मोहादुपेक्षते।
समक्षं जीवतो यस्य तान्भुक्तिः कुरुते वशम्॥
पश्यतो ब्रुवत इत्यादि षष्ठनादरे। वृहस्पतिः।
ऋक्‌थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते।
अन्यस्य भुञ्जतः पश्चान्न स तल्लब्धुमर्हति॥
पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत्।
सतापि लेख्येन भुवं न पुनस्तां समाप्नुयात्॥

एतेषु वचनेषु विंशतिवर्षावधिकस्वामिसमक्षनिराक्षेपभोगनिबन्धना भूमेर्हानिर्दशवर्षावधिकताद्दशपरोपभोगनिबन्धना च हिरण्यादिधनस्य हानिरित्यर्थः प्रतीयते सा न तावत्-सत्वहानिः दर्शनकालीनप्रतिषेधदानादिवत्स्वत्वनिवर्त्तकत्वस्य लोकाप्रसिद्धत्वात् उपभोगस्य च ताद्दशस्य स्वम्प्रति प्रमाणत्वेन प्रमाणस्य प्रमेयप्रतिज्ञापकत्वेन स्वत्वरूपाजनकतया स्वत्वोत्पादकत्वाभावात् स्वत्वस्य तदुत्पत्तिनिवृत्तिहेतूनाञ्च। लौकिकत्वस्य दायभागप्रस्तावे विस्तरेणोपपादयिष्यमाणत्वात्। गौतमादिभिस्तदुभयकथनस्य लोकप्रसिद्धानुवादात्। अनागमभोगस्य नारदवचनेन पूर्वोदाहृतनानागमन्त्वित्यादिना स्वत्वहेतुताया निरस्तत्वाच्च। अतएवापरार्कः। व्यवहारस्थिति

माश्रित्येदमुच्यते तेन धर्मगतिमिति परस्वापरस्वापहा प्रत्यवा-
यभीरुणा परेण पूर्वस्वामिने तदर्पणीयं सभापतिसभ्यादीनां
व्यवहाररीत्या तत आच्छिद्य तद्दानेऽपि न क्षतिः। अतएव
मनुः। अजड़श्चेदपोगण्डो विषये चास्य भुज्यते।

भग्नन्तद्व्यवहारेण भोक्ता तद्धनमर्हति॥

व्यवहारेण भोक्तार्हतीति व्यवहारस्थितिमेवोक्तवान्।
बृहस्पतिरपि स्मृतापि लेख्येनेत्याह। अनागममित्यादि ना-
रदवचनन्तु बहुतरधनभूमिविषयमेकपुरुषनियमाभावनिश्चयं
वा। अतएव योगीश्वरः आगमस्तु कृतो येनेत्युक्तवान्। तस्मा-
न्निह्नुते लिखितमित्यादिवचने यथायथापेक्षिततर्कसहकृतैक-
देशसाधनेऽन्यैकदेशापादानेऽनिवेदितैकदेशापादानेऽनिवेदितैक
देशस्य प्रागनिवेदितस्यापदानेऽपि व्यवहारदर्शिनां दोषस्तथा-
त्वापीति तदयुक्तम्। छलं निरस्येत्यादिना व्यवहारदर्शना-
न्यप्येतादृशविषये दोषावर्जनीयत्वात्। निह्नुत इत्यादि-
वचनसत्तर्काभावाच्च अस्मदुपपादनरीत्या तत्रापि तथा नाभ्युप-
गमाच्च तच्च प्रायश्चित्तं विशेषपरीभाषाप्रभाप्रस्तावे। एवं-
विधा हि भुक्तिस्तूष्णीम्भूतस्य पश्यतः स्वामित्वे सति न घटते
किन्तु भोक्तुरेव स्वामित्वे सति युज्यत इति भवति तत्र भुक्तिः
प्रमाणमिति पूर्वं स्वयमेव स्वामिस्वत्वहानि परस्वत्वोत्पत्ति
परत्वव्याख्यानेनास्य विरोधाच्च। न च तदप्येतदनुग्राहक-
तर्कप्रदर्शनेन 'व्यवहारस्थितिपरमेव न वस्तुगतिपरं व्यव-
हारहानिश्च। भोक्ता यद्येवमुपन्यस्यति अजड़ो यमपोगण्डो
यमेतत्समक्षं मया भुज्यमानं क्षेत्रादि यद्येतद्दायमनेन कुतो
विंशतिवर्षावधि न प्रतिषिद्धं अस्मिंस्वार्थे गुणोपेता बहवः सा-

क्षिणः सन्तीति तथोपन्यस्ते चायं निरुत्तरोऽवश्यं भवतीत्येव-
मिति वाच्यम्। अस्य सत्तर्कत्वाभावात् आगमप्रमाणानुपन्या-
सेन मूलशैथिल्यात्। उपेक्षाहेत्वभाव कृतव्यवहारहानावपि
वस्त्वनुसरणस्यावश्यकत्वात्। तथा च नारद उपेक्षालिङ्गाभाव-
कृतामेव व्यवहारहानिमाह न वस्त्वभावकृताम्।

उपेक्षां कुर्वतस्तस्य तूष्णीम्भूतस्य तिष्ठतः।
काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यतीति॥

न च निरुत्तरताप्रयुक्तव्यवहारहानिशङ्कानिरासाय प्रत्यक्षं
स्वीये वस्तुनि परेण भुज्यमाने तूष्णीं न स्थेयमित्युपदेशार्थमिदं
वचनं हीनादिलक्षणवदिति वाच्यम्। विंशत्यादिग्रहणस्यैवमान-
र्थक्यप्रसङ्गात्। ततो वागपि व्यवहारनिःशङ्कायास्तुल्यत्वात्।
लेख्यदोषोद्भावनमुत्तरकालेन कायन्ततोवक्तुः कार्यमित्येतदर्थं
तद्ग्रहणमिति चेत् न। आध्यादिष्वपि विंशत्याद्युत्तरकाले तदनु-
द्भावनस्य तुल्यतयैतदपवादत्वेनोत्तरवाक्यासङ्गत स्तच्च लेख्यप्र-
स्तावेऽभिहितम्। अत मिताक्षराकाराः। न वस्तु हानिर्न
व्यवहारहानिरनेन वचनेन प्रतिपाद्यते। किन्तु परकृतसम-
क्षभोगे ऽप्रतिषेध लक्षणस्यापराधप्रयुक्त क्षेत्राद्युत्पन्न नष्ट-
फलानि विद्यमानफलेऽपि तदीयस्वत्वानपगमात् परस्वत्वानु-
त्पादाच्च न्यायत स्तद्वस्तु विद्यमानफलसहितमेव लभते यद्यपि
स्वामी तथापि नष्टफले धर्म्मिनाशादेव स्वत्वापगमान्निष्क्रय-
द्वारेण चौरादिव भोक्तुः सकाशात् तद्ग्रहणप्राप्तमुपेक्षारूपा-
पराधान्न भवति परस्योपभोगलक्षणापराध निबन्धनो राजद-
ण्डस्त्वनुवादाद्भोक्तुर्भवत्येव। अनागमत्वेत्यादिनारदवचनात्।
परोक्षभोगे सापेक्षा समक्षभोगे च नष्टमपि फलन्निष्क्रयरूपेण

स्वामी लभत एव। पश्यतो ब्रुव त इति वचनात्। विंशतिव- र्षेभ्यो भूमेर्दशवर्षेभ्यश्च प्राग्धनस्य नष्टमपि फलन्तन्निष्क्रयरूपेण प्राप्नोति। विंशतिदशशब्दोपादानादिति अत्रेदं वक्तव्यम्। नष्टफलालाभे प्रतिषेधरूपापराध एव। वीजं वचनं वा नाद्यः। विंशत्यादिवर्षोपभोगवत्ततः प्रागपि समक्षभोगेऽप्रतिषेधाप- राधस्य तुल्यत्वात् तत्कृतनष्टफलालाभप्रसङ्गे विंशत्यादि ग्रह- णाविवक्षा प्रसङ्गदोषसाम्यात्। तत्परिहाराय वाचनिकत्वं यदि नष्टफलालाभस्य, तर्हि यथाश्रुतभूम्यादिस्वत्वहानिरेव वचनादस्तु। किन्नष्टफलपरतया लाक्षणिक्या अतएव कल्पत- रुरत्नाकरस्मृतितत्व स्मृतिचन्द्रिककारादिभिर्वचनस्वरसायात एवयोऽभ्युपगतः। अत्र ब्रूमः। यावता विना वचनमनुपपन्नं तावदेव वचनमस्तके कल्प्यमतएव यथाश्रुतार्थग्रहणे सम- क्षभोगापेक्षायां स्वत्वनाशकत्वमुपभोगस्य परकृतस्य तत्का- लीनस्य स्वत्वोत्पादकत्वमलौकिकं वचनान्तरविरुद्धञ्च कल्प्य- मस्मन्मते तु नष्टफले धर्मिनाशात् स्वत्वनाशः क्लृप्त एव पर- स्वत्वोपभोगे चौरादिवन्निष्क्रियरूपेण तत्प्रत्यर्पणमपि लोक- प्रसिद्धत्वात् प्रसक्तं विंशतिवर्षाद्युत्तरमपराधविशेषात् स्वामि- नस्तदलाभमुखेन प्रतिषिध्यते स एव चास्य दण्डः। इतरत्सर्वं वचनान्तराविरुद्धमेवेति। भवदेवस्तु। किमयं विंशतिवर्षा- द्यवच्छिन्नो प्रतिरवो भोगो वचनावगतो भोक्तुः स्वत्वं जनयति- प्रमापयति वा। नाद्यः याजनादिवदस्य स्वत्वजनकत्वस्य लोकशास्त्रयोरप्रतीतत्वात्। नापि द्वितीयः। लिङ्गतया वा प्रमापय किन्त्वमनुपपन्नतया वा। न द्वयमपि ईदृशभोगस्य स्वत्वेन सह कुत्रापि व्याप्तेरगृहीतत्वात्। अतएव न तस्य

स्वत्वेन विनानुपपत्तिरपि। तस्या अपि व्याप्यछायोपजीवितत्वात्। किञ्चानेन प्राचीनस्वत्वस्य सत एव प्रमाणमागमानुमानद्वारा तन्निरपेक्षतया वा। न तावत् प्रथमः स्मार्त्तकालीनस्यागमाभावनिश्चये तदनुमापकत्वस्य बाधेनासम्भवात्। प्रमाणान्तरेणागमनिश्चयेऽस्य सिद्धसाधनेनानुमापकत्वाक्षेपकत्वयोरसम्भवात्। न द्वितीयः। व्यभिचाराच्च। अन्यायेनापि यद्भुक्तमिति वचनविरोधाच्च स्वस्यान्यायेन भोगासम्भवात्। किञ्चेयमनुपपन्नता स्त्रीराजादिधनगोचरापि सम्भवतीति तत्र न कदाचिदपि भोगः प्रमाणमिति कुतः तस्मादेवं वाच्यम्। यदयं यथोक्तोभोगः पूर्वस्वामिनो भोक्तुद्देशेन त्यागात् तत्स्वत्वध्वंसमयापयति अनुमापयति वा नहि सम्भवति तत्र जहाति। परभोगश्चेदृशं तस्मिन्वस्तुनि क्षम्यत इति। तया च तदुद्देशेन त्यक्ते तत्परिग्रहणादेव परस्य तत्र स्वत्वमप्युत्पद्यते। यथा सर्वभूतोद्देशेन त्यक्तं तोयादीति नियमात्तदपि भोक्तुः स्वीभवति। स्त्रीराजधनादौ तु नैवम् स्त्रीणामज्ञत्वादप्रागल्भ्याद्राजधनस्य बहुलतया जडादेरप्रागल्भ्याच्छ्रोत्रियस्य बहुकालीनाध्यापनादिव्यग्रतयाऽभ्युपनिधी सीमादीनामाधित्वादि त एव स्वत्वध्वंसजनकपूर्वस्वामित्यागाऽकल्पकत्वात्। अतो भूम्यादौ विंशतिवार्षिको गवादौ दशवार्षिकोभोगः पूर्वस्वामिनः स्वत्वध्वंसे च प्रमाणं यच्च कालवैषम्यं तद्भूम्यादेर्महाफलत्वेन तत्र चिरकालेनैव स्वत्वहानिकल्पनस्योचितत्वात् द्रव्यान्तराणाञ्चाऽतथात्वादल्पकालेनापि स्वत्वहानिकल्पनाया उचितत्वादौचित्यासिद्धम्। यच्च भूम्यादावेव कालवैषम्येण भोक्तुः स्वत्वजननं तदपि वचनादेव युक्तं यथा तदेव जन्म पुत्रस्य पितृधने स्वत्व-

जनकत्व तु स्यादिति अत्र प्रदीपकृतः। यत्र हि मत्कृत्ये-दानीं नात्रफलसम्भावना तदधुना तावत्पर एव भुक्त्वा पश्चादेतत् सकाशात् सफलोपभोगां भुवं ग्रहीष्यामीत्याद्यभिसन्धाय भूम्यादि स्वामी तत्र परोपभोगं क्षमते तत्रापि विंशत्याद्यधिकोभोगोऽस्ति स्वामिनस्तदुद्देशेन त्यागश्च नास्तीति व्यभिचारान्नेदृशभोगस्य पूर्वस्वामिस्वत्वत्यागे प्रामाण्यम्। न चात्र सर्वस्वामिना स्वीयत्यागभावप्रतिज्ञा यद्विव्यङ्कार्यन्तत्र च तद्भङ्गे त्यागनिर्णये परिग्रहात्परस्य स्वत्वं निर्बाधमिति वाच्यम्। यतस्तथापि पूर्वभोगसिद्धस्य पूर्वस्वामिपरिग्रहस्य त्यागानवधारणकालीनत्वेन भोक्तुः स्वत्वाजनकतया तद्वैयर्थ्यात्। किञ्च भूस्वामी सचेताः किमिति वृथैव तत्र स्वत्वं जह्यात्। न ह्यत्र दृष्टमुद्दिश्यन्नाप्यदृष्टं धर्मशास्त्रोक्तेति कर्त्तव्यताविरहात्। मद्देक्षत्वसुशीलत्वदयालुत्वादिनापि न त्यागसम्भवः। स त्यजन्नपि तैरेव हेतुभिः क्षमत इत्यस्यापि सम्भवात्। नापि यदुद्देशेन यत्त्यज्यते तत्तस्य स्वमिति नियमः। उद्देश्येनागृहीते व्यभिचारात्। अपि च। त्यागाद्भोक्तुः स्वत्वं स्वरूपसतोज्ञाना द्वा नाद्यः। अदृष्टचरत्वात्। द्वितीये च तज्ज्ञानम्भोक्तुः स्वामिवचनात् स्यात्तथा च तदुद्देशेन मयेदन्त्यक्तमिति स्वामिनस्तदभिसन्धिपूर्वकं वचनं ज्ञापकदानमेवेति त एव स्वामिनः स्वत्वध्वंसे कृतमुपेक्षानुसरणेन नच यथोक्तक्षमयैव त्यागानुमानं अत्यक्तेऽपि सौशील्यादीनां क्षमारम्भात्। नचैवं यथोक्ताक्षमया भोक्तुः स्वत्वानुमानमपि न स्यात्। पूर्वस्वामिनः स्वत्वसत्वेऽपि सौशील्यादिना तस्य अन्यथासिद्धत्वादिति वाच्यम्। तावत्कालं सौशील्यादिना क्षमायाः असम्भवसहकृतो भोगो भोक्तुः

स्वत्वप्रमापकइतिस्मृतिबलादवगतम्। तच्च स्वत्वं पूर्वागमाद्वोत्पद्यते स्वामिनोभोक्तुद्देशेन तद्दस्तुत्यागाद्देत्यत्र ततोग्रह इति अत्र वदामः । प्रदीपकृद्भिर्यल्लिङ्गान्तितं चमाया स्तावत्कालीनायाः सौशील्यादिहेतुकत्वासम्भवेन सहकृतो भोगो भोक्तुः स्वत्वं प्रमापयति तच्च भोक्तुः पूर्वागमाद्वोत्पद्यतां भोक्तुद्देश्यकस्वामिकृतत्यागाद्वेत्यत्र ततोग्रह इति तत्र प्रष्टव्यम्भोक्तुः स्वत्वोत्पादकौ पूर्वागमस्वामिकृतभोक्तुद्देश्यकत्यागौ प्रमाप्य तावत्कालीनो भोगो भोक्तुः स्वत्वमनुमापयत्यप्रमाप्य वानाद्यः भोक्तुः पूर्वागमसिद्धौ सम्प्रति तत्स्वामिनः । स्वाम्यासम्भवेन तदीयाप्रतिरव विंशत्यादिवर्षकालीनभोगोपन्यासवैयर्थ्यात् । तेनैव तदनुमानात्र तद्वैयर्थ्यमिति चेत् न तत्र व्यभिचारेणानुमानासम्भवात् भोक्तुद्देश्यकत्यागप्रमापणेऽपि तद्दूषणानपगमात् न द्वितीयः पूर्वस्वत्वध्वंसानवगमे भोगसहस्रेणापि स्मार्त्तकालीनेन भोक्तुः स्वत्वानुमानं वानुमानबाधात् । स्मर्त्तव्यास्मरणरूपयोग्यानुपलब्धेर्जागरूकत्वात् । यश्चात्र ततोग्रह इत्यनास्थावादः सोऽप्ययुक्तः पूर्वागमभोक्तुद्देश्यकस्वत्वत्यागयोः फलभेदेन तत्त्वनिर्णयफलके निर्धारेऽन्यतरनिर्द्धारणस्यावश्यकत्वात् । पूर्वागमोक्ति यदि भोक्तुरेव सम्प्रति स्वामिनमन्यस्याभोक्तुर्मिथ्याभियोगनिबन्धनो दण्डोऽपि स्यान्न केवलम्भूधनहानिः । तस्य स्वत्वस्यागमसिद्धौ तदपलापदण्डमात्रं न मिथ्याभियोगित्वनिमित्तो द्विगुणो दण्डः स्वत्वहानिरुभयपक्षे तुल्या विंशत्यादिग्रहणाविवक्षा प्रसक्तिश्चोभयपक्षेऽपि कच्चा करणीया । भोक्तृपूर्वागमपूर्वस्वामिकर्त्तृकभोक्तुद्देश्यकत्यागस्य द्वित्रादिवर्षोपभोगस्थलेऽपि सिद्धौ भोक्तृस्वत्वस्यावारणीयत्वात् । भव-

देवमताच्च भवन्मतस्य नातीव भेदः यथोक्तभोगो भोक्तुर्हेस्य- कपूर्वस्वामिकर्त्तृकत्यागं कल्पयंस्ततस्तत्स्वत्वध्वंसे सति परि- ग्रहाद्भोक्तुः स्वत्वोत्पत्तिं निर्बाधामादधातीति मदर्थमिदं वचनं बोधयतीति तन्मतन्तच्च त्वयाप्यभ्युपगतन्तावत्कालीनभोगस्य सौशील्यादि हेतुकत्वात्सम्भवेन पूर्वस्वामिन इदानीन्तन भो- गकर्तुर्हेशत्यागं विना तदीयपूर्वागमं विना सम्भवाद्भोक्तुः स्वत्व निमित्तत्वेन तदुभयान्यतरानास्थावादमभ्युपगच्छता तथा च यत्तन्मते नैकान्तिकत्वन्त्वयादूषणमापादितन्तद्भवन्मतेऽपि तु- ल्यम् । यच्च सौशील्यादिहेतुकत्वन्तावत्कालीनक्षमायां न सम्भवतीत्युक्तन्तत्तन्मतेऽपि समाधानक्षममेवेति । वस्तुतस्तु तावत्कालीनक्षमायाः सौशील्यादिहेतुकत्वासम्भवोऽपि न नि- यतः । अति सुशीलतादिस्वभावानामाजन्माप्युपेक्षायाः सम्भ- वात् । वचनसत्त्वेऽति गौरवञ्चोभयमते तुल्यम् । विज्ञानेश्वर- मते त्वतिलाघवरुपपादितमेव । किञ्च स्मार्त्ते काले स्मर्त्तव्या- स्मरणरूपया योग्यानुपलब्ध्या भोक्तुरागमाभावनिश्चये पूर्व- स्वामिनश्च त्यागाभावनिश्चये तदीयपरिग्रहकृतस्वत्वोत्पत्तिपूर्व- स्वामित्वध्वंसावुभावपि कल्पयितुमशक्याविति मतद्वयमपीद- मत्ययुक्तम् । यच्च परमत्र प्रदीपकृद्भिरुक्तम् । आधेरनुपभो- गेन यत्रासिद्धिस्तद्विषयम्मयतो ब्रुवत इत्यादि वचनम् । तेन यत्राधिगृहीताधेयम्भूम्यादि न भुज्यते । किन्त्वाध्यत्र चिर- म्भुक्तान्यत्राधीयते तत्रोत्तरस्याधिगृहीत स्तत्र भूम्यादौ प्रभुत्वं ननु प्रथमस्येत्याधौ प्रतिग्रहे क्रीते पूर्व्वातुबलवत्तरेत्येतदप- वादार्थमिदमीदृशे विषये वचनन्तेनात्र द्वितीयस्यैवाधिः सि- द्धति । यद्वा हानिपदमुपेक्षित कोटौ विचारकाणामुपेक्षानि

सिद्धा न्यूनता प्रतिभातीति संशयतादवस्थ्यपरन्न तु हानिभङ्ग एव। तथा सति हीनस्य ग्टह्यते तादृश इत्यादि वचनसिद्धं दण्डमन्तरेणैव पुनर्व्यवहारदर्शनन्न घटत इति पुनर्विचारेणैवात्रापीति निर्णयः। अतएवोपेक्षिता यथा धेनु वर्षाणि विंशतिर्यथेत्यादिव्यासवचनयोः पश्यन्तमनादृत्य ये यदीये भूमिधने परैरुपभुज्येते तदीयत्वेन ते हीयेते न निह्नीयेते इति व्याख्यानं रत्नाकरकृतापि कृतम्। किञ्च यदि विंशतिवार्षिकी भुक्तिः स्वतो भोक्तुः स्वत्वे प्रमाणन्तर्हि तत एव साध्यसिद्धौ शक्तसन्निधावर्थ इत्यादि कात्यायनवचनेन यद्भोगस्य लेख्यादोषनिराकरणार्थमुक्तन्तद्पार्थकं स्यादिति तदपि चिन्त्यम्। तस्यैतादृगाधिविषयत्वं न प्रकरणादर्थतः शब्दतो वावगम्यते। अस्य चाधिविशेषविषयतायामाधिसीमेत्यस्यैतदपवादस्यैतादृगाधिभिन्नाधिविषयताप्यशाब्दी कल्प्या आधौ प्रतिग्रह इत्यादेरयमपवाद इत्ययुक्तमतिव्यवहितस्य तस्यात्रानुपस्थितेः। विंशत्यादिवर्षात्प्रागपि चैतादृगाधिभोगे परक्रियायाः प्राबल्यस्याप्रतिहतेर्विंशत्यादिग्रहणाविवक्षाप्रसक्तिः। वचनन्तावत्कालीनैतादृगाधिभोग एव तथेति यदि तर्हि स्मृतभूमिधनसामान्यातिक्रमेणैतादृगाधिकृततद्विषयत्वस्याऽशाब्दस्य कल्पनञ्जल्पनमेव। उपेक्षानिमित्तकविचारकसंशयतादवस्थ्यात्पुनर्विचारः कर्त्तव्य इत्येतन्मात्रपरमिदं वचनन्न तु सर्वथा भङ्गरूपहानिपरमिति च यदस्य वचनस्य तात्पर्यान्तरवर्णनं तत्रापि विंशत्यादितः प्रागपि तादृगुपेक्षाहेतुकसंशयतादवस्थ्यापरिहारात् पुनर्व्यवहारप्रवृत्त्यावश्यकत्वे विंशत्यादिपदार्थाविवक्षाप्रसक्ति दुर्वारा। प्रत्युत विंशत्यादिवर्षोत्तरं तादृगुपे-

च्छाया: पुनर्विचारपुरःसरं निर्णयः कर्त्तव्यः प्राक्तनेत्यनौचित्या-पत्तिश्च न प्राङ्गोपेक्षककोटिन्यूनता प्रतिभासंस्चिरतरोपेक्षाया-स्तावदेकः स इति शक्यम्। सत्यां सामग्र्यां प्रागपि तस्य वार-यितुमशक्यत्वादसत्यामूत्तरमपि तदसम्भवात्। कालविशेष-नियमानुपपत्तेः। हानिपदस्यानिश्चयपरता च बहुषु वच-नेष्वयुक्तास्मिन् पक्षे प्रसज्यते। यच्चोक्तं तावत्कालीनभोगस्य भोक्तृस्वत्वोत्पत्तिहेतुत्वस्य यथाश्रुतस्याश्रयणे शतस्य सन्नि-धावर्थ इत्यादि वचनोक्तं लेख्यादिप्रमाणान्तरस्वत्वसाधकस्य दोषनिराकरणपार्थक्यं तावद्भोगादेव स्वत्वसिद्धिरिति तादृग् वचनतात्पर्यवीजमदृष्टमूलकं विज्ञानयोगिव्याख्याने तदन-भ्युपगमात्। वाचस्पतिस्तु हानिबोधकस्मृतीनां प्रमाणपरिपा-लनकर्त्तव्यताविधिशेषत्वम्। यस्मादुपेक्षायां हानिशङ्का भवति तस्मात्स्वपरिमाणं सर्वथा परिपालनीयं नतु तत्रोदासितव्यमि-त्यत्र तात्पर्य्यम्। अतएव कल्पतरौ हानिवचनानि लिखितप्रमा-णपरिपालनमुपसंहृतमित्याह तदपि यद्वा तद्वा। विंशत्यादि-ग्रहणाविवक्षाप्रसक्तितादवस्थ्यात्। ततः प्रागपि प्रमाणपरि-पालनस्यावश्यकत्वात्। हानिशङ्काप्रसक्तितौल्यात्। प्रदेशान्त-रस्य विधिशेषत्वानुपपत्तेरत्र च तद्विध्यश्रवणात्। अन्यत्र स्पष्टं तद्विधिसत्त्वेन तदुन्नयनस्याप्यनुपयोगात्। हानिपदेनाऽतत्-फलकप्रमाणापरिपालनलक्षणया तत्प्रतियोगिभूतप्रमाण-परिपालनकर्त्तव्यतापरत्वेऽत्यन्तक्लिष्टत्वापत्तेश्च। तस्मात् स-मस्तदोषशून्याविज्ञानयोगिव्याख्यैवास्य वचसो ज्यायसी। ननु अध्यासनात्समारभ्यभुक्तिर्यस्याविघातिनी। त्रिंशद्वर्षाण्य-विच्छिन्ना तस्य तां न विचालयेदिति बृहस्पतिवचने त्रिंशद्व-

र्षभुक्तेर्हान्यापादकत्वोक्ता विंशतिवर्षभुक्तेस्तन्यूनवर्षभुक्तेरिव-हान्यनापादकत्वमर्थसिद्धिरिति योगीश्वरव्यासादिवचनैरस्य विरोधः। नैवम्। योगीश्वरादिवचनेषु ब्रुवत इत्येतावन्मात्राभिधानादत्र विरुद्धवाङ्मात्रमपि भूमिस्वामिनो नास्ति तत्र विंशतिवर्षभोगएव हानिकारणम्। बृहस्पतिवचने तु अध्यासनाद्भूमिपरिग्रहादारभ्य यस्य भुक्तिरविघातिनी यद्-प्रयोगाद्विघातस्य च कलहताडनादिरूपत्वेन लोके प्रसिद्धे वाङ्मात्र विप्रतिपत्तौ सत्यामपि यत्र भोक्ता सहपूर्वस्वामिना-तद्भोगप्रतिरोधकं कलहताड़नादिना चरितन्तत् तत्रिंशद्वर्ष-भोगस्तादृशो हान्यापादकप्रतिवचनस्वरसेनैव विरोधपरिहारात् मम तु प्रतिभाति। विंशतिवार्षिकीत्यादि हानिविशेषणाद्-भूम्याद्युत्पन्ननष्टफलस्य विंशतिवार्षिकादेर्हानिस्तावत्कालीनं तत्फलमुपेक्षालक्षणादपराधान्न प्राप्नोति। विंशतिदशवर्षेभ्यः प्रागुक्तभोगकालगणनया तदुत्पन्नं नष्टमपि फलं निष्क्रयरूपेण लभत एव विंशत्यादिशब्दोपादानात्। अन्यथा यावत्कालीन-परकृतभोगोपेक्षा तावत्कालीन नष्टफलहानिमेव सामान्येन वदेत्। एतावत्या विंशत्यादिग्रहणार्थकत्वे विंशत्याद्यधिक-वर्षीय फलहानिर्दण्डापूपिकया सिध्यति भुक्तिविशेषणतायामिव विंशत्यादिसञ्ज्ञायाः न चैवं वचनान्तरसंवदा यत्तद्भुक्ति-विशेषणत्वव्याख्यातोऽस्य व्याख्यानस्य न फलतो विशेष इति वाच्यम्। यतो विंशत्यादिग्रहणस्य भुक्तिविशेषणत्वे कियत्-कालीन नष्टफलहानिरिति साकाङ्क्षेति। अतएवापराधा-भावादाध्यादौ न तद्धानिरपीत्याह योगीश्वरः।

आधिसीमोपनिक्षेपजड़बालधनैर्विना ।
तथोपनिधिराजस्त्री श्रोत्रियाणां धनैरपि ॥

भोग्याधेर्भोगार्थमेवाधीकरणादुपेक्षायामपि न स्वामिनोऽपराधः गोप्याधौ स्वाम्यनुमितिमन्तरेण भोक्तुमपराधातिशयमापादयितुमेवोपेक्षोपपत्तिः । जडबालयोस्त्वज्ञत्वादेवोपेक्षा । उपनिध्युपनिक्षेपयोरपि भुक्तेः प्रतिषिद्धत्वात्तदतिक्रमे चोपनिक्षेपे पुरुषनिधातुश्च सोदयतल्लाभादुपेक्षा । राज्ञोऽनेकराजकार्य्यव्यग्रत्वात् स्त्रीणामप्रागल्भ्यानभिज्ञत्वाभ्यां श्रोत्रियस्याध्ययनाध्यापनतदर्थविचारश्रौतस्मार्त्ततत्तत्कर्मानुष्ठानव्यस्ततयेति सर्वत्र स यथायथमपराधविशेषसमाधानसहकृतादस्माद्वचनादत्र कदाचिन्नष्टोपचयहानिरपि भवतीत्यर्थः । अतएवाध्यादिभोगे दण्डमधिकमाह स एव ।

आध्याधीनां विहर्त्तारं धनिने दापयेद्धनम् ।
दण्डञ्च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥

एतत्प्रस्तावे विवेचयिष्यामः । क्वचिदन्यत्रापि नष्टफलहान्यपवादो मनुनोक्तः ।

सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥

दम्यो दमनार्थं यः प्रयुज्यते । मनुनारदौ ।

आधिः सीमा बालधनं निक्षेपोपनिधी स्त्रियः ।
राजस्वं श्रोत्रियस्वञ्च न भोगे न प्रणश्यति ॥

नारदः । अन्वाहितं हृतं न्यस्तम्बलावष्टम्भयाचितम् ।
अप्रत्यक्षञ्च यद्भुक्तं निक्षेपोपनिधी स्त्रियः ॥

अन्वाहितमेकत्राहितमन्यत्र पुनराहितम्। बलावष्टम्भयाचितं राजादिबलावष्टम्भेन स्थापितम्। इतरत्प्रसिद्धम्।

बृहस्पतिः। भुक्तिस्त्रैपूरुषी सिद्धेदपरेषां न संशयः।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिद्यति॥
अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम्।
सुहृद्बन्धु सकुल्यस्य न तद्भोगेन हीयते॥
विवाह्य श्रोत्रिये भुक्तराजामात्यैस्तथैव च।
सुदीर्घेणापि कालेन तेषां सिद्धेन्न तद्धनम्॥

चित्तापनयनेषु च।
बालश्रोत्रियवित्ते च प्राप्ते च पितृतः क्रमात्।
नोपभोगे बलङ्कार्य्यं माहर्त्ता तत्सुतेन वा॥
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः।

भोगन्नकल्पयेत्प्रमाणत्वेन नाद्रियेतेत्यर्थः॥ गौतमः। अजड़ापोगण्डधनं दशवर्षभुक्तम्परैः सन्निधौ भोक्तुर्न श्रोत्रियप्रव्रजितराजपुरुषैः। पशुपुरुषस्त्रीणामनतिभोगः अतिभोगेन हानिरेवेत्यर्थः।

कात्यायनः। स्वजातिभिर्बान्धवैश्च भुक्तं यत्स्वजनैस्तथा।
भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत्॥

अन्येष्वसंबद्धेषु। सर्वत्रोपभोगे सकुल्यत्वाद्यनुरोधेन शीलादेरुपेक्षाहेतोः सम्भवान्न भोगस्यान्यथोपपन्नस्य स्वत्वहेतुकल्पनाद्वा स्वत्वसाधकत्वं नाप्युपचयहानि हेतुत्वमिति तात्पर्य्यम्। क्वचिदेकदेशोपभोगेन समस्तसिद्धिमाह बृहस्पतिः।

यद्येकशासने ग्रामे क्षेत्रारामाश्च लेखिताः।
एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते ॥
आगमेऽपि बलन्नैव भुक्तिस्तोकापि यत्र नो ॥

इत्यस्यायमपवादः। एकशासनपत्रारूढेषु किञ्चिदुपभोगेऽपि शासनारूढभोगस्यानपेतत्वान्न प्रत्येकभोगापेक्षेत्याशयः। विच्छिन्नभोगनिर्णयोपायमाह।

बृहस्पतिः। छिन्नभोगे गृहे क्षेत्रे सन्दिग्धं यत्र जायते।
लेख्येन भोगविज्ञैर्वा साक्षिभिः शुद्धिमाहरेत् ॥
नामघाटागमं सञ्ज्ञां कालन्दिग्भागमेव च।
भोगच्छेदनिमित्तञ्च ये विदुस्तत्र साक्षिणः ॥
तदुत्पन्नाश्च सामन्ता येऽन्यदेशे व्यवस्थिताः।
मौलास्ते तु समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥
अदुष्टास्ते तु यद्ब्रूयुः सन्दिग्धे समदृष्टयः।
तत्प्रमाणं प्रकर्त्तव्यमेवं धर्मो न हीयते ॥
स्थावरेषु तदाख्यातं लाभभोगप्रसाधनम्।
प्रमाणहीनवादे तु निर्द्दिष्टा दैविकी क्रियेति।
सीमा विवादनिर्णय एतत्प्रपञ्चं विवेच्यामः ॥

एवम्भुक्तिर्निरूपिता। युक्तिस्वरूपमाह। कात्यायनः। लिङ्गोद्देशस्तु युक्तिः स्यादिति। लिङ्गस्याग्निदत्वाद्यव्यभिचारिण उल्काहस्तत्वादेरुद्देशो निश्चयः तेन चाग्निदत्वाद्यनुमानम्। यद्यपि भुक्तिरपि निरन्तरत्वनिराक्रोशत्वादिप्रागुक्तविशेषणोपहितानुमानविषयाऽर्थापत्तिविषया वा साधिकेति तत्रापि लक्षणमिदमतिप्रसक्तमेव वक्ष्यमाणचोदना अप्रतिका-

लेऽपि तथा ऽस्मत्प्रसिद्धिबलाद्गोद्दोषवत्तद्भिन्नलिङ्गोद्देश एव युक्तिरूपत्वेन लक्ष्यः। अतएव तत्प्रवृत्तिस्थलान्याह्यमेवाह नारदः।

असाक्षि प्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्त्तिताः।
लक्षणान्येव साक्षित्वे तेषामाहु र्मनीषिणः॥
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः।
केशाकेशिगृहीतश्च युगपत्पारदारिकः॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः॥

समीपग इत्यत्रापि सम्बध्यते। तच्चाविनाभावापादकविशेषणान्तरोपलक्षणम्।

प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः।
असाक्षि प्रत्यया ह्येते पारुष्ये तु परीक्षणम्॥

साक्षित्वे साक्षिकार्य्ये प्रत्यक्षचिह्नैः शोणितभग्नखड्गादिभिः। पारुष्ये वाक्पारुष्ये परीक्षणं साक्षिगवेषणम्। यद्यपि तत्रापि गालिदानादिश्रवणं प्रत्यक्षचिह्नं सम्भवति। तथापि प्रथमप्रवृत्त्यादिनिश्चयाय साक्ष्याद्यपेक्षेति ध्येयम्। शङ्खलिखितौ। केशाकेशिग्रहणात् पारदारिकः। उल्काहस्तोऽग्निदः। शस्त्रपाणिर्घातको लोप्त्रहस्तश्चौरः। केशाकेशिग्रहणादिति स्त्रीसंग्रहणे वक्ष्यमाणानामन्येषामपि चिह्नानामुपलक्षणम्। लोप्त्रं चौर्य्यप्राप्तं वस्तु। बृहस्पतिः।

असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः।
शपथैर्वानियुञ्जीत उपधां वा प्रयोजयेत्॥

उपधा युक्तिरिति कल्पतरौ। शपथाभ्यनुज्ञानमन्यया सिद्ध्युक्त्यभावे ज्ञेयमत एव नारदः।

युक्तिष्वप्यसमर्थासु शपथैरेव मर्दयेत्।

अर्दयेत् पीडयेत्। पराजयेदिति यावत्। चोदना अप्रतिकालस्वरूपन्तु चोदनाया धनदानादिविषयकप्रेरणाया अप्रतिकालोऽप्रतिषेधः। सोऽपि यद्यस्य ऋणादिसम्बन्धीनस्याद्याच्यमान एवं निराकुर्य्यादनिराकरणादस्यास्यानेन सम्बन्ध इत्यर्थापत्तिविधयाऽनुमानविधया वा ऋणादिसम्बन्धं साधयन् भवति प्रमाणम्। इदमेवाभिप्रेत्याह कात्यायनः।

अर्थिनाभ्यर्थितो यस्तु विघातन्न प्रयोजयेत्।
त्रिचतुःपञ्चकृत्वो वा परतस्तदृणीभवेत्॥

नारदोऽपि। अभीक्ष्णञ्चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः।

त्रिश्चतुः पञ्चकृत्वो वा परतोऽर्थं स दाप्यते॥

परतस्तदूर्द्धम्। चोदना अप्रतिकालस्य शीलादिप्रयुक्तस्यापि सम्भवाद्युक्त्यादिसहकार्य्यपचमाह। नारदः।

चोदनाऽप्रतिकालश्च युक्तिलेशस्तमन्वयात्।
देशकालार्थसम्बन्धपरिमाणं क्रियादिभिः॥

अतएव तस्य विषयमप्याह। स एव।

प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः।
अर्थञ्चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः॥
चोदनाप्रतिकालश्च युक्तिलेशस्तथैव च।
तृतीयः शपथः प्रोक्तस्तैरेवं साधयेत् क्रमात्॥

कात्यायनः। दानं प्रज्ञापनाभेदः सम्प्रलोभक्रियाच या।

चिन्तापनयनञ्चैव हेतवो हि विभावकाः॥

एषामन्यतमो यत्र वादिना भावितो भवेत् ।
मूलक्रिया तु तत्र स्याद्भावितो वादिनिह्नवे ॥

दानं उत्कोचदानं । प्रज्ञापनाभेदः प्रज्ञापकस्वहस्तचि-ह्नाद्यन्यथाकरणम् । सम्प्रलोभक्रिया साक्षिसभ्यादिभ्यो लोभ प्रदर्शनं चित्तापनयनं चित्तगोपनम् । एषामन्यतमो हेतु र्यत्र वादिना प्रतिवादिना ऽधमर्णादेरुपरिभावितः प्रमाणेन साधितो भवेत्तदा मूलक्रिया ऋणापहरणादिरूपा तदुपरि-सिद्धैव । एषान्तदविनाभावादिति भावः । एवं साक्षिलेख्य-भुक्तिरूपन्त्रिविधं मानुषं प्रमाणं निरूपितम् ।

अथ दिव्यान्युच्यन्ते ।

तत्र दिव्यन्नाम मानुषप्रमाणाभाव एव यन्निर्णायकं तदु-च्यते । यत्तु स्मृतितत्त्वे । एवकारस्थे अपिशब्दन्दत्वा मानुष-प्रमाणसत्त्वेऽपि यत्र दिव्याङ्गीकारस्तत्रापि तद्भवतीति प्रयो-जनमुक्तन्तदयुक्तम् । एषामन्यतमाभावे दिव्यान्यतममिति वदता याज्ञवल्क्येन प्रमाणहीने वादे तु निर्दोषा दैविकी क्रि-येति वदता बृहस्पतिना च युक्तिष्वप्यसमर्थासु शपथैरेनमर्दये-दिति नारदेनापि मानुषप्रमाणासत्वे एव दिव्यस्य विधानात् । तत्र बृहस्पतिः दिव्यभेदानाह ।

घटोऽग्निरुदकञ्चैव विषं कोशस्तु पञ्चमः ।
षष्ठन्तु तण्डुलाः प्रोक्ताः सप्तमन्तप्तमाषकम् ॥
अष्टमम्फालमित्युक्तं नवमन्धर्मजन्तथा ।
दिव्यान्यैतानि सर्वाणि निर्दिष्टानि स्वयम्भुवेति ॥

नारदः । युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
अर्थकालबलापेक्ष मग्न्यम्बुसुकृतादिभिः ॥

घटोऽग्निरुदकं चैव विषं कोशस्तु पञ्चमः ।
उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः ॥
सन्दिग्धे ऽर्थेऽभियुक्तानाम्परीक्षार्थं महात्मनाम् ।
प्रोक्तानि नारदेनेह सत्यानृत विशुद्धय इति ।

अर्द्धयत्पीडयेत् । अर्थापेक्षत्वं सिसाधयिषितार्थस्याल्पत्व-महत्त्वानुरूपमित्यर्थः । नन्वेषामपि शपथानां मानुषप्रमाणा-भाव एव निर्णायकत्वेन दिव्यत्वात् कथं दिव्यानि नवेत्य-भिधानम् । तथा च शङ्खः । तत्र दिव्यं नाम तुलाधारणं विषाशनमप्सु प्रवेशो लोहधारणं मिष्टापूर्त्तप्रदानमन्यांश्च शप-थान् कारयेदिति । तांश्च शपथानाह बृहस्पतिः ।

सत्यवाहनशस्त्राणि गोवीजकनकानि च ।
देवब्राह्मणपादांश्च पुत्रदारशिरांसि च ॥
एते च शपथाः प्रोक्ताः स्वल्पार्थे सुकराः सदेति ।

नारदोऽपि । सत्यवाहन शस्त्राणि गोवीजकनकानि च ॥
देवतापितृपादांश्च दत्तानि सुकृतानि च ।
स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदान्तथा ॥
अभियोगेषु सर्वेषु कोशपानमथापि वा ।
इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारण इति ।

सत्यम् । अत्र समनन्तरभाविनिर्णयनिमित्तस्य दिव्यत्वेन विवक्षितत्वात् । तादृशत्वञ्च घटादीनामेव नतु शपथानान्ते-षां कालान्तरभाविनिर्णयनिमित्तत्वात् । नन्वेवं कोशस्य कथन्तेषु ग्रहणमिति चेत् सत्यम् । तस्य तेषु पाठोमहाभि-योगविषयत्वसाम्यात् सावष्टम्भाभियोगविषयत्वसाम्याच्च । वस्तु-तस्तु शपथानामपि नारदादिवचनानुसाराद्गोबलीवर्दन्यायेन

दिव्यत्वाभ्युपगमेन नवशब्दस्योपलक्षणत्वात्। तथा च नारदः।

युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
अर्थकालबलापेक्षमग्न्यम्बु सुकृतादिभिः ॥
घटोऽग्निरुदकञ्चैव विषं कोशश्च पञ्चमः ।
उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः ॥

दिव्यं नाम तुलारोहणम् । विषाशनमप्सु प्रवेशो लोहधारणमिष्टापूर्त्तप्रदानमन्यांश्च शपथान् कारयेत् । मनुः ।

असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः।
अविदंस्तत्त्वतः सत्यं शपथेनापि लम्भयेत् ॥
अग्निं वाहारयेदेन मप्सु चैनन्निमज्जयेत् ।
पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत् पृथक् ॥
यस्माद्देवैः प्रयुक्तानि पुष्करार्थे महात्मभिः ।
परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ॥
असाक्षिकेष्विति मानुषप्रमाणरहितेष्वित्यर्थः ।

उद्दिष्टानां दिव्यानां मध्ये तुलादीनि महाभियोगे प्रयोक्तव्यानि । तथा च याज्ञवल्क्यः ।

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥
रुच्या वान्यतरः कुर्यादितरो वर्त्तयेच्छिरः ।
अत्राग्निशब्देन तप्तायः पिण्डादयो गृह्यन्ते ॥

शीर्षकं लक्षणया जयपराजयनिमित्तो दण्डः तत्प्रयुक्तदण्डभागीत्यवरुच्या इच्छया । इतरः अभियुक्ताभियोक्त्रोरन्यतरः । इतरः शिरोवर्त्तयेत् । दण्डं स्वीकुर्यादित्यर्थः । ननु कोशमल्पेऽपि दापयेत् । इति स्वल्पाभिप्रेतोऽपि कोशस्य

विधानात् कथं महाभियोगेष्वेतानीति चेन्न। तस्य तुला-दिषु पाठः योऽवष्टम्भाभियोगेऽपि प्राप्त्यर्थः। नतु महाभि-योगेष्वेवेति नियमार्थः। अन्यथा कोशस्य शङ्काभियोग एव प्राप्तिः स्यात्।

अवष्टम्भाभियुक्तानान्धटादीनि विनिर्दिशेत्।
तण्डुलांश्चैव कोशञ्च शङ्कास्वेतौ नियम्य चेति॥

पितामहस्मरणात्। अवष्टम्भः शीर्षकस्थः। अवष्टम्भोऽत्र निश्चय इति स्मृतितत्त्वे। यदा शीर्षकस्थोऽभियोक्ता नस्यात्तदा एतानि दिव्यानि न स्यादिति। तथा च नारदः शिरोवर्त्ती यदा न स्यात्तदा दिव्यं न दीयत इति। इति दिव्यदाने नियममाह।

पितामहः। अभियोक्ता शिरः स्थाने दिव्येषु परिकीर्त्त्यते।
अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात्॥

इति कात्यायनोऽपि।

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेदिति।

अभियुक्ताय दातव्यमित्यस्यापवादं रुच्यावान्यतर इत्यने-नाह याज्ञवल्क्यः। नारदोऽपि।

परियोक्ता शिरः स्थाने सर्वत्रैकः प्रकल्पितः।
इच्छयात्वितरः कुर्य्यादितरो वर्त्तयेच्छिर इति॥

क्वचिद्विषयविशेषे विरोधिनापि दिव्यन्देयमित्याह।

याज्ञवल्क्यः। विनापि शीर्षकात्कुर्य्यान्नृपद्रोहेऽथपातक इति।

शीर्षकाद्विनापि पराजयप्रयुक्तदण्डभागिनोभियोक्तुरभा-वेऽपि। पातके ब्रह्महत्यादौ।

कात्यायनोऽपि। पार्थिवैः शङ्कितानाञ्च निर्दिष्टानाञ्च दस्युभिः।
आत्मशुद्धिपराणाञ्च दिव्यन्देयं शिरो विनेति॥
कालिकापुराणेऽपि। परदाराभिशापे च चौर्य्यागम्यागमेषु च।
महापातकशस्ते च स्याद्दिव्यं नृपसाहसे॥
विप्रतिपत्तौ च विवादे ऽवर्णस्थापने कृते।
तत्रैव स्थापयेद्दिव्यं शिरः पूर्वम्महीपतिः॥
परदाराभिमर्षे च बहवो यत्र वादिनः।
शिरोहीनम्भवेद्दिव्यमात्मनः शुद्धिकारणादिति॥

विप्रतिपत्तौ परदारगमनाद्यभियोगरूपायां विवादे ऋणादानादिविषये अवर्णोऽपवादः। परदाराभिमर्षे चेति चौर्य्यादीनामप्युपलक्षणम्। विष्णुः।

राजद्रोहे साहसे च विना शीर्षं प्रवर्त्तनादिति।

विषयविशेषेषु दिव्यविशेषानाह संग्रहकारः।
घटादीनि विषान्तानि गुरुष्वर्थेषु दापयेत्।
पितामहोऽपि। अवष्टम्भाभियुक्तानां घटादीनि विनिर्दिशेत्॥
तण्डुलांश्चैव कोशञ्च शङ्कास्वेतौ नियोजयेत् इति॥
कात्यायनः। शङ्काविश्वाससन्धाने विभागे रिक्थिनां सदा।
क्रियासमूहकर्त्तृत्वे सम्भूयैकक्रियाकारित्वे॥
पितामहोऽपि। विश्रम्भे सर्वशङ्कासु सन्धिकार्य्ये तथैव च।
एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये॥
शिरःस्थापि विहीनानि दिव्यादीनि विवर्द्धयेत्।
घटादीनि विषान्तानि कोश एकः शिरः स्मृत इति॥

तण्डुलानां विषयं स एवाह।
चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चय इति॥

अन्यत्र स्त्रीसंग्रहादौ न तु दत्तापह्नवे। तदर्द्धार्द्धस्य तण्डुला इति वक्ष्यमाणकात्यायनवचनेन तण्डुलदिव्यविधानात्। एतदल्पचौर्य्यशङ्कायां वेदितव्यम्।

चौर्य्येऽभिशङ्कायुक्तानान्तप्तमाषो विधीयते।

इति महाचौर्य्यशङ्कायां तप्तमाषस्य तेनैव विधानात्। द्रव्यसङ्ख्या दिव्यविशेषानाह विष्णुः। अथ शपथक्रिया राजद्रोहादिषु यथाकामं निक्षेपर्णस्तेयेष्वर्थप्रमाणादिति। शपथोदिव्यम्। राजद्रोहादिषु यथाकामं राजेच्छानुरोधाद्दिव्यं निक्षेपादिषु धनतारतम्यादित्यर्थः। वस्त्रादिविषयविवादे तु तन्मूल्यद्रव्यपरिमाणं ग्राह्यम्। बृहस्पतिरपि।

विषं सहस्रेऽपहृते पादोने च हुताशनः।
त्रिभागोने च सलिलमर्द्धे देयो घटः सदा।
धनुःशताभियोगे तु दातव्यस्तप्तमाषकः।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्द्धके॥
शतर्द्धेऽपह्नुते च दातव्यं धर्मशोधनम्।
गोचरस्य प्रदातव्यं सद्यः कालावलेहनम्॥
एषा सङ्ख्या निकृष्टानां मध्यानां द्विगुणा स्मृता।
चतुर्गुणोत्तमानाञ्च कल्पनीया परीक्षकैरिति॥

धर्मशोधनम्। धर्मजन्दिव्येन शोधनम्। निकृष्टानाञ्जातिगुणधर्मैः मध्यमत्वमुत्तमत्वञ्च तैरेव। यत्तु। नासहस्राद्धरेत् फालन्न विषं न तुलान्तथेति याज्ञवल्क्यवचनं तन्मध्यमोत्तमपुरुषविषयम्।

यत्तु। सहस्रे तु घटन्दद्यात्सहस्रार्द्धे तथायसम्।
अर्द्धस्यार्द्धे तु सलिलन्तस्यार्द्धे तु विषं स्मृतमिति॥

यत्पितामहवचनन्तद्यत्राल्पद्रव्यापहारे पातित्यं भवति तद्विषयम्। एतत्स्तेयसाहसविषयन्दत्तापह्नवे तु। कात्यायनः।

दत्तस्यापह्नवो यत्र प्रमाणन्तत्र कल्पयेत्।
स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत्॥
सर्वद्रव्यप्रमाणन्तु ज्ञात्वा हेम प्रकल्पयेत्।
हेमप्रमाणयुक्तन्तु तदा दिव्यं प्रयोजयेत्॥
ज्ञात्वा सङ्ख्यां सुवर्णानां शतनाशे विषं स्मृतम्।
अशीतेस्तु विना शेषे दद्याच्चैव हुताशनम्॥
षष्ट्या नाशे जलं देयञ्चत्वारिंशति वै धटम्।
विंशद्दशविनाशे तु कोशपानं विधीयते।
पञ्चाधिकस्य वा नाशे तदर्द्धार्द्धस्य तण्डुलाः।
ततोऽर्द्धार्द्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान्॥
ततोऽर्द्धार्द्ध विनाशे तु लौकिकस्य क्रिया स्मृता।
एवं विचारयन् राजा धर्मार्थाभ्यां न हीयत इति॥

अत्र सुवर्णशब्दः षोड़शमाषात्मकः। नाशोऽपह्नवः। विंशद्दशविनाशे त्रिंशद्विनाशनमिति स्मृतिचन्द्रिकायाम्। पञ्चाधिकस्य पञ्चभ्योऽधिकस्य षट्प्रभृतेरिति यावत्। तदर्द्धार्द्धस्य सुवर्णप्रभृतेः। ततोऽर्द्धार्द्धस्य अष्टमाषो न सुवर्णार्द्धप्रभृतेः। ततोऽर्द्धार्द्धस्य विनाशे सार्द्धसप्तमाषो न सुवर्णार्द्धप्रभृतेर्विनाशे। लौकिकाश्च क्रियाः। अपह्नवे तव दशगुणो द्रव्यनाशो भविष्यतीत्यादिकाः। चशब्दः स्मार्त्तशपथसंग्रहार्थः। अतएवाह विष्णुः। सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत्। तत्र च कृष्णलोने शूद्रन्दूर्वाकरं शापयेत्॥

द्विकृष्णलोने तिलकरम्। त्रिकृष्णलोने जलकरञ्चतुः-

कृष्णलोने सुवर्णकरम्। पञ्चकृष्णलोने सीरोद्धृतमद्दीकरम्। तत्र सुवर्णार्द्धोने कोशो देयः शूद्रस्य ततःपरं यथार्हं धटाग्न्युदकविषाणामन्यतमं द्विगुणार्थे यथाभिहिता समयक्रिया। वैश्यस्य त्रिगुणेऽर्थे राजन्यस्य कोशवर्जञ्चतुर्गुणेऽर्थे ब्राह्मणस्य कोशन्दद्यात्। अन्यत्रागामिकालसमयनिबन्धनक्रियातः कोशस्थाने ब्राह्मणं सीरोद्धृतमद्दीकरमेव शापयेत्। प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत्। सत्सु प्रथितं सच्चरितं न महत्यर्थेऽपीति। सीरोद्धृतमद्दीकरं लाङ्गलोद्धृतलोष्टहस्तमित्यर्थः। उनग्रहणमधिके शापनिवृत्त्यर्थं शापे तु विशेषमाह मनुः।

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैरिति॥

यद्यहमर्थापह्नवी स्यां तदा सत्याभिधानधर्मो मम निष्फलः स्यादिति शपथकारिणं ब्राह्मणं वाचयेत्। एवं क्षत्रियादीनां वाहनादीनि निष्फलानि स्युरित्यादीत्यर्थः। पादस्पर्शादीनां विशेषः स्मृत्यन्तरे दर्शितः।

निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम्।
उनत्रिके तु पुष्पं स्यात् कोशपानमतःपरमिति॥

अत्र निष्कशब्देन कर्षचतुर्थांशो मुद्रामुद्रितः प्रतिपाद्यते। क्वचिद्देशे तत्रापि निष्कव्यवहारात्। न तु मनूक्तो निष्कः। तस्य राजतपलात्मकत्वेन मूलकाञ्चनकर्षादधिकत्वात्। तत्र सत्यवचनविधौ चतुर्गुणेऽर्थे ब्राह्मणस्येति विरोधः स्यात्। दिव्ये दण्डे च मनूक्तं ग्राह्यं परिमाणम्। ग्राह्यमिति बृहस्पतिराह।

संज्ञा रश्मिरजोमूला मनुना समुदाहृता।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथेति॥

संज्ञा परिमाणं रश्मिरजोमूला त्र्यसरेण्वादिका। विनये। दण्डे। तच्च परिमाणं प्रतिज्ञापूर्वकं मनुराह।

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः॥
जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः।
प्रथमं तत्प्रमाणानान्त्र्यसरेणुं प्रचक्षते॥
त्र्यसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः॥
सर्षपाः षड्यवो मध्यस्त्रियवन्त्वेककृष्णलम्।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश॥
पलं सुवर्णाश्चत्वारः पलानि धरणन्दश।
द्वे कृष्णले समधृते विज्ञेयो रौप्यमाषकः॥
ते षोडश स्याद्धरणं पुराणश्चैव राजतः।
धरणानि दश ज्ञेयः शतमानस्तु राजतः॥
कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः।
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणत इति॥

अत्र ताम्ररूप्यसुवर्णानामिति ताम्ररूप्ययोरल्पत्वात्-प्राक्प्रयोगो न तु क्रमप्रदर्शनार्थः। पलानि धरणन्दशेत्यन्तं सुवर्णपरिमाणाभिधानम्। चतुःसौवर्णिकोनिष्क इत्युक्तं रूप्य-परिमाणाभिधानम्। अवशिष्टेन ताम्रपरिमाणाभिधानम्। जालान्तरप्रविष्टे सूर्य्यरश्मौ यत्सूक्ष्मं रजो दृश्यते तत् त्र्यस-रेणुसंज्ञकम् अष्टौ त्र्यसरेणवो लिक्षा राजसर्षपः। त्रयोराज-

सर्षपाः गौरसर्षपः। षड्गौरसर्षपा मध्यमो यवो न सूक्ष्मं न स्थूलमिति। मध्यमयवस्य परिमाणमुक्तं मिताक्षरायाम्। मध्यशब्दः पादपूरणार्थः। तथा च संपूर्णयवपरिमाणमुक्तमिति मनुभाष्ये। त्रयो यवाः कृष्णलम्। माषः पञ्च कृष्णलानि। सुवर्णः षोडश माषाः। पलं सुवर्णाश्चत्वारः धरणन्दश पलानि। रूप्यमाषो द्वे कृष्णले। रजतस्य धरणं षोडशरूप्यमाषाः। अस्य च पुराण इति संज्ञान्तरम्। राजतः शतमानः राजतदशधरणानि राजतपलसंज्ञाप्यस्य भवति। शतमानन्तु दशभिर्धरणैः पलमेवत्विति याज्ञवल्क्यस्मरणात्। पूर्वोक्तसुवर्णचतुष्टयपरिमित एको राजतनिष्कः। कार्षिकः कर्षसंमितः ताम्रिकस्ताम्रविकारः कार्षापणो विज्ञेयः। पण इति च संज्ञा अस्यैव विज्ञेयेत्यर्थः। चशब्दोऽध्याहार्यः। अतएव वृहस्पतिः।

निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः।
ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः॥
स एव चान्द्रिका प्रोक्ता तास्चतस्रस्तु धानकाः।
ता द्वादश सुवर्णस्तु दीनाराख्यः स एव तु इति॥

कर्षः पलचतुर्थांशः। ते षोडशाक्षः कर्षौ स्त्री पलङ्कर्षचतुष्टयमित्यमरसिंहेनाभिधानात्। ते माषाः षोडशाक्षः कर्ष इति च संज्ञेत्यर्थः। तेनाक्षकर्षशब्दयोः सुवर्णपरिमाणवचनत्वमित्यवगम्यते। याज्ञवल्क्यः। पले विकल्पमाह।

पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितमिति॥

तस्य चतुर्थांऽशो विंशतिर्माषाः तत्परिमितः कार्षापणः। अतएव कात्यायनः।

माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु।
काकिणी तु चतुर्भागा माषकस्य पणस्य चेति॥

राजतोऽपि कार्षापणोऽस्तीत्याह नारदः।

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तत इति॥

व्यासस्तु। निष्कस्य प्रमाणमाह।

पलान्यष्टौ सुवर्णास्तु ते सुवर्णाश्चतुर्दश।
एतं निष्कप्रमाणन्तु व्यासेन परिकीर्त्तितमिति॥

वर्णभेदेन दिव्यव्यवस्थामाह नारदः।

ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः।
वैश्यस्य सलिलन्देयं शूद्रस्य विषमेव तु॥
साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः।
विषं विना ब्राह्मणस्य सर्वेषां वा तुला स्मृता इति॥

अनित्या चेयं व्यवस्था।

राजन्येऽग्निघटं विप्रे वैश्ये तोयं नियोजयेत्।
सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तमे॥

इति कात्यायनस्मरणात्। व्यवस्थापक्षे वयोविशेषादिना व्यवस्थापनीयम्। तदाह नारदः।

क्लीवातुरान् सत्वहीनान् परितप्तार्दितान्नरान्।
बालवृद्धातुरांस्त्रींश्च परीक्षेत धटं सदा॥
स्त्रीणान्तु न विषं प्रोक्तं न वापि सलिलं स्मृतम्।
धटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत्॥
नार्त्तानान्तोय शुद्धिः स्यात् न विषं पित्तरोगिणाम्।
श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते।
न मज्जनीयाः स्त्रीबाला धर्मशास्त्रविचक्षणैः॥

रोगिनो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ।
निरुत्साहान् व्याधिक्लिष्टान्नार्त्तांस्तोये निमज्जयेत् ॥
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ।
साहसेऽप्यागतानेतानैव तोये निमज्जयेत् ।
न चापि हारयेदग्निन्न विषेण विशोधयेत् ॥

याज्ञवल्क्यः । तुला स्त्रीबालवृद्धान्ध पङ्गु ब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य चेति ॥

स्त्रीमात्रजातिवयोऽवस्था विशेषानादरेण । बालश्चापोड़शाद्वर्षाज्जातिविशेषानादरेण । वृद्धोऽशीतिकावरः । अन्धो नेत्र विकलः । पङ्गुः पादविकलः । ब्राह्मणो जातिमात्रम् । रोगी व्याधितः । एतेषां शोधनार्थं सर्वदिव्यसाधारणेषु मार्गशीर्षचैत्रवैशाखेषु स्त्र्यादीनां सर्वदिव्यप्रसक्तौ तुलैवेति नियम्यते न तु सर्वकालं स्त्रीणां तुलानियमः कोशादिविधानात् । अग्निः फालसप्तमाषश्च क्षत्रियस्य । जलमेव वैश्यस्य । यवा एवार्थे शूद्रस्य विषस्य सप्तैव यवा उक्तप्रमाणलक्षणा भवन्तीत्यर्थः । ब्राह्मणस्य तुलाविधानात् । अग्निर्जलं वेति क्षत्रियवैश्यविषयमित्यवगम्यते । अतएव पितामहः ।

ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलम्प्रोक्तं विषं शूद्रस्य दापयेदिति ॥

कात्यायनोऽपि । न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदाञ्चैव विषन्दद्यात्तु न क्वचित् ॥
तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणामिति ॥

व्रतिनम्पयोव्रतादिनियमस्थम् । हारीतोऽपि ।
कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।

पित्त श्लेष्मवतां नित्यं विषं च परिवर्जयेत् इति ॥

विष्णुरपि । न श्लेष्मकारिणां व्याधितानाम्भीरूणां श्वास-कासिकाना मम्बुसेविना मुदकं हेमन्तशिशिरयोश्चेति ।

पितामहोऽपि । कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।

पित्त श्लेष्मवतां नित्यं विषन्तु परिवर्जयेत् ॥

मद्यपस्त्रीव्यसनिनां कितवानान्तथैव च ।

कोशः प्राज्ञै र्न दातव्यो ये च नास्तिकवृत्तय इति ॥

यत्तु पितामहेनोक्तम् ।

स ब्रतानां भृशार्त्तानां व्याधितानान्तपस्विनाम् ।

स्त्रीणाञ्च न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यत इति ॥

तुलेतरविषन्तदिति केचित् तदयुक्तम् ॥

घटकोशादिभिस्तासामन्तस्तत्वं विचारयेदिति पूर्वोदाहृतनारदवचनेन स्त्रीणां कोशादिविधानात् । तदग्न्यस्तुविषयमित्युक्तं विद्यारण्यश्रीपादैः । विज्ञानेश्वराचार्यस्तु । पुंस्त्रियो र्विवादे रुच्या वान्यतरः कुर्यादित्यनेन पक्षे स्त्रीणामपि दिव्यप्रसक्तौ पुरुषस्यैव दिव्यन्नस्त्रीणामित्येतत्परमिदम् । अन्यथा सर्वथा तासां दिव्यनिषेधे घटकोशादिभि स्तासामन्तस्तत्वं विचारयेदित्यनेन विरोधः स्यादिति प्राहुः ।

कात्यायनः । गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्द्धुषिकांश्चैव ग्राहयेच्छूद्रवद्द्विजान् ॥ कालिकापुराणेऽपि । वर्णान्त्यस्य सदा देयं माषकं तप्तहेमज मिति । वर्णानामन्त्यः प्रत्यन्त्यः तस्येत्यर्थः । नारदोऽपि ।

महापराधे निर्द्धर्मे कृतघ्ने क्लीवकुत्सिते ।

नास्तिके दृष्टदोषे च शपथानां ते विवर्जयेत् इति ॥

कात्यायनोऽपि । माता पिता द्विजगुरुवृद्धस्त्रीबालघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनाम्प्रमदानाञ्च मन्त्रयोगक्रियाविदाम् ।
वर्णसङ्करजातानां पापाभ्यास प्रवर्त्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वेवं प्रवर्त्तितः ।
दिव्यम्प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेव नियुक्तानां साधूनान्दिव्यमर्हति ।
न सन्ति साधवो यत्र तत्र शोध्याः स्वकैर्नरै रिति ॥

साधूनान्दिव्यमर्हति राजा कल्पयितुमिति शेषः । प्रतिनिधिद्वारा एतैर्दिव्यङ्कारणीयमिति द्रढयितु माह स एव ।

महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयन्तेषु दिव्यन्तु पापाभ्यासरते भृगुः ॥
येषु पापेषु दिव्यानि कर्त्तव्यानि प्रयत्नतः ।
तारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्नर इति ॥

तारयेत् शोधयेत् । अभिशोधनप्रतिनिधिद्वारा शोधनसकारयित्वा न त्यजेदित्यर्थः । यत्तु तेनैवोक्तम् ।

अस्पृश्याधमदासानां म्लेच्छानाम्पापकारिणाम् ।
प्रातिलोम्यप्रसूतानान्निश्चयो नतु राजनि ॥
तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेदिति ।
तत्तैर्नियुक्तानां साधूनामभावे विज्ञेयम् ॥

तत्प्रसिद्धानि सर्पघटादीनि इति स्मृतितत्त्वे साधूनामप्यसामर्थ्ये प्रतिनिधिमभ्युपजानाति स एव ।

कालदेशाविरोधे तु यथा युक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्ययः ।

सामर्थ्याभावे सर्ववर्णविषये विशेषमाह हारीत:,
राजन्येऽग्निं धटं विप्रे वैश्ये तोयन्नियोजयेत्।
न विषं ब्राह्मणे दद्याद्विषं वर्णान्तरे स्मृतम्।
कोशतण्डुलधर्म्मास्तु धर्मसम्भवमेव च॥
पुत्रदारादिशपथान् सर्ववर्णे प्रयोजयेत् इति।

अथ दिव्यकाल:। तत्र पितामह:।

यो यस्य विहित: कालो विधिर्यस्य च यो यथा।
तम्प्रवक्ष्यामि तत्वेन वादितस्य बलाबलम्॥
चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च।
एते साधारणा मासा दिव्यानामविरोधिन:॥
धट: सर्वर्त्तुक: प्रोक्तो वाते वाति विवर्जयेत्।
अग्नि: शिशिरहेमन्त वर्षासु परिकीर्त्तित:॥
शरद्ग्रीष्मे च सलिलं हेमन्ते शिशिरे विष मिति।

विष्णुरपि। स्त्रीब्राह्मणविकलाऽसमर्थरोगिणां न तुला देया न क्वाति वायौ नकुष्ठसमर्थलोह काराणामग्निर्देय: शरद्ग्रीष्मयोश्च न कुष्ठिपैत्तिकब्राह्मणानां विषन्देयम्प्राट्षि च। न श्लैष्मिकाणां व्याध्यर्दितानाम्भीरूणां श्वासकासिनामम्बुजीविना मुदकं हेमन्तशिशिरयोश्चेति। हेमन्तनिषेधोऽत्र पौषमासविषय एव नतु मार्गशीर्षविषयोऽपि। मार्गशीर्षस्य चैत्रो मार्गशिर इति पूर्वोदाहृत पितामहवचनेन सकलदिव्यसाधारणत्वाभिधानात्। नारदोऽपि।

विचार्य्य धर्मनिपुणै र्धर्मशास्त्रविशारदै:।
धर्म्मं सर्वर्त्तुकम्प्रोक्तं पण्डितै र्धटधारणम्॥
वर्षासु समये वह्निं हेमन्तशिशिरे तथा।

ग्रीष्मे सलिलमित्युक्तं विषं काले तु शीतले ॥
न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम् ।
न प्रावृषि विषन्दद्यात् प्रवाते न तुलान्तथा ॥
नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचनेति ।
मध्याह्ने दिव्यनिषेधो जलव्यतिरिक्तविषयः ॥

अतएव पितामहः ।

पूर्वाह्णेऽग्निपरीक्षा स्यात् पूर्वाह्णे च धटो भवेत् ।
मध्याह्ने तु जलं देयं धर्मतत्वमभीप्सिता ॥
दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते ।
रात्रौ तु पश्चिमे भागे विषन्देयं सुशीतल मिति ॥

अत्र विशेषतो वर्षासु निषेधात् । सिंहरवावेव परीक्षामात्र निषेधाच्च दिव्यान्तरं सिंहेतरवर्षास्वपि कुर्वन्ति । अतोयाम्यायने हरौ सुप्ते सर्वकर्मणि वर्जयेदित्यस्य न विषयम्। तथा च ज्योतिषे ।

सिंहस्थे मकरस्थे च जीवे चास्तमिते भृगौ ।
मलमासेन कर्त्तव्या परीक्षा जयकाङ्क्षिणा ॥

तथा । रविशुद्धौ गुरौ चैव न शुक्रेऽस्तङ्गते पुनः ।
सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥
नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तं निरीक्षणे ।
न परीक्षाधिवासश्च शनिभौमदिने भवेत् इति ॥

रविशुद्धौ गुरौ चेदित्यत्र शस्यत इति शेषः. तथा च दीपिकायाम् ।

न शुक्रास्तेऽष्टमेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेऽब्दे ।
विष्णौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाय ॥

नाडीनक्षत्रहीनेगुरुरविरजनीनाथ ताराविशुद्धौ
प्रातःकार्य्या परीक्षा द्वितनुचरग्रहांशोदये शस्तलग्ने॥ इति।

यद्यपि दिव्ये वारविशेषविधानाभावस्तथापि शिष्टाचारादित्यवारे दिव्यानि दातव्यानीति मिताक्षरायाम्। अथदिव्यदेशाः। तत्र पितामहः।

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटः सदाः।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे इति॥

धटग्रहणं दिव्यान्तरस्याप्युपलक्षणम्। इन्द्रस्थानग्रहणञ्च प्रसिद्धदेवतायतनान्तरस्याप्युपलक्षणम्। अतएव दिव्यमात्रमुपक्रम्य नारदः।

सभाराजकुलद्वारे देवायतनचत्वरे इति।

विषयविशेषे इन्द्रस्थानादीनां व्यवस्थामाह। कात्यायनः।

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम्।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत्॥
प्रातिलोम्यप्रसूतानां दिव्यं देयञ्चतुष्पथे।
अतोऽन्येषु तु कार्य्येषु सभामध्ये विदुर्बुधा इति॥

इन्द्रस्थाने इन्द्रध्वजपूर्वस्थाने। दिव्यदेशादनादरे दिव्यं विसम्वदतीत्याह। नारदः।

अदेशकालदत्तानि बहिर्वासकृतानि च।
व्यभिचारे सदर्थेषु कुर्वन्तीह न संशयः॥

वासो जननिवासस्तस्माद्वहिष्कृतानि निर्जनप्रदेशकृतानीति यावत्। अतएव पितामहः।

प्रत्यक्षन्दापयेद्दिव्यं राजा वाधिकृतोऽपि वा।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव चेति॥

ब्राह्मणानां प्रकृतयोऽमात्यास्तेषाञ्चेत्यन्वयः ॥ अथ दिव्य-साधारणविधिस्तत्र बृहस्पतिः ।

स्नेहात् क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः ।
विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचिदिति ॥

विधिश्च पितामहेन दर्शितः ।

दिव्येषु सर्वकार्य्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु यथाध्वर्युः सोपवासो नृपाज्ञया ॥
तत आवाहयेद्देवान् विधिनानेन धर्मवित् ।
वादित्रतूर्यघोषैश्च गन्धमाल्यानुलेपनैः ॥
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
एह्येहि भगवन्धर्म ! अस्मिन्दिव्ये समाविश ॥
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ।
आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ॥

सर्वकार्य्याणि साधारणानि असाधारणानि च तत-स्तदुपयोगिसामग्रीसम्पादनानन्तरमित्यर्थः । घटग्रहणमत्र दिव्यमात्रोपलक्षणम् । अस्मिन्दिव्य इति मन्त्रलिङ्गादेतेषा-न्धर्माणान्दिव्यमात्र साम्यस्य ।

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।
आवाहनञ्च देवानान्तथैव परिकल्पयेत् ॥

इत्युपसंहरता तेनैवोक्तत्वाच्च ।

अङ्गानि कानीत्याकाङ्क्षायां स एवाह,

इन्द्रं पूर्वे तु विन्यस्य प्रेतेशन्दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुवेरञ्चोत्तरे तथा ॥
अग्न्यादि लोकपालांश्च कोणभागेषु विन्यसेत् ।

इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥
कुवेरस्तु सुवर्णाभः अग्निश्चैव सुवर्णभः ।
तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥
ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनास्थापयेद्बुधः ॥
धरोध्रुवस्तथा सोम आपश्चैवानलोऽनिलः ।
प्रत्यूषश्च प्रभातश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥
देवेशेशानयोर्मध्ये आदित्यानान्तथाऽयनम् ।
धातार्यमा च मित्रश्च वरुणांशो भगस्तथा ॥
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णु रजघन्यो जघन्यजः ॥
इत्येते द्वादशादित्या नामभिः परिकीर्त्तिताः ।
अग्नेः पश्चिमभागे तु रुद्रा एकादशाः स्मृताः ॥
वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्नः पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशाम्पतिः ।
स्थाणुर्भवश्च भगवान् रुद्रास्त्वेकादशः स्मृताः ॥
प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैवमाहेन्द्री चामुण्डागणसंयुता ।
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।
पवनः स्पर्शनो वायुरनिलो मरुतस्तथा ॥
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्त्तिताः ।

वटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ॥
एतासां देवतानान्तु स्वनाम्ना पूजनं विदुः ।
भूषावसानं धर्माय दत्त्वाचार्घादिकं क्रमात् ॥
अर्घादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् ।
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥
चतुर्दिक्षु तथा होमः कर्त्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भि र्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ॥

अङ्गानाम् इन्द्रादिदुर्गान्तानाम् । अर्घाद्युपकल्पनञ्च न काण्डानुसमयेन । तथात्वे प्रयोगवचनावगताङ्गसहभाव-बाधापत्तेः । किन्तु पदार्थानुसमयेन तथा च दुर्गायै भूषणं दत्त्वा धर्मस्येन्द्रादिदुर्गान्तानाञ्च गन्धादिपरिचर्यं विप्रकल्पये-दिति गायत्रीं प्रणवादिकामुच्चार्य्य पुनः प्रणवं स्वाहाकारान्त-मुच्चार्य्य समिदाज्यचरुभिः प्रत्येकमष्टोत्तरशतं जुहुयात् । अनुक्त-सङ्ख्या यत्र स्यात् शतमष्टोत्तरं स्मृतमिति स्मरणादित्यर्थः । होमानन्तरकर्त्तव्यं स एवाह ।

यमर्थमभियुक्तः स्याल्लिखित्वा तन्तु पत्रके ।
मन्त्रेणानेन सहितन्तत्कार्य्यञ्च शिरोगतम् ॥

मन्त्रश्च,आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापोहृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति ॥

एतत्सर्वं पूर्वाह्णे कर्त्तव्यम् । तस्य प्रधानकालत्वाच्च । यथा च नारदः ।

अहोरात्रोपोषिते स्नाते आर्द्रवाससि मानवे ।
पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्त्तितमिति ॥

एतत्प्राड्विवाकेनोपवासादिनियमपूर्वकं कर्त्तव्यम्।
तथा च नारदः। प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः।

श्रुतवृत्तोपसम्पन्नः शान्तचित्तो विमत्सरः॥
सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः।
उपोषितश्चार्द्रवासाः कृतदन्तानुधावनः।
सर्वेषां देवतानाञ्च पूजां कृत्वा यथाविधि॥

इति कर्त्तुरुपवासादिकमाह।

त्रिरात्रोपोषिता ये स्यु रैकरात्रोपोषितास्तु वा।
नित्यं देयानि दिव्यानि शुचये सार्द्रवाससे इति॥

याज्ञवल्क्योऽपि। सचैलं स्नातमाहूय सूर्य्योदय उपोषितम्।

कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधाविति॥

अत्र सूर्य्योदयपदेन पूर्वाह्ण एव ग्राह्यः। पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्त्तितमिति नारदवचनानुरोधात्। त्रिरात्रैकरात्रपक्षयोः शक्ताशक्तविषयत्वेन व्यवस्था ज्ञेया दिव्यप्रयोगानन्तरं दक्षिणादानं उक्तेन विधिना दिव्यप्रयोगङ्कारयितुः राज्ञः फलञ्चाह पितामहः।

सद्भिः परिवृतो राजा शुद्धिमेतां प्रपूजयेत्।
ऋत्विक् पुरोहिताचार्य्यान् दक्षिणाभिस्तु तोषयेत्॥
एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान्।
महतीं कीर्त्तिमाप्नोति ब्रह्मभूयाय कल्पत इति॥

अयञ्च विधिः सर्वदिव्यसाधारण इत्याह स एव।

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्।
आवाहनञ्च देवानां तथैव परिकीर्त्तितमिति॥

सर्वदेवावाहनादि संशोध्य शिरसि पत्रारोपणान्तं सर्वदिव्-

साधारणमित्यर्थः। इति दिव्यमातृका। अथ घटविधिः। तत्र पितामहः।

विशालमुच्छ्रितां शुभ्रां घटशालान्तु कारयेत्।
यत्रस्थो नोपहन्येत श्वभिश्चाण्डालवायसैः॥
कपाटवीजसंयुक्तां परिचारकरक्षिताम्।
पानीयादि समायुक्तामशून्यां कारयेन्नृप इति॥

वीजानि यवव्रीह्यादीनि। घटार्थानि काष्ठानि नारद आह।

खादिरं कारयेत्तत्र निर्व्रणं शुष्कवर्जितम्।
शांशपन्तदभावे वा शालं वा कोटरैर्विना॥
अर्जुनन्तिन्दुको सारन्तिलिसो रक्तचन्दनम्।
एवं विधानि काष्ठानि घटार्थं परिकल्पयेत्॥
अर्जुनस्तिलकोऽशोकतिलिसो रक्तचन्दन इति॥

माधवीये पाठः। शांशपमिति पठित्वा व्याख्यातं शांशपं शिंशपावृत्तसम्बन्धि। देविकाशिंशपेति पाणिनिस्मरणादिकारस्याकारः। एवं विधानीत्यन्यस्याप्युदुम्बरादेर्यज्ञियस्य काष्ठस्य समास्य ग्रहणम्। अतएव पितामहः।

छित्वा तु यज्ञियं काष्ठं यूपवन्मन्त्रपूर्वकम्।
प्रणम्य लोकपालेभ्य स्तुला कार्य्या मनीषिभिः।
मन्त्रः सौम्यो वानस्पत्यः छेदने जप्य एव चेति॥

यूपवन्मन्त्रपूर्वकमित्यनेन ॐ ओषधे त्रायस्वैनमित्यादि च्छेदनमन्त्रप्रयोगादिकमुक्तम्। वानस्पत्यः वनस्पते शतवलशो विरोहेति मन्त्रः। छेदने कृत इति शेषः। वानस्पत्यच्छेदनानन्तरं प्रयोगे यूपवदित्यतिदेशात्सिद्धेऽपि पुनर्विधानम् औपदेशिकस्य सोमदैवत्येनातिदेशिकस्य तस्य बाधनिवृत्त्यर्थम्।

अत्र जय एव चेति च शब्दस्य वानस्त्येत्यनेनान्वयात् तस्य च समुच्चयद्योतकत्वात्समुच्चय इति केचित्। सौम्य वानस्त्ययोरेकार्थत्वात्। तुल्यार्थस्तु विकल्पैरनित्यनेन मापेण व्रीहियवादिकल्प इत्यपरे। पितामहः।

प्राङ्मुखो निश्चलः कार्य्यः शुचौ देशे धटः सदा।
इन्द्रस्थाने सभायां वा धर्मस्थाने चतुष्पथ इति॥

धटनिर्माणप्रकारन्तत्प्रमाणञ्चाह पितामहः,

चतुर्हस्ता तुला कार्य्या पादौ कार्य्यौ तथा विधौ।
अन्तरन्तु तयो र्हस्तौ भवेदध्यर्द्धमेव चेति॥

पादौ तुलाधारकाचनामककाष्ठधारणाख्यौ स्तम्भौ तथा विधौ चतुर्हस्तौ। अन्तरं मध्यम्। अध्यर्द्धं सार्धहस्तद्वयम्। अचकाष्ठस्य प्रमाणम्पादस्तम्भमध्यप्रमाणाभिधानेनैव सूचितमिति न पृथगुपन्यस्तम्। अन्तरालप्रमाणपर्य्यालोचनया ततः किञ्चिदधिकमचकाष्ठं कर्त्तव्यम्। पादस्तम्भयोर्मस्तकप्रदेशाद्यथा बहिर्न निःसरति तथा अचकाष्ठङ्कार्यमिति स्मृति चन्द्रिकायाम्। अत्र निखातभागपरित्यागेन पादस्तम्भयोश्चतुर्हस्तत्वाभिधानं ज्ञेयम्। अतएव पितामहः।

हस्तद्वयं निखेयन्तु पादयोरुभयोरपीति॥

व्यासोऽपि। हस्तद्वयं निखेयन्तु प्रोक्तं मुण्डकयोर्द्वयोः।

षड्हस्तन्तु तयोः प्रोक्तं प्रमाणं परिमाणतः॥

इति मुण्डकौ पादस्तम्भौ। हस्तप्रमाणन्दर्शितं कालिकापुराणे।

यवानान्तण्डुलैरेकमङ्गुलञ्चाष्टभि र्भवेत् ।
अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः ॥

इति स्मृत्यन्तरेऽपि ।

तिर्यग्यवोदराण्यष्टा ऊर्द्ध्वा वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलोक्तं हि वितस्तिर्द्वादशाङ्गुलः ॥

शारदातिलके । चतुर्विंशत्यङ्गुलाढ्यं हस्तन्तत्र विदो विदुः ।
यवानामष्टभिः क्लृप्तं मानाङ्गुलमितीरितमिति ॥

हस्तो वितस्ति द्वितयमिति । हस्तो वितस्ति द्वितयो चतुर्विंशत्यङ्गुलो हस्त इत्यर्थः । यवानां यवतण्डुलानामित्यर्थः । यवानान्तण्डुलैरिति स्मरणात् । तुलाया विशेषान्तरमाह पितामहः ।

चतुरस्रा तुला कार्य्या दृढा ऋज्वी तथैव च ।
कटकानि च देयानि त्रिषु स्थानेषु यत्नत इति ॥

कटकानि लोहमयानि वलयानि । त्रिषु स्थानेषु अन्त्ययोर्मध्ये । कटकग्रहणं लोहकीलादीनामुपयुक्तानामुपलक्षणम् । नारदोऽपि । ऋज्वी धटतुला कार्य्या खादिरी तैन्दुकी तथा ।
चतुरस्रा त्रिभिः स्थानैर्धटकर्कटकादिभिरिति ॥

धटो मध्यम् । कर्कटकौ अन्त्यौ पादस्तम्भादीनां स्थूलता तु विशेषानभिधानात् । यावति स्थौल्ये दार्ढ्यम्भवति तावत्येव कार्य्या । शिष्टाचाराद्विशेषो ज्ञेयः । पादस्तम्भावुदग्दक्षिणसंस्थानौ कृत्वा तुला प्राग्भागा कार्य्या । पश्चिमे तोलयेत्कर्त्तॄन् अन्यस्मिन् मृत्तिकां शुभामिति पितामहस्मरणात् । पूर्वपश्चिमसंस्थानौ कृत्वोदग्यामा वा कार्य्याः । धारयेदुत्तरे

पार्श्वे पुरुषं दक्षिणे शिलामिति नारदस्मरणात्। घटाङ्गत्वेन तोरणादिकं कार्यमित्याह पितामहः।

तोरणे तु तथा कार्ये पार्श्वयोरुभयोरपि।
घटादुच्चतरे स्यातान्नित्यन्दशभिरङ्गुलैः॥
अवलम्बौ तु कर्त्तव्यौ तोरणाभ्यामधोमुखौ।
मृण्मयौ सूत्रसम्बद्धौ घटमस्तकचुम्बिनाविति॥

घटारोहणमाह नारदः।

शिक्यद्वयं समासज्य घटकर्कटयोर्दृढम्।
एकशिक्ये तु पुरुषमन्यत्र तुलयेच्छिलाम्॥
धारयेदुत्तरे पार्श्वे पुरुषन्दक्षिणे शिलाम्।
पिटकम्पूरयेत्तस्मिन्निष्टका पांशुलोऽष्टकैरिति॥
इष्टकाभिर्ग्रावभिः पांशुभिर्लोष्टै र्वेत्यर्थः।

सापराशिभिरपि पेटकम्पूरयेत्। सापराशिमथापिवेति स्मृत्यन्तरवचनात्। पितामहोऽपि।

शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि।
प्रागग्रान् कल्पयेद्दर्भा स्तत्र विप्रः समाहितः॥
पश्चिमे तोलयेत्कर्त्तृ नन्यस्मिन्मृत्तिकां शुभाम्।
इष्टकाभस्मपाषाण कपालास्थिविवर्जिता मिति॥

अत्र इष्टकापाषाणयो र्वर्ज्यत्वोक्तिः। समुच्चय निराकरणार्थो नतु विकल्पनिराकरणार्थः। पूर्वोदाहृतनारदवचने तयोरपि विधानात्। एतेन मृत्तिकापाषाणादीनां सम्भूयतोलन कर्त्तृत्वमिति मतमपास्तम्। मृत्तिकाशिलेष्टकादीनामेकार्थत्वात्तुल्यार्थास्तु विकल्पेरन्निति न्यायेन विकल्प इति मिताक्षरायाम्। विष्णुरपि। अत्रैकशिक्ये पुरुषमारोपयेत्।

द्वितीये प्रतिमानं शिलादीति। समतानिरीक्षणार्थं राज्ञा तद्विदो नियोक्तव्याः। तथा च पितामहः।

परीक्षका नियोक्तव्यास्तुलामानविशारदाः।
वणिजो हेमकाराश्च कांस्यकारास्तथैवचेति।
नियुक्ताश्च नियोक्तारन्नित्याह नारदः॥
सुवर्णकारा वणिजाः कुशलाः कांस्यकारकाः।
तान्तुलामन्ववेक्षेरन् तुलाधारणकादिह इति॥

निरीक्षणं प्रत्याह पितामहः।

कार्य्यः परीक्षकैर्नित्य मवलम्बय समो धटः।
उदकञ्च प्रदातव्यं धटस्योपरि पण्डितैः॥
यस्मिन्न प्लवते तोयं स विज्ञेयः समो धट इति।

अवलम्बसमः तोरणयो र्लम्बमानौ यौ सूत्तोयाववलम्बौ तयोः समः। नारदोऽपि।

प्रथमारोहणे ग्राह्यं प्रमाणन्निपुणैः सह।
तुलाशिरोभ्यान्तुल्यं तु तोरणन्यस्तलक्षण मिति॥

तोलनानन्तरं कर्त्तव्यम्पितामह आह।

तोलयित्वा नरम्पूर्वं पश्चात्तमवतार्य्य तु॥
धटं तु कारयेन्नित्य पताकाध्वजशोभितम्।
तत आवाहयेद्देवान्विधिनानेन मन्त्रवित्॥
वादित्र तूर्य्यनिर्घोषै गन्धमाल्यानुलेपनैः।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततोवदेत् इति॥

विवादानुरूपं प्रश्नम्पृच्छतीति प्राट्तद्विवेचयतीति विवाकः प्राट्चासौ विवाकश्च प्राड्विवाकः। ततोऽभियुक्तं तोलयित्वा ऽवतार्य्य धर्म्मावाहनादारभ्याभियुक्तशिरसि पत्र बन्ध-

नान्त साधारणविधिं कुर्य्यात्। घटपूजायाङ्गन्धादिविशेष-न्नारद आह।

रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः।
अर्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेदिति॥

शिष्टानवशिष्टानिन्द्रादीन्। पत्रबन्धनानन्तरं मन्त्रयेत प्राड्विवाक इत्याह पितामहः। घटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित्। विधिना मन्त्रेण शास्त्रवित्प्राड्विवाकः मन्त्रश्च तेनैव दर्शितः।

त्वं घट ब्रह्मणा सृष्टः परीक्षार्थन्दुरात्मनाम्।
धकाराद्धर्ममूर्त्तिस्त्वण्टकारात् कुटिलं नरम्॥
धृतो धारयसे यस्माद्घटस्तेनाभिधीयसे।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च॥
त्वमेव देव! जानीषे न विदुर्य्यानि मानवाः।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छतीति॥

शोध्यस्याभिमन्त्रणञ्चाह। याज्ञवल्क्यः।

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः।
प्रतिमानसमीभूतो रेखां कृत्वावधारितः॥
त्वन्तुले! सत्यधामासि पुरा देवैर्विनिर्म्मिता।
तत्सत्यं वद कल्याणि! संशयान्मां विमोचय॥
यद्यस्मि पापकृन्मात! ततो मान्त्वमधो नय।
शुद्धश्चेद्गमयोर्द्ध्वम्मां तुलामित्यभिमन्त्रयेदिति।

तुलाश्रितः तुलामारूढः। प्रतिमानसमीभूतः। प्रतिमानेन मृदादिना समीकृतः। रेखां कृत्वावतारणे साम्यचिह्नं कृत्वा अभिमन्त्रणमेवावतारणानन्तरं कार्य्यं अवतारित इति त्यक्त

दर्शनात्ततः प्राड्विवाकः तुलाधारकं शपथैर्नियम्य शिरोगतपत्रकं पुनर्घटमारोपयेत्। अतएव नारदः।

समयैः परिगृह्याथ पुनरारोपयेन्नरम्।
निर्वाते दृष्टिरहिते शिरस्यारोप्यपत्रक मिति॥

समयैः शपथैः परिगृह्य नियम्य। तेच विष्णुना दर्शिताः।

ब्रह्मघ्नो ये स्मृता लोकाः ये लोकाः कूटसाक्षिणः।
तुलाधारस्य ते लोकास्तुलान्धारयतो मृषेति॥
पुनरारोहणकाले ऽभिमन्त्रणमाह नारदः।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च॥
त्वमेव देव! जानीषे न विदु र्यानि मानवाः।
व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वयि॥
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि।
देवासुरमनुष्याणां सत्ये त्वमभिषिच्यसे॥
सत्यसन्धोऽसि भगवन्! शुभाशुभविभावने।

आदित्य चन्द्रावनिलो नलश्च द्यौर्भूमिरापोहृदयं यमश्च।
अहश्चरात्रिश्च उभेच सन्ध्ये धर्मश्च जानाति नरस्य वृत्तमिति॥

मन्त्रोच्चारणानन्तरङ्कर्तव्य म्पितामह आह।

ज्योतिर्विद्ब्राह्मणश्रेष्ठः कुर्यात्कालपरीक्षणम्।
विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः॥
साक्षिणो ब्राह्मणाः श्रेष्ठाः यथादृष्टार्थवादिनः।
ज्ञानिनः शुचयो लुब्धा नियोक्तव्या नृपेण तु॥
शंसन्ति साक्षिणः श्रेष्ठाः शुद्ध्यशुद्धी नृपे तदेति।

दशगुर्वक्षरोच्चारणकालः प्राणः ते षट् विनाडिकाः। तया

च स्मृत्यन्तरम्। दशगुर्वक्षरः प्राणः षट्प्राणाः स्याद्विनाड़िकेति विष्णुधर्म्मोत्तरेऽपि। लघ्वक्षरसमामात्रा निमेषः परिकीर्त्तितः।

अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम॥
द्वौ निमेषौ त्रुटिर्ज्ञेया: प्राणोदशत्रुटिः समः।
विनाड़िकास्तु षट्प्राणा तत् षष्ट्यानाड़िकाः स्मृताः॥
अहोरात्रं तु तत् षष्ट्यानित्यमेव प्रकीर्त्तितमिति।

कानिपुनर्जयपराजयचिह्नानीत्यपेक्षायामाह नारदः।

तुलितो यदि वर्द्धेत विशुद्धः स्यान्नसंशयः।
समो वा हीयमानो वा न विशुद्धो भवेन्नर इति॥

वर्द्धेत उपरिगच्छेत्। हीयमानः अधो गच्छेत्। यत्-पुनरुक्तं पितामहेन।

तुलितो यदि वर्द्धेत शुद्धो भवति धर्मतः।
हीयमानो न शुद्धिः स्यादेकेषान्तु समोऽशुचिः॥
अल्पपापः समोज्ञेयो बहुपापस्तु हीयत इति।

अल्पत्वं व्यभिचारे समालिङ्गनादिना चौर्य्ये तद्देशगमनादिना तत्र एकेषामिति पूजार्थं नतु स्वमते समस्य शुचित्वद्योतनार्थम् अल्पपापिनोऽप्यशुचित्वात्। तेन हीयमानसमयोर्न कश्चिद्विशेषः। दण्डं प्रायश्चित्ते परविशेषस्तयोर्द्दोषानुसारित्वात्। यत्तु कैश्चिदेकेषां तु समोऽशुचिरिति वचनम्। अल्पपापः समोज्ञेय इति वचनं साम्ये संशयपरमेवेत्युक्तन्तत्-क्लिष्टकल्पनया वाक्यानार्जवान्तै रुपेक्षणीयम्। यत्तूक्तम्, वृहस्पतिना। घटेभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात्।

तत्समस्तु पुनस्तौल्यो वर्द्धितो विजयी भवेदिति॥

अयमर्थः पुनर्देवतावाहनाद्यङ्गसहितं सर्वं कर्मविधाना-

त्तोलनीय इति समस्याशुचित्वनिश्चयो न प्रथमतोलनपर्य्याये कार्य्यः। किन्तु पुनस्तोल्यमानस्य समतैव यदि भवति तदा अशुद्धिरवधारणीयेत्यर्थ इति स्मृतिचन्द्रिकायाम्। यत्तु कैश्चित्तस्मिन्नेव प्रयोगे तोलनमुक्तं प्रधानावृत्तावङ्गावृत्तिरिति न्यायेन तोलनस्य फलसम्बन्धेन प्रधानत्वात् तदा वृत्तौ देवतावाहनाद्यङ्गानामप्यावृत्तेरेवोचितत्वात्। शिक्यादिच्छेदेपि पुनः समीकृत्य तोलनीय इत्याह। कात्यायनः।

शिक्यच्छेदे तुलाभङ्गे तथा चापि गुणस्य वा।
शुद्धेस्तु संशयेचैनं परीक्षेत पुनर्नरमिति॥

शुद्धिसंशयकारिण्याह नारदः।

तुलाशिरोभ्या मुद्भ्रान्तविचलं न्यस्तलक्षणम्।
यदा वायु प्रणुन्नं वा तदा नैकतरं वदेदिति॥

अयमर्थः। यदा तुलान्तौ तिर्यक् चलितौ यदा च समताज्ञानार्थन्यस्तं चिह्नमयेति यदा च वायुना प्रेरिता तुला ऊर्द्ध्वमधश्च कम्पते तदा जयं पराजयञ्च न वदेदिति। व्यासोऽपि।

कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृप इति॥

कक्षं शिक्यतलं कर्कटौ तुलोपान्तस्थौ शिक्याधारावीषद्वक्रौ कर्कटश्टङ्गसन्निभौ लोहकीलकौ। अक्षः पादस्तम्भयोरुपरिनिहितस्तुलाधारपट्ट इति मिताक्षरा। दार्व्यः प्रयोजकः कीलक इति हलायुधः। यत्तु वृहस्पतिवचनम्।

कक्षच्छेदे तुलाभङ्गे धटकर्कटयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे च तथैवा शुद्धिमाप्नुयादिति॥

तदाकस्मिककक्षच्छेदादिविषयम्। कात्यायनवचनं तु

दृश्यमानकारणकशिरश्छेदादिविषयमिति विज्ञानेश्वराचार्यादयः इति धटविधिः॥

अथाग्निविधिः।

तत्र पितामहः। अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम्।

कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमन्तथा॥
आग्नेयं मण्डलन्त्वाद्यं द्वितीयं वारुणं तथा।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम्॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठङ्कौवेरमुच्यते।
सप्तमं सोमदैवत्यमष्टमं सर्वदैवतम्॥
पुरस्तान्नवमं यत्तु तन्महत्पार्थिवं विदुः।
गोमयेन कृतानि स्युरद्भिः पर्युक्षितानिचेति॥

सावित्रं त्वष्टमन्तथा। नवमं सर्वदैवत्यमिति दिव्यविदो विदुरिति मिताक्षरायां पाठः। प्रख्यातदेवतायतनादिपूर्वोक्तदिव्यप्रदेशभूशुद्धिं सम्पाद्यतत्र प्राड्विवाकः सोपवासो नृपाज्ञयाप्रवृत्तो नवमण्डलानि कुर्य्यात्। तानि च प्राक्संस्थानि कर्त्तव्यानि। पुरस्तान्नवममित्यष्टानां मण्डलानां पूर्वभागे नवममण्डलस्य कर्त्तव्यताभिधानात्। पश्चिमे मण्डले स्थित्वेति वक्ष्यमाणवचनलिङ्गाच्च। तानि चाष्टौ क्रमेणाग्न्यादिदैवत्यानि। नवमं महत् मण्डलान्तरापेक्षयाऽधिकपरिमाणमपरिमिताङ्गुलम्पार्थिवं पृथिवीदैवत्यन्ननु मण्डलानामग्न्यादिदैवत्यत्वं न सम्भवति। तत्प्रकाशकत्वाभावात्। तदुद्देशेन त्यज्यमानत्वाभावाच्चेति चेन्न प्रैतु होतुश्चमसः ब्रह्मण इति न्यायेन आग्नेयेत्यादि देवतातद्धितं तल्लक्षणं समसङ्ख्यावलेनाग्न्यादिदेवतापूजनस्थानत्वेनाग्न्यादिदैवत्यत्वसम्भवात्। अत

सोष्वग्न्यादिदेवतापूजनं कार्य्यम्। मण्डलपरिमाणं स एवाह।

द्वात्रिंशदङ्गुलं प्राङ्मण्डलं मण्डलान्तरम्।

अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम्॥

षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पनेति॥

मण्डलान्तरम् अन्यमण्डलं सान्तरालमेकैकमण्डलं द्वात्रिंशदङ्गुलम् एवञ्चान्तरालसहितै रष्टभिर्मण्डलैरङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं भवति नवममण्डलस्यापरिमिताङ्गुलकत्वादगणनात्मण्डलं सान्तरालं द्वात्रिंशदङ्गुलम्। तत्र मण्डलं षोड़शाङ्गुलं तदन्तरालं तथा च याज्ञवल्क्यः।

षोड़शाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरमिति।

तावत् षोड़षाङ्गुलं अन्तरं मध्यम्। यत्तु नारदवचनम्।

अतःपरं प्रवक्ष्यामि विधिमग्नेर्यथोदितम्।

द्वात्रिंशदङ्गुलं प्राङ्मण्डलं मण्डलान्तरम्॥

अष्टाभिर्मण्डलैरेव मङ्गुलानां शतद्वयम्।

चत्वारिंशत् समधिकं भूमेरङ्गुलमानत इति॥

तन्नवमाष्टमयो रङ्गुलयो र्यदन्तरालं षोड़शाङ्गुलं तस्यागन्तव्यत्वादनन्तराभावेऽङ्गुलानां परिगणनमिति न कश्चिद्विरोधः। यत्तु कल्पतरुकारेण एतदेववाक्यं चतुर्विंशतिराख्याता भूमेस्तु परिकल्पनेति पठितन्तत् षोड़शाङ्गुलस्य प्रथमावस्थानं मण्डलस्याङ्गत्वेन तदप्यनन्तर्भावगम्यभूमेरङ्गुलानां परिगणनविषयमिति न कश्चिद्विरोधः॥ यदा तु दिव्यकर्त्तुः पदं षोड़शाङ्गुलादधिकं तदा तत्पदसम्मितं मण्डलं अवशिष्टाङ्गुलमन्तरालमित्येव द्वात्रिंशदङ्गुलता सम्पादनीया। तथा च नारदः।

मण्डलस्य प्रमाणन्तु कुर्य्यात् तत्पदसम्मितमिति।

पितामहोऽपि। कर्त्तुः पदसमङ्कार्थ्यं मण्डलन्तु प्रमाणत इति।

अङ्गुलप्रमाणं तु तिर्य्यग्यवोदराण्यष्टावित्यादिना घटविधिप्रकरणे दर्शितम्। यत्तु विष्णुवचनम्। षोड़शाङ्गुलं तावदन्तरमण्डलसप्तकं कुर्य्यादिति। तद्गन्तव्यमण्डलविषयम्।

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेदिति।

याज्ञवल्क्यवचनेन समानार्थकं ज्ञेयम्। यत्तु रत्नाकरे एतच्च मण्डलसप्तकं मण्डलाष्टकलङ्घनासामर्थ्ये इत्युक्तं तदयुक्तम्।

पश्चिमे मण्डले स्थित्वा प्राङ्मुखः प्राञ्जलिः शुचिः।

इति वचनेन।

अष्टमं मण्डलं गत्वा नवमे निःक्षिपेद्बुधः।

इति वचनेन च मण्डलसप्तकलङ्घनस्यैवोक्तत्वेन मण्डलाष्टकलङ्घनस्यानुक्तत्वात्। प्रोक्षितेष्वेतेषु प्रागग्राः कुशाः प्रसारणीयाः। तथा च पितामहः।

मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः।

विन्यसेच्च पदङ्कर्त्ता तेषु नित्यमितिस्थितिरिति॥

ततः प्राड्विवाकः प्रथममण्डलाद्दक्षिणतो लौकिकमग्निं प्रतिष्ठाप्य शान्तिहोमं कुर्य्यात्।

शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतमिति।

स्मरणात्। होमश्चानाग्नये स्वाहा पावकाय स्वाहेत्यनेन मन्त्रेण कुर्य्यादित्युक्तं व्याख्यातृभिः। ततस्तस्मिन्नग्नौ लोहकारात् पिण्डन्तापयेत्। तथा च नारदः।

जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि ।
दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत् ॥
अग्निवर्णमयः पिण्डं सस्फुलिङ्गं सुरञ्चितमिति ।

सुरचितश्चाण्डालादिस्पर्शो यथा न सम्पद्यते तया रञ्चितमयः पिण्डस्य परिमाणादिकं पितामह आह ।

अस्रहीनं समङ्क्त्वा अष्टाङ्गुलमयोमयम् ।
पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं सममिति ॥

सममस्रहीनम् । रुमन्ततः कोणरहितं समवृत्तमिति यावत् । अष्टाङ्गुलं अष्टाङ्गुलविस्तारं पञ्चाशत्पलिकं पञ्चाशत्पलपरिमितं समन्तापयेदित्यन्वयः। सर्वतस्तापयेदित्यर्थः। यत्तु।

शतार्द्धपलिकं वृत्तं द्वादशाङ्गुलमायतम् ।
लोहमग्निमयं ध्यान्तं देयं राज्ञाभिशापिन इति ॥

कालिकापुराणे लोहपिण्डस्य द्वादशाङ्गुलायामत्वमुक्तन्तदष्टाङ्गुलेन सह विकल्पितं ज्ञेयम् । यत्तु शङ्खलिखिताभ्याम् । अथवा सप्ताश्वस्य पत्रान्तरितं षोड़शपलमपि अग्निवर्णलौहपिण्डं मञ्जलिमादाय सप्तमपदमर्य्यादङ्गच्छेदिति पिण्डस्य षोड़शपलत्वमुक्तन्तदपि वैकल्पिकम् । सप्तमपदमपीदं सप्तममण्डलं यावत् । अभिविधिपरोऽत्र मर्य्यादाशब्दः । केचित्तु षोड़शपलसङ्ख्या असामर्थ्ये इति प्राहुः । इदञ्च पिण्डप्रतापनन्त्विः कर्त्तव्यम् ।

अग्निवर्णमयः पिण्डं सस्फुलिङ्गं सुरञ्चितम् ।
पञ्चाशत्पलकम्भूयः कारयित्वा शुचिर्द्विजः ॥

तृतीयतापे तप्यन्तं ब्रूयात्सत्यपुरस्कृतमिति नारदवचनेन तृतीयतापे तप्यन्तमिति लिङ्गात् । सुतप्तमयःपिण्डमुदके

निःक्षिप्य पुनः सन्ताप्योदके निःक्षिप्य पुनः प्रतापनम्। तस्मिन् काले प्राड्विवाको धर्मावाहनादिशोध्यशिरः पत्रारोपणान्तं साधारणं विधिं कुर्य्यात्। वह्निपूजायां चन्दनादेर्विशेषं पितामह आह।

तत्र पूजां कृताशस्य कारयेन्मनुजाधिपः।
रक्तचन्दनमाल्यैश्च रक्तपुष्पैस्तथैव चेति॥

तत्रचायःपिण्डाग्नौ कृताशस्य आवाहितस्य धर्मरूपस्याग्नेः ततः शोध्यकर्त्तव्यमाह हारीतः।

प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकमिति॥

अवस्थितिश्च प्रथमे मण्डले कर्त्तव्येत्याह पितामहः।

प्रथमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिरिति।

तत्र स्थितस्य करौ शोधनीयावित्यप्याह स एव।

लक्षयेयुः क्षतादीनि दुस्तपोस्तस्य कारिणामिति॥

कारिणः नियुक्ताः पुरुषाः। नारदोऽपि।

लक्षयेत्तस्य चिह्नानि हस्तयोरुभयोरपि।
प्राकृतानीवगूढानि सव्रणान्यव्रणानिचेति॥

शोधनप्रकारं विष्णुराह।

करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेदिति।

विमृदिता व्रीहयो याभ्यान्तौ व्रीहिमर्दनन्तयोर्यथावस्थितरूपज्ञानार्थम् एवं शोधितयोर्व्रणादिचिह्नेषु तत्र प्राक्स्थितत्वज्ञानार्थमलक्तादिरसेन तेषां चिह्नं कर्त्तव्यमिति नारद आह।

हस्तद्वतेषु सर्वेषु कुर्य्याद्वंसपदानि तु ।
तान्येव पुनराजघ्येद्धस्तौ विन्दुविचित्रिताविति ॥

तानि प्राक्कृतचिह्नानि पिण्डधारणानन्तरम् । ततः प्राड्विवाकस्तत्यं याज्ञवल्क्य आह ।

करौ विमृदितव्रीहे र्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् इति ॥

तावत्तावत्कृत्वः सप्तकृत्वः सूत्रेण वेष्टयेदिति तावदित्यस्य क्रियाविशेषणत्वमङ्गीकृत्योक्तोऽर्थो मिताक्षरायां, तावतां सूत्राणां समाहारस्तावत्सूत्रन्तेन सप्तभिः सूत्रैर्वेष्टयेदित्यर्थः। सप्तभिः सूत्रतन्तुभिरिति वक्ष्यमाणनारदादिवचनसम्वादी-प्रतिभाति तावच्छब्दः संख्याशब्दस्तेन समाहारे द्विगुःस्त्रीलिङ्ग-त्वाभावाच्च न ङीप् त्रिभुवनमितिवत्। सप्तकृत्वो वेष्टनन्तु वचनालाभेऽपि शिष्टाचारतः कर्त्तव्यमिति मदनरत्ने वेष्टनञ्चा-श्वत्थपत्रहस्तयोः सूत्रञ्च शुष्कमित्याह। नारदः।

वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिरिति।
अश्वत्थपत्राणि सप्तापि समानानि तथा च स्मृतिः।
पत्रैरञ्जलिमापूर्य्य आश्वत्थैः सप्तभिः समैरिति।

शमीपत्रादीन्यप्यश्वत्थपत्राणामुपरि स्थापयेत्। तथाच स्मृतिः।

सप्त पिप्पलपत्राणि शमीपत्राण्यथा क्षतान् ।
दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेदिति ॥

पुष्पाणि च तत्र स्थापनीयानि। तथा च पितामहः।

सप्तपिप्पलपत्राणि अक्षतान् सुमनोदधि ।
हस्तयोर्न्निःक्षिपेत्तत्र सूत्रेणावेष्टनं तथेति ॥

सूत्रेणावेष्टनन्तथेति सुमनसः कुसुमानि। सूत्रेणेति जातावेकवचनं यत्तु स्मृत्यन्तरम्।

अयस्तप्तन्तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः।
अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पद इति॥

तदश्वत्थपत्राभावेऽर्कपत्रविधायकं ज्ञेयम्। अश्वत्थपत्राणां पितामहप्रशंसावचनेन मुख्यतावगमात्।

पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः।
अतस्तस्य तु पत्राणि हस्तयोर्निःक्षिपेद्बुध इति॥

ततस्तप्तलोहपिण्डे प्राड्विवाकस्तत्राग्निमावाह्याग्निमभिमन्त्रयेत्। त्वमग्ने वेदा इत्यनेन मन्त्रेणेत्याह पितामहः।

तापिते तु ततः पश्चादग्निमावाहयेच्छुचिः।
आवाहनन्तु देवानां कृत्वा पूर्वविधानवित्॥
त्वमग्ने! वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयते।
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्॥
जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्।
पापात्पुनासि वै यस्मात् तस्मात्पावक उच्यते॥
पापेषु दर्शयात्मानमर्चिष्मान् भव पावक!।
अथ वा शुद्धभावेन शान्तो भव हुताशन!॥
त्वमग्ने! सर्वभूतानां मन्तश्चरसि साक्षिवत्।
त्वमेव देव! जानीषे न विदुर्यानि मानवाः॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि इति॥

विष्णुस्तु। त्वमग्ने सर्वभूतानामित्यादि धर्मतस्त्रातुमर्हसि इत्यन्तं पितामहवचनवदेवाभिमन्त्रमाह। तदस्य मन्त्रस्य

समर्चनाभिमन्त्रेण साधनत्वं न तु विकल्पनेन प्रार्थनीयार्थस्य शोध्यव्यक्तिविशेषनिष्ठतया प्रकाशनेन भिन्नकार्य्यत्वात्। पितामहेन एकवाक्यतया पठनाच्च। यत्तु।

तृतीयतापे तप्यन्तं ब्रूयात्सत्यपुरस्कृतम्।
श्रृ शिवमं मानवन्धर्मं लोकपालैरधिष्ठितम्॥
त्वमग्ने! सर्वदेवानां पवित्रं परमं मुखं।
त्वमग्ने! सर्वभूतानां हृदिस्थं वेत्सि चेष्टितम्।
सत्यानृते च जिह्वायास्त्वत्तः समुपलभ्यते॥
वेदादिभिरिदम्प्रोक्तं नान्यथा कर्त्तुमर्हसि।
अनेनादाविदम्प्रोक्तं मिथ्या चेदमसौ वदेत्॥
सर्वथा च यथा मिथ्या तथाग्निं धारयाम्यहम्।
स एष त्वां धारयति सत्येनानेन मानवः।
सत्यवाक्यस्य चास्य त्वं शीतो भव हुताशन!॥
मृषावाक्यस्य चास्य त्वं दह हस्तौ च पापिनः।

इति नारदोक्त मभिमन्त्रणं विष्णुपितामहाभ्यामुक्तेनाभिमन्त्रणेनैकार्थत्वाद्विकल्पते। तुल्यार्थास्तु विकल्पेरन्निति न्यायात्, यदा नारदोक्ताभिमन्त्रणं क्रियते तदा तदनन्तरं कर्त्तव्यमाह।

स एव। अमुमर्थञ्च पत्रस्थमभियुक्तं यथार्थतः।
संश्राव्य मूर्द्धि तस्यैव श्रयदेयो यथाक्रियमिति॥

पूर्वोक्ताभिमन्त्रणमन्त्रार्थं शिरसि निहितपत्रस्थमन्त्रार्थञ्च संश्राव्य तत्पत्रं यथास्थानन्निधाय यथाय लोहपिण्डो देय इत्यर्थः। यदा तु विष्णुपितामहोक्ताग्न्यभिमन्त्रणं क्रियते तदा तस्मिन् कृते किं कर्त्तव्यमाह। पितामहः।

ततस्तं समुपादाय राजा धर्मपरायणः।
सन्देशेन नियुक्तो वा हस्तयोस्तस्य निःक्षिपेदिति॥

नियुक्तः प्राड्विवाकः सन्देशेन तं लोहपिण्डं समुपादाय गृहीत्वा तस्य शोध्यस्य हस्तयोर्निःक्षिपेदित्यर्थः। निःक्षेपणात्-प्राक्तनपक्षद्वयेऽपि शोध्यः। अभिमन्त्रयेत् अभिमन्त्रितवतश्च तस्य हस्तयोरुपरि लोहपिण्डं स्थापयेत्। तथा च याज्ञवल्क्यः।

त्वमग्ने! सर्वभूतानां मन्तश्चरसि पावक!।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं करे मम॥
तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम्।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि॥

ल्यब्लोपे पञ्चमी। पुण्यपापनि पर्यालोच्येत्यर्थः ब्रूहि दर्शय इत्युक्तवन्तः। पूर्वोक्तमन्त्रेणाग्न्यभिमन्त्रणं कृतवतस्तस्य हस्तयोरश्वत्थपत्रादिसहितयोः सूत्रैर्वेष्टितयोरित्यर्थः। गृहीतलोहपिण्डस्य शोध्यस्य कर्त्तव्यमाह स एव।

स तमदाय सप्तैव मण्डलानि शनैर्व्रजेदिति।

अस्यार्थविवरणपुरःसरं विष्णुरपि। ततस्ताग्निवर्णं लोहपिण्डं पञ्चाशत्पलिकं समन्द्यात् तं समादाय नातिद्रुतन्नचविलम्बितं मण्डलेषु पदन्यासं कुर्वन् व्रजेत्। ततः सप्तममण्डलमतीत्य भूमौ लोहपिण्डं पातयेदिति मण्डलेषु द्वितीयादिमण्डलेषु सप्तमं मण्डलमतीत्य सप्तमं मण्डलमतिक्रम्य अष्टमं मण्डलं गत्वेति यावत्। भूमौ शुष्काभिनवतृणपुञ्जान्वितायां नवमण्डलरूपायामित्यर्थः। वक्ष्यमाणकालिकापुराणवचनानुरोधात्। नारदोऽपि।

हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः।
स्थित्वैकस्मिंस्ततोऽन्यानि व्रजेत्सप्त त्वजिह्मगः॥
असंभ्रान्तः शनैर्गच्छेदक्रुद्धः सोऽनलं प्रति।
न पातयेत्तामप्राप्य या भूमिः परिकल्पिता॥
न मण्डलमतिक्रामेन्नचार्वाक् स्थापयेत्पदम्।
मण्डलं चाष्टमं गत्वा ततोऽग्निं विसृजेन्नर इति॥

एकस्मिन् प्रथमे मण्डले। विसृजेन्नवममण्डल इति शेषः। अतएव पितामहः।

त्वरमाणो न गच्छेत्तु सुस्थो गच्छेच्छनैः शनैः।
न मण्डलमतिक्रामेन्नान्तरा स्थापयेत्पदम्॥
अष्टमं मण्डलङ्गत्वा नवमे निःक्षिपेद्बुध इति।

नवमे मण्डले नूतनतृणसमन्विते अग्निविसर्गः कर्त्तव्यः। तथा च कालिकापुराणे।

मण्डलानि तथा सप्त षोडशांगुलमानतः।
तावदन्तरतो गच्छेद्गत्वा नवतृणे क्षिपेदिति॥

निःक्षेपानन्तरम्परीक्षकस्य कर्त्तव्यमाह नारदः। तस्यैव मुक्तपिण्डस्य कुर्यात् करनिरीक्षणमिति शुद्ध्यशुद्धपरिज्ञानार्थमिति शेषः। तत्राशुद्धिप्रत्यायकानि लक्षणानि स एवाह।

पूर्वदृष्टेषु चिह्नेषु ततोऽन्यच्चापि लक्षयेत्।
मण्डलं रक्तसंकाशं यच्चान्यद्वाग्निसम्भवम्॥
समविशुद्धस्तु विज्ञेयो सत्यधर्मव्यवस्थित इति॥

यस्य करतलयोर्मध्ये यत्र क्वचिदग्निकारितं स्फोटाद्युपलभ्यते तमशुद्धं विजानीयादित्यर्थः। यस्य पुनर्नोपलभ्यते स शुद्धो ज्ञेयः। अत एव विष्णुः।

यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत्।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नर इति॥

दग्धादग्धसन्देहे नारद आह।

यदा तु न विभाव्येते दग्धाविति करौ तदा।
व्रीहीनतिप्रयत्नेन सप्त वारांस्तु मर्दयेत्॥
मर्दिते यदि नो दग्धः सभ्यैरेवं विनिश्चितः।
शोध्यः शुद्धः स संस्कृत्य दग्धो दण्ड्यो यथाक्रममिति॥

न विभाव्येते न निश्चीयेते। व्रीहियवयोर्मर्दने विकल्पमाह पितामहः।

ततस्तद्धस्तयोः प्रास्येद्व्रीहीन्वा यदि वा यवान्।
निर्विशङ्केन तेषान्तु हस्ताभ्यां मर्दने कृते॥
निर्विकारे दिनस्यान्ते शुद्धिन्तस्य विनिर्दिशेत् इति।

प्रास्येत्प्रक्षिपेत्।

निर्विकारे दिनस्यान्ते शुद्धिन्तस्य विनिर्दिशेत्।

निर्विकारे करतलद्वये स्थिरे सायंकाले शोध्यस्य शुद्धिं निर्दिशेदित्यर्थः। केचिन्निर्विकारो यदा हस्त इति पठन्ति तन्मते मर्दनानन्तरमेव शुद्धिरवधारणीया। सायंकाललक्षणकालबोधकवचनाभावात्। ननु दिनस्यान्त इति पाठे मुक्ताग्निं मृदित व्रीहि रित्यादियाज्ञवल्क्यवचनेन विरोधः। तत्रानन्तर्यवाचिक्त्वा प्रत्ययस्य मुक्त्वेति प्रयोगेन कृतव्रीहिमर्दनयोः करयोर्विकारस्यादर्शने तप्तलोहपिण्डन्यासानन्तरमेव शुद्धेरवधारणीयत्वोक्तेरिति चेन्न। समानकर्त्तृकयोः पूर्वकाल इति पाणिनीयवचनेन क्त्वाप्रत्ययस्य पूर्वकालवाचित्वावधारणात्। हरियोजनयागस्य संस्थावस्त्विमोकाभ्यां व्यवधा-

नेन परिधिप्रहरणानन्तर्याभावेऽपि वेदे प्रहृत्य परिधीन् जुहो-
तीतित्यत्र क्त्वाप्रत्ययदर्शनात्। लोकेऽपि उपवेशनक्रियान्तरव्य-
वधानेन गमनस्य भोजनानन्तर्याभावेऽपि भुक्त्वा व्रजतीतिक्त्वा-
दर्शनाद्यातीनान्तर्यवाचकत्वं क्त्वाप्रत्ययस्य। किञ्च क्त्वाप्रत्य
यस्यानन्तर्यवचनत्वे बृहस्पतिसवाधिकरणविरोधः स्यात्। तत्रा-
पि क्त्वाप्रत्ययस्य पूर्वकालवचनत्वाभिधानात्। तथा हि। वाज-
पेयेनेष्ट्वा बृहस्पतिः सवेन यजेतेति श्रूयते तत्र संशयः। स किं
वाजपेये शरदि वाजपेयेन यजेतेत्यनेन विहितो यः शरत्का-
लस्तस्मिन् कर्त्तव्यः। आहोस्वित् स्वकाले वसन्ते कर्त्तव्यः। तत्र
बृहस्पतिवचनस्यागमत्वं तावत्पूर्वमुक्तम्। तच्चाङ्गं अङ्गिकाले
अङ्गिना सह प्रयोक्तव्यं इतरेषामङ्गानामङ्गिकाल मनुष्ठीयमा-
नत्वादिति पूर्वः पक्षः। राद्धान्तस्तु पूर्वकालवाचिक्त्वाप्रत्यये-
न साङ्गे वाजपेये निवृत्ते सति पश्चात्कर्मान्तरत्वेन बृहस्पति-
सवस्य विहितत्वात्। यद्यङ्गिना सहैकप्रयोगः स्यात्। तदा
क्त्वाप्रत्ययप्रापितः पूर्वोत्तरकालविभागो बाध्येत नह्यङ्गिना-
सह प्रयोक्तव्यानामङ्गानां वाजपेये निवृत्ते पश्चात् विधानं
श्रुतम्। ततः प्रयोगेऽवश्यम्भाविनि सति स्व-स्व-चोदकप्रापिते
काले तदनुष्ठानं युक्तम्। बृहस्पतिसवस्य ज्योतिष्टोमविका-
रत्वाद्वसन्तकालश्चोदकप्राप्तः वाजपेयेन सह प्रयोगैक्ये शरदि
वाजपेयस्य विहितत्वाद्बृहस्पतिसवोऽपि शरदि प्रसज्येत।
तथा च वाजपेये वृत्ते कर्त्तव्यो बृहस्पतिसवस्तदनन्तरं
कालातिक्रमकारणस्यातिदेशकृतस्य वसन्तकाललक्षणाङ्गोप-
संहारस्य सत्त्वात् तदुत्तरवसन्तकाले कर्त्तव्यः। क्त्वापूर्वकाल-
तायां स्मर्यते नानन्तर्ये ननु सर्वत्रामी पूर्वप्रधानाः पूर्वञ्जनयि-

तथ्यं रहस्तु पूर्वकालीनेन साङ्गप्रधानानुष्ठानेन फलापूर्वस्य निष्पन्नत्वादुत्तरकालीनमङ्गं निरर्थकमेव स्यादिति चेन्न। तस्यैवापूर्वस्यानेनातिप्राबल्यदशायाः कल्पनीयत्वात्। तस्मान्नाङ्गिनः काले ऽनुष्ठानं किन्तु स्वकाल एवेति स्थितम्। तद्नेन विरोधवारणाय पूर्वकालत्वमेवार्थः। तथा च न कोऽपि विरोध इति सर्वञ्च सुस्थम्। केषुचिन्निमित्तेषु पुनरग्निधारणं कर्त्तव्यम्। तथा च याज्ञवल्क्यः।

अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेदिति।

यदा गच्छतोऽन्तराष्टममण्डलादर्वाक् पिण्डः पतति दग्धादग्धत्वे वा सन्देहस्तदा पुनर्हरेदित्यर्थः। इदन्तु यदि हस्तयोर्न दाहस्तदा वेदितव्यम्। दाहेत्वशुद्धिरेव तथा च नारदः।

यस्त्वन्तरा वा पतति दग्धश्च तद्विभाव्यते।

पुनस्तं हारयेदग्निं स्थितिरेषा दृढीकृतेति॥

हस्तयोरन्यत्र दग्धविभावनेऽपि पुनर्धारणं कार्य्यमित्याह। कात्यायनः। प्रस्खलत्यभियुक्तश्चेत् स्थानादन्यत्र दह्यते।

न तं दग्धं विदुर्देवास्तस्य भूयोऽपि दापयेदिति॥

भूयोऽपि पुनरपीत्यर्थः। इत्यग्निविधिः। अथ जलविधिस्तत्र पितामहः।

तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम्।

मण्डलं धूपदीपाभ्यां कारयेच्च विचक्षणः॥

शरान् संपूजयेद्भक्त्या वैणवञ्च धनुस्तथा।

मङ्गलैः पुष्पधूपैश्च ततः कर्म समाचरेत् इति॥

धूपदीपाभ्यां शरान् संपूजयेदित्यन्वयः। जलसमीपे

संस्कृतायाम्भुवि मण्डलं कृत्वा तत्र शरादिकं संपूज्य प्रयोगारम्भः कार्य इत्यर्थः। धनुषः प्रमाणमाह नारदः।

क्रूरन्धनुः सप्तशतं मध्यमं षट्शतं स्मृतम्।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिरिति॥

सप्तशतं सप्ताधिकशताङ्गुलम्। एवं षट्शतं पञ्चशतञ्च। लक्ष्यस्थानञ्च स एवाह।

मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम्।
हस्तानान्तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः।
न्यूनाधिके तु दोषः स्यात् क्षिपतः सायकांस्तथेति॥

शराश्चानायसाग्रा वैणवाश्च कर्त्तव्या इत्याह कात्यायनः।

शरांश्चानायसाग्रांस्तु प्रकुर्वीत विशुद्धये।
वेणुकाण्डमयांश्चैव क्षेप्ता तु सुदृढं क्षिपेदिति॥

क्षेप्ता च क्षत्रियस्तद्वृत्तिर्ब्राह्मणो वा कार्य्य इत्याह। पितामहः। क्षेप्ता च क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽथवा।

अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिरिति॥

शोध्यकर्णप्रमाणोच्छ्रिततोरणं मण्डलं समीपे कार्य्यमित्याह। नारदः। गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम्।

कुर्वीत कर्णमात्रन्तु भूमिभागे समे शुचाविति॥

उपादेयानुपादेय जले विविनक्ति पितामहः।

स्थिरे तोये निमज्जेत्तु न ग्राहिणि न चाल्पके।
तृणशैवालरहिते जलौकामत्स्य वर्जिते॥
देवखातेषु यत्तोयं तस्मिन् कुर्य्याद्विशोधनम्।
आहार्य्यं वर्जयेन्नित्यं शीघ्रगासु नदीषु च।
आविशेदमले नित्यमूर्मिपङ्कविवर्जिते॥

ग्राहिणि ग्राहाख्यजलजन्तु युक्ते। आहार्य्यं नद्यादित आहृत्य महति कटाहादौ आहृत्य स्थापितम्। नारदः।

नदीषु नातिवेगासु तडागेषु सरःसु च।
ह्रदेषु स्थिरतोयेषु कुर्य्यात्पुंसां निमज्जनमिति॥

नातिवेगासु अतिवेगासु अवस्थित्ययोग्यासु। विष्णुः। पङ्क-शैवालदुष्टग्राहमत्स्य जलौकादिविवर्जिताम्भसि इति। तत्र उदके प्राड्विवाको वरुणं पूजयेदित्याह। स एव।

गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः।
वरुणाय प्रकुर्वीत पूजामादौ समाहित इति॥

ततो दृढकायः कश्चित्पुरुषो नाभिमात्रजले स्थापनीय इत्यपि स एवाह।

ब्राह्मणः क्षत्रियो वैश्यो रागद्वेष-विवर्जितः।
नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद्बली॥
तस्योरू प्रतिसंगृह्य निमज्जेदभिशापवानिति॥

पितामहोऽपि। स्थापयेत्प्रथमन्तोये स्तम्भवत्पुरुषं नृपः।
आगतं प्राङ्मुखं कृत्वा तोयमध्ये तु कारिणमिति॥

स्तम्भवत्पुरुषं स्तम्भसमन्वितं पुरुषं कारिणं दिव्यकारिणं शोध्यमिति यावत्। अनेन पुरुषेण यज्ञियवृक्षजातां धर्मस्थूणामवष्टभ्य स्थातव्यं तथा च स्मृतिः।

उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य चेति।

ततः प्राड्विवाको धर्मावाहनादिहोमान्तं कृत्वा शोध्य-शिरसि च पत्रारोपणं विधाय जलाभिमन्त्रणं कुर्य्यात्। तथा च पितामहः।

ततस्त्वावाहयेद्देवान् सलिलञ्चानुमन्त्रयेदिति।

देवतावाहनं पूर्वोक्तस्य सकलदिव्यसाधारणस्य प्रतिज्ञापत्रबन्धनान्तस्य कर्मजातस्योपलक्षणम्। सलिलग्रहणं सलिलदेवताभूतस्य वरुणस्याप्युपलक्षणम्। जलाभिमन्त्रणमन्त्रं विष्णुराह।

त्वमम्भः! सर्वभूतानामन्तश्चरसि साक्षिवत्।
त्वमेवाम्भो! विजानीषे न विदुर्यानि मानवाः॥
व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति।
तदेनं संशयादस्माद्धर्मतस्त्रातु मर्हसि इति॥

पितामहोऽपि। तोय! त्वं प्राणिनां प्राण! सृष्टेराद्यन्तु निर्मितम्।
शुद्धेस्त्वं कारणं प्रोक्तं द्रव्याणां देहिनान्तथा।
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे इति॥

अनयोर्मन्त्रयोर्विकल्पतुल्यार्थत्वात्। वरुणाभिमन्त्रणमन्त्रः शङ्खलिखिताभ्यां दर्शितः। सदसच्च त्वमेव वरुण! उभयोः प्रतिष्ठितस्त्वयि सत्यन्त्विदन्देववरुण! त्वमेव तद्ब्रूहि वरेण्य! तदादि शस्त्वेति। नारदोऽपि।

सत्यानृतविभागस्य तोयाग्निस्पष्टकृत्तमौ।
अद्भ्यस्त्वाग्निरभूद्यस्मात् तस्मात्तोये विशेषतः॥
क्रियते धर्मतत्त्वज्ञैर्दूषितानाम्विशोधनम्।
तस्मात्सत्येन भगवन्! जलेश! त्रातु मर्हसि इति॥

अनयोरपि विकल्पः। ततः प्राड्विवाकेऽभिमन्त्रिते जले शोध्यं प्रवेशयेदित्याह कालिकापुराणे व्यासः।

त्राह्येनं वरुण! त्वञ्च अस्मादेवाभिशापतः।
शुद्धस्येदति कारुण्यादभिमन्त्र्य जले क्षिपेदिति॥

त्राह्येनमित्यादिनाऽतिकारुण्यादित्यन्तेन मन्त्रेणाभिमन्त्र्य-

जले पुरुषं प्रवेशयेदित्यर्थ:। अयञ्च मन्त्र: पूर्वोक्तेन जलाभिमन्त्रेण वैकल्पिक:। शोध्योऽपि कृताभिमन्त्रणो जलं प्रविशेत्। तथा च याज्ञवल्क्य:।

सत्येन मामभिरक्ष त्वं वरुणे त्यभिशाप्यकम्।
नाभिदघ्नोदकस्थस्य गृहीत्वोरुजलं विशेत् इति॥

हे वरुण! मां त्वं सत्येनाभिरक्षेत्यनेन मन्त्रेण कमुदकं अभिशाप्य अभिमन्त्र्य नाभिदघ्नोदकस्थस्य नाभिप्रमाणोदकस्थितस्य पुरुषस्योरू गृहीत्वा शोध्यो जलं विशेत्। जले निमज्जेदित्यर्थ:। तत: पूर्वोक्ते लक्ष्यस्थाने शरत्रयं प्रक्षिपेदित्याह। बृहस्पति:। अप्सु प्रवेश्य पुरुषं प्रेषयेत्सायकत्रयमिति।

कालविशेषे देशविशेषे च शरप्रक्षेपनिषेधमाह स एव।

इषून्न नि:क्षिपेद्विद्वान्मारुते वाति वै भृशम्।
विषमे भूप्रदेशे च वृक्षस्थाणु समाकुले।
तृणगुल्मलतावल्ली पङ्कपाषाणसंयुत इति॥

तदनन्तरं कर्त्तव्यमाह याज्ञवल्क्य:।

समकालमिषुं मुक्तमानीयान्यो जवी नर:।
गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात्॥

इति अयमर्थ:। त्रिषु शरेषु मुक्तेषु एको वेगवान् मध्यमशरपातस्थानंगत्वा तमादाय तत्रैव तिष्ठति अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति। एवं स्थितायां तृतीयस्यां करतालिकायां शोध्य: नाभिप्रमाणोदकस्थितस्य पुरुषस्योरू गृहीत्वा निमज्जति। तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपातस्थानङ्गच्छति शरग्राही च

तस्मिन् प्राप्ते द्रुततरन्तोरणमूलं प्राप्यान्तर्जलगतं शोध्यं यदि न पश्यति तदा शुद्धो भवतीति तथा च कात्यायनः।

क्षिप्तेषु मज्जनं कार्य्यं गमनं समकालिकमिति।

एतदेव स्पष्टीकृतं पितामहेन।

शरान्तुश्चापि कर्त्तुश्च समङ्गमनमज्जनम्।
गच्छेत्तोरणमूलन्तु लब्धस्थानञ्जवी नरः॥
तस्मिन् गते द्वितीये तु वेगमादाय सायकम्।
गच्छेत्तोरणमूलन्तु यतः स पुरुषो गतः॥
आगतस्तु शरग्राही न पश्यति यदा जलम्।
अन्तर्जलगतं सम्यक् तदा शुद्धिं विनिर्दिशेत् इति॥

नारदोऽपि। शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः॥
मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः॥

अत्र पितामहवदेव क्वचित्पितामहवाक्यमपि शरप्रक्षेपणादि नारदवदेव वदन्ति। त्रिषु मुक्तेषु मध्यमः शरो ग्राह्यः। तथा च स्मृतिः।

तेषाञ्च प्रेषितानाञ्च शराणां शास्त्रचोदनात्।
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसेति॥

तत्रापि पतनस्थानादानेतव्यो न सर्पणस्थानात्।

तथा च पितामहः। शरस्य पतनं ग्राह्यं सर्पणन्तु विवर्जयेत्।
सर्पन् सर्पन् शरो यायाद्दूराद्दूरतरं यत इति॥

स्थानान्तरगमने चाशुद्धिः तथा च नारदपितामहौ।

अन्यथा न विशुद्धः स्यादेकाङ्गस्याप्यदर्शनात्।

स्थानाद्वान्यत्र गमनं यस्मिन् पूर्वं निवेशित इति ॥

एकाङ्गस्यापि दर्शनादिति कर्णाद्यभिप्रायेण। तथा च कात्यायनः।

शिरोमात्रन्तु दृश्येत न कर्णौ नापि नासिका।
अप्सु प्रवेशने यस्य शुद्धन्तमपि निर्दिशेत् इति ॥

इत्युदकविधिः। अथ विषविधिः। तत्र नारदः।

अतःपरं प्रवक्ष्यामि विषस्य विधिमुत्तमम्।
यस्मिन् काले यथा देयं याहृशं परिकीर्त्तितम् ॥
यावन्मात्रं समुद्दिष्टं धर्मतत्वानुवेदिभिः।
तोलयित्वेप्सितं काले देयमेतद्धिमागमे ॥
नापराह्णे न मध्याह्ने सन्ध्यायाञ्च विवर्जयेत्।
शार्ङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितम् ॥
अक्लिन्नमसंमूढममन्त्रोपहतञ्च यत्।
वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्च यवाः स्मृताः ॥
हेमन्ते सा सप्त यवा शरद्यल्पा ततोऽपि हीति।

हिमागमे हेमन्तशिशिरयोः शार्ङ्गं शृङ्गोद्भवम् हैमवतं हिमालयोद्भवम्। हेमन्त इति हेमन्तशिशिरयोर्ग्रहणम्। हेमन्तशिशिरयोः समासेनेति श्रुतेः। वसन्तस्य सर्वसाधारणत्वात्। तत्रापि सप्त यवाः शरदि ततोऽप्यल्पा षट् यवेत्यर्थः। वत्सनाभोऽपि ग्राह्य इत्याह पितामहः।

यवाः सप्त प्रदातव्याः शुचिहेतो न संशयः।
शृङ्गिणो वत्सनाभस्य हिमजस्य विषस्य चेति ॥

यवाः सप्तेति शीतलकालविषयं।

रात्रौ तु पश्चिमे भागे विषन्देयं सुशीतलमिति।

पूर्वोदाहृतवचनात्। वज्र्यं विषमाह पितामहः।

चारितानि च जीर्णानि कृत्रिमाणि तथैव च।

भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् इति॥

नारदोऽपि। भ्रष्टञ्च चारितञ्चैव धूपितं मिश्रितन्तथा।

कालकूटमलाबुञ्च विषं यत्नेन वर्जयेत् इति।

वत्सनाभस्वरूपमाह कात्यायनः।

वत्सनाभनिभम्पीतं वर्णज्ञानेन निश्चितम्।

शुक्तिश्टङ्गाकृतिभङ्गे विद्यात्तद्वत्सनाभकम्॥

मक्षीरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात्।

वात्समेवं समाख्यातं लक्षणं धर्मसाधकैरिति॥

शार्ङ्गस्वरूपमाह स एव।

अजाश्टङ्गनिभं श्यामं सुपीतं श्टङ्गसम्भवम्।

भङ्गे च श्टङ्गवेराभं ख्यातन्तच्छार्ङ्गिणं विषम्॥

रक्तस्यमसितं कुर्य्यात्कठिनञ्चैव तत्क्षणात्।

अनेन विधिना ज्ञेयं विषन्दिव्यं विशारदैरिति॥

श्टङ्गवेराभम् आर्द्रकतुल्यम्। भङ्गे आर्द्रकतुल्यं सुपीतमित्यन्वयः। शार्ङ्गिणं श्टङ्गिणां सम्बन्धि। इन्यनपत्य इति प्रकृतिवद्भावान्न टिलोपः। यद्रक्तस्यन्तल्लक्षणाद्रक्तमसितं कुर्य्यादिति सम्बन्धः। विषञ्च घृतप्लुतन्देयमित्याह नारदः।

विषस्य पलषड्भागाद्भागो विंशतिमस्तु यः।

तमष्टभागहीनन्तु शोध्ये दद्यात् घृतप्लुतमिति॥

पलञ्चात्र चतुःसुवर्णिकन्तस्य षष्ठोभागो दश माषा दश यवाश्च भवन्ति। त्रियवन्त्वेककृष्णलम्। पञ्चकृष्णलको माष इत्येकोमाषः। पञ्चदश यवा भवन्ति। पञ्चदशानां माषाणां यवाः सा-

द्विंशतं भवन्ति। पूर्वं च दश यवा इति पञ्चाधिकशतं यवाः पलस्य षष्ठो भागस्तस्याद्विंशतितमो भागोऽष्टौ यवाः तस्याष्टमभागहीनः एकयवहीनः तं विंशतितमम्भागं सप्तयवं घृतस्य तन्दद्यादित्यर्थः। घृतञ्च विषात्त्रिंशद्गुणं ग्राह्यमित्यप्याह नारदः।

पूर्वाह्णे शीतले देशे विषन्देयन्तु देहिनाम्।
घृतेन योजितं श्लक्ष्णं पिष्टन्त्रिंशद्गुणान्वितम्॥

कात्यायनोऽपि। पूर्वाह्णे शीतले देशे विषन्देयन्तु देहिनाम्।
विषेण योजितं श्लक्ष्णम्पिष्टं त्रिंशद्गुणान्वितमिति॥

एतच्च विषं सोपवासेन प्राड्विवाकेन पूर्वोक्तदिव्यदेशे काले देवद्विजसन्निधौ शिवपूजां कृत्वा तत्पुरतो विषं स्थापयित्वा धर्मावाहनादिशोध्यशिरसि प्रतिज्ञापत्रन्निधाय विषमभिमन्त्र्य दक्षिणाभिमुखाय उदङ्मुखेन प्राङ्मुखेन वा देयमित्याह नारदः।

दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम्॥
द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहित इति॥

अभिमन्त्रणमन्त्रमाह विष्णुः।

विषत्वाद्विषमत्वाच्च क्रूरत्वात्सर्वदेहिनाम्।
त्वमेव विष! जानीषे न विदुर्यानि मानवाः॥
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति।
तदेनं संशयादस्माद्धर्मतस्त्रातु मर्हसीति॥

नारदोऽपि। विष! त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः।

शोधयैनं नरं पापात्सत्येनास्यामृतम्भवेति ॥

अनयोरेकार्थाद्विकल्पः । शोध्यस्याभिमन्त्रणमन्त्रमाह याज्ञवल्क्यः ।

विष ! त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।

त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥

इति पितामहोऽपि ।

दीयमाने करे कृत्वा विषन्तु परिशापयेत् ।

विष ! त्वं ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ॥

पापेषु दर्शयात्मानं शुद्धानाममृतम्भव ।

अनयोरपि विकल्पः । अभिमन्त्रणानन्तरकर्त्तव्यमाह याज्ञवल्क्यः ।

एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजमिति ।

शुद्धिप्रकारमाह बृहस्पतिः ।

विधिदत्तं विषं येन जीर्णमन्त्रौषधैर्विना ।

स शुद्धः स्यादन्यथा तु दण्डो दाप्यश्च तद्धनमिति ।

याज्ञवल्क्योऽपि ।

यस्य वेगैर्विना जीर्वेच्छुद्धिं तस्य विनिर्दिशेत् इति ।

वेगो नामधातोः धात्वन्तरप्राप्तिः। धातो धात्वन्तरप्राप्तिर्विषवेग इतिस्मृत इति वचनात् । धातवश्च त्वगादयः सप्त त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव इति वचनात् । विषवेगाश्च सप्त तेषां लक्षणानि विषतन्त्रे दर्शितानि ।

वेगो रोमाञ्च माद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ ।

तस्योर्द्ध्वं स्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ।

यो वेगः पञ्चमोऽसौ नयति विवशतां कण्ठभङ्गञ्च हिक्काम् ।

षष्ठो निःश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्येति। शोध्यश्च कुहकादिभ्यो रक्षणीयः। अतएव पितामहः।

त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम्।

कुहकादि भयाद्राजा धारयेत् कुहकारिणम्॥

औषधीं मन्त्रयोगांश्च मणीनथ विषापहान्।

कर्त्तुः शरीरसंस्थांश्च गूढोत्पन्नान् परीक्षयेदिति॥

दिनान्तपर्य्यन्तं विषवेगराहित्ये शुद्धिरवधारणीयेत्याह विष्णुः। विषवेगक्रमातीतं सुखेन यदि जीर्यते।

विशुद्धमिति तं ज्ञात्वा दिवसान्ते विसर्जयेत्॥

पितामहोऽपि।

भक्षिते यदि सः सुस्थो मूर्च्छाछर्दिविवर्जितः।

निर्विकारो दिनस्यान्ते शुद्धं तमपि निर्दिशेत् इति॥

नारदोऽपि। छायानिवेशिता रक्ष्यो दिनशेषमभोजनम्।

विषवेगक्रमातीतः शुद्धोऽसौ मनुरब्रवीत् इति॥

मिताक्षरायान्तु।

पञ्चतालशतं कालं निर्विकारो यदा भवेत्।

तदा भवति स शुद्धस्ततः कुर्याच्चिकित्सितमिति॥

नारदवाक्यं पठित्वा विषे पीते यावत्करतालिकाशतपञ्चकं क्रियते तावत्कालन्निर्विकारश्चेच्छुद्धः अनन्तरन्तु चिकित्सनीयः। यानि तु दिनान्तावधिबोधकानि पितामहादिवचनानि तान्यल्पमात्रविषयाणीत्युक्तम्। इति विषविधिः।

अथ कोशविधिः। तत्र नारदः।

अतः परं प्रवक्ष्यामि कोशस्य विधिमुत्तमम्।

शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधिनम् ॥
पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
सशूकस्याऽव्यसनिनः कोशपानं विधीयते ॥
इच्छतः श्रद्दधानस्य देवब्राह्मणसन्निधाविति ।

सशूकस्य असत्येन दिव्यकरणेऽनिष्टशङ्कायुक्तस्य कोशपानम् । उग्रदेवतास्नानोदकपानं देवतास्नानोदकञ्च प्रसृतित्रयं ग्राह्यमित्याह विष्णुः । उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात्प्रसृतित्रयम्पिबेदिदम्मया न कृतमिति व्याहरन्देवताभिमुख इति । याज्ञवल्क्योऽपि ।

देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयमिति ॥

उग्रान्देवान्दुर्गादित्यादीन् । तेषामन्यतमं देवं प्राङ्विवाकः सोपवासो गन्धपुष्पादिभिः सम्पूज्य स्नापयित्वा तत्स्नानोदकं दिव्यदेशन्नयेदित्यर्थः । नीत्वा च तत्र निधाय धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्वदिव्यसाधारणविधिम्विधाय देवतायतनसमीपे मण्डलञ्च विधाय तत्र शोध्यं प्राङ्मुखं स्थापयित्वा तमसत्येनैतद्दिव्यकरणेऽनिष्टं संश्राव्य-जलविधावुक्तेन तोयत्वं प्राणिनां प्राण इत्यादिना मन्त्रेणाभिमन्त्र्य पूर्वनिहितोदकात् प्रसृतित्रयं पाययेत् । शोध्यश्च जलविधावेवोक्तेन सत्यानृतविभागस्येत्यादिना मन्त्रेणाभिमन्त्र्य पिबेत् । तथा च नारदः ।

तमाहूयाभिशस्तन्तु मण्डलाभ्यन्तरे स्थितम् ।
आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयमिति ॥

पितामहोऽपि ।

प्राङ्मुखं कारिणं कृत्वा पाययेत् प्रसृतित्रयम्।
पूर्व्वोक्तेन विधानेन स्नानमार्त्तं चिरं शुचिमिति।

कारिणं दिव्यकारिणं शोध्यमिति यावत्। पूर्व्वोक्तेन सकलदिव्यसाधारणतया प्रागुक्तेनेत्यर्थः। नारदोऽपि।

अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु।
एनश्च श्रावयित्वा तु पाययेत्प्रसृतित्रयमिति॥

एनः पापम्। तच्च तत्प्रलापाभिधानमुखेन तेनैव दर्शितः।

स्वेच्छयायः पिबेत्कोशमन्न क्वचिद्दूषितो नरः।
न संवदेन्नरो लोभात् दवी भवति दुर्मतिः।
जानानः कामकारेण कोशम्पीत्वा विसंवदेत्॥
दरिद्रो व्याधितो मूर्खः सप्तजन्मनि जायत इति॥

सशिरस्कोऽभियोगे अभियोक्तुः श्राव्यमनिष्टमप्याह सएव।

बलात्कोशं हि यो दत्वा हितमिच्छेत चात्मनः।
स विनाशी भवेत्तस्य तच्च कार्य्यं न सिद्ध्यतीति॥

एवं यस्य कस्य चिदुग्रदेवस्य स्नानोदकमाहृत्य कोशानुष्ठाने प्राप्ते नियमार्थमाह पितामहः।

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलमिति।
समभावे तु देवानामादित्यस्य तु पाययेत्॥
दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः।
भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेदिति॥

उग्रदेवतायुधानि स्नापयित्वा तदुदकं स्वल्पेऽपराधे पाययेत्। तथा च कात्यायनः।

स्वल्पेऽपराधे देवानां पाययित्वाऽऽयुधोदकम्।
पाप्योविकारे चाशुद्धो नियम्य शुचिरन्यथेति॥

पाय्यः पाययितव्यः। नियम्यो दण्डः। आयुधग्रहणं ताम्रादिनिर्मितादित्यमण्डलस्याप्युपलक्षणम्। अतएव बृहस्पतिः। यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम्।

प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयमिति॥

अत्र विशेषमाह पितामहः।

दुर्गायाः पाययेच्छूलमादित्यस्य तु मण्डलम्।

अन्येषामपि देवानां स्नापयेदायुधानि त्विति।

कृतकोशपानस्य किं तत्कालमेव शुद्धिर्नेत्याह कात्यायनः।

अथदैवविसंवादा त्रिसप्ताहात्तु दापयेत्।

अभियुक्तं प्रयत्नेन तमर्थं दण्डमेवचेति॥

दैवविसंवादः दैविकव्याध्युद्भवः। दैविकं व्याध्यादयोऽपि स एव दर्शयति।

ज्वरातिसारविस्फोटाः शूलास्थिपरिपीडनम्।

नेत्ररुग्भालरोगश्च तथोन्मादः प्रजायते।

शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणामिति॥

शुद्धिकालावधिं विशारयाह।

यस्य पश्येद्द्विसप्ताहात् त्रिसप्ताहादथापि वा।

रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा॥

तमशुद्धं विजानीयात् तथा शुद्धं विपर्ययेत्।

दिव्ये च शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृप इति॥

पितामहोऽपि। त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा।

वैकृतं यस्य दृश्येत पापकृत्स तु मानवः॥

तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत्।

रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावनेति॥

तद्रोगादिवैकृतं कृतकोशपानस्यैकस्य यदि भवेत् तदैव स पापकृदिति न किन्तु तदीय सर्वस्य जनस्य मध्येऽपि यदि कस्यचिद्भवेत् तदापीत्यर्थः । अतएव वृहस्पतिः ।

सप्ताहाद्वा द्विसप्ताहाद्यस्यार्त्तिर्न प्रजायते ।

पुत्रदारधनानाञ्च स शुद्धः स्यान्न संशय इति ॥

याज्ञवल्क्योऽपि । अर्वाक्चतुर्दशादह्नो यस्य नो राजदैविकम् ।

व्यसनञ्जायते घोरं सशुद्धः स्यान्न संशय इति ॥

एतेषाञ्च त्रिरात्रादीनां पक्षाणाम् अभियोगाल्पत्वमहत्त्वाभ्यां व्यवस्था ज्ञातव्या अवधेरूर्द्धन्तु रोगाद्युद्भवेऽपि न पराजयः । तथा च नारदः ।

ऊर्द्धं यस्य द्विसप्ताहाद्वैकृतन्तु महद्भवेत् ।

नाभियोज्यस्तु विदुषा कृतकालव्यतिक्रमादिति ॥

अत्र द्विसप्ताह इत्यवधिकालमात्रोपलक्षणम् । कृतकालव्यतिक्रमहेतोरभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाश्रयणे चतुर्दशरात्रादूर्द्धमपि वैकृतोत्पत्तौ पराजयः एवं त्रिरात्र सप्तरात्रात्प्रागपि वैकृतोत्पत्तौ न पराजय इति सिद्धम् । इति कोशविधिः । अथ तण्डुलविधिः । तत्र पितामहः ।

तण्डुलानां प्रवक्ष्यामि विधिम्भक्षणचोदितम् ।

चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चय इति ॥

चौर्य्यग्रहणमर्थविवादप्रदर्शनार्थम् । तदर्द्धार्डस्य तण्डुला इति धनविवादे कात्यायनेनोक्तत्वात् । पूर्वेद्युर्यत्कर्त्तव्यं तत्सएवाह ।

तण्डुलान् कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।

मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥

स्नानोदकेन सम्मिश्रान् रात्रौ तत्रैव वासयेत् ।
आवाहनादिपूर्वन्तु कृत्वा रात्रौ विधानतइति ॥

शुचिः प्राङ्विवाकः सूर्य्यस्थाने धर्मावाहनादिहोमान्तं सर्वदिव्यसाधारणविधिं कृत्वा आदित्यस्नानोदकेन शुक्लान् शालितण्डुलानाश्राव्य रात्रावेव हुत्वा तथैव प्रातःकालपर्य्यन्तं स्थापयेदित्यर्थः। स्नानोदकं देवताया इत्याह। कात्यायनः।

देवतास्नानपानीयं दिग्धतण्डुलभक्षणे इति।

प्रातः कर्त्तव्यमपि स एवाह।

प्रभाते कारिणे देया आदित्याभिमुखायत्विति।

कारिणे शोध्याय। देयाः तण्डुला इत्यनुषङ्गः। भक्षणञ्च सोपवासेन सूर्य्यालयमध्य एव कर्त्तव्यमित्याह बृहस्पतिः।

सोपवासः सूर्य्यगृहे तण्डुलान् भक्षयेच्छुचिरिति।

शोध्यानुष्ठेयमनुवादव्याजेन दर्शयति पितामहः।

प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम्।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्तत इति॥

भक्षयित्वा भक्षणं कारयित्वा। हेतुमतिणिजन्तस्य भक्षेरयं प्रयोगः। पत्रे विशेषं स एवाह।

भुर्जस्यैव तु नान्यस्य अभावे पिप्पलस्यत्विति।

शुद्धाशुद्धावधारणोपायं स एवाह।

शोणितं दृश्यते यस्य हनुस्तालु च शीर्य्यते।
गात्रञ्च कम्पते यस्य तमशुद्धं विनिर्दिशेत् इति॥

बृहस्पतिरपि।

शुद्धः स्याच्छुक्लनिष्ठीवी रक्तमिश्रे तु दोषभागिति।

कात्यायनोऽपि।

शुक्लं निष्ठीवनाच्छुद्धो नियम्यो शुचिरन्यथेति।

इति तण्डुलविधि:।

अथ तप्तमाषविधि:।

तत्र पितामह:। तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम्।

कारयेदायसम्पात्रं ताम्रं वा षोड़शाङ्गुलम्॥

चतुरङ्गुलखातन्तु मृण्मयं वापि मण्डलम्॥

कर्षषोड़शांशप्रमितं मण्डलं सूर्य्यमण्डलाकारं वर्त्तुलमिति यावत्। एतादृशं पात्रं घृततैलाभ्यां पूरयेदित्याह स एव।

पूरयेद्घृततैलाभ्यां पलैर्व्विंशतिभिस्तु तत्।

सुवर्णं माषकन्तस्मिन् सुतप्ते नि:क्षिपेत्तत:॥

अङ्गुष्ठाङ्गुलिमूलेन तप्तमाषकमुद्धरेत् इति॥

सुवर्णं माषकङ्कर्षषोड़शांशप्रमाणम्। सुवर्णग्रहणं रूप्यमाषनिवृत्त्यर्थम्। तन्माषपरिमितं हिरण्यं ताम्रं वा पिण्डीकृत्य नि:क्षिपेत्। अङ्गुष्ठाङ्गुलिमूलेन अङ्गुष्ठतर्ज्जनीमध्यमाभिरित्यर्थ:। इदञ्च तप्तमाषोद्धरणम्। प्राड्विवाकेन घृततैलयोस्तापे समारब्धे धर्मावाहनादिशोध्यशिर:पत्रारोपणान्तं सर्वसाधारणं कर्म विधाय त्वमग्ने! वेदाश्चत्वार इत्यादिना अग्निदिव्यप्रकरणोक्तेन मन्त्रेणाभिमन्त्र्य कारयितव्यं शोध्यस्तु याज्ञवल्क्योक्तेन त्वमग्ने! सर्वभूतानामित्यादिमन्त्रेणाभिमन्त्र्य तप्तमाषमुद्धरेत्। अतएव बृहस्पति:।

समुद्धरेत्तैलघृतात्सुतप्तात्तप्तमाषकमिति।

कल्पान्तरमाह स एव।

सौवर्णे राजते ताम्रे आयसे मृण्मयेऽपि वा।

गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचि:॥

सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोभनाम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये ह्यनखस्पर्शगोचरे ।
परीक्षेदार्द्रपर्णेन चुरुकारं स घोषकमिति ॥

ततः प्राड्विवाको धर्मावाहनादिपत्रारोपणान्तं साधारणं कर्म कृत्वा घृतमभिमन्त्रयेत् । मन्त्रस्तु तेनैव दर्शितः ।

ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ॥
दह पावक ! पापं त्वं हिमशीतोऽशुचौ भवेति ॥

ततः प्राड्विवाकः शोध्येन त्वमग्ने ! सर्वभूतानामित्यादिमन्त्रेणाभिमन्त्रणं कारयित्वा मुद्रिकां ग्राहयेदित्याह स एव ।

उपोषितस्ततः स्नातमार्द्रवाससमागतम् ।
ग्राहयेन्मुद्रिकान्तान्तु घृतमध्यगतन्तथा ॥
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षका इति ॥

अत्र तर्जन्यैव मुद्रिकोद्धरणं कार्य्यं तस्याः परीक्षाभिधानात्पक्षद्वयेऽपि शुद्ध्यवधारणोपायं बृहस्पतिराह ।

कराग्रं योऽनुधुनुयात् विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण पितामहवचो यथेति ॥

कालिकापुराणेऽपि । न धुनेयुः कराग्रन्तु यस्य रक्तं न जायते ।
विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य चोप्सितमिति ॥

रक्तं रक्तवर्णम् । यस्य कराग्रं विस्फोटाद्यैरुज्झितमित्यन्वयः । पितामहोऽपि ।

यस्य विस्फोटका नस्युः शुद्धोऽसावन्यथा शुचिरिति ।

इति तप्तमाषविधिः। अथायस्रविधिः।

आयसं द्वादशपलङ्घटितम्फालमुच्यते।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतमिति।

एवं विधं फालम्प्रतिष्ठितेऽग्नौ प्रक्षिप्य प्राड्विवाको धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं साधारणं कर्म्मकृत्वा त्वमग्ने इत्यादिना प्रागुक्तमन्त्रेणाभिमन्त्र्य शोध्येन त्वमग्ने सर्वभूताना मित्यादिना प्रागुक्तमन्त्रेणामन्त्रणं कारयित्वा लेहयेत्। तथा च स एव। अग्निवर्णं ततश्चौरज्जिह्वया लेहयेत्सकृत्।

न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयत इति॥

इति फालविधिः। अथ धर्मजविधिः। तत्र पितामहः।

अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम्।
हन्तृणां याचमानानां प्रायश्चित्तार्थिनां नृणामिति॥

साहसाभियोगेषु याचमानानामित्यर्थाभियोगेषु प्रायश्चित्तार्थिनां नृणामिति पातकाभियोगेषु एतद्दिव्यं भवतीति सूचितम्। धर्माधर्मप्रकारमाह स एव।

राजतङ्कारयेद्धर्ममधर्मं सीसकायसम्।
लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत्॥
सितपुष्पस्तु धर्मः स्यादधर्मो सितपुष्पधृक्।
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत्॥
गोमयेन मृदा वापि पिण्डौ कार्य्यौ समन्ततः।
मृद्भाण्डके उपहृते स्थाप्यौ चानुपलक्षितौ॥
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ।
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत्॥

धर्मावाहनपूर्वन्तु प्रतिज्ञापत्रकं लिखेत् ।
यदि पाप विमुक्तोऽहं धर्मस्त्वायातु मे करे ॥

इतिमन्त्रं विशोध्य ब्रूयात्। अहमिति मन्त्रलिङ्गात्। बृहस्पतिरपि। पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।

जीवदानादिकैर्मन्त्रै गायत्र्याद्यैश्च सामभिः ॥
आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युच्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥
समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।
ततः कुम्भात्पिण्डमेकं प्रगृह्णीतानुयाचितः॥
धर्मे गृहीते शुद्धः स्यात् संपूज्यश्च परीक्षकै रिति ।

जीवदानादिकैर्मन्त्रैर्माप्रगामयथोवयमित्यादि सूक्तपठित ऋङ्मन्त्रैः अन्यैर्वा आगमोक्तैः प्राणप्रतिष्ठामन्त्रैरित्यर्थः । तेच शारदातिलके उक्ताः ।

पाँशाङ्कुशपट शक्तिर्वाणीविन्दुविभूषितः ।
पाद्याः सप्त तकारान्ताः व्योमसत्येन्दुसंयुतम् ॥
तदन्ते हंसमन्त्रः स्यात्ततो मुख्यपदम्भवेत् ।
प्राणा इति वदेत्पश्चादिहप्राणास्ततःपरम् ।
अमुख्य जीव इह तु स्थितो मुख्यपदम्भवेत्।
सर्वेन्द्रियाण्य मुख्यं ते वाङ्मनश्चक्षुरन्ततः ।
श्रोत्र प्राणपदे प्राणा इहागत्य सुखं चिरम् ।
तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः ।
प्रत्यमुख्यपदात्पूर्वं पाशाद्यानिप्रयोजयेत् ॥
प्रयोगेषु समाख्यातः प्राणमन्त्रोमनीषिभिरिति ।

इति धर्मजविधिः ।

अथ शपथ विधिः।

तत्र मनुः। महर्षिभिश्च देवैश्च कार्य्यार्थं शपथाः कृताः।

वसिष्ठश्चापि शपथं शपथे जवने नृप इति॥

नारदोऽपि। शपथा अपि देवानामृषीणां च महात्मनाम्।

वसिष्ठः शपथं लेभे यातुधाने तु शङ्कितः॥

महर्षयस्तथेन्द्रश्च पुष्करार्थेनिबोधिताः।

शेपुः शपथमव्यग्राः परस्परविशुद्धये इति॥

शपथे विशेषमाह। मनुः।

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।

गोवीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैरिति॥

व्याख्यातमेतत् पूर्वमेव। बृहस्पतिरपि।

सत्यवाहनशस्त्राणि गोवीजकनकानि च।

देवब्राह्मणपादांश्च पुत्रदारशिरांसि च॥

एते च शपथाः प्रोक्ताः मुनिभिः स्वल्पकारण इति।

पुत्रदारादीनां शिरःस्पर्शः कार्य्यः। तथा च मनुः।

पुत्रदारस्य चाप्येनं शिरासि स्पर्शयेत्पृथक् इति।

स्पर्शनञ्च दक्षिणकरेण कुर्य्यात्। तथा च कात्यायनः।

यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न तूच्यते।

दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः कर इति॥

शपथे कृते कियता कालेन शुद्धिरवधारणीयेत्याकाङ्क्षायां शुद्धिप्रकारमाह स एव।

आचतुर्दशकादह्नो यस्य नोराजदैविकम्।

व्यसनञ्जायते घोरं स ज्ञेयः शपथे शुचिरिति॥

व्यसनमापत् घोरं अतिपीड़ाकरम्। अल्पस्य शरीरधर्म-

त्वात्। तच्च प्रागुक्तरोगादि अत्राह्नो दिवसस्य योऽयञ्चतुर्द-
शभागस्तस्मादर्वाग्व्यसनं न जायते स शपथे शुचिरित्यर्थः।
कर्त्तव्यस्य शपथस्य स्वल्पविषयत्वेन बहुवधेरनुचितत्वात्।

यमिद्धो न दहत्यग्नि रापो नोन्मज्जयन्ति च।
न चार्त्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचि रिति॥

मनुना शीघ्रमेव शुचेरभिधानाच्च मिथ्याशपथकरणे दोष-
माह यमः।

कृत्वा वृथातु शपथं कीटस्य वधसंयुतम्।
अनृतेन च युज्येत बधेन च तथा नरः॥
तस्मान्न शपथं कुर्यान्नरो मिथ्यावधेप्सितमिति।
कीटस्येति यज्जन्तु वधेऽल्पदोषस्तस्योपलक्षणम्॥

तेनात्यन्तानुपयुक्तकीटादीनामपि वधसंयुक्तः शपथोऽन-
र्थहेतुः तद्वधपापे न वृथा शपथकर्त्ता युज्यत इत्यर्थः। यत्तु
स्मृतितत्वे प्राणिमात्रोपलक्षणमित्युक्तम्। तदयुक्तं ब्राह्म-
णादीनां प्राणित्वेन सग्रहान्मिथ्याशपथकरणे तद्वधदोषजनि-
तप्रसङ्गात्। मनुरपि।

न वृथाशपथं कुर्य्यात् स्वल्पेऽप्यर्थे नरोबुधः।
वृथा हि शपथं कुर्वन् प्रेत्य चेह च नश्यतीति॥

अत्र शपथानामपि दिव्यत्वादुपवासादिसाधारणादि-
त्र्यविधिरत्रातिदेष्टव्यः। यत्तु स्मृतितत्वव्यवहारचिन्तामणिका-
राभ्यां शपथानान्दिव्यभेदेनोपन्यासाद्घटादिमध्ये परिगणना-
भावाच्च न दिव्येतिकर्त्तव्यतया अतिदेश इत्युक्तम्। तद-
प्यसत्। पूर्वनारदादिवचनैः शपथानामपि दिव्यत्वस्योक्तत्वात्।
धटादिपरिगणनवाक्यस्योपलक्षत्वेन व्याख्यातत्वाच्च। किञ्च

तदुक्तदिव्यलक्षणस्यापि सत्त्वाच्च त्वयापि तेषान्दिव्यत्वमङ्गी-कर्त्तव्यम् अन्यथा तल्लक्षणमव्याप्तं स्यात् तस्मात् शपथानामपि दिव्यत्वादस्त्येव दिव्यधर्मातिदेश इत्यलम् । इति शपथविधिः समाप्तः ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मज श्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्र विद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे प्रमाणनिरूपणाख्यं द्वितीयं प्रकरणम्॥

---

## एवं लौकिकालौकिकेषु प्रमाणेषु निरूपितेषु प्रमेयाणि व्यवहारपदानि निरूप्यन्ते ।

---

तृतीये प्रकरणे तेषाञ्चोद्देशो व्यवहारभेदप्रदर्शनप्रस्तावे ऋणादानं ह्युपनिधिरित्यादि नारदवचनेन दर्शितः । मनुरपि ।

तेषामाद्यमृणादानं निक्षेपो स्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥

सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुन्धर्मों विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविहेति ॥

यद्यपि नारदवचने द्यूतप्रकीर्णकञ्चैवेत्यष्टादशपदान्युक्तानि । तथापि प्रकीर्णकपदेनोपयुक्तशेषाभिधानाद्राज्ञैव स्वाज्ञातिक्रमादौ परेण कृते प्रतिवादित्वमास्थापयन्निर्णेतव्यम्। यच्च ऋणादिषु पूर्वोक्तव्यवहारपदेषु नोक्तन्तत्सर्वं प्रकीर्णकमिति नारदेनैव तल्लक्षणकरणाद्व्यवहर्तृसम्बन्धनियमाभावान्मनुना प्रकीर्णकस्य व्यवहारपदत्वानुक्तिरिति ध्येयम् । द्यूताह्वययोस्तु अप्राणिपाशादिकृतत्वप्राणिमल्लक्षणमेषादिकृतत्वमात्रभेदादेकपदत्वविवक्षयाऽष्टादशसङ्ख्योपपादनीया । अन्यथोनविंशतिसंख्यत्वापत्तेः । यथा सपणक्रीड़त्वेन तयोरभेदविवक्षयैक्यमुक्तन्तया पारुष्यरूपेण वाग्दण्डपारुष्ययोरप्येकविवक्षा सम्भवति तथापि तत्र विवक्षितं स्वतन्त्रेच्छस्य पर्य्यनुपयोगानर्हत्वात् मनुना द्विवचनप्रयोगान्नारदादिनिबन्धनेषु पृथङ्निर्देशाच्च ननु पारुष्यद्वयस्य बलमात्रसाहसविशेषत्वात्पदान्तरत्वोक्तिरयुक्ता सत्यम् । बलावष्टम्भेन क्रियमाणस्य तस्य साहसत्वं छलकृतस्य तु साहसलक्षणाभावात्पदान्तरत्वम् । तथा-चाह नारदः । तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र त्वच्यते ।

आधिः साहसमाक्रम्य स्तेयमाधिच्छलेन तु ॥

तस्येति पूर्वोक्तं साहसम्परामृष्टम् आधिरर्थाहरणद्वारा क्रियमाणः परस्य मानसः क्लेशः । पुंस्याधिर्मानसी व्यथेति कोशात् । स आक्रम्य बलावष्टम्भेन विधीयमानः साहसमित्य-

च्यते । छलेन तु विधीयमान आधिः । स्तेयमित्युच्यत इत्यर्थः । नन्वनेन स्तेयस्य साहसाद्भेदे पृथगुद्दिष्टस्य पारुष्यद्वयस्य सुतरान्ततः स उन्नेतुं शक्य इत्यभिप्रायो नारदस्य तदुक्तं संग्रहकारेणापि ।

मनुष्यमारणादीनि कृतानि प्रसभं यदि ।

साहसानीति कथ्यन्ते यथाख्यान्यन्यथा पुनः ॥

अन्यथा पुनर्यद्यप्रसभं कृतानि तदा यथाख्यानि स्वस्वाख्यानि स्तेयस्त्रीसंग्रहणवाक्पारुष्यदण्डपारुष्यसंज्ञकानि भवन्तीत्यर्थः । अतएव मनुना स्तेयस्त्रीसंग्रहणे अपि व्यवहारपदत्वेन साहसात् पृथगुद्दिष्टे । नारदेन तु तयोः प्रायेण लोके च्छलेनैव क्रियमाणत्वात्पदान्तरत्वं स्फुटमित्यनुक्त्वा साहसत्वमस्फुटयति तदेवोक्तम् । वाक्पारुष्यदण्डपारुष्ययोस्तु विपरीतम् । प्रायेण ते प्रसभमेव क्रियमाणे लोके दृश्येते । छलेन तु तयोः करणं साहसभेदापादकमस्फुटमिति तद्व्यक्तीकरणापत्तेरेव साहसात्पृथगुपदिष्टे । अतएव तेनाप्राणिप्राणिकृतत्वविशेषापुरस्कारेण समाह्वयोऽपि द्यूतत्वेनैवोद्दिष्ट इति ध्येयम् । यद्यप्युपनिधिनिक्षेपयोरपि तत्प्रकरणवक्ष्यमाणरीत्यावान्तरभेदोऽस्ति तथापि तमविवक्षितत्वान्मनुनारदाभ्यां पर्य्यायत्वेनैव द्वयं विवक्षितम् । एतयैव दिशा स्मृत्यन्तरयोरप्यविरोध उन्नेयः । एवं व्यवहारपदानां प्रातिस्विकानि लक्षणानि तदवान्तरभेदाश्च तत्तत्स्थाने व्यक्तीकरिष्यामः । बृहस्पतिः ।

पदान्यष्टादशैतानि धर्मशास्त्रोदितानि तु ।

मूलं सर्वविवादानां ये विदुस्ते परीक्षका इति ॥

यत्तु, नारदेन । एषामेव प्रभेदोऽन्यः शतमष्टोत्तरं स्मृतम् ।

क्रियाभेदान्मनुष्याणां शतशाखो निगद्यत इत्युक्तत्।
यच्च कात्यायनेन। अष्टादशक्रियाभेदाद्भिन्नान्यष्टसहस्रश इति।
तत्र क्रियाभेदात्साध्यभेदादित्यर्थः। तदियमप्यवान्तरभेदभूयस्त्वा-
भिप्रायेण प्रकीर्णप्रकारप्राचुर्याभिप्रायेण चेत्यष्टादशत्वविघातः।
अतएवाष्टोत्तरशतसङ्ख्यात्वाष्टोत्तरसहस्रसङ्ख्यात्वयोरपि नारदका-
त्यायनोक्तयोः प्रकारभूयस्त्वमात्र परत्वादविरोध इति व्यवहार-
पदानामुद्देशः। एषां सामान्यलक्षणन्तु स्मृत्याचारव्यपेतेनेत्या-
दि योगीश्वरवचनेन व्यवहारसामान्यलक्षणप्रस्तावप्रदर्शितेन
प्रकटितम्। व्यवहारस्य चतुष्पाद्व्यवहारस्य पदं विषय इति
योगव्युत्पत्त्यापि तदेव पर्य्यवस्यति। यत्तु बृहस्पतिना।

पदाङ्गसहितस्यैव व्यवहारः प्रकीर्त्तितः।
विवादकारणान्यस्य पदानि शृणुताऽधुनेति॥

विवादकारणत्वं लक्षणमुक्तमपि विषयस्यापि कारण-
त्वादविरुद्धमिति अथ क्रमशः ऋणादानादीनि अष्टादशव्यव-
हारपदानि निरूपयिष्यता प्रथमन्तावत् ऋणाख्यमाद्यं पद-
न्निरूप्यते। बृहस्पतिः।

पदाङ्गसहितस्यैव व्यवहारः प्रकीर्त्तितः।
विवादकारणान्याह पदानि शृणुतानि तु॥
ऋणादानोद्धाहादीनि द्यूताह्वानान्तिकानि च।
क्रमशः सम्प्रवक्ष्यामि क्रियाभेदांश्च तत्त्वत इति॥

तस्य सप्तविधत्वं दर्शयन् स्वरूपमाह। नारदः।

ऋणन्देयमदेयञ्च येन यत्र यथा च यत्।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतमिति॥

तत्राधमर्णो पञ्चविधम्। ईदृशमृणं देयम् ईदृशमदेयम्।

अनेनाधिकारिणा देयम्। अस्मिन् समये देयम्। अनेन प्रकारेण देयमिति। उत्तमर्णो द्विविधन्दानविधिरादानविधिश्चेति। एवं समुदितं सप्तप्रकारं यस्मिन्विवादविषये तदृणादानाख्य व्यवहारपदमित्यर्थः। तत्रेतरेषां दानविधिपूर्वकत्वादादौ दानविधिरुच्यते। तत्र बृहस्पतिः।

परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम्।
लेख्यारूढं साक्षिमद्वा ऋणन्दद्याद्धनी सदेति॥

परिपूर्णं सवृद्धिकमूलद्रव्यपर्य्याप्तम्। आधिर्बन्धकम्। तद्विषये विशेषोऽग्रे वक्ष्यते। नन्वाधिबन्धयोरेकार्थत्वेन लोकप्रसिद्धत्वात्कथं बन्धं वेत्युक्तिरित्याशङ्क्याह तत्र विवक्षितसम्बन्धशब्दस्यार्थमाह। नारदः।

निक्षेपो मित्रहस्तस्थो बन्धो विश्वासकः स्मृत इति॥

उत्तमर्णस्य विश्वासहेतुस्तन्मित्रहस्तस्थो निक्षेप एव बन्धशब्देनोच्यत इत्यर्थः। तत्रापि विशेषोऽग्रे वक्ष्यते। लग्नकः प्रतिभूः। तथा चायमर्थः। उत्तमर्णः परिपूर्णमाधिं बन्धं वा समीचीनलग्नकं वाधमर्णहस्तलिखितं साक्षियुक्तं वा पत्रं गृहीत्वा ऋणन्दद्यादिति। ऋणशब्दसमानार्थकस्य कुसीदशब्दार्थप्रदर्शनव्याजेन तत्प्रयोजनमाह नारदः।

स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते।
तत्कुसीदमिति ज्ञेयन्तेन वृत्तिः कुसीदिनामिति॥

स्थानं मूलधनस्यावस्थितिः लाभो वृद्धिः। तन्निमित्तं तत्प्रयोजनमित्यर्थः। कुसीदशब्दस्यावयवार्थन्दर्शयति। बृहस्पतिः। कुत्सितात्सीदतश्चैव निर्विशङ्कैः प्रगृह्यते।

चतुर्गुणं वाष्टगुणं कुसीदाख्यमृणं ततः।

कुसितात्सीदत इत्येते अधमर्णविशेषणे ॥

वृद्धिप्रकारान् स एवाह ।

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्त्तिता ।

षड्विधान्यैः समाख्याता तत्त्वतस्तां निबोधत इति ॥

षड्विधास्ते इति क्वचित्पाठः तत्र मे मते । तान् प्रकारान् स एवाह । कायिका कालिका चैव चक्रवृद्धिरतोऽपरा ।

कारिता सशिखा वृद्धिर्भोगलाभस्तथैवचेति ॥

एतेषां स्वरूपमाह ।

कायिका कर्मसंयुक्ता मासग्राह्या तु कालिका ।

वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता ॥

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता ।

गृहाल्लोपः फलं क्षेत्राद्भोगलाभः प्रकीर्त्तित इति ॥

कायिका कर्मसंयुक्ता यत्र बन्धकीकृतस्य गवाश्वादेर्दोहनवाहनादिकं कर्म वृद्धित्वेन परिकल्पितं तत्र सा कायिकेत्यर्थः । तथा च व्यासः । दोह्यवाह्यकर्मयुता कायिका समुदाहृतेति । मदनरत्ने तु भोग्याधितया स्थापितस्य यो दोहनवाहनादिकर्मरूपैर्भोगस्तत्सम्मिता या वृद्धिः सा कायिकेत्युक्तम् । मासग्राह्या तु कालिका । प्रतिमासं लभ्या या वृद्धिः सा कालिकेत्यर्थः । प्रतिमासं स्रवन्ती या वृद्धिः सा कालिका मतेति नारदवचनात् । वृद्धेर्वृद्धिश्चक्रवृद्धिः । वृद्धेरपि प्रतिमासं मूल्यभावेन पुनर्वृद्धिरित्यर्थः । वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेति नारदवचनात् । कारिता ऋणिना कृता । ऋणिनाऽधमर्णेन स्वेच्छया कृता वृद्धिः कारितेत्यर्थः । वृद्धिः सा कारिता नाम-खणिकेन स्वयं कृतेति नारदवचनात् । अधमर्णकारिता चैव

वृद्धिर्देयानो त्तमर्णकारिता। तथा च वृहस्पतिः।

ऋणिकेण तु या वृद्धिरधिका सम्प्रकल्पिता।
आपत्कालकृता नित्यं दातव्या सा तु कारिता।
अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चनेति॥

उत्तमर्णप्रलोभनार्थम् आपत्काले शास्त्रोक्तादधिका स्वयं कल्पिता कारिता या सा वृद्धिर्दातव्या न पुनरेवंविधा धनिकेन कारिता दातव्येत्यर्थः।

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता।

प्रतिदिनलभ्यात्मशिखासादृश्याच्छिखावृद्धिरिति व्यपदिश्यत इत्यर्थः। किं पुनः शिखासादृश्यं वृद्धेरित्याकाङ्क्षायां वृहस्पतिरेवाह। शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्त्तते।

मूले दत्ते तथैवैषा शिखावृद्धिस्तु सा स्मृतेति॥

प्रत्यहं गृह्यत इति अधमर्णातिश्चनादिनसंख्यया वृद्धिग्रहणमात्रोपलक्षणम्। तथा च कात्यायनः।

प्रतिकालन्ददात्येव शिखावृद्धिस्तु सा स्मृतेति।
गृहात्तोषः फलं चेत्राद्भोगलाभः प्रकीर्त्तितः॥

बन्धकीकृताद्गृहान्निवासादिजनितः स्तोषः। क्षेत्रात् शस्यादिफलञ्च भोगलाभाख्यो वृद्धिप्रकार इत्यर्थः। गृहक्षेत्रग्रहणं स्थावरात्मकभोग्याधेरुपलक्षणार्थम्॥ अतएव कात्यायनः।

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पितः।
प्रयोगे यत्र चैवं स्यादाधिभोगः स उच्यत इति॥

यस्मिन्नृणादानप्रयोगे स्थावराधित्वेन परिकल्पिता यावृद्धिस्तत्र सा वृद्धिराधिभोग इत्युच्यत इत्यस्यार्थः।

अपराकर्दौ गृहात्स्तोमः शदः चेत्रादिति पाठः।

स्तोमो भाण्डक इति कल्पतरौ। शदः शस्यादिफलम्।
वृद्धेः परिमाणन्दर्शयति मनुः।

वसिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम्।
अशीतिभागं गृह्णीयात् मासाद्वार्धुषिकः शते इति॥

निष्कशते प्रयुक्ते मासस्य सपादनिष्कपरिमितां वृद्धिं वार्धुषिको वृद्ध्यर्थं गृह्णीयादित्यर्थः एतत्सम्बन्धकविषयम्। अतएव याज्ञवल्क्यः।

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथेति॥

सबन्धके प्रयुक्तस्य द्रव्यस्याशीतितमो भागो वृद्धिः पणशते प्रयुक्ते सपादः प्रतिमासम्वर्द्धत इत्यर्थः। अन्यथा बन्धकराहित्ये वर्णक्रमात् ब्राह्मणादिवर्णक्रमेण द्वित्रिचतुःपञ्चकं शतन्धर्म्यं भवति। द्वौ वा त्रयो वा चत्वारो वा इति द्वित्रिचतुःपञ्चा अस्मिन् शते वृद्धिर्दीयते इति द्वित्रिचतुःपञ्चकं शतम्। तदस्मिन् वृद्ध्यायतलाभशुल्कोपदा दीयत इति कन्। तथा चायमर्थः। बन्धकरहिते पणशतं प्रतिमासं ब्राह्मणात्पणद्वयं क्षत्रियात् पणत्रयं वैश्यात्पणचतुष्टयं शूद्रात्पणपञ्चकं ग्राह्यम्। यत्तु मनुनोक्तम्। द्विकं शतं वा गृह्णीयात्सतान्धर्ममनुस्मरन्निति तद्व्यवस्थितविकल्पविषयम्। अतएव व्यासः।

सम्बन्धे भाग आशीतः षष्ठो भागः सलग्नके।
निराधाने द्विकशतं मासलाभ उदाहृत इति॥

सम्बन्धे आधिसहिते। आशीतः अशीततमः। षष्ठः षष्ठितमः। सलग्नकः प्रतिभूः। निराधाने बन्धकरहिते। आधानग्रहणं प्रतिभुवोरप्युपलक्षणम्। कल्पतरौ साष्टभाग इति

पठित्वा सलग्नके ॥ अशीततमो भागः। स्वकीयाष्टमभाग-सहितो मासवृद्धिरित्युक्तम्।

द्विकन्त्रिकञ्चतुष्कञ्च पञ्चकञ्च शतं समम्।

मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वश इति ॥ द्विकं द्वौ वृद्धिर्दीयते यस्मिन्मूलधने तत्तथा। एवं त्रिकाद्यपि सम-मात्रं प्राप्य नाधिकम् ॥

विष्णुरपि। अथोत्तमर्णोऽधमर्णकाद्यथा दत्तमर्थं गृह्णीयात्।

द्विकन्त्रिकञ्चतुष्कं पञ्चकं शतं वर्णानुक्रमेण प्रतिमासमिति।

अधमर्णविशेषेऽप्याह याज्ञवल्क्यः।

कान्तारगास्तु दशकं सामुद्रा विंशकं शतमिति ॥

ऋणं गृहीत्वा कान्तारं महावनन्तद्गच्छतीति ॥

कान्तारगाः दुर्गस्थलगन्तारो वस्त्रादिक्रयकारिणः। पण-शतस्य दशकं प्रतिमासन्दशपणान् दद्युरित्युत्तरवाक्यस्यानु-षङ्गः। समुद्रन्तरन्तीति सामुद्राः समुद्रगन्तारः प्रतिमासं विंशकं शतन्दद्युरित्यर्थः। कारितायान्तु न नियम इत्याह। स एव। दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिष्विति।

सर्वे ब्राह्मणादयोऽधमर्णाः सबन्धकेऽबन्धके वा सर्वासु-जातिषूत्तमर्णभूतासु स्वयमङ्गीकृतां वृद्धिन्दद्युरित्यर्थः।

द्रव्यविशेषे वृद्धिविशेषमाह स एव।

सन्ततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा।

वस्त्रधान्य हिरण्यानाञ्चतुःस्त्री द्विगुणा परेति ॥

पशुस्त्रीणां महिषीस्त्रीणां प्रभृतीनां वृद्ध्यर्थं प्रयुक्त-नात्तदीया सन्ततिरेव वृद्धिः। रसस्य घृतादेरष्टगुणा। वस्त्रा-णाञ्चतुर्गुणा धान्यानान्त्रिगुणा। हिरण्यानां द्विगुणा परेति

प्रत्येकं सम्बध्यते। परा परमा। अतःपरमधिका वृद्धिर्नास्तीत्यर्थः। न च गवादीनां ऋणत्वेन दानन्न सम्भवतीति वाच्यम्। तत्पोषणाद्यशक्तस्य तत्पुष्टिसन्तत्याद्यर्थिनो दानसम्भवात्। ग्रहणन्तु चीरवाहनसेवार्थिनः। बृहस्पतिरपि।

हिरण्ये द्विगुणा वृद्धि स्त्रिगुणा वस्त्रकुप्यके।
धान्ये चतुर्गुणा प्रोक्ता शदवाह्यलवेषु च॥
उक्ता पञ्चगुणा शाके वीजेक्षौ षड्गुणा स्मृता।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा मता॥
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके इति।

कुप्यं त्रपुसीसकादिकम्। शदः क्षेत्रफलम्। तच्च गोवलीवर्दन्यायाद्धान्यव्यतिरिक्तम्पुष्पमूलफलादिकम्। वाह्योऽश्वादिः। लवो मेषोर्णाचमरीकेशादिः। अत्र चिरकालशब्देन प्रतिश्रुतायाः अशीतिभागायाः वृद्धे र्यस्मिन् समये द्वैगुण्यादिप्रापकत्वम्भवति। ततोऽधिकः कालो गृह्यते। यत्तु धान्ये शदेलवेवाह्येनेत्यादि मनुनोक्तं तत्प्रत्यर्पणसमये सम्बद्धाधमर्णविषयम्। षाड्गुण्यनिषेधपरमिति मदनरत्ने। यत्तु वसिष्ठवचनम्। द्विगुणं हिरण्यन्त्रिगुणं धान्यन्धान्ये नैव रसा व्याख्याताः। पुष्पमूलफलानि च तुलाधृतमष्टगुणमिति तत्त्रिगुणमेव धान्यादिकं दातव्यमिति यत्र देशेस्थिति स्तद्विषयम्। दरिद्राधमर्णविषयं वा एव मन्यत्रापिन्यूनाधिकपरमवृद्धिप्रतिपादकानि वचनानि देशविशेषविषयतया दरिद्रादिविषयतया वा व्यवस्थापनीयानि।

व्यासोऽपि। वदन्त्यष्टगुणान् काले मद्यस्नेहरसासवानिति स्नेह स्तैलादिः। रसः चीरादिः। कात्यायनोऽपि।

तैलानाञ्चैव सर्वेषां मद्यानामथ सर्पिषाम्।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य चेति॥

विष्णुरपि। हिरण्यस्य द्विगुणा वृद्धिस्त्रिगुणा वस्त्रस्य धान्यस्य चतुर्गुणा रसस्याष्टगुणा सन्तति स्त्रीपशूनामिति।
व्यासोऽपि। शाकपाषाणबीजेत्तौ षड्गुणा परिकीर्त्तितेति।
वशिष्ठोऽपि। वज्रशुक्तिप्रवालानां हेम्नश्च रजतस्य च॥
द्विगुणा तिष्ठते वृद्धिः कृतकालानुसारिणीति।

शुक्तिशब्देनात्र मुक्ताफलं लक्ष्यते। वज्रसाहचर्य्यात्। अतएव कात्यायनः। मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठति द्विगुणा वृद्धिः फलकौटाविकस्य चेति॥

कौटङ्कीटोद्भवम्। पट्टसूत्रादि। आविकं कम्बलादिकम्।
वसिष्ठोऽपि। ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च।
त्रिगुणा तिष्ठतो वृद्धिः कालाचिरकृतस्त्विति॥

रीतिरारकूटम्। देशभेदेन परां वृद्धिं दर्शयति नारदः।
ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः।
देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते॥
द्विगुणा त्रिगुणाश्चैव तथान्यस्मिंश्चतुर्गुणम्।
तथाष्टगुणमन्यस्मिन् तत्तद्देशेऽवतिष्ठत इति॥

यत्र वृद्धिविशेषो न श्रूयते तत्र द्विगुणैव ग्राह्येत्याह विष्णुः। अनुक्तानां द्विगुणेति अयञ्च द्वैगुण्यादिरूपो वृद्ध्युपरमः सकृत्प्रयोगे सकृदाहरणे वेदितव्यः तथा च मनुः।
कुसीदवृद्धिर्द्वैगुण्यन्नात्येति सकृदाहितेति।

उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं तस्य वृद्धिः कुसीदवृद्धिर्द्वैगुण्यन्नात्येति नातिक्रामति। यदि सकृदाहितासकृत् प्रयुक्ता

पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणेन तस्मिन्नेव वा पुरुषे रेकसेकाभ्यां प्रयोगान्तरकरणे द्वैगुण्यमतिक्रम्य पूर्ववद्वर्द्धत एवेत्यर्थः। द्वैगुण्यग्रहणं त्रैगुण्यादीनामुपलक्षणम्। सकृदाहृतेति पाठे यदि प्रतिमासं प्रतिवत्सरं वा न गृह्यते किन्तु सकृद्गृह्यते तदा द्वैगुण्यन्नातिक्रामतीत्यर्थः। गौतमोऽपि। चिरस्थाने द्वैगुण्यं प्रयोगस्येति। प्रयोगस्येत्येकवचननिर्देशात् प्रयोगान्तरकरणे द्वैगुण्यातिक्रमः चिरस्थान इति निर्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगुण्यातिक्रमो भवतीति सूचितम्। उक्तस्य वृद्ध्युपरमस्य क्वचिद्द्रव्यविशेषेऽपवादमाह वृहस्पतिः।

तृणकाष्ठेऽष्टकासूत्र किण्वचर्मास्थिवर्मणाम्।
हेति पुष्पफलानाञ्च वृद्धिस्तु न निवर्त्तत इति॥

किण्वं सुराद्रव्योपादानकारणभूतो मलविशेषः चर्म शरादिनिवारक फलकः सुराद्रव्योपादानकारणञ्चर्महरकमित्यपरार्के वर्म कवचम्। हेति सुरायुधम्। पुष्पफलयोर्वृद्धिरनिवृत्तिः। प्रपिदानवेलायामत्यन्तसमर्थाधमर्णविषया देशविशेष विषया वा वेदितव्या। अन्यथा त्रिगुणवृद्धिप्रतिपादकाव्यासवचनविरोधः स्यात्। विष्णुरपि। किण्वकार्पास सूत्रवर्मचर्मायुधेष्टकाङ्गाराणामक्षयेति। कार्पासे तु षड्गुणवृद्धिविधायकव्यासवचनविरोधः पूर्ववत्परिहरणीयः वसिष्ठोऽपि।

दन्त चर्मास्थिश्टङ्गाणां मृण्मयानान्तथैव च।
अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य चेति॥

अक्षया मूल प्रतिपादनाभावे शतगुणापि वर्द्धत एवेत्यर्थः। शिखावृद्ध्यादीना मनुपरमसाह। वृहस्पतिः।

शिखावृद्धिङ्कायिकाञ्च भोगलाभन्तथैव च।

धनी तावत् समादद्याद्यावन् मूलन्नशोधित मिति॥

न शोधितन्न प्रतिदत्तमधमर्णेनेत्यर्थ:। क्वचिदनङ्गीकृतापि वृद्धिर्भवतीत्याह विष्णु:।

यो गृहीत्वा ऋणं पूर्वं श्वो दास्यामीति सामकम्।

न दद्याल्लोभत: पश्चात्तदह्नाद्वृद्धिमाप्नुयादिति॥

श्व इति प्रतिश्रुतस्य प्रतिदानकालावधेरुपलक्षणम्। सममेव सामकम् अवृद्धिकमिति यावत्। योऽमुकस्मिन्दिने सममेवाहं त्वदीयन्धनन्दास्यामीति प्रतिज्ञाय ऋणं गृहीत्वा पश्चाल्लोभाद्विलम्बं कुर्य्यात्सोऽवधिदिनमारभ्य वृद्धिन्दद्यादित्यर्थ:। कालावध्यनङ्गीकारेण गृहीतस्य धनस्य षण्मासादूर्ध्वं वृद्धिर्भवतीत्याह नारद:।

न वृद्धि: प्रीतिदत्तानां स्यादनाकारिता क्वचित्।

अनाकारितमप्यूर्द्धं वत्सरार्द्धाद्विवर्द्धत इति॥

अनाकारिता अनङ्गीकृता प्रीतिदत्तानां प्रतियाचनप्रतिदानदिननिर्देशशून्यानामिति शेष:। अनाकारितेत्यादेरयमर्थ:। वृद्धिमकृत्वा गृहीतमपि षण्मासादूर्द्धं प्रतिदत्तं वृद्धिं प्राप्नोतीति। प्रतियाचितस्य प्रतिदत्तस्यादाने वृद्धिविशेषमाह। कात्यायन:। प्रीतिदत्तन्न वर्द्धेत यावन्न प्रतियाचितम्।

याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतमिति॥

पञ्चकम्पञ्चाधिकम्। प्रतियाचनदिनमारभ्य पणशतस्य पणपञ्चकं प्रतिमासं वर्द्धत इत्यर्थ:। याचितकं गृहीत्वा अप्रतिदायैव देशान्तरगमने विशेषमाह कात्यायन:।

यो याचितकमादाय तमदत्वा दिशं व्रजेत्।

ऊर्द्धं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयादिति॥

एतच्च प्रतियाचितविषयम्। प्रतियाचिते याचितक-मदत्त्वा यदि देशान्तरङ्गच्छति तदा विशेषमाह स एव।

कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत्।
ऊर्द्धं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयादिति॥

कृत्वोद्धारं याचितकं गृहीत्वा याचितोऽप्यदत्त्वेत्यन्वयः। देशान्तरगमनाभावे तु याचितकालादारभ्य याचितकस्य वृद्धि-विशेषमाह स एव।

स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित्।
तन्ततो कारितां वृद्धिमनिच्छन्तञ्च दापयेदिति॥

ततः प्रतियाचनकालादारभ्येत्यर्थः। एतत्कञ्चिदवधिम-परिकल्प्य याञ्चाप्राप्ते ज्ञेयम्। अवधिं स्वीकृत्य तदतिक्रमेत्वति-क्रमदिनमारभ्य तद्धनस्य वृद्धिर्ज्ञेया। तदङ्काद्वृद्धिमाप्नुयादिति न्यायसाम्यात्। गृहीतपण्यो मूल्यमनर्थदेशान्तरगमने वृद्धि-शेषमाह। पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत्।

ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयादिति।

एतच्चा प्रतियाचितविषयम्। प्रतियाचने त्वेतस्य निश्चित-वृद्धिशेषयोश्च तद्दिनमारभ्य प्रतिमासं शते पञ्चकं वर्द्धत इत्य-प्याह स एव। निःक्षिप्तं वृद्धिशेषञ्च क्रयविक्रय एव च।

याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतमिति॥

नन्वकृतायां वृद्धौ परिमाणविशेषस्यानुक्तेः किं परिमाणं ग्राह्यमिति चेत्। अशीतिभागो वृद्धिः स्यादित्यादि याज्ञ-वल्क्याद्युक्तपरिमाणं ग्राह्यमिति ब्रूमः। अतएव विष्णुः।

वृद्धिन्दद्युर्वत्सरातिक्रमे यथाभिहितामिति।

वत्सरातिक्रम इति यत्र यदतिक्रमे वृद्धिरुक्ता तस्योपल-

ग्रहणम्। यथाभिहितां धर्मशास्त्र इति शेष:। धर्मशास्त्रे यथोक्तां तथाविधामित्यर्थ:। ननु यथाभिहितामित्यस्यार्थिप्रत्यर्थिनोरन्यतरेण मध्यस्थेन वाभिहितान्दद्यादित्यर्थ:। कस्मान्न भवति अति प्रसङ्गापत्ते:।

कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति।
कुसीदपथमाहुस्तं पञ्चकं शतमर्हतीति मनूक्तेश्च।

अस्यार्थ:। शास्त्रविधिर्नियमितशास्त्रकृतवृद्ध्यनुसारी यो वृद्धिग्रहणे लौकिकानां समाचार: स कृतानुसार: तस्मादधिकाद्वृद्धिरुत्तमर्णादेरकृतवृद्धौ न सिद्ध्यति यत: साव्यतिरिक्ताधर्मशास्त्रबाह्या। अतएव कुसीदपथमाहुस्तन्न धर्मपथमिति। पञ्चकं शतमर्हतीति प्रतियाचितविषयमिति स्मृतिचन्द्रिकायाम्। पूर्वोक्ताच्छास्त्रानुसारादधिकाऽधमर्णेनाकृता वृद्धिर्न सिध्यति। यत: कुसीदपथमाहुस्तम्। यदा तु व्यवहारावष्टम्भादुत्तमर्णोऽधिकमधमर्णेनाकारितं लाभमिच्छति तदा ब्राह्मणे पञ्चकं शतं गृहीतु मर्हति न ततोऽधिकमधमर्णाकारितमित्यर्थमाह रत्नाकर:। अकृतवृद्धेरपवादमाह नारद:।

पण्यमूल्यं भृतिन्यासो दण्डो यश्च प्रकल्पित:।
वृथादानाक्षिकपणा वर्द्धन्ते नाविवक्षिता इति॥

पण्यस्य वस्त्रादेर्मूल्यम्। भृतिर्वेतनम्। न्यासो निक्षेप:। वृथादानं वेश्यादिभि: प्रतिश्रुतम्। आक्षिकपणो द्यूतद्रव्यम्। अविवक्षिता:। अत्र पण्यमूल्यस्य वृद्धेरभावोक्ति: प्रवासप्रतियाचनयोरभावे वेदितव्या:। अन्यथा पूर्वोक्तकात्यायनवचनेन विरोध: स्यात्। न्यासस्य च वृद्ध्यभाववचनं प्रतियाचनाभावे।

न वृद्धिः स्त्रीधने लाभे निःक्षिप्ते च यथास्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयं कृतेति ॥

संवर्त्तवाक्ये यथास्थितमिति विशेषणोपादानाद्युक्त्यन्यथाकरणाभावे च ज्ञातव्यम् । तथा च निक्षिप्तं वृद्धिशेषञ्चेत्यादि पूर्वोक्तकात्यायनवचनविरोधो नेति । कात्यायनोऽपि ।

वर्णशस्यासवद्यूते पण्यमूले च सर्वदा ।
स्त्रीशुल्केषु न वृद्धिः स्यात्प्रातिभाव्यागतेषु चेति ॥

सर्वदेत्यनेन प्रतियाचनादेः परस्तादपि वृद्धिरकृता नास्तीत्युक्तम् । यद्यपि सर्वदेति सर्वशेषत्वात्पण्यमूल्येऽपि प्रतियाचनादेः परस्तादकृतवृद्ध्युपरमः प्रतिभाति । तथापि पूर्वोक्तकात्यायनवचनविरोधाय तच्छेषता सर्वदेत्यस्य । एवञ्च पूर्वोक्त एव परिहारः । एवं वर्णणोऽपि वृद्ध्यभावोक्तिः । प्रतियाचनाभावे तथा च न तत् शेषतापि । एवञ्च न पूर्वोक्ताचयवृद्धिप्रतिपादकवशिष्ठादिवचनविरोधः । अन्यत्रापि वृद्ध्यभावं व्यास आह ।

प्रातिभाव्यम्भुक्तबन्धमगृहीतञ्चदित्सतम ।
न वर्धते प्रयत्नस्य दमः शुल्कं प्रतिश्रुतमिति ॥

भुक्तबन्धमित्यनेन स्थापितस्य गुप्ताधेर्वस्त्रालङ्कारादेरुपभोगे वृद्धिर्नभवतीत्युक्तम् । अतएव गौतमः ।

भुक्ताधिर्न वर्धते वस्त्रालङ्कारादिरिति ।

अगृहीतञ्च दित्सत इति दित्सतः प्रतिदातुमिच्छोरधमर्णादुत्तमर्णो वृद्धिलोभादिवशान्न गृह्णाति तदा तस्य कृतापि वृद्धिस्तद्दिनादारभ्य न देयेत्यर्थः । तथा च याज्ञवल्क्यः ।

दीयमानं न गृह्णाति प्रयुक्तं यत् स्वकन्धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततःपरमिति ॥

मध्यस्थस्थापितमिति विशेषणेनाधमर्णो यदि स्वनिकटे स्थापयति तदा भवत्येव वृद्धिरिति तदेवं प्रसङ्गागतासविशेषा-वृद्धिर्निरूपिता ॥

इदानीमाधिर्निरूप्यते ।

तत्र आधिर्नाम अधमर्णेनोत्तमर्णविश्वासार्थं गृहीतद्रव्य-निमित्तं यन्निकटे स्थाप्यते भूषणादि स उच्यते । अधिक्रि-यत इत्याधिरिति व्युत्पाद्यते । तत्स्वरूपलक्षणं दृश्याह बृहस्पतिः ।

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमस्थावरश्चैव गोप्यो भोग्यस्तथैव च ।
याहच्छिकः सावधिश्च लेख्यारूढोऽथ साक्षिवान् इति ॥

गोप्यो रक्षणीयः याहच्छिकः अकृतावधिः । सावधिः अमु-कस्मिन्दिने अहमेनं मोचयिष्यामि नोचेत्तवैवेत्युक्ता स्थापितः । यद्यप्यत्राधिरष्टविधो दर्शितस्तथापि गोप्यभोग्ययाहच्छिक-सावधिरूपाणाम्भेदानां नानाविधाद्युपयोगे तात्पर्यातिशय इति सूचयितुं चतुर्विधत्वोक्तिरिति स्मृतिचन्द्रिकायाम् । अत्र स्वरूपप्रकारकालप्रमाणैश्चतुर्विधत्वात्तत्र स्वरूपं द्विविधं जङ्गम-स्थावरभेदेन प्रकारश्च द्विविधो गोप्यो भोग्यश्च कालद्वैविध्यमव-धिनियमानियमाभ्यां प्रमाणमपि लेख्यसाक्षिभेदेन द्विविध-मित्येवमष्टविधत्वमिति कृत्यकल्पतरौ । नारदोऽपि ।

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ।
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव चेति ॥

कृतकालः कृतावधिः ।

उपनेयः स्वसमीपे नेयो मोचनीय इति यावत्।

यावद्देयोद्यतः यावदृणन्दीयते तावत्स्थितः अवधिरहित इत्यर्थः। प्रकारान्तरेण चतुर्विधत्वम्भारद्वाज आह।

आधिस्तु त्रिविधः प्रोक्तो भोग्यो गोप्यस्तथैव च॥
अर्थप्रत्ययहेतुर्यश्चतुर्थस्त्वाज्ञया कृतः।
आवर्णात्पूर्वलिखितो भोग्याधिः श्रेष्ठ उच्यते॥
गोप्याधिस्तु परेभ्यः स्वन्दत्वा यो गोप्यते गृहे।
अर्थप्रत्ययहेतुर्यः प्रत्ययाधिः स उच्यते।
आज्ञाधिर्नाम योराज्ञा संरुद्धा वाज्ञया कृत इति॥

स चाधिर्नाशादिभिर्यथा विकृतो न भवति तथा परिपालनीय इत्याह हारीतः।

बन्धं यथा स्थापितं स्यात् तथैव परिपालयेत्।
अन्यथा नश्यते लाभो मूलं वा तद्व्यतिक्रमादिति॥

यथा येन प्रकारेण गोप्यत्वेन भोक्तृत्वेन स्थापितमाधिस्तथैव गोप्यङ्गोप्यत्वेन भोग्यम्भोग्यत्वेनैव पालयेत्। अन्यथा वैपरीत्ये तस्य समयस्य व्यतिक्रमाल्लाभो वृद्धिर्मूलं द्रव्यं वा नश्यत इत्यर्थः। नारदोऽपि।

उपचारस्तथैवास्य लाभहानिर्विपर्यये।
प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते इति॥

उपचारो रक्षणं कर्त्तव्यमिति शेषस्ततो धनिनः प्रमादाद्विपर्यये नाशे विकृतिं वा गते आधौ लाभहानिर्भवतीत्यर्थः। बृहस्पतिरपि। अशक्तलाभे च ऋणे तथा पूर्णेऽवधौ धनी।

यो भुङ्क्ते बन्धकं लोभान्न स लाभो भवेत्पुनः।
न्यासवत्परिपाल्योऽसौ वृद्धि नैश्यति हापिते॥

अत्र गोप्याधिः शान्तलाभो ऋणे भोक्तव्य इति ॥

परिभाषितो गोप्याधिरशान्तलाभेन भोक्तव्यः। इयत्-समयेनायमस्मिन्धने भोक्तव्यमिति परिभाषितस्तु अवधौ पूर्णे भोक्तव्यः। अन्यथा यो भुङ्क्ते तस्य स लाभः पुनर्न भवेदित्यर्थः। असावाविन्यासवत्परिपालनीयो न ह्रापनीयो न नाशनीयः। ह्रापिते तु वृद्धिं नश्यतीत्यर्थः। केचित्तु तथा पूर्णे ऽवधा-वित्यत्राकारप्रश्लेषं कृत्वा अवधावपूर्णे न भोक्तव्य इत्याह। याज्ञवल्क्योऽपि।

गोप्याधिभोगे न वृद्धिः सोपकारेऽथ ह्रापिते इति।

गोप्याधेरल्पेऽपि भोगे महत्यपि भोगे महत्यपि वृद्धि-र्नदेया। सोपकारे भोग्याधौ ह्रापिते व्यवहारायोग्यतायां प्रापिते वृद्धिर्न देयेत्यर्थः। मनुरपि।

नत्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयादिति।

ह्रापित इति शेषः। एतच्च बलात्कारविषयम्। तथाच मनुः।

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्।
मूल्येन तोषयेच्चैनं माधिस्तेनोऽन्यथाभवेदिति॥

अधमर्णेन भोगो न कर्त्तव्य इति निषिध्यमानस्तद्वचन-मुल्लङ्घ्य भोगकर्त्तुरल्पभोगेऽपि सर्ववृद्धिनाश इत्यर्थः। बलात्-काराभावे तु स एवाह।

यः स्वामिनाऽननुज्ञातमाधिम्भुङ्क्ते विचक्षणः।
तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिरिति॥

अर्द्धग्रहणमननुज्ञाताधिभोगानुसारेण कल्पितस्य वृद्धि-भोगस्योपलक्षणार्थम्। अन्यथा महाभोगस्य अर्द्धविसर्जनेन निष्कृतेरसम्भवात्तस्य भोगस्य निष्कृतिरिति वाक्यशेषविरोधः

स्यात्। अथ विरोधपरिहारार्थमल्पभोगविषयमेवेदं कुतो न भवति तथा सत्यननुज्ञाता महाभोगविषये लाभहानिरनेनानुक्ता स्यात्। तच्चानेनानुक्तेऽपि गोप्याधिभोगेन वृद्धिरिति याज्ञवल्क्यवचनमेवात्र लाभहानिविधायकं भविष्यति। न भविष्यति तस्य बलात्कृताल्पभोगविषयत्वात् तस्मादृद्धग्रहणोपलक्षणत्वमेव युक्तम्। यत्तु हारीतवचने मूलनाशाभिधानात् तद्बलात्कृतबहुभोगविषयमिति स्मृतिचन्द्रिकायाम्। आधिविनाशविषयमिति कश्चित्। गोप्याधित्वेन स्थापितदासादेः कर्मणां कारणे विशेषान्तरमुक्तं कात्यायनेन।

अकाममननुज्ञातमाधिं यः कर्म कारयेत्।
भोक्ता कर्मफलन्दाप्यो वृद्धिं वा न लभेत स इति॥

अकाममिच्छारहितम्। कर्मफलं वेतनम्। दाप्यः अधमर्णाय राज्ञेति शेषः। एवं गोप्याधितया स्थापितेऽश्वादौ तद्भाटकन्दाप्यः। वृद्धिर्वा त्यजनीयेत्यर्थः। आहितदासादिपीड़ने स एवाह।

यस्त्वाधिं कर्म कुर्वाणं वाचा दण्डेन मर्मभिः।
पीड़येद्भर्त्सयेच्चैवं प्राप्नुयात् पूर्वसाहसमिति॥

आधावन्यथाकरणे याज्ञवल्क्य आह।

नष्टो देयो विनष्टश्च दैवराजकृतादृते इति।

नष्टः विकृतिङ्गतः पूर्ववत्कृत्वा देयः। विनष्टः आत्यन्तिकनाशं प्राप्तः सोऽपि देयो मूल्यादिद्वारेण। दैवमग्न्युदकदेशोपप्लवादि तत्कृताद्विनाशादिना। तथा स्वापराधरहिताद्राजकृतादपि विनाशादिनेत्यर्थः दैवराजकृते तु विनाशे सवृद्धिकम्मूलन्दातव्यं अधमर्णेनाध्यन्तरं वा तथा च स्मृतिः।

स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते।
आधिरन्योऽथ कर्त्तव्यो देयं वा धनिने धनमिति॥

तत्र स्रोतसापहृत इति दैवकृतोपलक्षणम्।
बृहस्पतिरपि। दैवराजोपघातेन यत्राधिर्नाशमाप्नुयात्।
तत्रान्यन्दापयेद्वन्धं शोधयेद्वा धनं ऋणीति॥
राजोपघातोऽत्र उच्छृङ्खलेन राज्ञा कृत उपद्रवः।
न तु धनिकापराधनिमित्तकः। अतएव व्यासः।
दैवराजोपघाते तु न दोषो धनिनः क्वचिदिति।
कात्यायनोऽपि। न चेद्धनिकदोषेण निष्यतेद्वा म्रियेत वा॥
आधिमन्यं स दाप्यः स्यादृणान्मुच्येत नर्णिक इति।
निष्पतेत् नश्येत्। म्रियेतेति पश्वाद्यभिप्रायेण। अदाने तस्मादृणान्नमुच्येतेत्यर्थः। आधेर्विनाशे तन्मूल्यन्देयम्। तथा च व्यासः। गृहीतृदोषान्नष्टश्चेद्बन्धो हेमादिके भवेत्।
ऋणं सलाभं संशोध्य तन्मूल्यन्दापयेद्धनीति॥
सलाभमृणं संशोध्य सम्यक् विचार्य विनष्टाधेर्मूल्यं दत्त्वा सवृद्धिकन्धनं गृह्णीयात्। अन्यथा मूलनाश इत्यर्थः। अतएव नारदः। विनष्टे मूलनाशः स्याद्दैवराजकृतादृत इति।
हारीतोऽपि। आधौ नष्टे धनं नष्टं धनिकस्याधिरेवचेति।
भोगेन विकृतिङ्गतस्याधेस्तथैवार्पणे मूलनाशमाह।
बृहस्पति। भुक्ते वा सारताभावे मूलहानिः प्रजायत इति।
बहुमूल्याधिनाशे तु सलाभ ऋणादुपरि आधिमूल्यमाधात्रे देयम्। तथा च स एव।
बहुमूल्यो यत्र नष्ट ऋणिकन्तत्र तोषयेत् इति।

न च तोषयेदिति वचनाद्यावता धनेनाधाता तुष्यति तावद्धनं देयमिति शङ्कनीयम्। यत आह मनुः।

मूल्येन तोषयेच्चैन माधिस्तेनोऽन्यथा भवेदिति।

सलाभ ऋणापगतावशिष्टावंशेनेत्यर्थः। यद्युत्तमर्णः सलाभ ऋणावशिष्टं मूल्यमधमर्णाय दत्त्वा न तोषयति तदा त्वाधिप्रत्यर्पण प्रतिभूर्मूल्येनाधमर्णन्तोषयेत्। तथा च।

हारीतः। खादको वित्तहीनश्चेल्लग्नकोवित्तवान्यदि।

मूल्यन्तस्य भवेद्देयं न वृद्धिं दातुमर्हतीति॥

अधिकृतस्य धनस्य प्रीतिदत्तधनस्येवाकारितवृद्ध्यसम्भवादित्याशयः। खादकोबन्धखादकः। आधिनाशकः उत्तमर्ण इति यावत्। लग्नकः प्रतिभूः मूल्यं नाशिताधेर्मूल्यम्। यद्यत्वाधमर्णो बलाद्वृद्धिं गृह्णाति तदा गृहीत वृद्ध्यंशके महापराधानुसारं दण्डन्दद्यात्। तथा च स एव।

द्विगुणन्त्रिगुणं वापि यः साधयति लग्नकम्।

राजगामि तु तद्द्रव्यं साधको दण्डमर्हति इति॥

यः साधयति लग्नकं लग्नकाद्यः साधयतीत्यर्थः। लग्नकग्रहणमुत्तमर्णस्याप्युपलक्षणार्थम्। अविद्यमानवृद्धिसाधनस्योत्तमर्णोऽपि समानत्वात्। यद्युत्तमर्ण आधिनाशेऽपि ऋणपत्रावष्टम्भेनाधमर्णाद्धनञ्जिघृक्षति सोऽपि दण्डभागित्याह।

कात्यायनः। आधिरुध्येन लेख्येन भुङ्क्ते यद्दणिकाद्धनी।

नृपो दमं प्रापयित्वा आधिलेख्यन्तु नाशयेदिति॥

दमन्दण्डम्। ऋणिक द्रव्यभोगद्रव्यनिष्कृत्यर्थं वृद्धिहानिरप्युन्नेयेति स्मृतिचन्द्रिकायाम्। सस्यग्रह्यमाणस्याप्या-

धात्र सारताङ्गते सति ऋणिकेन धनमाध्यन्तरं वा उत्तमर्णाय देयमित्याह नारदः।

रक्ष्यमाणोऽपि यत्राधिः कालेनेयादसारताम्।

सवृद्धिकमूल्यद्रव्यापर्याप्तत्वाङ्केचिदेकसंवत्सरभववृद्धिसहितमूल द्रव्यापर्याप्ततामसारतामाहुः तच्चिन्त्यम्। एतादृशविशेषविकल्पने कारणाभावात्। याज्ञवल्क्योऽपि।

आधेः स्वीकरणात्सिद्धीरक्ष्यमाणोऽप्यसारताम्।

यातश्चेदन्य आधेयो धनभाग्वा धनीभवेदिति॥

आधेः स्वीकरणादुपभोगात् सिद्धि र्न लेख्यमात्रेणेत्यर्थः। एतदेवाभिप्रेत्याह नारदः।

आधिस्तु द्विविधः प्रोक्तो जङ्गमःस्थावरस्तथा।

सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथेति॥

गोप्याधौ भोगः स्वीकारः भोग्याधौ फलभोगः।

एतच्चाधेर्भोगात्सिद्धिप्रतिपादनम्। आधौ प्रतिग्रहे क्रीते पूर्वातुबलवत्तरेत्येवमादिवाक्योक्तनिर्णयार्थम्। अतएव द्वयोर्धनिकयोर्दुष्टाधमर्णिकेन एकस्य वस्तुन आधीकरणे भोगान्निर्णय इत्याह विष्णुः।

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ।

यस्य भुक्ति र्जयस्तस्य बलात्कारं विना कृतेति।

द्वयोरपि भोगसत्वे निर्णयप्रकारमाह वसिष्ठः।

तुल्यकाले निसृष्टानां लेख्यानामाधिकर्मणि।

येन भुक्तम्भवेत्पूर्वन्तस्याधिर्बलवत्तर इति।

निसृष्टानां कृतानां लेख्यानां सद्भावेऽपीति शेषः। अयमर्थः। तुल्यकालोत्पन्नानां लेख्यानां सद्भावसाम्येऽपि भोग्या-

द्विसिद्धौ भोगस्योत्कृष्टकारणत्वात् तत्र धर्म्यनिबन्धनावलव-त्तायुक्तेति । बृहस्पतिः ।

क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिककम् ।

येन भुक्तम्भवेत्पूर्वं तस्य तत्सिद्धिमाप्नुयादिति ।

क्षेत्रग्रहण म्भोग्याधिमात्रोपलक्षणम् । यत्राधिविशेषे-द्वयोरपि भोगाभावः भोगार्थं च युगपत्प्राप्तास्तत्र निर्णयप्रका-रमाह वसिष्ठः । यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ ।

विभज्याधिः समन्तेन भोक्तव्य इति निश्चय इति ॥

तेन ताभ्यामित्यर्थः द्वयोरेकमाधिङ्कुर्वतोऽधमर्णस्य दण्ड-माह कात्यायनः ।

आधिमेकं द्वयोर्यस्तु कुर्यात्का प्रतिपद्भवेत् ।

तयोः पूर्वकृतं ग्राह्यन्तत्कर्त्ता चौरदण्डभागिति ॥

ऋणग्रहणोपक्रमत्वादाधिक्रिया प्रतिपदित्युच्यते । पूर्व-कृतं पूर्वाध्युपादानादिना सिद्धं आधिविशेषे दण्डविशेष माह विष्णुः । गोचर्ममात्राधिकान्भूव मन्यस्याधीकृताम-न्यस्य यः प्रयच्छेत्सवध्यः ऊनाच्चेत् षोडशसुवर्णं दण्ड्य इति । उपादानादि यौगपद्ये त्वाह बृहस्पतिः । तुल्यकालोपस्थितयो-र्द्वयोरपि सम्भवेदिति उपस्थितयो उपदानादिकं कर्त्तुमिति शेषः । साक्षिलेख्य सिद्धयोर्लेख्य सिद्धम्बलवदित्याह । कात्यायनः । आधानं विक्रयो दानं लेख्यसाक्षिकृतं यदा ।

एकक्रियाविरुद्धन्तु लेख्यन्तत्रापहारकमिति ॥

लेख्यसाक्षिकृते । लेख्यसाक्षिसिद्धम् । अपहारकं बलवत् । लेख्यसिद्धत्वा विशेषेऽपि बलाबलमाह स एव ।

अनिर्दिष्टञ्च निर्दिष्टमेकत्र च विलेखितम् ।

विशेषलिखितं ज्याय इति कात्यायनोऽब्रवीत् इति ॥

एकत्र धात्रीकरणादौ। विशेषलिखितं निर्दिष्टं लिखितञ्च निर्दिष्टलिखितं ज्यायोबलवदित्यर्थः। लेख्ये निवेशितं लिखितम्। अनिर्दिष्टनिर्दिष्टपदयोरर्थमाह स एव।

योविद्यमानं प्रधनमनिर्दिष्टस्वरूपकम्।

आकाशभूतमादध्यादादिष्टन्नैव तद्भवेत् ॥

यद्यत्तदास्य विद्येत तदादिष्टं विनिर्दिशेत् इति ॥

प्रशब्दः पादपूरणार्थः। अनिर्दिष्टस्वरूपकमनिरूपित स्वरूपकम्। आकाशभूतमविद्यमानस्वभावम्। अयमर्थः। आधातुराधीकरणकाले यद्धनं विद्यते निरूपितस्वरूपञ्च तद्धनमाधित्वेनादिष्टं सन्निर्दिष्टमित्युच्यते। तद्विपरीतन्तु धनमाधित्वेन कल्प्यमानमनिर्दिष्टमिति। आधीकरणकाले विद्यमानत्वमास्येऽप्याह स एव।

यस्तु सर्वस्वमुद्दिश्य प्राक् पश्चान्नामचिह्नितम्।

आदध्यात्तत्क्रयन्तस्याश्चिह्नितं बलवत्तरमिति ॥

यः पूर्वमविशेषेण सर्वस्वमाधित्वेनोद्दिश्य कस्यचिद्धस्तादृणं गृहीत्वा पश्चाल्लेखनसमये विशेषेण क्षेत्रादिकमेव लेखयति तत्रोत्तरकालं विवादे सति यावत्पश्चाल्लेखितन्तावदेवप्रमाणं नोद्दिष्टमित्यर्थः। चिह्नितमिति विरोध्युत्तरक्रियोपलक्षणार्थम्। तेन यदि प्रथममाधिमादाय धनी धनन्दत्त्वा पश्चादबन्धकत्वं विज्ञाय आधिमन्तरेणैवात ऊर्द्धं त्वयि ऋणमास्तामिति प्रकारान्तरेण पुनः क्रियाङ्करोति तदा निराधिक्रियाबलवतीत्यवगन्तव्यम्। अतएवाह याज्ञवल्क्यः।

सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रियेति ।

उत्तराक्रिया पूर्वस्याः क्रियायाः बाधिका भवतीत्यर्थः । निर्दिष्टत्वाविशेषे उत्तरक्रियाबलवत्त्वस्यापवादमाह स एव ।

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरेति ॥

एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याधिं कृत्वा किमपि गृह्णाति तत्र पूर्वस्यैव तत्क्षेत्रम्भवति नोत्तरस्येत्यर्थः । एवम्प्रतिग्रहे क्रये च योजनीयम् । स्वामित्वप्रतिबन्धावगमाभ्याम्प्रागेव पूर्वस्याः क्रियायाः कृतत्वादिति भावः । एतदेवाभिप्रेत्य वसिष्ठोऽप्याह ।

यः पूर्वतरमाधाय विक्रीणीते तु तं पुनः ।

किमेतयोर्बलीयः स्यात्प्राक्तनम्बलवत्तरमिति ॥

आध्यादीनां यौगपद्येऽप्याह स एव ।

कृतं यत्रैकदिवसे दानमाधान विक्रयम् ।

त्रयाणामिति सम्बन्धे कथन्तत्र विधिं नयेत् ॥

त्रयोऽपि तद्धनन्द्रव्यं विभजेयुर्यथांशतः ।

उभौ क्रियानुसारेण विभागेन प्रतिग्रहीति ॥

आधिकृतस्य धनस्य स्वत्वनिवृत्तिकालमाह याज्ञवल्क्यः ।

आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।

काले कालकृतो नश्येत् फलभोग्यो न नश्यतीति ॥

प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्वैगुण्ये जातेऽधमर्णेन तावद्धनन्दत्त्वा यदि न मोक्ष्यते तदासौ नश्येदधमर्णस्य स्वं न भवेत्किन्तूत्तमर्णस्यैव भवेत् । यस्तु कालकृतः कृतकालः । आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्वनिपातः । यद्वा जातिकालसुखादिभ्यः परा निष्ठा वाच्येत्यनेन वार्त्तिकेन

निष्ठान्तस्य परनिपातः । स यदि सम्प्रतिपन्ने काले न मोच्यते ऽधमर्णेन तदा सोऽपि पूर्ववन्नश्येत् । फलभोग्यः क्षेत्रादिः कदापि न नश्येत्किन्तूत्तमर्णेन यावत् स्वधनं न प्राप्यते ताव-दुत्पन्नफलमेव भोक्तव्यमित्यर्थः । अत्र काले कालकृतो नश्ये-दित्यनेन कृतकालस्योभयविधस्याधेस्तत्कालातिक्रमे नाश उक्तः । फलभोग्यो न नश्यतीत्यनेनाकृतकालस्य भोग्याधेर्नाशाभाव उक्तः । पारिशेष्यादाधिः प्रणश्येदित्येतदकृतकालगोप्याधि-विषयमवतिष्ठते । द्वैगुण्यातिक्रमेण च विनाशे चतुर्दशदिवस-प्रतिक्षणं कर्त्तव्य[illegible] व्यासबृहस्पती ।

हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्षते ॥
तदन्तराधनन्दत्त्वा ऋणी बन्धमवाप्नुयादिति ॥

तत्तस्मात्कारणात् अन्तरा चतुर्दशदिवसमध्ये इत्यर्थः । अत्र द्वैगुण्यग्रहणं त्रैगुण्यादीनामुपलक्षणार्थम् । वक्ष्यमाण-बृहस्पतिवचने शान्तलाभ इति सामान्येनैवाभिधानात् । नन्वाधेर्दानादिस्वत्त्वनिवृत्तिकारणं प्रतिग्रहादिरेव वा स्वत्वा-पत्तिकारणं किन्तु द्वैगुण्ये निरूपितकालप्राप्तौ च द्रव्याधान-मपि । तस्य याज्ञवल्क्यवचनेनैवा धमर्णयोरात्यन्तिकस्वत्व-निवृत्तिस्वत्वापत्तिकारणं किन्तु पत्योः कारणत्वावगमात् लोकाच्च । न च न वाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रय इति मनुवचनन्तस्यायमर्थः । कालेन संरोधः कालसंरोधः चिरकालावस्थानन्तस्मात्कालसंरोधात् आधेर्न निसर्गोऽस्ति-नान्यत्राधिकरणमस्ति न च विक्रय इति तेन विरोध इति

वाच्यम् । नत्वेत्राधौ सोपकार इत्याद्युपक्रम्य कथनेन एतस्य भोग्याधिविषयत्वात् । यत्तु बृहस्पतिः ।

पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत् ।
अनिर्गते दशाहे तु ऋणी मोचितुमर्हतीति ॥

दशदिवसप्रतीक्षणमुक्तन्तद्वस्त्रादिविषयम् । हिरण्ये द्विगुणीभूत इति व्यास बृहस्पतिभ्यां विशेषोपादानात्तद्धिरण्यविषयम् । शान्तलाभे त्रैगुण्यादिपरमवृद्ध्या निवृत्तलाभे । यत्तु पुनस्तेनैवोक्तम् ।

[illegible]धि द्विगुणादूर्द्ध्वं कृतकाल[illegible]धेः ।
[illegible]दथत्वाधिकृते भोक्तव्यस्त्वनन्तरमिति ।

यत्स्वत्वापत्तेरर्वागाधेर्भोगमात्रविधिपरन्न पुनः स्वत्वापत्तिपरम् । तथा च न बार्हस्पत्यवचनयोः परस्परं विरोधः नापि व्यासबृहस्पतिवचनयोः । यदा तु शान्तलाभे धने बन्धकस्य तथैवावस्थितस्य मोचनात्प्रागधमर्णस्य मरणादि भवेत्तदा किं कर्त्तव्यमिति परीक्षायामाह बृहस्पतिः ।

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यन्तदीयं संगृह्य विक्रीणीते स साक्षिकम् ॥
रक्षेद्वा कृतमूल्यन्तु दशाहञ्जनसंसदि ।
ऋणानुरूपम्परतो गृहीतान्यत्तु वर्जयेदिति ॥

हिरण्ये द्विगुणीभूते पश्चादाधिमोक्षणादर्वागितिशेषः । हिरण्यग्रहणम्वस्त्रादीनामुपलक्षणम् । द्विगुणीभूत इति त्रैगुण्यादीनामुपलक्षणम् । नष्टे क्वचिद्गते चिरमविज्ञाते द्रव्यं बन्धकीकृतं द्रव्यम् । ऋणानुरूपं द्विगुणीभूतद्रव्यपर्याप्तम् । परतः दशाहादूर्द्ध्वम् । अन्यत्तु वर्जयेत् । अवशिष्टं ऋणि

बान्धवे तदभावे राज्ञे समर्पयेदित्यर्थः। अतएव कात्यायनः।

आधाता यत्र वै न स्याद्धनी बन्धन्निवेदयेत्।
राज्ञस्ततः स विज्ञातो विक्रेय इति धारणा।
सवृद्धिकं गृहीत्वा तु शेषं राजन्ययार्पयेदिति॥

राजन्ययार्पयेदिति न्यायात्प्रासन्नाभावविषयम्। तत्सद्भावे तत्रैवार्पणस्य न्याय्यत्वात्। यत्र तेनार्पणं क्रियते नैव यदि सवृद्धिकन्धनन्दत्त्वा बन्धो गृह्यते तदा न विक्रेयः प्रयोजनस्य सिद्धत्वात्। अस्मिन्विषयेऽन्यत्राधिकरणं न विरुद्धन्दण्डापूपन्यायात् किन्त्वन्यत्राधिं हृत्वा मूलमात्रं गृहीतव्यम्। नतु स सवृद्धिकम्। यदाह प्रजापतिः।

धनी धनेन तेनैव परमाधिन्नयेद्यदिति।
कृत्वा तदाधिलिखितं पूर्वं वास्य समर्पयेदिति।

यद्बन्धस्वामिभिर्धनं प्रयुक्तन्तत्तुल्येनैव धनेन परं धनिकान्तरमाधिनयेत् नतु सवृद्धिकेनेत्यर्थः। अयञ्चान्नाधिधनस्य द्वैगुण्ये सति प्रतिपत्तौ तु द्वैगुण्यादर्वागपि द्रष्टव्यः। क्वचिद्गोप्याधे द्वैगुण्याद्यतिक्रमेऽपि ऋणिकस्य स्वत्वनाशो न भवतीत्याह। याज्ञवल्क्यः। चरित्र बन्धकाकृतं स वृद्ध्या दापयेद्धनम्।

सत्यङ्कारकृतद्रव्यं द्विगुणं प्रतिदापयेदिति॥

चरित्रं शोभनचरितन्तेन यद्बन्धकन्तच्चरित्रबन्धकन्तेन यद्द्रव्यं स्वाधीनं कृतम्पराधीनं वा कृतन्तच्चरित्र बन्धकं कृतम्। अयमर्थः। अधमर्णेन धनिनः शुद्धान्तःकरणत्वेन बहुमूल्यमपि बन्धकीकृत्याल्पमेव धनं स्वाधीनं कृतम्। यदि वा उत्तमर्णेनाधमर्णस्य निर्दोषतारूपगत्याल्पमेव बन्धकं गृहीत्वा बहुधनमधमर्णाधीनं कृतन्तदा तद्धनं स राजा वृद्धिसहितन्दा

पयेन्नत्वाधिनाश इति। अथवा चरित्रं शोभा वा चरितं गङ्गास्नानादि अग्निहोत्रादिजनिता पूर्वं तद्बन्धकीकृत्य गृहीत चरित्र बन्धकीकृतमिति। एतादृशं बन्धकं द्विगुणीभूतेऽपि द्रव्येन नश्यति किन्तु द्विगुणीभूत न्द्रव्यमेव दातव्यमित्यभिप्रायः। तथा सत्यङ्कारकृतम्। करणङ्कारः। भावेघञ्। सत्यस्य कारः सत्यङ्कारः। कारेसत्यागदस्य चेति मुम्। तेन कृतं सत्यङ्कार कृतम्। तदपि द्विगुणमेव देयं नाधिनाशः। बन्धकार्पण समय एव द्विगुणीभूतेऽपि द्रव्ये मया द्रव्यमेव द्विगुणं दातव्यं नाधिनाश इति समये कृते द्विगुणीभूतं द्रव्यमेव दातव्यं नाधिनाश इत्यभिप्रायः। क्रयविक्रयादिनिर्वाहाय यदङ्गुलीयकादिपरहस्ते समर्पितन्तत्सत्यङ्कारकृतन्तत्राङ्गुलीयकादि गृहीतावस्थामतिक्रामन्त देवाङ्गुलीयकादि द्विगुणं प्रतिपादयेत्। इतरश्चेदङ्गुलीयकादिकमेव जह्यात्। चरित्र बधादिस्थले द्वैगुण्यादूर्ध्वञ्चाधिनाशो न भवष्यतीति बुद्धा अधमर्णेन मोचने विलम्बो न कार्यः। तथा च व्यासः।

गोप्याधिं द्विगुणाद्दूर्ध्वम्मोचयेदधमर्णिक इति॥

अस्मिन्नेव विषयेऽधमर्णासम्भवे सन्निधाने उत्तमर्णेनाधिर्विक्रेतव्यः। तथा च याज्ञवल्क्यः।

विना धारणकाद्वापिविक्रीणीत स साक्षिक मिति।

धारणकात् अधमर्णात्। अग्रमर्थः। असन्निहिते अधमर्णे उत्तमर्णः साक्षिभिस्तदाप्तैश्च सह तमाधिं विक्रीयधनं गृह्णीयादिति। वा शब्दो व्यवस्थितविकल्पार्थः। यदर्णदानकाले द्विगुणीभूतेऽपि द्रव्ये द्रव्यमेवदेयम्। नाधिनाश इति परिभाषितं तदा अयम्पक्षः। इतरथात्राधिः प्रणश्येद्द्विगुण इत्यनेनोक्त

आधिनाशश्च इति। यदि द्वैगुण्यावधिकालयोरर्वागेवाधि-मोचनार्थं अधमर्णः समायाति तदा उत्तमर्णेन मोक्तव्यो न वृद्धिलोभेन स्थापनीय इत्याह बृहस्पतिः।

धनं मूलीकृतं दत्वा यदाधिं प्रार्थयेदृणी।

तदैव तस्य मोक्तव्य स्त्वन्यथा दण्डभाग्धनीति॥

मूलीकृतं अधमर्णेन देयन्धनम्। तच्च भोग्याधौ मूलमात्रं गोप्याधौ तु सवृद्धिकं दत्त्वा ऋणी यद्याधिं प्रार्थयते तदा धनिना स मोक्तव्यः। अन्यथा दोषभाक् स्तेयदोषभागित्यर्थः। यदाह याज्ञवल्क्यः।

उपस्थितस्य मोक्तव्य आधिस्तेनोऽन्यथा भवेदिति।

स्तेनः स्तेनवद्दण्ड्य इत्यर्थः। उत्तमर्णस्या सन्निधाने तदाप्तहस्ते धनं दत्त्वा आधिमधमर्णो गृह्णीयात्। तथा च स एव।

प्रयोजकेऽसति धनं कुलेऽन्यस्याधि माप्नुयादिति॥

प्रयोजके उत्तमर्णेऽसति सन्निहिते सति तत्कुले तदाप्तहस्ते सवृद्धिकन्धनं निधायाधमर्णः स्वीयन्धनं गृह्णीयादित्यर्थः। क्वचित्प्रयोजकोऽसतिकुल इतिपाठः। तत्रप्रयोजको धनप्रयोक्ता असति धनिके इतिशेषः। आप्नुयात्तदानीमेवेतिशेष। तथा च उत्तमर्णे सन्निहितेऽतदाप्तहस्ते सवृद्धिकन्धनं निधाय प्रयोजको धनप्रयोक्ताऽधमर्णस्तदानीमेव स्वाधिमाप्नुयादित्यर्थः। यदि तु तदाप्तोपि न सन्निहितः अधमर्णस्य चाधिविक्रयेणाग्रिमवृद्धिव्यवच्छेदाय धनदानेच्छा भवति तदा किंविधेयमिती च्छाया माधिमूल्यम्परिकल्प्य तद्गृहे एवाधिंस्थापयेत् तथा च स्थापनदिनमारभ्य तद्धनन्नवर्द्धत इत्याह स एव।

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिक इति॥

तिष्ठेदाधिरितिशेषः। तत्रोत्तमर्णे तत्कुले वा। एतच्चाधिमोचनं यदि भोग्याधिर्गोप्याधिश्च तावताकाले मोचनीय इत्यवधिं कृत्वा स्थापितस्तदाधमर्णेनावधेरर्वाग्लोभेन न कर्त्तव्यं इदमेवाभिप्रेत्य फलभोग्याधिविषये व्यास आह।

फलम्भोग्यम्पूर्णं कालं दत्त्वाद्रव्यन्तुसामकमिति।

ऋणीबन्धमवाप्नुयादित्यनुषङ्गः। मूलमात्रन्दत्त्वा परिभाषितकालमापन्नम्फलभोग्याधिमाप्नुयादित्यर्थः। फलभोग्यग्रहणमाध्यन्तरोपलक्षणम्। सामकग्रहणं सवृद्धिकस्याप्युपलक्षणम्। भोग्याधिविषयेकचिद्विशेषमाह बृहस्पतिः।

क्षेत्रादिकं यदा भुक्त मुत्पन्नमधिकन्ततः।
मूलोदयं प्रविष्टञ्चेत्तदाधिं प्राप्नुयादृणी॥
परिभाष्य यदा क्षेत्रं प्रदद्याद्धनिकेऋणी।
त्वयैतच्छान्तलाभेऽर्थे भोक्तव्यमिति निश्चयः॥
प्रविष्टे सोदये द्रव्ये प्रदातव्यं पुनर्ममेति।

अधिकं मूलापेक्षयाऽधिकं क्षेत्राद्यर्थव्ययद्रव्यम्। ततः तस्मात्क्षेत्रादेः उदयो वृद्धिः। शान्तलाभेऽर्थे परमवृद्धिसहिते मूलद्रव्ये। इयं निमित्तसप्तमी। परमवृद्धिसहितं क्षेत्राद्यर्थव्ययसहितमेतन्मूलद्रव्यमस्मिन् क्षेत्रे उपभोक्तव्यम्। उपभोगेन च स वृद्धिकधने प्रविष्टे त्वयैतत्क्षेत्रम्भोक्तव्यमिति परिभाष्य यदा क्षेत्रादिकं बन्धकी कुर्यात्तदाक्षेत्रादिफलभोगेन क्षेत्राद्यर्थव्ययसहिते सवृद्धिके धने प्रविष्टे ऋणी किमप्यदत्त्वा तमाधिं प्राप्नुयादित्यर्थः। एवंविधस्याधे पूर्वगृहीते ऋणे कालक्रमेण परां वृद्धिम्प्राप्ते सति तदनन्तरं यः स वृद्धिकमूलद्रव्योपभोगार्थं क्षेत्रादिराधिः क्रियते स क्षेत्राद्यर्थव्ययद्रव्यसहित

स वृद्धिकमूलोपभोगानन्तरं धनिकेनाधमर्णाय प्रत्यर्पणीयः। तथा च याज्ञवल्क्यः। यदा तु द्विगुणीभूत मृणमाधौ तदा खलु

मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने इति॥

आधौ तदादत्त इति शेषः। अयमेव चयाधिरित्युच्यते। इत्याधिविधिः। अथ प्रतिभूः तत्र प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः। तद्भेदानाह बृहस्पतिः।

दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा।

चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिरिति॥

प्रत्ययो विश्वासः दानं ऋणापाकरणार्थमर्थार्पणम्। ऋणि द्रव्यार्पणं ऋणिनो यद्द्रव्यं गृहीतोपकरणादितदर्पणम्। चतुः प्रकाराणां प्रतिभुवां प्रातिभाव्याङ्गीकारप्रकारं दर्शयति स एव। आहैको दर्शयामीति साधुरित्यपरोऽब्रवीत्।

दाताहमेतद्द्रविणमर्पयाम्यपरोऽब्रवीत् इति॥

एको दर्शन प्रतिभूरहमेनं पलायन प्रवृत्तं दर्शयिष्यामीत्याह। अपरः प्रत्ययप्रतिभूरेषः साधुर्नत्वां प्रतारयिष्यति मतोयं श्रोत्रियपुत्रोऽस्य सर्वशस्य सम्पन्नो ग्रामोऽस्ति मत्प्रत्ययेनास्य द्रव्यं देहीति ब्रवीति। दान प्रतिभूर्यद्ययं न ददाति तदा स वृद्धिकमृणमहं दातेति। अपरः ऋणि द्रव्यार्पणप्रतिभूर्यद्ययं न ददाति तदाहमेतदीयगृहोपकरणादिकमर्पयिष्यामीति कथयतीत्यर्थः। दर्शनप्रतिभुवा यदा धनिकस्य धारणिकदर्शनापेक्षा तदैव स दर्शनीय इत्याह कात्यायनः।

दर्शनप्रतिभूर्यस्तु देशे काले च दर्शयेत्।

यस्मिन्देशे काले च धनिकस्तद्दर्शनमपेक्षते तत्रैव दर्श-

येत् अधमर्णमितिशेषः दर्शिते च तस्मिन् धनिकेन प्राति भाव्यात् समोक्तव्य इत्युत्तरार्द्धेनाह स एव ।

यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ।

एवं प्रत्ययादिप्रतिभुवोऽपि तदविसंवादे मोक्तव्याः । अन्यथा धारणिकन्देयं धनं दाप्या इत्याहतुः कात्यायनवृहस्पती ।

यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः ।
अदर्शयं स तन्तस्मै प्रयच्छेत्स्वधनादृणम् ॥
आद्यौ तु वितथे राज्ञो तत् काज्ञावेदितं धनम् ।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा ॥
यत्तु योगीश्वरेण प्रतिभुवान्त्रैविध्यमेवोक्तम् ।
दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ॥
तद्दानार्पणयोरनति भेदाभिप्रायेण ।
दाने आद्यौ तु वितथे दाप्याविततरस्य सुता अपि ॥

वितथे । दर्शनप्रत्यये । दाने विसंवादे इतरस्य सुता अपीति वचनात् पूर्वयोः सुता न दाप्याः । सुता इत्यभिधानाच्च पौत्रा इत्युक्तम्भवति दानं स्वधनार्पणन्धनिकाय । अर्पणन्तु धारणिकधनमानीय तस्य अर्पणं धनिकस्य स्वधनलाभे उभयतो न विशेषः अतएव सूक्ष्मभेदविवक्षया पञ्चप्रकारा अपि प्रतिभुवो हारीतेनोक्ताः ।

अभये प्रत्यये दाने उपस्थाने प्रदर्शने ।
पञ्चस्वेषु प्रकारेषु ग्राह्यो हि प्रतिभूर्बुधैः ॥

अभयमुपद्रववारणं । उपस्थानमत्र धारणिक धनस्य धनिकायानीयार्पणं न दर्शनं तस्य पृथङ्निर्देशात् । पञ्चस्वित्यनन्वयाच्च । व्यासस्तु । सप्तभिर्विषयैः सप्तप्रकारकं प्रतिभुवमाह ।

लेख्ये कृते च दिव्ये वा दानप्रत्यय दर्शने॥
गृहीतबन्धोपस्थाने ऋणिद्रव्यार्पणे तथा।
प्रतिभूर्ग्राह्य इत्यत्र प्रकृतम्। कात्यायनोऽपि॥
दानोपस्थानवादेषु विश्वासशपथाय च।
लग्नकङ्कारयेदेवं यथा योग्यं विपर्यये॥
वादोविवादस्तत्र प्रतिभूग्रहणम्।
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णय इति॥
योगीश्वरेणाप्युक्तञ्च प्रागेवव्याख्यातम्। दर्शनप्रत्ययदानेषु यथायथं सर्वेषामन्तर्भावस्तस्मात्र इति परमार्थः। दर्शनप्रतिभुवे नष्टधारणिकान्वेषणाय कालावधिर्देय इत्याह। वृहस्पतिः। नष्टस्यान्वेषणे कालं दद्यात् प्रतिभुवे धनी।
देशानुरूपतः पक्षं मासं सार्धमथापि वा॥
सार्द्धमासमिति परमावधिः। तथा च कात्यायनः।
नष्टस्यान्वेषणार्थन्तु देयं पक्षत्रयम्परम्।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्॥
काले प्रतीते प्रतिभूर्यदि तन्नैव दर्शयेत्।
स तमर्थं प्रदाप्यः स्यात्प्रेत चैष विधिः स्मृतः॥
परं परमावधिभूतम्। प्रतीतेऽन्वेषणाय परिकल्पिते प्रेते चैषविधिरिति धारणिके मृते प्रतिभूस्तमर्थं प्रदाप्य इति विधिः। कालावधिविधेस्तत्रान्वयवाधात्। एतदपि दैवराजकृतप्रतिबन्धाभावे वोध्यम्। अतएव कात्यायनः।
दर्शनप्रतिभूर्यत्र देशे कालेन दर्शयेत्॥
निबन्धमावहेत्तत्र दैवराजकृतादृते॥
निबन्धहरणम्। दैवकृतो दीर्घरोगमरणादि रूप ऋण-

दानप्रतिबन्धः। राजकृतो बन्धनारोधदण्डादिरूपः। प्रतिभूभेदेन स्पष्टमाह नारदः।

ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वाथ हापिते।
प्रतिभूस्तदृणं दद्यादनुपस्थापयंस्तथेति॥

ऋणिष्वधमर्णेष्वप्रतिकुर्वत्स्वसाध्येषु निर्धनत्वादिना ऋणमप्रत्यर्पयत्स्विति दानप्रतिभूविषयम्। प्रत्यये विश्वासे हापिते विसम्वादिते इति प्रत्ययप्रतिभूविषयम्। अनुपस्थापयन्नृणिन मदर्शयन्नृणिनः सकाशादाधिरूपं पर्याप्तं तद्धनं वोत्तमर्णायानर्पयन्निति दर्शनद्रव्यार्पणप्रतिभूविषयमिति विवेकः। हारीतः।

विश्वासार्थं कृतस्याधिर्न प्राप्तो धनिना यदा।
प्रापणीयस्तदा तेन देयं वा धनिने धनम्॥

तेन बन्धकार्पणः प्रतिभुवा। तथाच पितामहः।

स्वाधिपालकृतस्याधिर्भिन्नकालोपलक्षणम्।
नचेत् स्वधनिने दत्तस्तस्याधेस्तैः समर्पणम्॥

तैराधिपालैराधिसमर्पणप्रतिभूभिः। बहुत्वमत्राविवक्षितम्। एव मभयाधिप्रतिभूष्वपि तुल्यन्यायतयायोज्यम् अभयप्रतिभूरधमर्णादुत्तमर्णस्य भयोपस्थितौ तत्प्रतीकारमाचरेत्। तद्भयेन द्रव्यक्षतौ तदीयन्तत् द्रव्यं दद्यात्। प्रमाणप्रतिभूः प्रमाणप्रदर्शनङ्कारयेत्॥ अशक्तौ विवादास्पदीभूतं धनं दद्यात्। वादप्रतिभूर्वादपराजितस्याधमर्णस्य देयमुत्तमर्णाय दद्यात् सराजपदास्य राज्ञ इति। प्रतिभुविमृते तत्पुत्रादीन् प्रत्याह योगीश्वरः। दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा।

न तत् पुत्रा ऋणं दद्यु र्दद्युर्दानाय ये स्थिताः ॥

दर्शनप्रत्यये इत्यर्थस्य पूर्वश्लोकोक्तस्यैव स्पष्टीकरणमत्रेति न पुनरुक्तिरिति मिताक्षरायां मदनरत्नेचोक्तम् । वस्तुतस्तु तज्जीवति सति प्रतिभुवि प्रेतेत्विदमिति न पौनरुक्त्याशङ्का । वितथ इति तत्रात्र च मृत इत्युपादानात् स्मृतिचन्द्रिकाकारस्यापीदमेवाभिसंहितम् । प्रतिभू पुत्रादीनां विधिरिति प्रस्तावे लिखनात् । दानाय यः स्थितप्रतिभूस्तत् पुत्रा दद्यु रित्यर्थः । वृहस्पतिरपि ।

आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ तु विसम्वादे तौ विना तत्सुतौ तथेति ॥

आद्यौ दर्शनप्रत्ययदानविसम्वादे । उत्तरौ दानर्णिद्रव्यार्पणप्रतिभुवौ । विसम्वादे द्वेषादिना धनिकेनादाने तौ विना तयोर्देशगमने मरणे च । अत्र ताविति द्विवचनान्तेन सर्वनाम्ना दानर्णिद्रव्यार्पणप्रतिभुवोः परामर्शः । सर्वनाम्ना मसति बाधके सन्निहितपरामर्शकत्वात् । पूर्वौदाप्यतदर्शनप्रतिभूर्यत्नेति याज्ञवल्क्यवचनाच्च तेन दर्शनप्रतिभूप्रत्ययप्रतिभू सुतैर्न तद्देयमिति बोद्धव्यम् । प्रतिभू पुत्रपौत्रयोर्मूलमात्र दानादाने आह । कात्यायनः ।

प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत् क्वचित् ।
पुत्रेणापि समन्देयमृणं सर्वत्र पैतृकमिति ॥

सर्वत्र प्रातिभाव्यागतमृणमित्यन्वयः ।

व्यासोऽपि । ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतम् ।
समन्दद्यात्तत्सुतौ तु न दाप्याविति निश्चय इति॥

पौत्रेण प्रातिभाव्यातिरिक्तं पैतामहमृणं यावद्गृहीतमेव

देयम्। तथा पुत्रेण प्रातिभाव्यागतं पैत्यमृणं यावद्गृहीत-मेव देयम्। तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रपौत्रौ यथाक्रमम-प्रातिभाव्यापातञ्च गृहीतधनौ न दाप्या इत्याद्यर्थः। यत्तु नारदवचनम्।

खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि।
मूलन्तस्य भवेद्देयं न वृद्धिन्दातु मर्हतीति॥

तदपि खादकोऽधमर्णः। प्रतिभूर्यदि वित्तवान्मृतस्तदा तत्पुत्रेण मूलमात्रन्देयं न वृद्धिरिति मृतपदाध्याहारेण व्याख्येयं विषयविशेषे दर्शनप्रत्ययप्रतिभुवः पुत्रेण सवृद्धि-कन्देयमित्याह। कात्यायनः।

गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत्।
विना पित्रा धनात्तस्माद्दाप्यः स्यात्तदृणं सुत इति॥

दर्शनग्रहणं प्रत्ययस्योपलक्षण समानन्यायत्वात्। दर्शने स्थितः दर्शने प्रतिभूत्वेन स्थित इत्यर्थः। विना पित्रापितरि-प्रेते दूरदेशङ्गतेवेति। सुतग्रहणमुपलक्षणार्थम्। यस्य हस्ते बन्धकमायाति तस्य सर्वस्यापि तस्माद्बन्धकाप्रतिदानस्य युक्तत्वा-दिति केचित्। यत्तु दानप्रतिभुवि प्रेते दायादानपि दापये-दिति मनुवचनं तत्र दायादशब्दोविशेषलक्षणया सुतविषय एव अन्यथा सपिण्डमात्राभिधाने तत्सुतौ न दाप्याविति निश्चय इत्यादि पूर्वोदाहृतवचनविरोधः स्यादिति। केचिदिदं प्रति भूबन्धकविषयं पूर्वोदाहृतवचनानित्वबन्धकप्रतिभूविषया-णीति विषयभेदान्नविरोध इत्याहुः। अनेक प्रतिभूदेयविषये दानप्रकारमाह योगीश्वरः।

बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम्।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचीति॥

एकच्छायाश्रितेषु एकस्याधमर्णस्य च्छायां प्रत्येकं सकलधनदायकत्वरूपसादृश्यमाश्रितास्तेषु। धनिकस्य यथारुचि। धनिकस्योत्तमर्णस्य यथारुचि यथाकामं यमेवोत्तमर्णो याचते तमेव सर्वन्दद्यादित्यर्थः। द्रव्यविशेषे तु समं स्यादश्रुतत्वादिति न्यायेनात्रापि यथांशमेव दद्युः। एकच्छायाश्रितेषु लग्नकेषु यद्यन्यतरो दूरदेशङ्गतो मृतो वा भवति उत्तमर्णस्य च तस्मादेव ग्रहणेच्छा तदा प्रकारमाह। कात्यायनः।

एकच्छायाप्रविष्टानान्दाप्यो यस्तत्र दृश्यते।
प्रोषिते तत्सुतः सर्वम्पित्रंशं मृते तु स इति॥

प्रोषिते देशान्तरगते। सर्वं सवृद्धिकमृणम्। मृते तु पितुरंशं सवृद्धिकन्दद्यादित्यर्थः। स्मृतिचन्द्रिकायान्तु।

एकच्छायाश्रिते सर्वं दद्यात्तु प्रोषिते सुतः।
मृते पितरि पित्रंशं परर्णं न बृहस्पतिरिति॥

पठित्वा इत्थं व्याख्यातन्तथाहि। सर्वम्परर्णमपि न पित्रंशमात्र मित्यर्थः। न तु सर्वं सवृद्धिकमिति व्याख्येयम्।

पुत्रेणापि समन्देय मृणं सर्वन्तु पैतृकमिति॥

बृहस्पतिस्मरणात्। समं मूलमात्रं एतच्च धनिकेच्छायांप्रोषितस्य पुत्रो मह्यन्दद्यादित्येवंविधायां सत्यां सर्वदानविधानन्द्रष्टव्यं असत्यां धनिकेच्छायां पित्रंशम्प्रोषितपतिके पुत्रोदद्यादिति वावगन्तव्यम्। परर्णपरस्य पितृव्यतिरिक्तस्य ऋणं पितरि मृते तु सुतः सत्यामपि धनिकेच्छायां सर्वन्नदातु मर्हति किन्तु पित्रंशमवृद्धिकमेवेति ब्रूत इत्यर्थः इति परर्णं

अन्येषां प्रतिभुवामंशमिति मदनरत्ने प्रातिभाव्यापलापे दण्ड माह ।

यो यस्यैव प्रतिभूर्भूत्वा मिथ्याचैव तु गच्छति ।
धनिकस्य धनं दाप्यो राज्ञा दण्डञ्च तत्समम् ॥
कुर्याच्चेत्प्रतिभूर्वाद ऋणिकार्येऽर्थिना सह ।
सोपसर्गस्तदा दण्ड्यो विवादाद्द्विगुणन्धनमिति ॥

उपसर्गो विप्लवकारीति स्मृतिचन्द्रिकायाम् । प्रतिभूभ्यो धनग्रहणे विशेषमाह बृहस्पतिः ।

नात्यन्तम्पीडनीयाः स्युर्ऋणं दाप्याः शनैः शनैरिति ॥

अथ प्रतिभूर्दत्तस्य प्रतिक्रियाविधिमाह । कात्यायनः ।

यस्यार्थे येन यद्दत्तं विधिनाभ्यर्थितेन तु ।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयादिति ॥

यस्य प्रतिभाव्यकारयितुः कृते येन प्रतिभुवा धनिकादिभिर्याचितेन साक्ष्यादिभिरङ्गीकारितेन यत् स्वकीयसुवर्णधान्यवस्त्रादिकं धनिकादिभ्यो दत्तन्तत्सकलमेव प्रातिभाव्यकारयितुः सकाशात्समेवाप्नुयादित्यर्थः । यत्तु ।

प्रतिभूर्दापितो यत्तु प्रकाशन्धनिनान्धनम् ।
द्विगुणं प्रतिदातव्य ऋणिकैस्तस्य तद्भवेदिति ॥

याज्ञवल्क्यवचनन्तद्धनिकपीडितप्रतिभूविषयम् । यत आह नारदः । यञ्चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः ।

ऋणिकस्तत्प्रतिभुवे द्विगुणं प्रतिदापयेदिति ॥

एतद्द्विगुणदानन्त्रिपक्षानन्तरं बोध्यम् । यत आहतुः कात्यायन बृहस्पती ।

प्रातिभाव्यञ्च यो दद्यात्पीडितः प्रतिभावितः ।

विपचात्परत: सोऽर्थंद्विगुणन्दातुमर्हतीति ॥

प्रातिभाव्यं प्रातिभाव्यागतं धनं प्रातिभावित: प्रतिभूत्वे तत्कृत: । अत्र वदति । द्विगुणं प्रतिदातव्यमित्यादिभिर्वचनैर्द्वैगुण्यमात्रं प्रतिपाद्यते तद्वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति विहितजातेष्टिर्यथा शुचित्वाद्यबाधेनैव प्रवर्त्तते तथा इदमपि कालकलाक्रमाबाधेनाप्युपपन्नं भवति एवञ्च पश्वादीनामपि सवृद्धिकमेव दानम्भविष्यति अन्यथा त्रिपक्षादूर्ध्वं सवृद्धिकदानपक्षे तेषां मूल्यदानमेव, स्यात्सन्ततिसम्भवात्सन्ततेरेव तद्वृद्धित्वेनोक्तत्वादिति तत्र सुन्दरं वचनानर्थक्यात् । कथमानर्थक्यम् । वस्त्रधान्य हिरण्यानाञ्चतुस्त्रिद्विगुणापरेत्यादिभि: कालक्रमेण द्वैगुण्यदानस्य सिद्धत्वादिति गृहाण । ननूक्तमेव जातेष्टिवदिति प्रत्युक्तमेव तद्वचनानर्थक्यादिति नहि तत्र वचनानर्थक्यमस्ति येन तथा कल्प्येत । यत्तु पश्वादौ मूल्यदानमेव प्राप्नोति सद्य: सवृद्धिकदानपक्षे यत्र वापि समानङ्कालक्रमेण सन्तत्यजननपक्षेऽपि सवृद्धिकदानङ्कालान्तरेऽधमर्णेन सह सङ्घटते गर्भिण्यादिने आदावेवेति । ननु प्रायेण प्रीत्यैव प्रतिभूर्भवति अत: प्रतिभुवा दत्तं प्रीतिदत्तमेव न च तद्वर्द्धते याचनात् प्राक् ।

प्रीतिदत्तन्तु यत्किञ्चिद्वर्द्धते नत्व याचितम् ।
याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतमिति ॥

स्मरणात् । अतश्चानेनास्य प्रीतिदत्तस्यायाचितस्यापि दानदिवसादारभ्य यावद्द्विगुणाङ्कालक्रमेण वृद्धिरित्युच्यत इति चेन्न । वचनबलात् सर्वं द्विगुणं भविष्यति न च तस्यातिभारोऽस्तीति स्मृतिचन्द्रिकायाम् । तन्न । अस्यार्थस्यास्माद्वच-

नादप्रतीतेरिति मितात्तरायाम्। अयञ्च द्विगुणलाभो हिरण्य-विषयः पश्वादौ तु।

सन्ततिस्त्रीपशुष्वेव धान्यं त्रिगुणमेव च।
वस्त्रञ्चतुर्गुणं प्रोक्तं रसश्चाष्टगुणः स्मृत इति॥

याज्ञवल्क्येन द्वैगुण्यापवादस्योक्तत्वात्। दर्शनप्रतिभूर्यद्यङ्गीकृते काले अधमर्णं दर्शयितुमशक्तस्तदा तदन्वेषणार्थं पक्षत्रयन्देयम्। यदि तत्र दर्शयति तदा मोचनीयम्। अथ न दर्शयति तदा प्रयुक्तं धनन्दाप्य इत्याह कात्यायनः।

नष्टस्यान्वेषणार्थन्तु देयं पक्षत्रयं परम्।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्॥
काले व्यतीते प्रतिभूर्यदि तं नैव दर्शयेत्।
निबन्धं दापयेत्तन्तु प्रेते चैवं विधिः स्मृत इति॥

बृहस्पतिरपि। नष्टस्यान्वेषणे काले दद्यात् प्रतिभुवे धनी।

देशानुरूपतः पक्षम्मासं सार्द्धमथापि वा॥
नात्यन्तम्पीडनीयाः स्यु र्ऋणं दाप्याः शनैः शनैः।
स्वसाक्ष्येन नियोज्याः स्युर्विधिः प्रतिभुवामयमिति॥

स्वसाक्ष्ये स्वयं समक्षदर्शने प्रातिभाव्ये निषेधानाह। कात्यायनः। न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा।

विरुद्धो दण्डितश्चैव सन्दिग्धश्चैव न क्वचित्॥
नैव रिक्थी न मित्रञ्च न चैवात्यन्तवासिनः।
राजकार्यनियुक्ताश्च ये च प्रव्रजिता नराः॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम्।
जीवन्वापि पिता यस्य तथैवेच्छाप्रवर्त्तकः॥
नाविज्ञाते गृहीतव्यः प्रतिभूः स्वक्रियां प्रति इति॥

सन्दिग्धोऽभिशस्तः अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः ।
नारदोऽपि । साक्षित्वं प्रातिभाव्यञ्च दानग्रहणमेव च ।
विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परमिति ॥
याज्ञवल्क्योऽपि । भ्रातृणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्तेन तु स्मृतमिति ॥

ननु जायापत्योर्न विभागोविद्यत इत्यापस्तम्बेन विभागस्य निषिद्धत्वाद्दम्पत्योर्विभागात् प्राक् प्रातिभाव्यादि प्रतिषेधोऽनुपपन्न इति तदंशे विभागात् प्रागिति विशेषणानर्थक्यमिति चेन्न । अनेन वचनेन श्रौतस्मार्त्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावस्योक्तत्वात् । यतोजायापत्योर्न विभागोविद्यत इत्यभिसन्धाय पाणिग्रहणाद्धि सहत्वङ्कर्मसु तथा पुण्यफलेषु चेति हेतुमुक्तवान् हि यस्मात् पाणिग्रहणादारभ्य सहत्वङ्कर्मसु श्रूयते । जायापती अग्निमादधीयातामिति तस्मादाधाने सहाधिकारात् तत्सिद्धाग्निसाध्येषु कर्मसु सहाधिकारः एवं विवाहसिद्धाग्निसाध्येष्वपि कर्मसु स्मार्त्तवैवाहाग्नौ कुर्वीत प्रत्यहं गृहीति योगीश्वरेणाभिधानात् । तथा पुण्यफलेषु स्वर्गादिषु सहत्वं श्रूयते । दिवि ज्योतिरजरमारभेतामित्यादिषु येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमित्यर्थः । तेन भर्त्तुरनुज्ञयानुष्ठितानां पूर्त्तानां फलेषु न सहत्वमिति । केचित्तु अनेनैव विभागात् प्राक् दम्पत्योः प्रातिभाव्यादिनिषिद्धमभिदधता अनयोर्विभागोऽस्तीत्यर्थादुक्तम्भवतीति न चापस्तम्बवचनविरोधः ग्रहस्याग्रहणवत् विकल्पाङ्गीकरणादित्याहुः । तदतिफल्गुः शास्त्रार्थिकयोस्तुल्यबलत्वाभावेन विकल्पानुपपत्तेः अतएव तुल्या-

र्यास्तु विकल्पेरन्निति भगवता जैमिनिनोक्तं पाणिग्रहणाद्धि सहत्वङ्कर्मस्वित्यादौ कर्मादिग्रहणानर्थक्यापाताच्च किञ्च पूर्वोक्तप्रकारेणैवोपपत्तौ सत्यामष्टदोषदुष्टविकल्पाङ्गीकरणस्याप्यनुचितत्वात्। न चैवं ग्रहणाग्रहणादावपि विकल्पो न स्यात्। न स्याद्यदि गत्यन्तरयुतत्वं स्यात्। न च तदस्तीत्यनन्यगतिकतया तस्याङ्गीकारात्। ननु द्रव्यस्वामित्वेऽपि सहत्वं श्रूयते। द्रव्यपरिग्रहेषु च न हि भर्त्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्तीति चेत्सत्यम्। अनेन विभागाभावेनोक्तः किन्तु पत्न्या द्रव्यस्वामित्वमुक्तम्। यतोद्रव्यपरिग्रहेषु चेत्युक्त्वा न हि भर्त्तुर्विप्रवासे नैमित्तिकेऽवश्यकर्त्तव्ये ऽतिथिभोजनादौ हि यस्मात् स्तेयमिति नोपदिशन्ति मन्वादयस्तस्माद्भार्याया अपि द्रव्यस्वामित्वमस्ति अन्यथा स्तेयं स्यादिति तस्माद्भार्याया अपिभर्त्तुरिच्छया द्रव्यविभागोऽस्ति न स्वेच्छया। अतएव याज्ञवल्क्यः।

यदि कुर्य्यात् समानंशान् पत्न्यः कार्य्याः समांशिका इति।

तस्मात्सुष्ठूक्तमाविभागात् दम्पत्योर्न प्रतिभाव्यादिकमिति।

अधमर्णाकारमाह बृहस्पतिः।

प्रतिपन्नमृणन्दाप्यः सामादिभिरुपक्रमैरिति।

प्रतिपन्नं ऋणमभ्युपगतं प्रतिपन्नम्। दाप्यः दातुमुन्मुखः कर्त्तव्यो धनिनेत्यर्थः। तथा च मनुः।

यै यैरुपायैरर्थं स्वम्प्राप्नुयादुत्तमर्णिकः।
तै स्तै रुपायैः संगृह्य दापयेदधमर्णिकम्॥

के ते उपाया इत्यपेक्षायां स एवाह।

धर्मेण व्यवहारेण छलेन चरितेन च।
प्रयुक्तं साधयेदर्थं पञ्चमे न बलेन चेति।

वृहस्पतिरपि धर्मोपधिबलात्कारैः गृहसंरोधनेन चेति॥
गृहसंरोधनेन आचरिताख्योपायेन।

कात्यायनोऽपि। पीड़नेनोपरोधेन साधयेद्दणिकं धनी।
कर्मणा व्यवहारेण सान्त्वेनादौ विभावितम्।
आददीतार्थमेवन्तु व्याजेन चरितेनचेति॥

धर्मादीनां स्वरूपमाह।
सुहृत्सम्बन्धिसन्दिष्टैः सामोक्त्याऽनुगमेन च।
प्रायेण वा ऋणी दाप्योधर्म्म एष उदाहृतः॥
छद्मना याचितश्चार्थं आनीय ऋणिकाद्धनी।
अन्वाहितादि संगृह्य दाप्यते यत्र सोपधिः॥
बद्धा स्वगृहमानीय ताडनाद्यैरुपक्रमैः।
ऋणिको दाप्यते यत्र बलात्कारः स कीर्त्तितः॥
दारपुत्रपशून्बद्धा कृत्वा द्वारोपवेशनम्।
यत्रर्णिको दाप्यतेऽर्थन्तदाचरितमुच्यत इति॥

सुहृत्सम्बन्धिसन्दिष्टैः सुहृदां सम्बन्धिनां सन्देशैः सामोक्त्या प्रियवाक्येन अनुगमेन अनुसरणेन प्रायेण प्रार्थनावाहुल्येन। छद्मना उत्सवादिव्याजेन गृहीततदीयभूषणाद्यप्रत्यर्पणेन। अन्वाहितमन्यस्मै दातुमर्पितम्। आदिशब्दात् प्रकारान्तरस्यापि प्रकारेणाधमर्णस्य भूषणादि स्वाधीनीकृत्य यत्र स ऋणं दाप्यते स उपधिरित्यर्थः। दाप्यते प्रतिदानोन्मुखीक्रियते। अर्थं स्वकीयमर्थम्। शेषं स्पष्टार्थन्धर्मादयश्चोपायाः। पुरुषापेक्षया प्रयोक्तव्याः। यत आह कात्यायनः।
राजानं स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत्।
ऋक्थिनं सुहृदं वापि छलेनैव प्रसाधयेत्॥

वणिजः कर्षकाश्चैव शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टा न सम्पीड्य दापयेदिति ॥

सान्त्वेन साम्ना धर्माख्योपायेनेत्यर्थः । वणिगादयो देशाचारानुसारेण दाप्याः स्युरित्यन्वयः । सम्पीड्येति बलात्काराचरिताख्योपाययोर्ग्रहणम् । कः पुनर्देशाचार इत्याकाङ्क्षायां स एवाह । धार्योऽवरुद्धस्त्वृणिकः प्रकाशञ्जनसंसदि ।
यावन्नदद्यात्तद्देयन्देशाचारस्थितिर्यथेति ॥

यत्र देशे धनिकेन स्वयमेवधार्य इत्याचारस्तत्र तथैवधार्यः । यत्र उक्तो वादिना अनेनावरुद्धः धार्य इति देशाचारस्थिति र्यं स्येत्यस्यार्थः । अवरुद्धस्य विस्रम्भशङ्कायान्तत्प्रतिरोधो न कार्य इति स एव दर्शयति ।

विस्रम्भशङ्का यत्र स्याद्धार्यमाणस्य देहिनः ।
पृष्ठतो वानुगन्तव्यो निबद्धं वा समुत्सृजेदिति ॥

निबद्धमिति शृङ्खलादिना बद्धमेव मूत्राद्युत्सर्गार्थम्प्रेषयेदित्यर्थः । अत्र अधमर्णिकविषये द्वितीयः पक्षः तदितरविषयस्त्वाद्यपक्ष इत्यौचित्यव्यवस्थावगन्तव्येति स्मृतिचन्द्रिकायाम् । दर्शनप्रतिभुवम्भोजनादिकाले गृहीत्वा ऽवरुद्धस्य मोक्षः करणीयः यत आह स एव ।

स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिनेदिने ।
आहारकाले प्राप्ते च निबन्धे प्रतिभूःस्थित इति ॥

निबन्धे पलायनप्रतिबन्धे । यदा तु प्रतिभूर्न लभ्यते लब्धो वा ऽधमर्णो न ददामीति वदति तदा पक्षद्वयमाह स एव ।

यो दर्शनप्रतिभुवं नाधिगच्छेन्नचाश्रयेत् ।
स वारके निरोद्धव्यः स्थाप्यो वावेद्यरक्षिण इति ॥

नाधिगच्छेन्नप्राप्नुयात् । नाश्रयेन्नाङ्गीकुर्यात् वारके कारागृहे । रक्षिणो रक्षकान् । रक्षणे पुरुषान्नियुज्य प्रस्थाप्यो वेत्यर्थः । एतस्य प्रतिभूविशेषे प्रतिषेधमाह स एव ।

न वारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिरिति ॥

प्रात्ययिकः विश्वास्यः । कथन्तर्हि स मोचनीय इत्यपेक्षिते स एवाह । सोऽनिबद्धः प्रयोक्तव्य निबद्धः शपथेन चेति ॥

अनिबद्धः रक्षकशून्यः । निबद्धः नियमितः एवमुक्तधर्मादिप्रयोगेण साधयन् धनिको न निवारणीयो राज्ञेत्याह मनुः । य स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात् ।

स राज्ञा नाऽभियोक्तव्यः स्वकं संसाधयन्धनमिति॥

विष्णुरपि । प्रयुक्तमर्थं यथा कथञ्चित्स साध्यमानो न राज्ञो वाच्यः स्यादिति यथाकथञ्चित् स्मृत्याचाराविरुद्धेन मार्गेण । याज्ञवल्क्योऽपि । प्रपन्नं साधयन्नर्थन्न वाच्यो नृपतेर्भवेदिति ।

साध्यमानश्चेद्राजसन्निधिं गत्वा धनिकन्धारयति तदा स दण्ड्य इत्याह । स एव ।

साध्यमानोनृपङ्गच्छन्दण्डोदाप्यश्च तद्धनमिति ॥

तस्य धनिकस्य धनन्तत्समञ्च दण्डन्दाप्य इत्यर्थः । अतएव विष्णुः ।

साध्यमानश्चेद्राजानमभिगच्छेत्तत्समन्दण्ड्य इति ।

तत्समन्धनिकद्रव्यसमम् । यत्तु मनुना ।

'यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।

स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनमिति ॥

स्वल्पदण्ड उक्तः स दरिद्राधमर्णविषयः ब्राह्मणविषय इति केचित् छन्देन स्वेच्छया । स्मृतिचन्द्रिकायान्तु दण्ड इति सामान्याभिधानम् असमर्थविषये स्वल्पो दण्डो यथा स्यादि-

त्येवमर्थमिति व्याख्याय मनुवचनं प्रमाणत्वेनोपन्यस्तम्। विप्रतिपत्तौ विशेषमाह। वृहस्पतिः।

प्रतिपन्नस्य धर्मोऽयं व्यपलापी तु संसदि।
लेख्येन साक्षिभिर्वापि भावयित्वा प्रदाप्यत इति॥

अयं पूर्वोक्तः अधमर्ण ऋणसत्तायां सम्प्रतिपन्नस्य धर्मस्य धनिकस्य अपलपितुम् अपह्नवितुं संसदि सभायां प्रमाणेनर्णं साध्यप्रतिदानोन्मुखङ्कार्य्य इत्यर्थः। एवं पूर्वोक्तधर्मेण व्यवहारेण छलेनाचरितेन च-प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च मनुवचने व्यवहारेणेति व्यपलापिविषयम् इतरत्सम्प्रतिपन्नविषयमिति बोद्धव्यम्। व्यवहारेण साध्याद्युपन्यासेन अतएवासम्प्रतिपन्ने व्यवहारातिरिक्तोपाय निषेधमाह स एव।

न रोद्धव्यः क्रियावादी सन्दिग्धेऽर्थे कथञ्चन।
आसेधयंस्त्वनासेध्यन्दण्डो भवति धर्मत इति॥

न रोद्धव्यः व्यवहारातिरिक्तच्छलाद्युपायोपलक्षणम्। क्रियावादिसन्दिग्धपदयोरर्थमाह स एव।

प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम्।
एवं यत्नर्णिको ब्रूते क्रियावादी स उच्यते॥
रूपसङ्ख्यादिलाभेषु यत्र भ्रान्तिर्द्वयो र्भवेत्।
देयानादेययोर्वापि सन्दिग्धोऽर्थः स कीर्त्तितः॥

इति सन्दिग्धेऽर्थे धनग्रहणं कुर्वतोऽर्थहानिदण्डावाह स एव। अनावेद्य तु राज्ञे यः सन्दिग्धेऽर्थे प्रवर्त्तते।

प्रसह्य स विनेयः स्यात्सचाप्यर्थे न सिद्ध्यतीति।

कात्यायनोऽपि। पीड़येत्तु धनी यत्र ऋणिकं न्यायवादिनम्।
तस्मादर्थात् सहीयेत तत्समञ्चाप्नुयाद्दममिति।

सावधिकलग्नावधिप्राप्तौ निरवधिकं द्वैगुण्यादिपरमवृद्धेः प्राप्तौ कार्यविशेषोपनिपातश्चेत्तस्य प्राप्तावपि पूर्वोक्तैर्धर्मादिभिरुपायैः सवृद्धिकं ग्राह्यम् । यद्वा परमवृद्धिसहितं मूलं कृत्वा लेख्यान्तरं ग्राह्यम् । अथवा सवृद्धिकमूलोपभोग्य आधिर्ग्राह्यः । तथा च वृहस्पतिः ।

पूर्णावधौ शान्तलाभमृणमुद्ग्राहयेद्धनी ।
कारयेद्वा ऋणी लेख्यमुत्कृष्टवृद्धिव्यवस्थया ॥
द्विगुणस्योपरि यथा चक्रवृद्धिः प्रगृह्यते ।
भागलाभस्तदा तत्र मूलं स्यात्सोदयं ऋणमिति ॥

शान्तलाभग्रहणमशान्तलाभस्योपलक्षणम् । उद्ग्रहणन्धर्माद्युपायेन साधनम् । यदा चक्रवृद्धिर्भोग्याधिर्वा गृह्यते तत्र सोदयम्मूलमृणं स्यादित्यर्थः । मनुरपि ।

ऋणन्दातुमशक्तो यः कर्त्तुमिच्छेत् पुनः क्रियाम् ।
स दत्त्वा निर्जितां वृद्धिङ्करणं परिवर्त्तयेत् ॥
अदर्शयित्वा तत्रैव हिरण्यं परिवर्त्तयेत् ।
यावती सम्भवेद्वृद्धिस्तावतीन्दातु मर्हति ॥
चक्रवृद्धिं समारूढो देशकालव्यवस्थितः ।
अतिक्रामन्देशकालौ न तत्फलमवाप्नुयादिति ॥

निर्जितां लभ्यत्वेनात्माधीनत्वं सम्पन्नाङ्करणम्परिवर्त्तयेत् । अन्यल्लेख्यसाक्ष्यादि कुर्यात् । अदर्शयित्वा हिरण्यन्दीयमानमिति शेषः । तेन धनिने सर्वं सवृद्धिकमृणमदत्त्वेत्यर्थः । तत्रैव पुनः करणं परिवर्त्तयेत् । साक्षिसमक्षमेतत् ब्रूयाद्यदेतावन्मूलमस्मै धारयामि । एतावती च वृद्धिरिति पत्रे चारोपयेदित्यर्थः । एतच्च यावद्वृद्धिन्धनन्दातुं शक्नोति तावद्दत्त्वा करणं

परिवर्त्तनङ्कार्यम् । समारूढः प्रतिपन्नः अङ्गीकृतवानिति यावत् तत्फलं चक्रवृद्धिलक्षणम् । कात्यायनोऽपि ।

ग्राह्यं स्याद्द्विगुणन्द्रव्यं प्रयुक्तन्धनिना सदा ।
लभेच्चेन्न द्विगुणं पुनर्वृद्धिम्प्रकल्पयेत् इति ॥

अधमर्णस्य धनदानाशक्तौ ग्रहप्रकारमाह नारदः ।

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात् ।
शक्त्यपेक्षमृणन्दाप्यः काले काले यथोदयमिति ॥

यथोदयं यथा धनोत्पत्तिं दाप्योब्राह्मण इति शेषः ।
तथा च याज्ञवल्क्यः। हीनजातिम्परिक्षीणमृणार्थङ्कर्म कारयेत्
ब्राह्मणस्तु परीक्षीणः शनैर्दाप्यो यथोदयमिति ॥

अत्र च हीनजातिग्रहणं सजातेरप्युपलक्षणम्। अतश्च समानजातिमपि परीक्षीणं यथोचितङ्कर्म कारयेत्। ब्राह्मणग्रहणं च श्रेयोजातेरुपलक्षणम्। अतश्च क्षत्रियादिरपि क्षीणो यथोदयं वैश्यादेर्दाप्य इत्यर्थः। एतदेव स्पष्टमाह मनुः।

कर्मणाऽपि समं कुर्याद्धनिकस्याधमर्णिकः ।
समोपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैरिति ॥

कर्मणापि समं कुर्य्यात् अधमर्णिकत्वेनोत्तमर्णादधरीभूतमात्मानन्तावद्धनिकार्य्यकर्मकरणेनापि समं कुर्य्यात्। अधमर्णत्वमपनयेदित्यर्थः। श्रेयान् उत्तमजातीयो गुणाधिकश्च। बृहस्पतिरपि। निर्द्धनं त्वृणिनङ्कर्म गृहमानीय कारयेत्।
शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनैरिति ॥

शौण्डिकाद्यं समोपकृष्टजातिम्। ब्राह्मणग्रहणमुत्कृष्टजातेरुपलक्षणार्थम्। यत्तु कात्यायनवचनम्।

कर्षकान् क्षत्रविट्शूद्रान् समहीनांस्तु दापयेत् इति ॥

तत्तेषां यथोदयन्धनदानसामर्थ्यं मन्तव्यम्। कल्पतरौ तु कर्मणा च्चत्र विट्शूद्राः समहीनांस्तु दापयेत् इति पठितन्तत्र कर्मणा दापयेदित्यन्वयः शूद्रोऽपि विरोधः। कात्यायनोऽपि।

धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत्॥

कर्मकरणासहं तु बन्धनागारे वासयेदित्याह। स एव।

अशक्तौ बन्धनागारे प्रवेश्यो ब्राह्मणादृते इति॥

अत्र कर्मकरणाशक्तौ बन्धनागारे प्रवेशाभिधानं सामर्थ्योत्पत्तौ कथञ्चिद्दानार्थमित्यभिहितं स्मृतिचन्द्रिकायाम्।

यस्तु पूर्वमनावेद्याशुभं कर्म कारयति॥

तत्रापि विशेषं स एवाह।

यदि स्यादावनादिष्टमशुभङ्कर्म कारयेत्।

प्राप्नुयात् साहसम्पूर्वस्त्वणान्मुच्येत चर्णिक इति॥

युगपदनेकोत्तमर्णसमवाये दानानुक्रममाह। याज्ञवल्क्यः। गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः।

दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरमिति॥

नृपतेः क्षत्रियस्य समानजातीये तूत्तमर्णस्य ग्रहणक्रमेण देयम्। विजातीयेषु तु ब्राह्मणादिवर्णक्रमेणेत्यर्थः। कात्यायनोऽपि। नानर्णसमवाये तु यद्यत्पूर्वकृतम्भवेत्।

तत्तदेवाग्रतो देयं राज्ञः स्याच्छ्रोत्रियात्तु चेति॥

श्रोत्रियात्तु ब्राह्मणानन्तरम्। एकदिनकृतनानर्णसमवाये युगपद्देयं धनाल्पत्व बहुत्वयोस्तु तदनुसारेण भागम्परिकल्प्य दापनीयम्। तथा च कात्यायन एव।

एकाहे लिखितं यत्र तत्र कुर्याद्धनं समम्।

ग्रहणं रक्षणं लाभ मन्यथा तु यथाक्रममिति॥

ग्रहणं बन्धकदानम् । रक्षणं बन्धकपरिपालनम् । लाभं बन्धकभोगञ्च समं युगपदेव कुर्यात् । अर्थात् अहर्भेदेन क्रमेण कुर्यादित्यर्थः । अनेकर्णसमवायेऽपि क्रमान्नकं यदुत्तमर्णाद् द्रव्यं गृहीत्वा यद्व्यवहारादिकङ्करोत्यल्पात्तत्समन्धनं तदुत्तमर्णायैव दद्यान्नान्येषाम् । तथा च स्मृत्यन्तरे ।

यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।
तद्द्रव्य मृणिकेनैव दातव्यं तस्य नान्यथेति ॥

एवकारस्तस्येत्यनन्तरं व्यत्यसनीयम् । अधमर्णाभावे तत्पुत्रेण सवृद्धिकमृणन्देयमित्याह । बृहस्पतिः ।

याचमानाय दातव्य मप्रकालमृणं कृतम् ।
पूर्णावधौ शान्तलाभमभावे च पितुः सुतैरिति ॥

अप्रकालं अदीर्घकालन्निरवधिकमिति यावत् निरवधियाचनानन्तरमेव देयम् । परमवृद्धौ जातायामिति मदनरत्ने । सावधिपूर्त्तौ शान्तलाभं शान्त्यनन्तरम् । ऋणग्रहीतुः पितुरभावे पितृकृतमृणम्पुत्रैरवश्यन्देयमित्यर्थः । आवश्यकदाने हेतुमाह नारदः । इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः ।

उत्तमर्णाधमर्णाभ्यां मामयं मोचयिष्यति ॥
अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात्पिता मोचनीयो यथा न नरकं व्रजेत् ॥

यतस्ततः येन केनाप्युपायेन । उत्तमर्णाज्जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवानजायत इत्यादितैत्तिरीय श्रुत्युक्तम् । अधमर्णं परहस्तात् कुसीदविधिना गृहीतं जातेन व्यवहाराभिज्ञतया निष्पन्नेनेत्यर्थः ।

अप्राप्तव्यवहारश्चेत् स्वतन्त्रोऽपि हि नर्णभाक् ।

स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठे गुणवयःकृतमिति ॥

स्मरणात्। अप्राप्तव्यवहारस्यासेधाह्वाननिषेधश्च स्मर्यते।

अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती।

विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृप इति ॥

कात्यायनोऽपि। पितॄणां सूनुभिर्जाते दानेनैवाधमाहृणात्।

विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतान् ॥

नाप्राप्त व्यवहारैस्तु पितर्युपरते क्वचित्।

काले तु विधिना देयं वसेयुर्नरकेऽन्यथेति।

नाप्राप्तव्यवहारैः हेयोपादेय परिज्ञानविशेषसहितैः षोड़शवर्षैरित्यर्थः। षोड़शवार्षिकस्य व्यवहारज्ञत्वमाह नारदः।

गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः।

बाल आषोड़शाद्वर्षात् पौगण्डश्चेति शब्द्यते।

परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते इति।

यस्य बहवः पुत्रास्तेषां विभक्ताविभक्तभेदेन दानप्रकारमाह नारदः। पितर्युपरते पुत्रा ऋणन्दद्युर्यथांशतः।

अविभक्ता विभक्ता वा यो वा तामुद्वहेद्धुरमिति ॥

एतदुक्तम्भवति विभक्तैः स्वांशानुरूपन्देयम्। अविभक्तैरपि समप्रधानतयाऽवस्थाने सम्भूय समुत्थानेन देयम्। गुणप्रधानभावेनावस्थाने योमुख्यस्तेन देयमिति पुत्रेण रिक्थग्रहणाग्रहणयोः सवृद्धिकमेव देयम्। पुत्राभावे पौत्रेण रिक्थग्रहणे सोदयन्देयम्। अग्रहणे मूलमेव। प्रपौत्रेण तु रिक्थाग्रहणे मूलमपि न देयम्। यथा च वृहस्पतिः।

ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम्।

पैतामहं समन्देयन्न देयन्तत् सुतस्य त्विति ॥

आत्मीयवत् सवृद्धिकमित्यर्थः। तत्सुतस्याग्टहीतधनस्य प्रपौत्त्रस्य। एतदेवाभिप्रेत्य नारदः।

क्रमादव्याहतम्प्राप्तं पुत्त्रैर्यन्नर्णमुद्धृतम्।

देयम्पैतामहं पौत्त्रै स्तच्चतुर्थान्निवर्त्तत इति।

कात्यायनोऽपि। पित्रभावे तु दातव्य मृणं पौत्त्रेण यत्नतः।

चतुर्थेन न दातव्यन्तस्मात्तद्विनिवर्त्तयेत् इति॥

देयमृणमनेन देयमस्मिन् काले देयमित्यपेक्षते आह। याज्ञवल्क्यः। पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा।

पुत्त्र पौत्त्रै ऋणं देयं निह्नवे साक्षिभावितमिति॥

यदि पिता दातव्यं ऋणमदत्त्वा मृतो दूरदेशान्तरङ्गतो ऽचिकित्सनीयव्याध्याद्यभिभूतो वा तदा तत्कृतमृणं पुत्रेण तदभावे पौत्त्रेण देयं इत्यर्थः। पुत्त्रेण वापह्नुतेऽर्थिना साक्ष्यादिभिर्भावित मृणं देयं पुत्त्रपौत्त्रैरित्यन्वयः। प्रोषिते यत्प्रतिदानं तत्प्रवासादारभ्य विंशतिवर्षादूर्द्धं मन्तव्यम्। तथा च नारदः। नार्वाक्संवत्सराद्विंशात् पितरि प्रोषिते सुतः।

ऋणं दद्यात्पितृव्ये वा ज्येष्ठभ्रातर्य्यथापिवेति॥

कात्यायनोऽपि। विद्यमानेऽपि रोगार्त्ते स्वदेशात् प्रोषिते तथा।

विद्यमानेऽपि जीवत्यपि। विंशात् संवत्सरादूर्द्धमिति शेषः अतएव विष्णुः।

धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः।

प्रोषिते वा तत्पुत्त्रपौत्त्रैर्देयं नातः परमनीप्सुभिरिति॥

प्रव्रजिते संन्यस्ते द्विदशाः समाः विंशतिवर्षाणि अस्य प्रोषित इत्यनेन सम्बन्धः। अतः परं विंशतिवर्षादूर्द्धमनीप्सुभिर्देयमित्यर्थः। एतदुक्तम्भवति। पितरि मृते प्रव्रजिते

वा पुत्रपौत्रैः प्राप्तव्यवहारै देयं प्रोषिते तु विंशतिवर्षादूर्द्ध-मिति नातः परमनीप्सुभिरिति। अपि पाठस्तस्यायमर्थः। विंशतिवर्षादूर्द्धं न विलम्बः कार्यः ऋणप्रतिदानमभीप्सुभिरिति। अदेयमृणमाह याज्ञवल्क्यः।

सुराकामद्यूतकृतं दण्डशुल्कावशिष्टकम्।
वृथादानन्तथैवेह पुत्रो दद्यान्न पैतृकमिति॥

सुरापानेन यत् कृतमृणम्। कामकृतं स्त्रीव्यसनेन कृतम्। द्यूते पराजयनिर्वृत्तम्। दण्डशुल्कावशिष्टकं दण्डशुल्क-योरवशिष्टं वृथादानं वन्द्यादिभ्यो यत्प्रतिज्ञातम्।

धूर्त्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे।
चाटचारणचौरेषु दत्तम्भवति निष्फलमिति॥

वचनात्। न च दण्डशुल्कावशिष्टकमित्यनेनावशेषस्य दान-निषेधात् सर्वन्दातव्यमिति शङ्कनीयं यत आहोशनाः॥

दण्डं वा दण्डशेषं वा शुल्कन्तच्छेषमेव वा।
न दातव्यन्तु पुत्त्रेण यच्च न व्यावहारिकमिति॥

न व्यावहारिकं सुरापानादिनिमित्तमित्यर्थः।

गौतमोऽपि। मद्यशुल्कद्यूतदण्डा न पुत्त्रानध्यावहेयुरिति। न पुत्त्रस्योपरि भवन्तीत्यर्थः। वृहस्पतिरपि।

सौराचिकं वृथादानं कामक्रोधप्रतिश्रुतम्।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्त्रो न दापयेदिति॥

प्रतिभाव्यं प्रातिभाव्यागतम्। कामक्रोधप्रतिश्रुतयोः स्वरूपन्दर्शयति कात्यायनः।

लिखितमुक्तकं वापि देयं यत्तु प्रतिश्रुतम्।
परपूर्वस्त्रियैतत्तु विद्यात्कामकृतं नृणाम्॥

यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य वा।
उक्तान्तुष्टिकरन्तत्तु विद्यात्क्रोधकृतन्तु तदिति॥

सुक्तकं लेखनरहितम्। पित्राद्यादिकृतर्णसमवाये दान-क्रममाह बृहस्पतिः।

पित्र्यं पूर्वमृणन्देयं पश्चादात्मीयमेव च।
तयोः पैतामहं पूर्वं देयमेवं ऋणं सदेति॥

तयोस्ताभ्यां पित्रात्मीयाभ्यामित्यर्थः। रिक्थग्रहाभावेऽपि पुत्रेण देयमिति। इत्याह कात्यायनः।

पित्र्यर्णे विद्यमाने तु न च पुत्रो धनं हरेत्।
देयं तद्धनिके द्रव्यं मृते पुत्रैस्तु दाप्यत इति॥

विभक्तः पुत्रे विभागानन्तरं पितृकृते ऋणे तिष्ठति तस्मिन्मृते तद्धनं न गृह्णीयात्किन्तु धनिकाय दद्यात्। यदि किञ्चित्ततोऽवशिष्टम्भवति तर्हि गृह्णीयात्। पितृधनाभावे-रिक्थग्रहणराहित्येऽपि स्वधनं दद्यादित्यर्थः। अत्र पुत्रग्र-हणं पौत्रस्याप्युपलक्षणम्। पुत्र पौत्रै ऋणं देयमिति वचने-ऽभयोः साम्येन ग्रहणात्। पौत्रस्याऽवृद्धिकदानन्तु वाचनिक-मिति न तस्यानेन साम्यपाठेन निवृत्तिः। अनेकऋणदातृ-समये क्रममाह याज्ञवल्क्यः।

रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिन इति॥

दायविभागक्रमेण प्राप्तं यद्द्रव्यं तद्रिक्थं तद्यो गृह्णाति स रिक्थग्राही यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृ-तमृणं दाप्य इत्यर्थः। योषितम्भार्य्यां गृह्णातीति योषिद्ग्राही यदीयां योषितं गृह्णाति स तत्कृतमृणन्दाप्य इत्यर्थः। पुत्रो-

ऽनन्याश्रितद्रव्यः। अन्यं आश्रितद्रव्यं यस्यासौ अन्याश्रितद्रव्यस्तम्। एतादृशं यद्‌द्रव्यं परकीयं द्रव्यं मातापितृसम्बन्धिद्रव्यमिति यावत्। अन्यशब्देन पित्रोर्विवक्षणात्। तन्मातापितृद्रव्यं यस्य नास्ति दायग्रहणायोग्यत्वात् सक्लीवादी पुत्त्रोऽनन्याश्रितद्रव्य इत्यर्थः पुत्त्रहीनस्य दायग्रहणार्हपुत्त्रहीनस्य रिक्थिन ऋणं दाप्य इत्यर्थः। एतेषां समवाये पाठक्रमादेव दाप्याः। यत्तु सपुत्त्रस्य वाप्यपुत्त्रस्य रिक्थग्राहिणं दद्यादिति विष्णुवचनम्। तद्दायानर्हपुत्त्रस्य सद्भावेऽप्यसद्भावेऽपि वा तदनादरेण रिक्थग्राही ऋणं दद्यादित्येव परम्। रिक्थग्राह्यभावे योषिद्ग्राही दाप्य अस्मिन्नर्थे विष्णुरपि। विधनस्य स्त्रीग्राहीति। विधनस्य रिक्थग्राहीरहितस्य। वृहस्पतिरपि।

स्त्रीहारी च तथैव स्यादभावे धनहारिण इति।

योषिद्ग्राह्यभावे दायभागानर्हः। पुत्त्रोऽदाप्य इत्यस्मिन्नर्थे नारदोऽपि। धनस्त्रीहारिपुत्त्राणामृणभाग्यो धनं हरेत्।

पुत्रासतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोरिति॥

स्त्रीधनिनो रसतोः पुत्त्र एव ऋणभागीत्यन्वयः। स्त्री च धनञ्च स्त्रीधने तद्वतोः स्त्रीहारिणो रित्यर्थः अत्र स्त्रीहारीधनिपुत्रयोरिति पुत्राभावे योषिद्ग्राहकस्यर्णदायित्वाऽभिधानन्दायार्हपुत्राभावे मन्तव्यम्। स पुत्रस्य चेत्यनुवृत्तौ विधनस्य स्त्रीहारीति विष्णुनाऽभिधानात्। पुत्रः सतोः स्त्रीधनिनोरिति स्वोक्तिविरोधाच्च। ननु रिक्थग्राह ऋणं दाप्य इति वचनं एतेषां समवाये क्रमविधायकं स एत्र तु नोपपद्यते पुत्रे सत्यन्यस्य रिक्थग्राहित्वासम्भवात् न च पुत्त्रे सत्यपि पितृभ्रातो रिक्थहारित्वमिति वाच्यम्। न भ्रातरो

न पितरः पुत्त्रा रिक्थहराः पितुरितिवचनेन पुत्रे सत्यन्यस्य रिक्थहारित्वनिषेधात्। योषिद्ग्राहोऽपि न सम्भवति न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते इति वचनेन पत्यन्तरनिषेधात् पुत्त्रोऽनन्याश्रितद्रव्य इत्येतदपि न वक्तव्यम्। रिक्थग्राह ऋणं दाप्य इत्यनेन गतार्थत्वात् न च रिक्थग्राहित्वाभावेऽपि पुत्रदातव्यमित्येतदर्थमिदम्। तथा सत्यनन्याश्रित इत्यस्य वैयर्थ्यं स्यात्। पुत्रे सति मातापितृद्रव्यस्य अन्यगामित्वासम्भवात्। न भ्रातर इति पूर्वोदाहृतवचनात्। पुत्त्रहीनस्य रिक्थिन इत्येतदपि न वक्तव्यम्। रिक्थग्राह ऋणं दाप्य इत्यनेन सति पुत्रे रिक्थहारिण एव ऋणापाकरणाधिकारित्वस्याभिधाने सति पुत्रे कैमुतिकन्यायेन तत्सिद्धेरिति चेत्। मैवं वादीः। सत्स्वपि क्लीवादिषु पुत्रेषु अन्यायवर्त्तिषु च सवर्णापुत्रेषु पितृव्यादीनां रिक्थग्राहित्वासम्भवात्। क्लीवादीनां रिक्थग्राहित्वाभावं दर्शयति मनुः।

अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा।
उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रिया इति ॥

याज्ञवल्क्येनापि क्लीवादीनामनुक्रम्य भर्त्तव्याश्च निरंशका इत्युक्तमन्यायवृत्तस्य सवर्णापुत्रस्य रिक्थग्राहित्वाभावं दर्शयति गोतमः। सवर्णापुत्रोऽप्यन्यायवृत्तो न लभतैकेषामिति। तस्मात् पुत्रे सत्यपि रिक्थग्राह्यन्यः सम्भवति योषिद्ग्राहित्वमपि रागकलुषीकृतचित्तस्यातिक्रान्तनिषेधस्य सम्भवति तस्य ऋणापाकरणेऽधिकारो भवत्येव। यस्व-

तहणां स्वैरिणीनामन्तिमां गृह्णाति यश्च पुनर्भुवां तिसृणां प्रथमा तथा च नारदः।

अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम्।
ऋणान्तयोः पतिकृतं दद्याद्यस्ते उपाश्नुते॥
अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम्।
ऋणं वोढुः स भजते तदेवास्य धनं स्मृतमिति॥

चतसृणां पुनर्भुवां या प्रथमा तयोः पत्या कृतमृणान्ते ये उपाश्नुते पतित्वेनोपभुङ्क्ते स दद्यादित्यर्थः उपैति पतित्वेनोपभुङ्क्ते पुनर्भ्वः स्वैरिणीश्च दर्शयति स एव।

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम्।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्त्तिता॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता॥
स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति।
कामात्समाश्रयेदन्यं स्वैरिणी प्रथमा तु सा॥
कौमारं पतिमुत्सृज्य यात्वन्यं पुरुषं श्रिता।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्त्तिता॥
मृते भर्त्तरि तु प्राप्तान्देवरादीनपास्य या।
उपगच्छेत्परङ्कामात्सा तृतीया प्रकीर्त्तिता॥
प्राप्ता देशाद्धनक्रीताक्षुत्पिपासातुरा तु या।
तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तितेति॥

उत्पन्नसाहसा क्षतयोनिः प्रौढेति यावत्। अन्यस्य देवराय असत्सु देवरेष्वित्यग्रेऽभिधानात्। कीदृशस्य योषिद्ग्राहस्यर्णदाने ऽधिकार इत्यपेक्षिते स एवाह।

या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत्।

सोऽस्या दद्यादृणम्भर्त्तुरुत्सृजेद्वा तथैव तामिति॥

स प्रधना प्रकृष्टधनसहिता बहुधनेति यावत्। अस्य भर्त्तुर्ऋणन्दद्यादित्यन्वयः। न च योषिद्ग्रहणस्यादानाधिकारशास्त्रीयान्यथानुपपत्त्या योषिद्ग्रहणमपि पूर्वपतिकृतऋणन्दातुं शास्त्रीयमिति शङ्कनीयम्। रागप्राप्तयोषिद्ग्रहणस्याभवान्न शास्त्रानुपपत्तिः। अतएवाह संग्रहकारः।

यत्र दद्यादृणं वोढुः पुनर्भूस्वैरिणीपतिः।

न तेन तदुपादानं शास्त्रेण विहितम्भवेदिति॥

तदुपादानं पुनर्भुवां स्वैरिणीनाञ्च ग्रहणम्। ऋणं पुत्रोदाप्य इति पुनर्वचन योषिद्ग्राहाभावेऽस्य ऋणदानेऽधिकारो न तस्मिन् सतीति क्रमनिरूपणार्थं अनन्याश्रितद्रव्य इति न व्यर्थं पित्र्य रिक्थाभावेऽपि बहुषु पुत्रेषु सत्सु दानग्रहणयोग्येषु अस्यैव ऋणदानेऽधिकारो क्लीवादेर्दायानर्हस्येति प्रतिपादनार्थत्वात्। पुत्रहीनस्य रिक्थिन इत्येतदपि न व्यर्थं पुत्रग्रहणमुपलक्षणार्थं पुत्रपौत्रहीनस्य ये समनन्तरं रिक्थग्राहित्वेन दायभागे निरूपिताः प्रपौत्रादायस्ते सर्वे दायभागोक्तक्रमेण दाप्याः यदि रिक्थं गृह्णन्ति न चेन्न दाप्याः पुत्रपौत्रौ तु रिक्थग्रहणाभावेऽपि दाप्यौ इति पुत्रपौत्रादीनां वैषम्यप्रतिपादनार्थत्वात्। पुत्रपौत्रयोः प्रपौत्राद्यपेक्षया वैषम्यन्दर्शयति नारदः।

क्रमादभ्यागतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
दद्युः पैतामहम्पौत्रास्तच्चतुर्थान्निवर्त्तते इति ॥

यद्वा योषिद्ग्राहाभावे पुत्रो दाप्य इत्युक्तं सैव चास्य धनं सृतमिति स्मरणात् । लक्षणया रिक्थशब्देन योषितमङ्गीकृत्य पुत्राभावे योषिद्ग्राहो दाप्य इत्युच्यते पुत्त्रहीनस्य रिक्थिन इत्यनेन पुत्त्रहीनस्य सयोषित्कस्य ऋणं योषिद्ग्राहो दद्यादित्यर्थः। अस्मिन् पक्षे बहुधनस्त्रीहारिणोऽन्तिमा स्वैरिणी प्रथमा पुनर्भूहारिणश्चाभावे पुत्त्रो दाप्यः । पुत्त्राभावे निर्धननिरपत्य योषिद्ग्राही दाप्य इति व्यवस्था द्रष्टव्या अन्यथा योषिद्ग्राहपुत्राभावयोः पुत्त्रयोषिद्ग्राहौ दाप्याविति व्याख्याने उभयसद्भावे कस्याप्यदानप्रसङ्गः स्यात् । अतएव नारदः ।

धनस्त्रीहारी पुत्राणामृणभाग्यो धनं हरेत् ।
पुत्त्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनपुत्त्रयोरिति ॥

कस्मिंश्चित् स्त्रीहारिण्यसति पुत्त्रो दाप्यः पुत्रेति कश्चित्स्त्रीहारीत्यर्थः । अथवा । एते रिक्थप्राप्तादयः क्रमेण दाप्या इत्युक्ते कस्मादाप्या इत्यपेक्षिते उत्तमर्णस्य तदभावे तत्पुत्रादेः तस्याप्यभावे कस्येत्यपेक्षिते आह । पुत्त्रहीनस्य रिक्थिन इति पुत्त्राद्यन्वयहीनस्योत्तमर्णस्य यो रिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य दाप्या इत्यर्थः तथा च नारदः ।

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः ।
निर्वापयेत् सकुल्येषु तदभावेऽस्य बन्धुषु ॥

इत्यभिधायाभिहितवान् ।

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः ।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेदिति ॥

विज्ञानेश्वरानुयायी यथा। अत्र कश्चिद्वादभयङ्करकृदाह।

अहो बत जगत्ख्यात विज्ञानेश्वरयोगिनः।
पूर्वापरविरोधेऽपि नानुसन्धानमद्भुतम्॥

रिक्थग्रहणस्य गृहीतरिक्थस्य पुत्रस्यान्येन रिक्थग्राहिणा-सह कदा समावेशः सम्भवति। अपि च पुत्रहीनस्य रिक्थिन इति पदन्त्रिभिरपि सम्बध्यते द्वाभ्यामेव वा प्रथमे पुत्र इति व्याघातस्य मुख्यमुदाहरणम्। द्वितीये भिन्नविषयता तेषाम-प्यसमावेश इत्येतदपीति तन्मन्दधियान्ध न्धनमात्रम्। रिक्थ-ग्रहणार्हपुत्रसत्त्वे एतद्वचनाप्रवृत्तेः पुत्रहीनस्येति त्रिभिरपि सम्बध्यते। न च पुत्रस्य हीनस्य पुत्र इति व्याघातः। पुत्र-हीनस्य रिक्थग्रहणार्हपुत्रहीनस्य पुत्रो रिक्थग्रहणानर्ह पुत्र इत्यर्थस्योक्तत्वात् वादभयङ्करकृता स्वयमित्थं व्याख्यातं तथाहि। यथैवान्येषां पुत्रवता मृणमनन्याश्रितद्रव्यः पुत्रो दाप्यस्तथैव पुत्रहीनस्य रिक्थिन ऋणं रिक्थग्राही दाप्यः। तदाह नारदः। अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम्।

ऋणं वोढुः स भजते सैव चास्य धनं स्मृतमिति तथा॥
धनस्त्रीहारी पुत्राणामृणभाग्यो धनं हरेत्।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोरिति॥

न तु स्त्रीहारी धनहारिणो रसतोः पुत्रः धनहारी पुत्रयो र-सतोः स्त्रीहारीत्युभयसद्भावेन कश्चिद्दाप्य इति विरोध इति चेन्न पुत्रपदस्य भ्रातृपुत्र परत्वात्। तदाह मनुः।

भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान्भवेत्।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति॥

तदप्यसत् क्रमत्यागे मानाभावात्। नारदवचनन्त्वकृत्स-

तेऽप्यविरुद्धम्। किञ्च नारदवचनं पुत्त्रशब्दस्य मुख्येऽर्थे सम्भवति। गौणग्रहणे प्रमाणाभावात्। न च भ्रातृपुत्त्रेऽपि मुख्यप्रयोगः। पुत्त्रिणो मनुरब्रवीदिति स्मरणादिति वाच्यम्। वृद्धव्यवहारेण जन्यपुंसि मुख्यनिर्णयात्। न च मनुवचनविरोधः। गौणत्वेनाप्युपपत्तेः। न च शक्तिरेवास्तु। अन्यायश्चानेकार्थत्वमिति न्यायविरोधात्। नन्वेवं सैन्धवादिशब्दानामप्यनेकार्थत्वं न स्यात्। न स्यादेव यदि विनिगमकं स्यान्न च तदस्तीत्यङ्गीकारादिति। दायभागानर्हस्यापि भूयिष्ठधनवत्त्वे योषिद्ग्राहो न दाप्य इत्याह कात्यायनः।

पूर्वं दद्याद्धनग्राहः पुत्त्रस्तस्मादनन्तरम्।
योषिद्ग्राहः सुताभावे पुत्त्रे वात्यन्तनिर्धनमिति॥

पूर्वं रिक्थग्राहो दद्यात्तदभावे बहुतरधनयुक्तो दायार्हः पुत्त्रो दद्यात्तस्याभावे योषिद्ग्राहो दद्यादित्यर्थः सत्यपि दायार्हे पुत्त्रे तस्य यदा दुश्चिकित्स्यरोगाद्युपद्रवेण बाल्येन वा ऋणदानासामर्थ्यन्तस्यामवस्थायां तत्पितृधनं स्वसमीपे यः स्थापयति पितृव्यादि स ऋणं दद्यात् तस्याभावे योषिद्ग्राहो दद्यादित्याह स एव।

ऋणन्तु दापयेत्पुत्त्रः यदि स्यान्निरुपद्रवः।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत् सुतम्॥
व्यसनाभिप्लुते पुत्त्रे बाले वा यत्प्रहस्यते।
द्रव्यहृद्दापयेत्तन्तु तस्याभावे पुरन्ध्रीहृदिति॥

कुटुम्बार्थे पितृव्यादिना कृतमृणं कुटुम्बिना दातव्यम्। तथा च बृहस्पतिः।

पितृव्य भ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातु मर्हतीति ॥

शिष्यशब्देनान्तेवास्यपि गृह्यते । कुटुम्बस्यापि विवक्षितत्वात् गृहीत्यनेन गृहिमात्राभिधानम् । किन्तु कुटुम्बिनस्तस्यैव विवक्षितत्वात् अतएव नारदः ।

शिष्यान्तेवासिदासस्त्री प्रेष्यकृत्यकरैश्च यत् ।
कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत्कुटुम्बिनेति ॥

शिष्योऽत्र वेदविद्यार्थी । अन्तेवासी शिल्पविद्यार्थी । कुटुम्बहेतोः कुटुम्बार्थं उत्क्षिप्तमुत्थापितं कृतमिति यावत् । कुटुम्बिना कुटुम्बार्थं कृतमृणमसन्निधानादिना स्वानुज्ञानाभावेऽपि व्यवहारं समाचरेत् । तदर्थमनुराह ।

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं समाचरेत् ।
स्वदेशे वा विदेशे वा तं विद्वान्न विचालयेदिति ॥

अध्यधीनो दासादिः अन्यदपि कुटुम्बकृतं कुटुम्बिना दातव्य मृणं दर्शयति । कात्यायनः ।

कुटुम्बार्थ मशक्ते तु गृहीतं व्याधिने तथा ।
उपप्लवनिमित्तञ्च विद्यादापत्कृतन्तु तत् ॥
कन्यावैवाहिके चैव प्रेतकार्य्येषु यत्कृतम् ।
एतत् सर्वम्प्रदातव्यं कुटुम्बेन कृतं प्रभोरिति ॥

अशक्ते कुटुम्बभरणासमर्थे कुटुम्बिनीत्यर्थः । कन्यावैवाहिके कन्याविवाहनिमित्तम् । यत्कृतम् । येन धनेन यत्कृतम् । प्रभोः कुटुम्बिनः । कुटुम्बार्थव्यतिरिक्त ऋणविषये याज्ञवल्क्यः आह ।

न योषित्पतिपुत्राभ्यां न पुत्त्रेण कृतम्पिता ।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतन्तथेति ॥

पतिपुत्राभ्यां कृतं ऋणं क्रमेण योषिद्भार्या माता च न दद्यात् । तथा पुत्त्रेण कृतम्पिता न दद्यात् । तथा भार्याकृतम्पतिः । कुटुम्बार्थादृत इति सर्वान्वयि । तथा च कुटुम्बिना कुटुम्बार्थं येन केनापि कृतन्देयमित्यर्थः । नारदोऽपि ।

न स्त्रीपति कृतं दद्यादृणं पुत्त्रकृतन्तथेति ।

विष्णुरपि । न स्त्रीपतिपुत्त्रकृतं न स्त्रीकृतम्पतिपुत्त्राविति ।

पुत्त्रेण कृतम्पिता नेत्यस्यापवादं क्वचिदाह बृहस्पतिः ।

ऋणं पुत्त्रकृतं पित्रा शोध्यं यदनुमोदितम् ।
सुत स्नेहेन वा दद्यान्नान्यथा दातुमर्हतीति ॥

कात्यायनोऽपि । ऋणं पुत्त्रकृतम्पित्रा न देयमिति धर्मतः ।

देयं प्रतिश्रुतं यत् स्याद्यच्च स्यादनुमोदितमिति ॥

प्रतिश्रुतं अनुज्ञातम् । अनुमोदितमृणं करणानन्तरमङ्गीकृतं यत्पुत्त्रेणापदुद्धारार्थं कृतन्तदपि देय मित्याह नारदः ।

पितुरेव नियोगाद्वा कुटुम्बभरणाय वा ।
कृतं वा यदृणं कृच्छ्रे दद्यादूपुत्त्रस्य तत्पितेति ॥

न योषित्पतिपुत्त्राभ्यामित्यस्यापवादमाह ।

कात्यायनः । भर्त्रा पुत्त्रेण वा सार्द्धं केवलं वात्मना कृतम् ।
ऋणमेवंविधन्देयं नान्यथा तत्कृतं स्त्रिय इति ॥

भर्त्रा पुत्त्रेण वा सार्द्धं कृतमृणन्तयोरभावे देयम् । स्वयं कृतन्तयोर्भावेऽपि देयमित्यर्थः । अतएव स एवाह ।

देयम्भार्याकृतमृणं भर्त्रा पुत्त्रेण मातृकम् ।
भर्त्रर्थे कृतं यत् स्यादविधाय गते दिवमिति ॥

अविधाय अनपाकृत्य दिवङ्गते मृते सतीत्यर्थः।

याज्ञवल्क्योऽपि। प्रतिपन्नं स्त्रिया देयम्पत्या वा सह यत्कृतम्

स्वयं कृतं वा यदृणं नान्यत् स्त्री दातु मर्हतीति॥

प्रतिपन्नं देयत्वेनाङ्गीकृतम्। तद्विक्रयग्रहणेऽनङ्गीकृतमिति देयमित्याह। कात्यायनः।

भर्त्तुकामेन या भर्त्रा उक्ता देय मृणन्त्वया।

अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया इति॥

न पतिः स्त्रीकृतन्तथेत्यस्यापवादमाह। याज्ञवल्क्यः।

गोपशौण्डिकशैलूष रजक व्याधयोषिताम्।

ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रयेति॥

शैलूषो नटः। वृत्तिर्जीवनम्। गोपादिग्रहणं पत्न्याधीनजनानान्तैलिकादीनामुपलक्षणम्। कात्यायनोऽपि।

शौण्डिक व्याधजनक गोपनाविकयोषिताम्।

अधिष्ठाता ऋणन्दाप्यस्तासाम्भर्त्तृक्रियासु तदिति।

अधिष्ठाता च पतिरेव। भर्त्तृक्रियासु तत्। यतो भर्त्तुः कर्त्तव्येषु प्रयोजनेषु तदृणं जातन्तासामित्यर्थः भार्य्यया आपदुद्धारार्थं यत्कृतन्तदपि देयमित्याह। स एव।

न च भार्य्याकृतमृणं कथञ्चित्पत्युराभवेत्।

आपत्कृताद्दते पुंसां कुटुम्बार्थे हि विस्तरः।

अन्यत्र रजकव्याधगोपशौण्डिकयोषिताम्॥

तेषान्तु तत्परा वृत्तिः कुटुम्बञ्च तदाश्रयमिति॥

आपदद्देयम्भवेदित्यर्थः। न स्त्री भर्तृकृतं ऋणं दद्यादित्यस्यापवाद माह। नारदः।

दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा।
या वा तद्रिक्थमादद्याद्यतो रिक्थमृणन्तत इति॥

मातृकृतमृणं पुत्रेण देयमित्याह विष्णुः। पैतृकमविभक्तमातृकञ्च। विभक्ताश्च दायानुरूपमिति दद्युरित्यनुषङ्गः। मातुर्द्वैध्येऽपि निर्धनायास्तस्या ऋणं पुत्रेण दातव्यमित्याह नारदः। पुत्रिणी तु समुत्सृज्य पुत्रस्त्री याऽन्यमाश्रयेत्।
तस्या ऋणं हरेत् सर्वन्निःस्वायाः पुत्र एवत्विति॥

अन्यं भर्त्तारमितिशेषः तस्या एव सधनत्वे कात्यायन आह। बालपुत्राधिकार्था या भर्त्तारं यान्यमाश्रिता।
आश्रितस्तदृणं दद्याद्बालपुत्राविधिः स्मृतः॥

यदृणं कुटुम्बपोषणार्थमविभक्तैः कृतन्तत्तद्दानाधिकारिणि कुटुम्बिनि प्रेते देशान्तरगते वा तद्रिक्थहरैर्देयमिति। याज्ञवल्क्य आह। अविभक्तैः कुटुम्बार्थे यदृणन्तु कृतम्भवेत्।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनीति॥

तत्रापि केषाञ्चिदभावे यस्तिष्ठति स एव दद्यात्। तथा च विष्णुः। अविभक्तैः कृतमृणं यस्तिष्ठति स दद्यादिति।
अविभक्तैरिति बहुवचनं पूर्ववदविवक्षितम्॥

तथा च नारदः। पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्।
मात्रा वा यत्कुटुम्बार्थे दद्युस्तत्सर्वं रिक्थिन इति॥

ऋणकर्त्तुः प्रेते प्रोषिते वेति शेषः। तस्मिन् प्रधानभूते स्थिते सत्येतेषां गुणभूतानामृणदानानधिकारात्। अतएव मनुः। ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतो व्ययः।
दातव्यं बान्धवैस्तत्स्यात् प्रविभक्तैरपि स्वत इति॥

ऋणस्य ग्रहीता पितृव्यादिर्यदि नष्टः प्रोषितो मृतो वा

स्यात्। तदा तद्रिक्थिभिर्विभक्तैस्तत्कुटुम्बव्ययकृतःऋणन्दातव्यं स्वतः किमुताविभक्तैरित्यर्थः। एवं वृत्तिकारेण व्याख्यातम्। अस्मिन् व्याख्याने वचनान्तरे वृथैवाविभक्तग्रहणं स्यादिति महाभाष्यकारेण प्रविभक्तधनैः पितृव्यादिभिः स्वधनाद्दातव्यमित्यर्थः। कृतमिति स्मृतिचन्द्रिकायाम्। एतच्च ऋणप्रतिदानं उत्तमर्णाभावे तत्पुत्रादिषु कर्त्तव्यन्तेषामभावे तत्सगोत्रेषु तेषामभावे तद्बन्धुषु मातुलादिष्वित्याह नारदः।

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः।
निर्वपेत्तत्सकुल्येषु तदभावे ऽस्य बन्धुष्विति॥

ब्राह्मणग्रहणमुत्तमर्णोपलक्षणार्थम्। अन्वयः पुत्रसन्ततिः दुहितृसन्ततिश्च। बन्धूनामभावे त्वाह स एव।

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सुनिःक्षिपेदिति॥

प्रजापतिरपि। बन्धभावे तु विप्रेभ्यो देयं चेप्यप्स्वलेऽपि वा।
जले क्षिप्तन्तथाग्नौ चधनं स्यात्पारलौकिकमिति॥

अग्नौ हुतमिति शेषः। न तु क्षिप्तमित्यस्यानुषङ्गः। अतएवोक्तं स्मृतिसङ्ग्रहे।

द्रव्यं यत्त्वधमर्णस्यं क्वचिद्ब्राह्मणगम्भवेत्।
सुतादिब्राह्मणान्तानां रिक्थभाजामसम्भवे॥
पलाशस्य पलाशेन जुहुयान् मध्यमेन तु।
यत्कुसीदमिति प्राप्नेदय वाय्यैव तद्धनमिति॥

रुन्नस्य होमेनैव सम्बन्धो न तु प्रक्षेपेण मध्यमेन पर्णेन जुहुयात्। कुसीदमितीति गोभिलेन होमसम्बन्धित्वेनैव

स्मृतत्वात्। यस्त्वृणप्रतिदानकाले समग्रं सवृद्धिकं मूलन्दातुमसमर्थस्तं प्रत्याह याज्ञवल्क्यः।

लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वादत्त्वर्णिको धनम्।
धनी वोपगतं दद्यात् स्वहस्तपरिचिह्नितमिति॥

अयमर्थः यथा शक्त्या दत्त्वा दत्त्वैतावत्सवृद्धिकं मया दत्तमिति मूलपत्रस्य पृष्ठे लिखेत्। यद्वा उत्तमर्ण एतावन्मया लब्धमिति स्वहस्ताक्षरचिह्नितं यथा भवति तथा मूलपत्रे लिखेत् स्वहस्तलिखितमुपगताख्यं प्रवेशपत्रं वाधमर्णाय दत्तन्दद्यादिति। एतच्च प्रवेशपत्रदानं मूलपत्रासन्निधानविषयम्। अतएवाह विष्णुः। असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यादिति प्रवेशपत्रादाने त्वाह। नारदः। गृहीत्वोपगतं दद्यादृणिकायोदयन्धनी।

अददद्याच्यमानस्य शेषहानिमवाप्नुयादिति॥

उदयमृणिकदत्तधनम्। उदयं गृहीत्वेत्यन्वयः। एतच्च शेषपत्रालपस्य विषयम्। बाहुल्ये तु धर्मादिनोद्ग्राह्यम्। ऋणं यस्तूपरि न लेख्ययेत् न चैवोपगतन्दद्यात्तस्य तद्वृद्धिमाप्नुयात्। इति हस्त्युक्तोत्तमर्णस्य गृहीतांशवृद्धिदानमेव। उदयं गृहीत्वा ऋणमसमग्रमिति शेषः। ऋणाप्रतिदाने अनिष्टमाह व्यासः।

तपस्वी वाग्निहोत्री वा ऋणवान् म्रियते यदि।
तपश्चैवाग्निहोत्रञ्च सर्वन्तद्धनिनो भवेदिति॥

तेनात्रश्यमृणमपाकरणीयमित्याशयः। अनेनैवाशयेन कात्यायनोऽप्याह। उद्धारादिकमादाय स्वामिने न ददाति यः।
स तस्य दासो भृत्यः स्त्रीपशुर्वा जायते गृहे इति।

आदिशब्देन निःक्षेपादीनां ग्रहणम्। स दासः क्रीतः। भृत्यः वैतनिक इति तयोर्भेदः। नारदोऽपि।

याच्यमानं न दद्याद्यदृणं वापि प्रतिग्रहम्।
तद्द्रव्यं वर्द्धते तावद्यावत्कोटिशतम्भवेत्॥
ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा।
अश्वः खरो वृषो दासो भवेज्जन्मनि जन्मनि इति॥

प्रतिग्रहः प्रतिश्रुतम्। लेख्यारूढप्रतिदानानन्तरकर्त्तव्यमाह याज्ञवल्क्यः।

दत्त्वर्णं पाटयेल्लेख्यं शुद्धै वान्यत्तु कारयेदिति।

लेख्यं मूलपत्रम्। शुद्धै ऋणापाकरणार्थम्। अन्यद्विशुद्धिपत्रं वोत्तमर्णादृगृह्णीयादित्यर्थः। मूलपत्रासन्निधाने कथञ्चिद्विशुद्धिपत्रासम्भवे किं कर्त्तव्यमित्यपेक्षिते नारद आह।

लेख्यं दद्याद्विशुद्धर्णे तदभावे प्रतिश्रवः।
धनिकर्णिकयोरेवं विशुद्धिः स्यात् परस्परमिति॥

प्रतिश्रवः प्रतिदानं कृतमिति साक्षिभिः श्रावणं साक्षिमद्दणप्रतिदातारं प्रत्याह याज्ञवल्क्यः।

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकमिति।

ससाक्षिकमृणं पूर्वसाक्षिणां समक्षन्तेषां कथञ्चिदसम्भवे साक्ष्यन्तरसमक्षं वा दातव्यमित्यर्थः। उत्तमर्णेन साक्ष्यादिभिः साधितमृणं दापितवती राज्ञोऽधमर्णाद्दण्डग्रहणमुत्तमर्णाद्भृतिग्रहणञ्चाह स एव।

राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम्।
पञ्चकञ्च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिक इति॥

अधमर्णात् साधितार्थस्य यो दशमोऽंशस्तावद्द्रव्यं दण्ड-

त्वेन गृह्णीयात् । उत्तमर्णात्तु साधितार्थस्य विंशतितममंशं भृतित्वेनेत्यर्थः । अतएव विष्णुः । उत्तमर्णश्चेद्राजानमियात्ततस्तद्विभाविते ऽर्थे ऽधमर्णो राज्ञे धनदशमभागसमन्दण्डं दद्यात् । प्राप्तार्थश्चोत्तमर्णो विंशतितममंशमिति तद्विभावित उत्तमर्णेन साधिते सति । यत्तु मनुवचनम् ।

यो यावन्निह्नुवीतार्थं मिथ्या वा यावती वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणन्दममिति ॥

तद्दशधनाति दुर्वृत्ताधमर्णोत्तमर्णविषयम् । यावन्निह्नुवीत यावती मिथ्या वा वदेत्मयैतावद्दत्तमित्यसत्यं वदेत्तावुभावपि तावतो धनस्य द्विगुणं धनं दण्ड्यावित्यर्थः । यत्पुनस्तस्यैव वचनं अर्थेऽपव्ययमानन्तु कारणेन विभावितम् ।

दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तित इति ।

तद्दशमांशदानासमर्थ सद्वृत्ताधमर्णविषयम् । अपव्ययमानमपलपन्तं यस्तु प्रभुत्वाद्यवलेपादुत्तमर्णेन याचितस्तदाऽसम्प्रतिपद्य राजसभायामानीतः स्वयमेव सम्प्रतिपद्यते सोऽभियुक्तार्थस्य विंशतितममंशं दण्डनीय इत्याह नारदः ।

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशन्तु विंशक मिति ।

मनुरपि । ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति ।

अपह्नवे तद्द्विगुणं तन्मनोरनुशासन मिति ॥

यः पूर्वमप्रतिपद्य राजसभायामानीतोऽधमर्णः ऋणं देयतया प्रतिजानीते सत्यमस्मैधारयामीति सपञ्चकं शतमर्हति दातुमिति शेषः । यस्तु सभायामप्यपह्नुते नाहमस्मै धार-

यामीति पश्चादङ्गीकरोमीति स तद्द्विगुणम्प्रतिपादितं पञ्चकप्र-तादद्विगुणं दण्डदण्डमर्हतीत्यर्थः। यत्तु याज्ञवल्क्यवचने।

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेदिति॥

अपलपितुः समदण्ड उक्तः स द्विगुणधनदानासमर्थदुर्वृत्ताधमर्ण विषयः। अन्यथा निह्नवे द्विगुणदण्ड प्रतिपादकयोः यावन्निह्नुवीतार्थमिति पूर्वोदाहृतमनुवचनविरोधः स्यात्। अभियोगादभियुक्तधनात्।

मिथ्याभियोगी द्विगुण मभियोगाद्धनं हरेत्।
कारणे विधिरेषः स्याज्जितस्यैकतरस्य तु॥
प्राङ्न्यायवादे च तथा यश्चासत्येन युज्यत इति।

व्यास वचनविरोधश्च स्यात्। कारणे कारणोत्तरे। असत्येन मिथ्योत्तरेण प्रत्यवस्कन्दने प्राङ्न्याये मिथ्योत्तरे च वादिप्रतिवादिनोर्मध्ये यस्यैकतरस्य पराजयस्तस्यापि पूर्वोक्तेन द्विगुणोदण्ड इत्यर्थः। यत्तु मिताक्षरायाम्। मिथ्योत्तरेऽपह्नोतुः पराजये समोदण्डः, मिथ्याभियोक्तुर्द्विगुणो दण्डः एवम्प्राङ्न्याये प्रत्यवस्कन्दने चार्थिनोऽपह्नववादित्वात् प्रत्यर्थिना प्राङ्न्यायकारणसाधने प्रकृतधने प्रकृतधन एव दण्डः यदि प्रत्यर्थी प्राङ्न्यायकारणेन साधयति यदा स मिथ्याभियोग्येवेति तस्य द्विगुणो दण्ड इत्युक्तन्तत्पूर्वोक्तव्यास वचनविरोधाद्विभावनीयं विद्वद्भिरिति। इत्यृणादानाख्य व्यवहार पदम्। अथ निःक्षेपाख्यव्यवहार पदम्। तत्र निःक्षेपोनाम स्व द्रव्यस्य विश्वासेन पुरुषान्तरे स्थापनम्। तथा च नारदः।

स्वद्रव्यं यत्र विस्रम्भान्निःक्षिपत्यविशङ्कितः।
निःक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैरिति॥

न च न्यासोपनिध्योरतिव्याप्तिस्तयोर्लक्ष्यत्वान्निःक्षेप एव। ग्राहकस्यासमक्षं समर्पितो न्यास इत्युच्यते। अतएव वृहस्पतिः। राजचौरादिकभयाद्दायादानां च वञ्चनात्।

स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्त्तित इति॥

अयमेवागणित द्रव्यस्थापने उपनिधिरित्युच्यते। तथा च नारदः। असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते।

तज्जानीयादुपनिधिं निःक्षेपङ्गणितं विदुरिति॥

असङ्ख्यातं अदर्शितं अविज्ञातं अनाख्यातम्। अतएव वृहस्पतिः। अनाख्यातं व्यवहितमसङ्ख्यातमदर्शितम्।

मुद्राङ्कितञ्च यद्द्रव्यं तदौपनिधिकं स्मृतमिति।

व्यवहितं करण्डकादौ प्रक्षिप्य पिहितम्। अतएव याज्ञवल्क्यः। वासनस्थमविज्ञातं हस्तेऽन्यस्य यदर्प्यते।

द्रव्यन्तदौपनिधिकं प्रतिदेयन्तथैव तदिति॥

वासनं द्रव्याधारनीतं करण्डकादि तत्स्थं वासनस्थम्। हस्तग्रहणमुपलक्षणम्। अत एव नारदः।

निःक्षिप्यते परगृहे तदौपनिधिकं स्मृतमिति।

तथाचायमेतेषाम्भेदः। ग्राहकस्य समक्षं गणयित्वा स्थापितं निःक्षेपः। गृहस्वामिनो ऽसमक्षं गणितं वा तस्मिन्नागते एतद्दातव्यमित्युक्त्वा ऽन्यस्य तत्पुत्रादे र्हस्ते दत्तं न्यासः मुद्राङ्कितं समक्षगणितं स्थापितमुपनिधिरिति। निःक्षेपादीनां स्थापन प्रकारमाह मनुः।

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्य्ये निःक्षेपं निःक्षिपेद्बुध इति ॥

महापक्षे बहुतरबन्धुयुक्ते । निःक्षेप ग्रहण मुपलक्षणम् । बृहस्पतिः । स्थानं गृहञ्च तद्वर्णं विधानञ्च गुणान्तथा ।
सत्यं शौचम्बन्धुजनं परीक्ष्य स्थापयेन्निधिमिति ॥

निधिरुपनिधिः । एतदप्युपलक्षणम् । निःक्षेपादीनां रक्षणं कर्त्तव्यं ग्राहकेणेत्याह । बृहस्पतिः ।

ससाक्षिकं रहोदत्तं द्विविधं समुदाहृतम् ।
पुत्रवत्परिपाल्यं तद्विनश्यत्यनवेक्षणे इति ॥

पालयितुः फलमपालयितुर्दोषञ्चाह ।

ददतो यद्भवेत्पुण्यं हेमरूप्यां वरादिकम् ।
तस्मात्पालयतो न्यासं यथैव शरणागतम् ॥
भर्त्तृद्रोहं यथा नार्याः पुंसः पुत्रसुहृद्बधे ।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥
न्यासद्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः ।
गृहीतं पालयेद्यत्नात् सकृद्याचितमर्पयेदिति ॥

न्यासग्रहणमुपलक्षणम् । तेन फलभृत्यादिकं निःक्षेपादित्रयसाधारणमिति मन्तव्यम् । दैवराजोपघाते ग्राहकस्य न दोष इत्याह बृहस्पतिः ।

दैवराजोपघाते न यदि तन्नाशमाप्नुयात् ।
गृहीतद्रव्य सहितं न तद्दोषो न विद्यत इति ॥

ग्रहीतु रिति शेषः उपेक्षादिद्रव्यदोषाभावादिति भावः । गृहीत द्रव्यसहितमित्युपेक्षाभावनिश्चयोक्तम् । तेन कथञ्चिन्निःक्षिप्तमात्रस्य विनाशे प्रमाणान्तरादुपेक्षाभावे निश्चिते ग्र-

हीतुर्दोषो न विद्यते इति मन्तव्यम्। दैवराजग्रहणमसमाधेयम्। निमित्तोपलक्षणार्थं। अतएव कात्यायनः।

राजदैविकचौरैर्वा निःक्षिप्तं यत्र नाशितम्।
ग्रहीतुः सह भाण्डेन दातुर्नष्टन्तदुच्यत इति॥

भाण्डेन अर्थेन। नारदोऽपि।

ग्रहीतुः सह योऽर्थेन नष्ट एव स दायिनः।
दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितमिति॥

तद्वदिति पदेनैक मुपमेयमन्यदुपमानमित्यवगम्यते। तेनैव योजना ग्रहीतुरर्थें सह यो नष्टः सदायिन एव एवन्दैवराजकृते यो नष्टः सोऽपि दायिन एव नष्ट इति दैवग्रहणन्तस्करोपलक्षणम्। अतएव याज्ञवल्क्यः।

न दाप्योपहृतन्तन्तु राजदैविकतस्करैरिति॥

दैविकपदस्यार्थौ विवृतौ मनुना।

चौरैर्हृतञ्जलेनोढमग्निना दग्धमेव वा।
न दद्याद्यदि तस्मात्स्वं न संहरति किञ्चनेति॥

यदि तस्मान्निःक्षेपादल्पमपि धनन्नसंहरति न गृह्णाति तर्हि न दद्यादित्यर्थः। तथा च स एव।

समुद्रे नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेदिति॥

क्वचिद्येन केनचिद्धेतुना नष्टमपि ग्रहीता मूल्यद्वारेण न दाप्यइत्याह। कात्यायनः।

ज्ञात्वा द्रव्य वियोगन्तु दाता यत्र विनिःक्षिपेत्।
सर्वोपायविनाशेऽपि ग्रहीता नैव दाप्यते इति॥

निःक्षेपगृहीतारं प्रत्याह कात्यायनः।

निःक्षिप्तं यस्य यत्किञ्चित् तत्प्रयत्नेन पालयेत्।
दैवराजकृतादन्यो विनाशस्तस्य कीर्त्त्यत इति॥

यस्य पार्श्वे यत् स्थापितन्तत्तेनावहितेन रक्षणीयम्। यतो दैवराजकृतादन्यो विनाशस्तस्य ग्राहकस्य दोषेण कृतत्वेन कीर्त्त्यते इत्यर्थः। न केवलन्दुष्कीर्त्तिरेव तस्य किन्तु विनाशे जाते वस्तुगत्या दोषो बह्वर्थहानिश्चेत्याह स एव।

यस्य दोषेण यत्किञ्चिद्विनश्येत ह्रियेत वा।
तद्द्रव्यं सोदयन्दाप्यो दैवराजकृताद्विनेति॥

दोषः उपेक्षादिलक्षणः। बृहस्पतिरपि।

भेदेनोपेक्षया न्यासं गृहीता यदि नाशयेत्।
याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयम्भवेदिति॥

कात्यायनोऽपि। न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम्।
अज्ञाननाशितञ्चैव येन दाप्यः स एव तदिति॥

अत्र विशेषमाहतु र्व्यासकात्यायनौ।

भक्षिते सोदयन्दाप्यः समन्दाप्य उपेक्षिते।
किञ्चिदूनं प्रदाप्यं स्याद्द्रव्यमज्ञाननाशितमिति॥

किञ्चिदूनञ्चतुर्थांशन्यूनमिति मिताक्षरायाम्। याचनानन्तरमदत्तस्य पश्चाद्दैवराजकृतेऽपि विनाशे स्थापकं यन्मूल्यमात्रं दातव्यमित्याह व्यासः।

याचनानन्तरं नाशे दैवराजकृतेऽपि सः।
गृहीता प्रतिदाप्यः स्यान्मूल्यमात्रन्न संशय इति॥

प्रत्यर्पणविलम्बमात्रापराधे सवृद्धिकदानस्यान्याय्यत्वात्। राज्ञे च तत्समो दण्डो देय इत्याह नारदः।

याच्यमानस्तु यो दातुर्निःक्षेपन्न प्रयच्छति।

दण्ड्यः स राज्ञो भवति नष्टे दाप्यश्च तत्समभिति॥

नष्टे दैवतो राजतो वेतिशेषः। याज्ञवल्क्योऽपि।

भ्रंशश्चेन्मार्गितेऽदत्ते दाप्यो दण्डश्च तत्समभिति।

मार्गिते याचितेऽदत्ते सति यदि भ्रंशो दैवराजकृतो नाशो भवति तथापि तद्द्रव्यं मूल्यपरिकल्पनेन।

धनिने ग्राहको दाप्योदण्डो राज्ञे चतत्समम्।

दण्डमित्यर्थः। यः पुनःस्थापकाननुज्ञया निःक्षेपमुपभुङ्क्ते तस्य दण्डमाह नारदः।

यत्रार्थं साधयेत्तेन निःक्षेपे त्वननुज्ञया।

तत्रापि दण्ड्यः स भवेत्तञ्च सोदयमावहेदिति॥

दण्ड्यः साधितद्रव्यानुसारेण। याज्ञवल्क्योऽपि।

आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तञ्चापि सोदयमिति।

आजीवन् भोगवृद्ध्यर्थप्रयोगादिना उपजीवन् स्वेच्छया स्वाम्यननुज्ञया। वृद्धिप्रमाणञ्चाह कात्यायनः।

निःक्षेपं वृद्धिशेषञ्च क्रयविक्रयमेव च।

याच्यमानं न चेद्दद्याद्वर्द्धते पञ्चकं शतमिति॥

निःक्षेपहर्त्तारम्प्रत्याह विष्णुः। निःक्षेपापहारी वृद्धिसहितन्धनं धनिकस्य दाप्यः। अस्य दण्डमाह मनुः।

निःक्षेपस्यापहर्त्तारं तत्समन्दापयेद्दमम्।

तथोपनिधिहर्त्तार मविशेषेण पार्थिवः॥

निःक्षेपापह्नवे कर्त्तव्यमाह व्यासः।

निःक्षेपन्निह्नुते यस्तु नरो बन्धुबलान्वितः।

साक्षिभिर्वाथ द्रव्येण विभाव्य प्रतिदाप्यते॥

दण्डमाह बृहस्पतिः।

गृहीत्वापह्नुते यत्र साक्षिभिः शपथेन वा।
विभाव्य दापयेन्न्यासं तत्समं विनयन्तथेति॥

विनयं दण्डसमाक्षिकनिःक्षेपादौ स्थापकस्यानृतवादित्वे साक्षिभ्यो यथा स्थितमर्थमवगत्य दण्डनीयः स राज्ञेत्याह।

मनुः। निःक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ।
तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हतीति॥

कुलं साक्षिवृन्दम्। असाक्षिके त्वाह बृहस्पतिः।

रहोदत्ते निधौ यत्र विसम्वादः प्रजायते।
विभावकन्तत्र दिव्य मुभयोरपि च स्मृतमिति॥

उभयोर्मध्ये एकस्येत्यर्थः उभयग्रहणं रुच्या वान्यतरः कुर्यादित्ययमेव पक्षे यथा स्यादिति। गृहीतस्थापकयोरनृतवादित्वे दण्डमाह मनुः।

निःक्षेपस्यापहर्त्तार मनिःक्षेप्तारमेव च।
सर्वैरुपायैरन्विच्छेच्छपथै श्चैव वैदिकैः॥
यो निःक्षेपं नार्पयति यश्चानिःक्षिप्य याचते।
उभौ तौ चौरवच्छास्यौ दाप्यौ वा तत्समं दममिति॥

चौरवच्छास्यौ चौरवद्दण्ड्यौ चौरवद्दण्डेन दण्ड्याविति-यावत्। दण्डस्य प्रमाणमाह स इत्युक्तं मनुहृत्तौ। यत्तु मत्स्यपुराणे। यो निःक्षेपं नार्पयति यश्चानिःक्षिप्य याचते।

ताबुभौ चौरवच्छास्यौ दाप्यौ च द्विगुणं दममिति।

द्विगुणो दण्ड उक्तः। सद्वृत्तविषये ब्राह्मणातिरिक्तविषयो वा। अन्यथा समदण्डप्रतिपादकमनुवचनविरोधः स्यादिति। निःक्षिप्तं द्रव्यमकाले ददतो द्विगुणोदम इत्याह।

कात्यायनः। ग्राह्यस्तूपनिधिः काले कालहीनन्तु वर्जयेत्।
कालहीने ददद्दण्डं द्विगुणञ्च प्रदापयेदिति॥

ग्राह्यः निःक्षेपकारिणेतिशेषः यद्भयादुपनिधिरन्यस्य हस्ते न्यस्त स्तद्भयातीते काले स ग्राह्य इत्यर्थः। यद्भयातीतेति काले स्वयमेव नायाचितमर्पणीयम्। सकृद्याचितमर्पयेदिति बृहस्पतिस्मरणात्। तद्भये वर्त्तमाने स्वयमेवायाचितन्दीयमानं कालहीनन्तस्य दानन्दौर्च्चे नैवेति तद्ददतोऽपि दण्डोयुक्तः। प्राड्विवाकं प्रत्याह मनुः।

यो निःक्षेपं याच्यमानो निःक्षेप्तुर्न प्रयच्छति।
स याच्यः प्राड्विवाकेन तन्निःक्षेप्तुरसन्निधौ॥
स यदि प्रतिपद्येत यथान्यस्तं यथाश्रितम्।
न तत्र विद्यते किञ्चिद्यत्परैरभियुज्यत इति॥

यदा तु न प्रतिपद्येत तदा राजानं प्रत्याह स एव।
तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि।
उभयन्निगृह्य दाप्यः स्यादिति धर्मस्य धारणा॥
निःक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च।
राजा विनिर्णयं कुर्य्यादक्षिण्वन्न्यासधारिणमिति॥

तेषां अभियोक्तृणाम्। उभयं द्विगुणम्। निगृह्य दण्डयित्वा अक्षिण्वन् अताडयन्। निःक्षेप गृहीतारं प्रत्याह।

बृहस्पतिः। स्थापितं येन विधिना येन यच्च यथाविधि।
तथैव तस्य तद्देयं न देयं प्रत्यनन्तर इति॥

स्थापितेतरस्य यस्य स्थापितद्रव्यस्वाम्यमस्ति स इह प्रत्यनन्तर उच्यत इति स्मृतिचन्द्रिकायां प्रत्यानन्तरे पुत्रादाविति कल्पतरौ स्थापकं प्रत्याह मनुः।

यो यथा निःक्षिपेद्धस्ते यमर्थं यस्य मानवः।
स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः॥
मिथो दायः कृतो येन गृहीतो मिथ एव वा।
मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः॥
समुद्रे नाप्नुयात् किञ्चिद्यदि तस्मान्न संहरेदिति॥

दायो दानं स्थापनमिति यावत्। ग्रहो ग्रहणं मिथः अन्योन्यमेव एतदुक्तम्भवति। सत्याक्षिणेन स्थापितम्। साक्षिसमक्षं गृहीतव्यम्। रहसि स्थापितं रहस्येवेति। समुद्रे मुद्रासहिते निःक्षेपे मूषकादिनोपहृते निःक्षेपं स्थापयित्वा न किञ्चिद्दूषणमाप्नुयात्। यदि तस्मान्निःक्षेपात् प्रति--मुद्राश्रावणादिना नापहरेत्किञ्चिदित्यर्थः। स्थापयितु र्मरणे प्रत्यनन्तरे तद्देयमित्याह स एव।

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे।
न स राज्ञाऽभियोक्तव्यो न निःक्षेप्तुश्च बन्धुभिरिति।

अनेन वचनेन वचोभङ्ग्या स्थापके मृते प्रत्यनन्तरे प्रत्यर्पणं ग्राहकेण कार्य्यमित्युक्तम्। स्वयमेव याचनमन्तरेणेत्यर्थः। याचनमन्तरेण दानम्भयादिकालोपाये मन्तव्यम् अन्यथा दोषापत्तेः। प्रत्यनन्तर बहुत्वे तु नैकस्मिन् प्रत्यनन्तरे। देयं-किन्तु सर्वप्रत्यनन्तरसन्निधाविति न निःक्षेप्तृ बन्धुभिरभियोक्तव्य इत्यनेन सूचयाम्बभूव। यदा तु ग्राहकः स्वयमेव न ददाति तदा प्रत्यनन्तरङ्कर्त्तव्यमाह। स एव।

अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम्।
विचार्य्य तस्य वा वृत्तं साम्नैव परिसाधयेदिति॥

अन्विच्छेत् अवधारयेत्परिसाधनं ग्राहकसकाशाद्दानन्तद्ग्राहकवृत्तिं विचार्य्य स तद्ग्राहक विषये साम्नैव कार्य्यं न भयादिप्रदर्शनेन। दुर्वृत्तग्राहकविषये तु ऋणादानप्रकरणोक्तेन भयादिप्रदर्शनाद्युपायान्तरेण छलादिना कार्य्यमित्यस्मादेव वचनादवगम्यते। तथा सद्वृत्ते विप्रतिपन्ने भूतानुसारेण साधयितु मशक्ये साक्ष्याद्यभावे प्रत्यनन्तरादिना साधयेत्। दुर्वृत्ते तु विप्रतिपन्ने छलादिना परिहरेदिति वास्मादेव वचनादवगम्यते। सद्वृत्ते छलादिप्रयोगवच्छपथेन शोधनस्याप्यनुचितत्वात्। ग्राहके तु मृते पश्चाद्यदधीनं निःक्षेपादि जायते तेनैव स्थापके प्रत्यनन्तरे वा प्रत्यर्पणीयमित्यति स्थूलत्वात् स्मृतिकारैरुपेक्षित मित्यस्माद्दणकारणमुन्वेयं यदि ग्राहकवदसौ स्वयं न ददाति तदा स्थापकः प्रत्यनन्तरो वा पूर्वोक्तमार्गेणान्विच्छेत् सम्प्रतिपन्नं पूर्वोक्तेन प्रकारेण परिगृह्य साधयेदित्येतदपि स्मृतिकारै रुपेक्षितं ज्ञातुमशक्यत्वादिति स्मृतिचन्द्रिकायाम्। निक्षेपेऽभिहितन्धर्मं याचितादिष्वतिदिशति नारदः।

एष एव विधिर्दृष्टो याचितान्वाहितादिषु।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव चेति॥

याचितं उत्सवादिषु परकीयमलङ्कारादि याचित्वा समानीतम्। अन्वाहितं स्वस्मिन् स्थितम्परधनमन्यहस्ते कृतं शिल्पिषु शिल्पिन्यासे कुण्डलादिकरणाय स्वर्णकारादिहस्तन्यस्तसुवर्णादाविव्यर्थः। प्रतिन्यासे मिथः कार्य्यापेक्षया त्वदीयमेतन्मया स्थाप्यते मदीयमेतत् त्वया स्थापनीयमिति स्थापिते ना-

रदेन निःक्षेप एव विध्युपदेशादुपनिधिन्यासयो स्तदतिदेशः।
याज्ञवल्क्योऽपि।

याचितान्वाहितन्यास निःक्षेपादिष्वयं विधिरिति॥

यद्यपि स्मृत्यन्तरे न्यासनिःक्षेपयोर्विधिरुपदिष्ट स्तथाप्यस्यां स्मृतौ नोपदिष्टा इत्युपनिधिधर्माणामतिदेशो युक्तः। बृहस्पतिरपि। अन्वाहिते याचितके शिल्पन्यासे सबन्धके।

एष एवोदितोधर्म स्तथा च शरणागत इति॥

अनेन याचितस्य शिल्पिन्यासस्य दैवादिना नाशे स्वर्णकारप्रभृतिस्तं न दाप्या इत्युक्तन्तस्य क्वचिदपवादमाह। कात्यायनः। एनः संश्रियते न्यासो दिवसैः परिनिष्ठितैः।

तदूर्द्धं स्थापयंश्छिल्पी दाप्यो दैवाद्धतेऽपि तमिति॥

रजकस्य हस्ते नैर्मल्यार्थं दत्तस्य जीर्णवस्त्रादेर्यदवघातादिना नाशः अवघातादिश्च नैर्मल्याद्यर्थ स्तदा शिल्पिदोषाभावात्तत्र शिल्पी न दाप्यः। नूतनादौ तु पटुतरावघातादि कृत्वा नाशस्य शिल्पिदोषकृतत्वात्तन्मूल्यं दाप्य इत्यभिरुन्धायाह। स एव। न्यासदोषाद्विनाशः स्याच्छिल्पिनन्तन्न दापयेत्।

दापयेच्छिल्पिदोषात्तत्संस्कारार्थं यदर्पितमिति॥

शिल्पिदोषादित्यत्र विनाशः स्यादित्यनुषज्यते। यत्र तन्त्वादि वस्त्राद्यर्थं कुविन्दादौ न्यस्तं खण्डपटादिदशायां नष्टं परिपूर्णदशायां वा कुविन्दादिना दीयमानं स्वामिना न गृहीतं पश्चान्नष्टन्तत्राप्याहतुर्मनुकात्यायनौ।

स्वल्पेनापि च यत्कर्म नष्टं चेद्भृतकस्य तत्।

पर्य्याप्तं दित्सतस्तस्य विनश्येत्तदगृह्णत इति॥

यत्कर्म वस्त्रनिर्माणादि स्वल्पेनापि प्रान्तवानादिनापि वि-कलं नष्टं चेत् भृतकस्य शिल्पिन एव नष्टम् । पुनर्वेतन गृहणं विनैव वानादिक्रियां कुर्य्यादित्यर्थः । यदि स्वामी तन्त्वादिकं पुनर्नार्थयति तद्दानाद्यभावेऽपि शिल्पिने दत्तं वेतनं स न लभते पर्याप्तम्परिपूर्णं वस्त्रादिकन्दित्सतो भृतकस्य यः स्वामी-तस्य दीयमान मग्टह्णत स्तत्पर्याप्तन्नश्यतीत्यर्थः । एवं चात्र भृतको नष्टं न दाप्य इति पर्य्यवसितोऽर्थः । एवं शिल्पिन्यास विषये विविक्तायाचितकविषयेऽप्याह स एव ।

यदि तत्कार्यमुद्दिश्य कालम्परिनियम्य वा ।
याचितोऽर्द्धे क्रतो यस्मिन्न प्राप्ते न तु दाप्यत इति ॥

तात्पर्यन्तावदुच्यते याच्यमानो न दद्याद्वा दाप्यन्तत् सोदयम्भवेदित्ययन्धर्मो याचितकेति देशप्राप्तो ऽनेन वचनेन क्वचित्प्रतिषिध्यते । प्रतिषेधकवचनस्यायमर्थः । यद्दीर्घकाल-साध्यं कार्य्यं तत्कार्यार्थं याचितं यदि वा वर्षपर्य्यन्तन्दीयता मित्येवं कालं परिनियम्य याचितं तत्र कार्यमध्ये परिनियत-कालमध्ये वा प्रतियाच्यमाने यो याचितकं न ददाति असौ सोदयं न दाप्यः । किन्तु कार्ये क्रते परिनियतकालात्यये वा याचितकमात्रन्दद्यादिति यदि तदापि याचितकं न ददाति तदा दैवादिना नाशे हरणे वा जाते तन्मूल्यमात्रदेयमित्यप्याह स एव । प्राप्तकाले क्रते कार्य्ये न दद्याद्याचितोऽपि सन् ।

तस्मिन्नष्टे हृते वापि गृहीता मूल्यमावहेदिति ।

क्वचित् कार्यमध्ये परिनियतकार्यमध्ये वा याचितकन्दाप्य इत्याह स एव ।

अथ कार्य्यविपत्तिस्तु तस्यैव स्वामिनो भवेत्।
अप्राप्ते वै सकाले तु दाप्यस्त्वर्द्धकृतेऽपि तदिति।

यदि याचितकालप्रतिदाने तत्स्वामिनः कार्य्यनाशः सम्भाव्यते तदा दद्यादित्यर्थः याचितकालप्रतिदाने तु कर्त्तव्यमाह स एव। यो याचितकमादाय न दद्यात् प्रतियाचितः।

स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति य इति॥

स बलान्निगृह्य दाप्योदानोन्मुखः कर्त्तव्यः। एवमपि यो न ददाति स दण्ड्यश्चेत्यर्थः। प्रक्षालनार्थं नेजकहस्ते दत्तं यद्वस्त्रन्तस्य तेन नाशे कृते तन्मूल्यं तस्माद् ग्राह्यन्तदाह नारदः।

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः।
द्विःपादस्त्रिस्तृतीयांशश्चतुर्द्धौते ऽर्द्धमेव च॥
अर्द्धक्षयात्तु परतः पादांशापचयः क्रमादिति॥

सकृद्धौतस्य नाशे ऽष्टमांशन्यूनन्तन्मूल्यं ग्राह्यं द्विर्द्धौते चतुर्थांशन्यूनम्। एवन्त्रिर्द्धौते तृतीयांशमित्येवमुत्तरत्रापि योज्यम्। वस्त्राणां प्रक्षालनं नेजकेन न पाषाणे कार्यं किन्तु श्लक्ष्णे शाल्मले फलकेन च तेषां व्यत्यासः कार्यो नच तानि स्वगृहे रात्रौ स्थापनीयानि अमुमेवार्थमभिसन्धायाह मनुः।

शाल्मले फलके श्लक्ष्णे निज्याद्वासांसि नेजकः।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेदिति॥

निज्यात् प्रक्षालयेत्। अन्यवासांसि अन्यवासोभिर्न निर्हरेत् न भेलयेदित्यर्थः। शिल्पिन्यासोपभोगादौ शिल्पिनो दण्डात्वमाह। याज्ञवल्क्यः।

वसान स्त्री पणान्दण्ड्यो नेजकस्तु परांशुकम्।
विक्रयावक्रयाधान याचितेषु पणान्दशेति॥

नेजको वस्त्र प्रक्षालकः। अविक्रयः कस्माच्चिद्गाढकं गृहीत्वा तस्योपभोगार्थङ्कालकॢप्तिं विधाय समर्पणम्। आधानं बन्धकीकरणम्। याचितम्। स्वसुहृद्भ्योयाचितत्वेन दानं सुवर्णकारादिहस्ते कङ्कणादि निर्माणार्थं यानि सुवर्णादीनि दत्तानि तेषाम्मध्ये सुवर्णं यत्परिमाणकन्दत्तन्तत्परिमाणक एव सुवर्णविकारः शिल्पिनोग्राह्यः। रजतादयस्तु किञ्चिन्न्यूनाः ग्राह्याः। कम्बलादयस्तु ऊर्णाद्यपेक्षया किञ्चिदधिका ग्राह्याः। यद्येवं शिल्पी न ददाति तदा राज्ञा दाप्यो दण्डनीयश्चेत्येतत् सर्वं मनसि निधायाह। स एव।

अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्च दशायसि।
शते दशपला वृद्धि रौर्णे कार्पासस्तूत्रके।
मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपला मता॥
कार्मिके रोमबन्धे च त्रिंशद्भागः क्षयो मतः।
न क्षयो न च वृद्धिश्च कौशेय वल्कलेषु चेति॥

अग्नौ प्रताप्यमानमिति शेषः। शतपले प्रताप्यमानेपलद्वयम्। त्रपुणि सीसे च पलाष्टकम्। ताम्रे पलपञ्चकं। लोहे पलदशकञ्च क्षीयेत इत्यर्थः। कांस्यस्य तु त्रपुताम्रप्रभवत्वात्तदनुसारेण क्षयः कल्पनीय इति नष्टयगुक्तः। स्थूलेषु ऊर्णाकार्पास सूत्रेषु शतपलेषु पलदशकम्। अनतिसूक्ष्मेषु तेषु पञ्चकम्। सूक्ष्मेषु पलत्रयं वर्धत इत्यर्थः। एतदक्षप्रक्षालितविषय मित्युक्तम्मिताक्षरायाम्। कार्मिकम्। चित्रेण कर्मणा निर्मितं कार्म्मिकम्। यत्र निर्मितेपट्टे स्वस्तिकादि किञ्चित्सूत्रैः क्रियते इत्यर्थः। यत्र प्रावारादौ रोमाणि बध्यन्ते

सरोमबन्धः। अनयोः सूत्रापेक्षया त्रिंशस्य क्षय इत्यर्थः। इति निःक्षेपाख्य व्यवहार पदम्। अथास्वामिविक्रयाख्यं व्यवहारपदम्। तत्स्वरूपमाह नारदः।

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा।
विक्रीयते समक्षं यत्स ज्ञेयोऽस्वामिविक्रय इति॥

निःक्षिप्त ग्रहणं याचितादीनामुपलक्षणार्थम्। असमक्षं स्वामिन इति शेषः। अतएव व्यासः।

याचितान्वाहितन्यासं हृत्वा वान्यस्य यद्धनम्।
विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रय इति॥

स्वाम्यभावे स्वाम्यसन्निधाने। अत्र विक्रयपदन्दानबन्धकयोरप्युपलक्षणं वक्ष्यमाणकात्यायन वचने तयोरपि निवर्त्त्यत्वाभिधानात्। अस्वामिनन्दर्शयति बृहस्पतिः।

निक्षेपान्वाहितं न्यासं हृतं याचितबन्धकम्।
उपांशु येन विक्रीतमस्वामी सोऽभिधीयत इति।

निक्षेपादिग्रहणं इदं उपलक्षणम्। उपांशु अप्रकाशम्। प्रनष्टाधिगतादेः परद्रव्यस्योपलक्षणम्। यत आह। मनुः। विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मत इति॥

यो निःक्षेपादिकं परद्रव्यं प्रकटमेव विक्रीणीते तस्याप्यस्वामित्वारम्भ स्वामिकस्य निवर्त्त्यत्वात्तदाह नारदः।

अस्वामिना कृतो यस्तु क्रयोविक्रय एव वा।
अकृतः स तु विज्ञेयो व्यवहारेषु नित्यश इति।

कात्यायनोऽपि। अस्वामिविक्रयन्दानमाधिं वा विनिवर्त्तयेदिति।

अस्वामि विक्रयम्। अस्वामिना कृतं विक्रयम्। अस्वामिकृतत्वं दानाध्योरपि तस्माहचर्यात् अत एव यमः।

अस्वामिना कृतो यस्तु दायो विक्रय एव वा।
अकृतः स तु विज्ञेयो व्यवहारेषु नित्यश इति॥

दायो दानम्। स्वामिना अस्वामिविक्रीतं स्वकीयं वस्तु-यत्समीपे दृष्टन्तस्माद्ग्राह्यमित्याह नारदः।

द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात्।
प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहः क्रियामिति।

याज्ञवल्क्योऽपि। स्वं लभेतान्य विक्रीतं क्रेतुर्दोषोऽप्रकाशिते।
हीनाद्रहोहीन मूल्ये वेलाहीने च तस्कर इति॥

स्वामी स्वसम्बन्धि द्रव्यमन्यविक्रीतं अस्वामिविक्रीतं यदि पश्यति तदा लभेत गृह्णीयात्। अस्वामिविक्रीतस्य हेतुत्वा-भावात्। क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषो भवति ही-नात् द्रव्यागमोपाय हीनात्। रहसि एकान्ते। हीनमूल्ये। अल्पतरेण द्रव्येणाधिक मूल्यक्रये। वेलाहीने रात्यादौ कृते-क्रये च क्रेता तस्करो भवति। तस्करवद्दण्डादिभाग्भवतीत्यर्थः। बृहस्पतिरपि। येन कृतन्तु मूल्येन प्राग्राज्ञे विनिवेदितम्।

न तत्र विद्यते दोषः स्तेनः स्यादुपधिक्रयादिति॥

यत्र हीन मूल्येन क्रीयमाणं क्रयात्प्रागेव राज्ञे निवेदितं तत्र न दोष इत्यर्थः। उपधिक्रय शब्दस्यार्थं दर्शयति स एव।

अन्तर्गृहे बहिर्ग्रामान्निशायामसतोजनात्।
हीनमूल्यश्च यत्क्रीतं ज्ञेयोऽसा वुपधिक्रय इति॥

असतोजनात् चाण्डालादेरित्यर्थः। असद्ग्रहणं दासा-दीनामुपलक्षणार्थं। अतएव नारदः।

अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेदिति॥

अस्वाम्यनुमतात् स्वाम्यनुमतिहीनात्। दासग्रहणं समानन्यायत्वादस्वतन्त्राणां बालादीनामुपलक्षणार्थम्।

विष्णुरपि। अज्ञानतः प्रकाशं यत्परद्रव्यं क्रीणीयात् तत्रास्यादोषः स्वामी द्रव्यमवाप्नुयात् यद्यप्रकाशं हीनमूल्यं वा क्रीणीयात् तदा क्रेता विक्रेता च चोरवच्छास्य इति

क्रेतुः प्रकाश्य विक्रयाद्यभावादस्वामित्वान्यप्रकाशनादौ तु तथाविधविक्रयस्य विक्रेतृस्वामिनोक्तत्वात्तज्ज्ञानमस्तीति दुष्टत्वात् क्रेतापि दण्ड्य इत्यर्थः। स्वामिना राजानं ज्ञापयित्वैव तद्द्रव्यं ग्राह्यं अन्यथा चोरप्रच्छादकत्वेन स दण्ड्य इत्याह याज्ञवल्क्यः। हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात्।

अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणानिति॥

यदा पुनः परहस्तादवाप्तुमसमर्थः स्वामी तदा त्वाह स एव।

नष्टापहृत मासाद्य हर्त्तारं ग्राहयेन्न यम्।

देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेदिति।

विनष्टमपहृतं वा स्वकीयं द्रव्यमधिगन्तुरपहर्त्तुर्हस्ते वा दृष्ट्वा अधिगन्तारं अपहर्त्तारं वा राजपुरुषादिभिर्ग्राहयेत् राज्ञो राजपुरुषाणाञ्च दूरदेशावस्थितौ तु विज्ञापनकालात्प्राक् पलायनादिशङ्कायां स्वयमेव गृहीत्वा राज्ञे समर्पयेदित्यर्थः। हर्त्तृ शब्देनात्र क्रेता विवक्षित आत्मविशुद्ध्यर्थं राजदण्डाप्राप्त्यर्थञ्च इति मिताक्षरायां विज्ञानेश्वरः। नष्टधनस्वामिना तद्धने परस्वत्वनिवृत्तिपूर्वक स्वस्वत्वसिद्ध्यर्थं प्रथमं साक्ष्यादिभिः प्रतिग्रहादिकं साधनीय मित्याह कात्यायनः।

अभियोक्ता धनं कुर्य्यात् प्रथमं ज्ञातिभिः स्वकमिति।

ज्ञातिभि: साक्षिभूतैरितिशेष:। साक्ष्यादिभि: स्व स्व हेतुभूत प्रतिग्रहाणामसाधने दण्डाता माह व्यास एव।

यदि स्वं नैव कुरुते ज्ञातिभिर्नाष्टिको धनम्।
प्रसङ्ग विनिवृत्त्यर्थं चौरवद्दण्ड मर्हति॥

नाष्टिको नष्टधनस्वामिप्रसङ्ग: स्वत्वसन्देह:। व्यासोऽपि।

वादी चेन्मार्गितन्द्रव्यं साक्षिभिर्न विभावयेत्।
दाप्य: स्याद्द्विगुणं दण्डं क्रेता तद्द्रव्य मर्हतीति॥

साक्षिग्रहणं प्रमाणान्तरोपलक्षणार्थ मिति केचित्। यत्तूक्तं साक्षिग्रहणं अस्वामिविक्रयविवादे स्वत्वसाधने प्रमाणान्तर निवृत्त्यर्थ मिति मदनरत्ने तदयुक्तम्। वस्तुत: स्वत्वहेतुभूत प्रतिग्रहादि स्वत्वे तत्साधक साक्षिणामभावे दिव्याद्यवकाशस्य विद्यमानत्वात्। अलेख्यसाक्षिके दैवीव्यवहारे विनिर्दिशेदिति कात्यायनवचनविरोधापत्तेश्च। न च तद्यत्र दिव्यनिषेधकस्मृत्यभावस्तत्र दिव्यविधायकं अत्र तु प्रकाशं च क्रयं कुर्यात्साधुभिर्ज्ञातिभि: स्वकै:। न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषीति दिव्य निषेधकस्मृते: सत्त्वादिति वाच्यम्। एतद्वचनस्य क्रेत्रा क्रयसाधनं साक्षिसत्त्वे साक्षिभिरेव कर्त्तव्यं नान्यमानुषेण न दिव्येन वेत्येतत्परत्वात्। नन्वेतद्वचनस्यैतादृश विषयपरत्वे मानाभाव:। न चालेख्यसाक्षिके दैवीमिति वचनविरोधो मानम्। तस्य सामान्यशास्त्रत्वे नैतद्वचनानुरोधे तस्यैतदतिरिक्त विषयताया न्याय्यत्वादिति चेन्न साक्ष्याद्यभावे दिव्यस्य च निषेधे अनिर्णय प्रसङ्गस्यैव मानत्वात् अन्यथा स्थावरेषु विवादेषु दिव्यानि परिवर्जयेदिति वचनस्य साक्ष्यादिसत्त्वे दिव्य निषेधपरत्वन्त्वऽभिमतन्न सिद्ध्येत्। यत्तु

तेनैव वक्ष्यमाणप्रमाणहीने पादेति वचने प्रमाणहीनत्वापादानमपि अत्र दिव्याभावज्ञापकम्। दिव्याङ्गीकरणे प्रमाणहीनताया असम्भवादित्युक्तन्तत्र तत्प्रमाणहीने मानुषप्रमाणहीने अन्यतरेण दिव्याङ्गीकरणहीने चेति व्याख्येयमन्यथा अनिर्णयः स्यात्। तस्मादन्यत्रापि साक्ष्याद्यभावे दिव्यम्भवत्वेवेति। अतएव मिताक्षरायामित्युक्तं यदापुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न शुध्यति शोधयतीत्यादि। केचित्तु स्थावरविवादे स्थावरेषु विवादेष्विति वचनाद्दिव्याभाव एव। एवं अकृतेऽपि प्रमाणहीने पादेति वचनाद्दिव्याभाव एवमनिर्णयप्रसङ्गानुरोधेन वचनान्यथाकरणस्यानुचितत्वादित्याहुस्तच्चिन्त्यम्। अदृष्टार्थत्वप्रसङ्गात्। याज्ञवल्क्योऽपि।

आगमेनोपभोगेन नष्टम्भाव्यमतोऽन्यथा।
पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते इति॥

पञ्चबन्धः नष्टद्रव्यस्य पञ्चमांशसमानोदण्डः अत्र दण्डविप्रतिपत्तिरपराधाल्पत्व महत्त्वानुसारेण व्यवस्थापनीया। स्वत्वहेतवः पूर्वमेव निरूपिताः कृतस्वकीयस्य धनस्य स्वकीयत्वानपगतिरपि दानविक्रयाभावे साधनीयेत्याह।

कात्यायनः। नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातिभिः स्वकम्।
अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनमिति॥

अथैतद्दत्तं सम्प्रदानभूताय विध्युक्तप्रकारेण त्यक्तं पारितोषिकादिरूपेण। विक्रीतञ्च न भवतीति प्रमाणैः प्रसाध्य स्वकीयं धनन्नष्टस्वामी विक्रेतादेः सकाशाल्लभत इत्यर्थः। राजपुरुषानीतेन क्रेता यत्कर्त्तव्यं तद्दर्शयति बृहस्पतिः।

पूर्वस्वामी तु यद्द्रव्यं यदागत्य विचारयेत्।
तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेदिति

मूलमत्र यस्मात्क्रीतमसावुच्यते। शुद्धिर्योऽन्यत्वनिवृत्तिः अतएव व्यासः। मूल्ये समाहृते क्रेता नाभियोज्यः कथञ्चन।
मूल्येन सहवादस्तु नाष्टिकस्य विधीयते इति।

समाहृते अस्मान्मया क्रीत इति निर्दिष्टे। याज्ञवल्क्योऽपि। विक्रेतुर्दर्शनाच्छुद्धिः स्वामीद्रव्यन्नृपोदमम्।
क्रेता मूल्य मवाप्नोति तस्माद्यस्तस्य विक्रयी॥

अत्र स्वामीद्रव्य मित्यभिधानं यदि विक्रेता नष्टधनस्वामिना सह विवादन्न कुर्याद्यदि वा कृते पराजयी स्यात्तदा नाष्टिकस्य स्वामित्वमवधारितमिति नाष्टिकादिभ्यो विक्रीत द्रव्यादीनि दातव्यानि नान्यथेति सूचनार्थम्। अतएवाह बृहस्पतिः।
विक्रेता दर्शितो यत्र हीयते व्यवहारतः।
क्रेत्रे राज्ञे मूलदण्डौ प्रदद्यात् स्वामिने धनमिति॥

यदातु मूलभूतो विक्रेता देशान्तरङ्गतस्तदा कात्यायन आह।
मूलानयन कालश्च देयो यो जनसंख्ययेति।

तत्र देयोऽध्व संख्ययेति मदनरत्ने पाठः। यदातु बहुकालेनापि मूलं दर्शयितु मक्षमस्तदा साक्षिभिः क्रयसाधनं कुर्य्यादित्याह तु नारद मनु। असमाहार्यमूलस्तु क्रयमेव विशोधयेत्।
विशोधिते क्रये राज्ञा वक्तव्यः स न किञ्चनेति॥

क्रये विशोधिते साक्षिभाषणेन प्रकाशिते सति राज्ञा न किञ्च न वक्तव्यो न दण्ड्य इत्यर्थः।

यत्तु, अभियोक्ता धनं कुर्यात् प्रथमं ज्ञातिभिः स्वकम्।
पश्चादात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिरिति॥

अभियोक्ता स्वत्वे साधिते सति पश्चात् क्रेता क्रयसाधनं कर्त्तव्यमित्युक्तन्तेनैव तदसमाहार्य्यमूलस्त्वित्यस्मादेव वचनात् मूलदर्शनाभावे मन्तव्यम्। नष्टधन स्वामी क्रीतन्तु क्रेता क्रये- साधितेऽपि गृह्णीयादिति प्रदर्शयितुमाह मनुः।

अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितम्।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनमिति॥

अनाहार्यः अनानीयः। प्रकाशक्रयशोधितन्नाष्टिको लभते क्रेता त्वदण्ड्योभूत्वा राज्ञोऽपराधान्मुच्यत इत्यर्थः। क्वचित् क्रेतुः सकाशादर्द्धन ग्रहणधर्ममूल्यं दत्त्वैवेत्याह कात्यायनः।

वणिग्वीथी परिगतं विज्ञातं राजपूरुषैः।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः॥
स्वामी दत्त्वार्द्धमूल्यं तु प्रगृह्णीयात् स्वकं धनमिति।

वणिग्वीथी परिगतं वणिग्वीथ्यां प्राप्तम्। अनेन रहः क्रयो नास्तीति दर्शितम्। विज्ञातं राजपूरुषै रित्यनेना प्रकाशक्रयोनास्तीति दर्शितम्। अविज्ञाताश्रयात्। अवि- ज्ञातस्थानकात्। यद्रहः क्रयादिरहितं सदविज्ञाताश्रयात् क्रीतं मृतं विक्रेतृकं वा तदर्द्धमूल्यं दत्त्वा ग्राह्य मित्यर्थः। उभयोरर्द्धहानौ कारणमाह स एव।

अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः।
अविज्ञातक्रयोदोषस्तथा चापरिपालनम्॥
एतद्द्वयं समाख्यातं द्रव्यहानिकरम्बुधैरिति।

हृतं नाशितम्। व्यवहारतः स्वापराधात् अविज्ञातक्रयः अविज्ञात स्थानकात्क्रयः अपरिपालनमरक्षणम्। उपेक्षेति यावत् मरीचिरपि। अविज्ञात निवेशत्वाद्यत्र मूल्यन्न लभ्यते।

हानिस्तत्र सकल्पा च केतृनाष्टिकयोर्द्वयोरिति ॥

यत्र क्रेता मूलोपस्थापनं करिष्यामीत्युक्ता पश्चात् क्रयं साधयिष्यामीति वदति तत्र मूलोपस्थापनमेवादरणीयं न क्रयसाधनमित्याह ।

कात्यायनः । यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत् ।

अहरन्मूलमेवासौ न क्रयेण प्रयोजनमिति ॥

यदा मूलदर्शनं क्रयप्रकाशनं वा न करोति तदा दण्ड्यतामाह स एव । अनुपस्थापयन्मूलं क्रयं वाथ विशोधयन् ।

यथाभियोगं धनिने धनं दाप्यो दमश्च स इति ॥

यत्तु प्रकाशितेन क्रयेण क्रेतुः स्वत्वप्रतिपादकं मरीचिवचनं, वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।

दिवा गृहीतं यत्क्रेत्रा स शुद्धो लभते धनमिति ।

यच्च मनुवचनं विक्रयाद्यो धनं किञ्चिद्गृह्णीयात् कुलसन्निधौ।

क्रयेण स विशुद्धो हि न्यायतो लभते धनमिति ।

तद्वचनद्वयमपि नाष्टिक स्वत्वसाधनाभाव विषयम् । अन्यथा अथ मूलमनाहार्यमिति पूर्वोदाहृत मनु वचनविरोधः स्यात् । यदा तु क्रेता साक्ष्यादिभिः क्रयं न साधयति नाष्टिको वा स्वकीयत्वं तदा निर्णयमाह बृहस्पतिः ।

प्रमाणहीने वादे तु पुरुषापेक्षया नृपः ।

समन्यूनाधिकत्वे च स्वयं कुर्याद्विनिर्णयमिति ॥

अस्वामिविक्रेतुरिवास्वाम्यदत्तं स्वाम्यनुमतिमन्तरेणोपभुञ्जानस्य दण्ड्यतामाह नारदः ।

उद्दिष्टमेव भोक्तव्यं स्त्रीपशुर्वसुधापि वा ।

अनर्पितन्तु यो भुङ्क्ते भुक्तभोगं प्रदापयेत् ॥

अनुद्दिष्टन्तु यद्द्रव्यं दासक्षेत्रगृहादिकम्।
स्वबलेनैव भुञ्जानश्चौरवद्दण्डमर्हति॥
अनड्वाहन्तथा धेनुन्नावं वासन्तथैव च।
अनिर्दिष्टन्तु भुञ्जानो दद्यात्पणचतुष्टयम्॥
दासी नौका तथा धुर्य्यौ बन्धकन्नोपभुज्यते।
उपभोक्ता तु यद्द्रव्यम्पण्यैनैव विशोधयेत्॥
दिवसे द्विपणन्दासीं धेनुमष्टपणन्तथा।
त्रयोदशन्त्वनड्वाहमश्वं भूमिञ्च षोड़श:॥
नौकामश्वाञ्च धेनुञ्च लाङ्गलं कार्मिकस्य च।
बलात्कारेण यो भुङ्क्ते दाप्यश्चाष्टगुणन्दिने॥
उलूखले पणार्द्धन्तु मुषलस्य पणद्वयम्।
शूर्पस्य च पणार्द्धन्तु जैमिनिर्मुनिरब्रवीदिति॥

पण्येन पणसमूहेन अत्रैको धेनुशब्दोगामभिधत्ते। अपरो दोग्धीमहिष्यादिकम्। कार्मिकस्य कर्मोपजीविन:। यदविज्ञातस्वामिकन्नष्टमपहृतं वा राजपुरुषै: कथञ्चित्प्राप्य राज्ञे समर्पितन्तत्स्वामी यदि वर्षमध्ये आगत्य स्वत्वं साधयति तदाप्नोतीत्याह याज्ञवल्क्य:।

शौल्किकै: स्थानपालैर्वा नष्टापहृतमाहृतम्।
अर्वाक् संवत्सरात्स्वामी हरेत परतो नृप इति॥

यत्तु मनुवचनं, प्रनष्टस्वामिकं द्रव्यं राज्ञा त्र्यब्दं निधापयेत्।
अर्वाक्त्र्यब्दाद्धरेत् स्वामी परतो नृपतिर्हरेदिति।

तद्वक्रश्रुतवृत्तसम्पन्न ब्राह्मणविषयमिति। मदनरत्ने ब्राह्मणमात्रविषयमिति केचित्। इत्यस्वामिविक्रयाख्य व्यव-

हारपदम्। अथ सम्भूयसमुत्थानाख्यं व्यवहारपदम्। तस्य स्वरूपमाह नारदः।

वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते।
तत्सम्भूय समुत्थानं व्यवहारपदं स्मृतमिति॥

वणिक्प्रभृतय इत्यनेन ऋत्विङ्नर्त्तककर्षकादीनां ग्रहणम्। यद्यपि लयभूतस्य स्वर्गस्य ऋत्विग्गामित्वाभावादात्मनेपदस्यानुपपन्नत्वेन प्रभृतिशब्देन ऋत्विग्ग्रहणमनुचितम्। तथापि आत्मनेपदाऽविवक्षयेदमुक्तन्न च ऋत्विङ्मात्रे आत्मनेपदाविवक्षणे अन्यांशे च विवक्षणे वैरूप्यप्रसङ्ग इति वाच्यम्। सम्भूयकर्त्तृत्वमात्रस्य लक्षणत्वेनान्यच वास्तवतत्त्वेऽपि लक्षणवैयर्थ्यप्रसङ्गेनाप्रवेशात्। न च चिन्तामणिकृता कर्त्रभिप्राय इत्यस्य कर्त्रभिप्रायविषये कर्त्रिच्छाविषये क्रियाफल इति व्याख्यातत्वादृत्विजामपि सफलं यजमानस्य कर्म भवत्विति चेतनोपरागेणेच्छा सम्भवत्येवेत्यात्मने पदविवक्षायामपि काक्षतिरिति वाच्यम्। कर्त्रभिप्राये कर्त्तृगामिनीत्यस्यैव व्याख्यानस्य महाभाष्याद्यनेकग्रन्थसम्मतत्वेनान्याद्दशव्याख्यानस्य महाभाष्यादिविरुद्धत्वात्। सहवणिज्यादिकरणे अधिकारिणो दर्शयति बृहस्पतिः।

कुलीनदक्षानलसैः प्राज्ञैर्नाणकवेदिभिः।
आयव्ययज्ञैः शुचिभिः शूरैः कुर्यात्सह क्रियामिति॥

क्रियां क्रतु कृषिशिल्पस्तेयवाणिज्यरूपाम्। नाणकविज्ञाननं वाणिज्यक्रियायामुपयुज्यते। आयव्ययज्ञानमात्रं कृषिक्रियायाम्। शिल्पिक्रियायां सङ्गीतक्रियायां च प्राज्ञत्वम्। क्रतौ कुलीनत्वप्राज्ञत्वशुचित्वानि। स्तेयेतु शूरत्वमात्रमु-

पयुज्यते। दक्षत्वानलसत्वे सर्वत्रोपयुज्येते। अतएव दक्षादीन्निषेधयति स एव।

असक्तालसरोगार्त्तमन्दभाग्या निराश्रयाः।
वाणिज्याद्या सहैतैस्तु न कर्त्तव्या बुधैः क्रियेति॥

निराश्रयाः मूलधनरहिताः। ये तु सम्भूय वाणिज्यादिक्रियां कुर्वन्ति ते द्रव्यानुरोधेन लाभादिभाजो भवन्तीत्याह नारदः। समोऽतिरिक्तो हीनो वा तत्रांशो यस्य यादृशः।

क्षयव्ययौ तथा वृद्धिस्तत्र तस्य तथाविधा इति॥

बृहस्पतिरपि। प्रयोगं कुर्वते ये तु हेमधान्यरसादिना।
समन्यूनाधिकैरंशैर्लाभस्तेषां यथाविधः॥
समोन्यूनोऽधिकोवांशो येन क्षिप्तस्तथैव सः।
व्ययन्दद्यात्कर्म कुर्य्याल्लाभं गृह्णीत चैवहीति॥

यत्र पुनरस्य द्वौ भागौ अस्यैक इति सम्विल्कृता तत्र तदनुरोधेन व्ययलाभौ प्रकल्प्याविल्याह याज्ञवल्क्यः।

समवायेन वणिजां लाभार्थं कर्म कुर्वताम्।
लाभालाभौ यथाद्रव्यं यथावासं विदाकृताविति॥

सम्भूयकारिणां कर्त्तव्यमाह। व्यासः।

समक्षमसमक्षं वा वञ्चयन्तः परस्परम्।
नानापण्यानुसारास्ते प्रकुर्य्युः क्रयविक्रयौ॥
अगोपयन्तो भाण्डानि दद्युः शुल्कञ्च तेऽध्वनिः।
अन्यथा द्विगुणन्दाप्याः शुल्कस्थानादहिःस्थिता इति॥

नारदोऽपि। भाण्डपिण्डव्ययोद्धारसारासारत्ववीक्षणम्।
कुर्युस्ते व्यभिचारेण समये स्वे व्यवस्थिता इति॥

अथ वा सर्वानुज्ञया सर्वेषां कार्यमेक एव कुर्यात्।
अतएव वृहस्पतिः।बहूनां सम्मतो यस्तु दद्यादेको धनन्नरः।

करणं कारयेद्वापि सर्वैरेव कृतम्भवेदिति॥

करणं लेख्यादिकम्। सम्भूयकारिणाम्मिथोविवादे निर्णयप्रकारमाह स एव।

परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम्।

सन्दिग्धेऽर्थे वञ्चनाया नचेद्विद्वेषसंयुता इति॥

यदा तु विद्वेषसंयुक्तास्तदाप्याह स एव।

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये।

शपथैः सोऽपि शोध्यः स्यात्सर्ववादेष्वयं विधिरिति॥

सर्ववादेऽपि वचनरहितवादेऽपि वञ्चकत्वे सिद्धे सति किं कार्यमित्यपेक्षिते आह। याज्ञवल्क्यः। जिह्मं त्यजेयुर्निर्लाभमिति। जिह्मं वञ्चकन्निर्लाभं कृत्वा त्यजेयुर्वहिः कुर्युरितरे सम्भूयकारिण इत्यर्थः। सम्भूयकारिण्यसमर्थे प्रत्याह स एव। अशक्तोऽन्येन कारयेदिति। स्वांशानुरूपं कर्मेति शेषः दैवराजकृतद्रव्यहानिविषये सर्वान् प्रत्याह वृहस्पतिः।

द्रव्यहानिर्यदा तत्र दैवराजकृताद्भवत्।

सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशत इति॥

सम्भूयकारिभिः सर्वैरिति शेषः। क्षयहानिरिति पाठे क्षयायैव हानिः क्षयहानिरुपरव्यर्थव्यतिरिक्तो हानिरित्यर्थः। प्रातिस्विकदोषेण द्रव्यनाशे स एवाह।

अनिर्दिष्टो वार्य्यमाणः प्रमादाद्यस्तु नाशयेत्।

तेनैव तद्भवेद्देयं सर्वेषां समवायिनामिति॥

अनिर्दिष्टः समवाय्यननुज्ञातः।

याज्ञवल्क्योऽपि । प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम् ॥

स तद्दद्यादिति । पालने त्वाह स एव । विप्लवाच्च रक्षितादृशमांशभागिति ।

बृहस्पतिरिति । दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत् ।

तस्यांशन्दशमं दत्त्वा गृह्णीयुस्तेऽशतोऽपरमिति ॥

तस्य तस्मै दशमसंशन्तो समवायिद्रव्यमिति शेषः । समाहरेत् स्वशक्त्या प्रत्याहरेदित्यर्थः ।

नारदोऽपि । दैवतस्कर राजाग्निव्यसने समुपस्थिते ।

यस्तत् स्वशक्त्या रक्षेत तस्यांशो दशमः स्मृत इति ॥

यस्तु समवायिद्रव्यं समवायिभिः सह प्रतियाचनादिना न साधयति तस्य लाभहानिरित्याह ।

बृहस्पतिः । समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।

न याचते च यः कश्चिल्लाभात् स परिहीयत इति ॥

याचनग्रहणं येन यत्कर्म स्वांशानुरूपं कर्त्तव्यं तस्याप्युपलक्षणार्थं तेन तत्कर्माकरणेऽपि लाभहानिरित्यस्मादेव वचनात् प्रतिपत्तव्यमिति स्मृतिचन्द्रिकायाम्। सम्भूयकारिणां ऋत्विजाङ्कर्त्तव्यमाह मनुः ।

ऋत्विजः समवेतास्तु यथा सत्रे निमन्त्रिताः ।

कुर्युर्यथार्हं तत्कर्म गृह्णीयुर्दक्षिणान्तथेति ॥

अत्र सत्रशब्दो यज्ञमात्र विवक्षया प्रयुक्तोन पुनर्बहुयजमानकसत्राख्ययज्ञविशेषविवक्षया । तत्र यजमानानामेवाध्वर्य्यादिकर्मकारित्वे दक्षिणार्हाणामृत्विजामभावात् । तथा कर्मानुसारेण दक्षिणां गृह्णीयुरित्यर्थः । तथा च स एव ।

सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः ।

अनेन कर्मयोगेन कर्त्तव्यांशप्रकल्पनेति॥

स्वानि कर्माणि यजमान व्यतिरिक्तानीतिशेषः। इयं चांश-कल्पना द्वादशशतं गावो दक्षिणे त्येवं क्रतुसम्बन्धित्वेन विधीयमानायां दक्षिणायामेव न ऋत्विग्विशेषोल्लेखने विहिताया स्तद्विधायकश्रुतिविरोधापत्तेः अतएवाहतुर्मनु बृहस्पती।

रथं हरेद्यथाध्वर्युर्ब्रह्माधाने च वाजिनम्।
होता निविद्वरं चाश्वमुद्गाता चाप्यनः क्रये इति॥

निविद्वरं निविच्छंसन् लब्ध वरं उद्गात्रशब्देनोद्गातृग-णमध्यस्थः सुब्रह्मण्योऽभिहित इति मदनरत्ने अनः शकटम्। क्रये सोमक्रये। दक्षिणांशकल्पनायाः प्रकारमाहमनु बृहस्पती।

सर्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिन इति॥

सर्वेषां षोडशानामृत्विजां मध्ये ये मुख्या गणस्थाग्राः होतृ ब्रह्माध्वर्यूद्गातारोऽर्द्धिनः क्रतदक्षिणायाः किञ्चित्न्यूनमर्द्धं गृ-ह्णीयुः। समग्रार्द्धग्रहणे वक्ष्यमाण विभागकल्पनाविरोधः स्यात्। अपरे द्वितीया मैत्रावरुणं प्रतिप्रस्थातृब्राह्मणाच्छन्दांसि प्रस्तोतारस्तदर्द्धेन मुख्यभागार्द्धेनार्द्धिनोऽर्द्धशाहिणः तृतीयि-नोऽच्छावाकाग्नीध्रनेष्ट प्रतिहर्त्तारोमुख्यभागास्तृतीयांशभाजः। पादिनोन्त्याःग्रावस्तोतृपोतृनतृसुब्रह्मण्याख्यामुख्यभागस्य चतुर्थांश ग्राहिण इत्यर्थः। मुख्यानां चतुर्णां मिथोविभागः समः एवं द्वितीयादीनामपि स एव विभागः तथा च गोशतं दक्षिणेति पक्षमाश्रित्य कात्यायन सूत्रम्। द्वादशद्वादशेभ्यः षट्षट्द्विती-येभ्यश्चतस्रश्चतस्रोद्वौतृतीयेभ्य स्तिस्रस्तिस्रइतरेभ्य इति। सं-गृहीतमेतद्बौधायन कारिकायामपि। पञ्चविंशतिधा कृत्वा व-

र्गीया दक्षिणा क्रमात्। द्वादशैवाथ षट्कं चतस्र एव चेति द्वाद-शाधिकगोशतरूपा दक्षिणाया: प्रथमञ्चत्वारो भागा: कर्त्तव्या:। तत्रैको भागो होतृवर्गस्यापरो भागो ब्रह्मवर्गस्यापरोऽध्वर्युवर्गस्यापर उद्गातृवर्गस्य। पुनरेकैकस्य भागस्य पञ्चविंशतिभागा: कर्त्तव्या:। तेष्वाद्यानां होत्रादीनां द्वादशभागा: द्वितीयिनां षट् तृतीयानाञ्चत्वारश्चतुर्थानां त्रय इत्यर्थ:। पशुबन्धादौ तु विषम विभागानभिधानात्। समं स्यादश्रुतत्वादिति न्यायेन समत्वेनैव विभाग इति मन्तव्यम्। स्वकीयकर्म कलायांशकर्तृक कृतानुसारेण भागो देय इत्याह मनु:।

ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत्।
तस्य कर्मानुरूपेण देयोंऽश: सह कर्त्तृभिरिति॥

सह कर्त्तृभि: सम्भूयकारिभिरित्यर्थ:। यद्वा कर्त्तृभि: सहदेय: दक्षिणाकालो देयो यजमानेनेत्यर्थ:। अथ वा कर्म परित्यक्तं सकर्त्तृभिरित्यर्थ:। यदा तु ऋत्विक् कर्मैकदेशं दक्षिणादानानन्तरं त्यजति तदाऽवशिष्टस्तद्गणवर्त्तिनां मध्ये सन्निहिते नान्येन कारयेदित्याह स एव।

दक्षिणासु च दत्तासु स्वकर्म परिहापयेत्।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेदिति॥

कर्ममध्ये ऋत्विङ्मरणे कर्त्तव्यमाह नारद:।

ऋत्विजां व्यसनेऽप्येवमन्येन कर्म निस्तरेत्।
लभेत दक्षिणादानं स तस्मात् सम्प्रकल्पितमिति॥

अन्येन स्वस्वगण मध्यवर्त्तिनां मध्ये प्रत्यासन्नेन येन केनचिदन्येन कार्यमाणे त्वध्वर्य्वादि समाख्यावाधापत्तेरिति-ध्येयम्। यत्तु शङ्खलिखितयोर्वचनम्। अथ चेदनु प्राप्ते स-

वने ऋत्विक् म्रियते तस्य स गोत्रोऽथ शिष्योवा तत्कार्यमनुपूरयेत्। अथ चेद्बान्धवस्ततोऽन्य ऋत्विजं वृणुयादिति॥

यच्च वृहस्पतिवचनम्। एवं क्रियामयुक्तानां यदा कश्चिद्विपद्यते।

तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिरिति॥

तदेकान्तरगण रहितर्त्विक्कर्त्तृकदर्श पौर्णमासादियाग विषयमित्यभिहितं स्मृतिचन्द्रिकायाम्। जीवत्येव तु ऋत्विजि यजमानेन ऋत्विगन्तरकरणे कस्य दक्षिणेतिवीक्षायामाह शङ्खः। अथ ऋत्विजि वृते पश्चादन्यं वृणुयात्पूर्वाहृतस्यैव दक्षिणां पश्चादाहृतः किञ्चिल्लभत इति। यदात्वकारणमृत्विग्याज्यन्त्यजति याज्यो वा ऋत्विजं तदातयोर्दण्डमाह मनुः।

ऋत्विजं यस्त्यजेद्याज्यो याज्यमृत्विक् त्यजेद्यदीति।

शक्तंकर्मण्यदुष्टञ्च तयोर्दण्डः शतं शतमिति॥

नारदोऽपि। ऋत्विक्च त्रिविधो दृष्टः पूर्वैर्जुष्टः स्वयं कृतः।

यदृच्छया च यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम्॥

ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम्।

अदुष्टञ्चर्त्विजं याज्यो विनेयौ तावुभावपीति।

ये कृषिसाधने स्वसमानास्तैः सह कृषिकार्य्यमित्याह। वृहस्पतिः। वाह्यकर्षक वीजाद्यैः क्षेत्रोपकरणे न च।

ये समानास्तु तैः सार्द्धं कृषिः कार्या विजानतेति॥

वाह्याः लाङ्गलादिवाहकाः वलिवर्दाः। कृष्याः कर्षकाः कृष्यर्थं स्वीकृताः पुरुषाः आदिशब्देन कृषिसाधनानामन्येषां ग्रहणम्। सम्भूय कारिणां कृषिकाणां कर्त्तव्यमाह।

वृहस्पतिः। पर्वते नगराभ्यासे तथा राजपथस्य च।

ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन वर्जयेदिति॥

पर्वते पर्वतसमीपे कल्पतरुकृता तु विवीत इति पठित्वा विवीतशब्देन यवसाद्यर्थं रचितः प्रदेश इति व्याख्यातम्। नगराभ्याशे नगरसमीपे। राजपथस्य समीप इति शेषः। एतदुक्तं भवति। पर्वताद्यासन्नमनासन्नमपि ऊषरं मूषकव्याप्तञ्च क्षेत्रं वर्जयेदिति। वाह्योऽपि वर्जनीयावाह स एव।

कृशातिवृद्धं क्षुद्रञ्च रोगिणं प्रपलायिनम्।
काणं खञ्जञ्च नादद्याद्वाह्यं प्राहुः कृषीवलं इति॥

काणः एकाक्षः खञ्जः भग्नचरणः क्वचिदन्वैवास्य हानिमाह स एव। वाह्यवीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनामिति॥

सम्भूयकारिणामिति शेषः। वाह्यवीजग्रहणं कृषिसाधनानामुपलक्षणार्थम्। सम्भूयकारिणां शिल्पिनां स्वरूपन्दर्शयंस्तेषां लाभविभागेंऽशपरिकल्पनाप्रकारमाह स एव।

हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्म्मणाम्।
संस्कर्त्ता तत्कलाभिज्ञः शिल्पीप्रोक्तो मनीषिभिः॥
हेमकारादयो यत्र शिल्पं सम्भूय कुर्व्वते।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशत इति॥

कुप्यं हेमरूप्यव्यतिरिक्तत्रपुसीसादिकम्। हेमरूप्य इति प्रस्तुत्य ताभ्यां यदन्यत्तत्कुप्यमित्यमरसिंहेनोक्तत्वात्। निर्वेशोभृतिः। कात्यायनोऽपि।

शिक्षकाभिज्ञकुशला आचार्य्याश्चेति शिल्पिनः।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरमिति॥

हर्म्यादिनिर्मातृणां मध्ये मुख्यभागद्वयमाह बृहस्पतिः।
हर्म्यं देवगृहं वापिवाचिकोपस्कराणि च।

सम्भूय कुर्वतान्तेषां प्रमुख्यो द्व्यंशमर्हतीति ॥

नर्त्तकेष्वपि मुख्यस्यांशद्वयभागित्वमतिदिशन् विशेषान्तरमप्याह स एव। नर्त्तकानामेष एव धर्मः सद्भिरुदाहृतः।

कालज्ञो लभतेऽध्यर्द्धं गायनास्तु समांशिन इति ॥

अध्यर्द्धं अर्द्धाधिकमेकमंशं सम्भूयकारिणाञ्चौराणां लाभभागेंऽशपरिकल्पनाप्रकारमाह कात्यायनः।

परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्यज्ञया हृतम्।
राज्ञे दशांशमुद्धृत्य विभजेरन् यथाविधि ॥
चौराणां मुख्यभूतस्तु चतुरोऽंशांस्ततो हरेत्।
शूरोंऽशांस्त्रीन् समर्थौ द्वौ शेषास्त्वेकैकमेव चेति ॥

एतद्धनं दुर्बलवैरिदेशादाहृतविषयम्। प्रबलतरवैरिदेशादाहृते त्वाह बृहस्पतिः।

स्वाम्याज्ञया तु यच्चौरैः परदेशात् समाहृतम्।
राज्ञे दत्त्वा तु षड्भागम्भजेरुस्ते यथांशतः ॥
चतुरोंऽशान्भजेन्मुख्यः शूरस्त्र्यंशमवाप्नुयात्।
समर्थस्तु हरेद्द्व्यंशं शेषास्त्वन्ये समांशिन इति ॥

समर्थः शक्तः। एतेषां हानिरप्येवमेवेत्याह कात्यायनः।

तेषां चेत्प्रसृतानाञ्च ग्रहणं समवाप्नुयात्।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशत इति ॥

इयमंशपरिकल्पना ऋत्विग्भिन्नसम्भूयकारिणां समयाभावविषया कृते तु समये तदनुसारेणैव। अतएव तेनैवोक्तम्।

वणिजां कर्षकाणाञ्च चौराणां शिल्पिनान्तथा।
अनिरूप्यांशकर्तृणां सर्वेषामेव निर्णय इति ॥

अनियमस्य लाभहान्योः समयेन प्रतिपुरुषमंशमहत्त्वेत्यर्थः।

इति सम्भूयसमुत्थानाख्य व्यवहारपदम्। अथ दत्ताप्रदानिकाख्य व्यवहारपदम्। तत्र बृहस्पतिः।

एषाऽखिलेनाभिहिता सम्भूयोत्थान निष्कृतिः।
अदेय देय दत्तानामदेयस्य च कथ्यते इति॥

अदेयादीनां स्वरूपादिक मधुना कथ्यत इत्यर्थः। तस्य स्वरूपमाह नारदः।

दत्त्वा द्रव्यमसम्यग्यः पुनरादातु मिच्छति।
दत्त्वा प्रदानिकं नाम व्यवहारपदं हि तदिति॥

असम्यक् अशास्त्रीयमार्गाश्रयणेनेत्यर्थः। दान प्रकारस्यादेयादिभेदैश्चतुर्विधत्वमाह स एव।

अदेयमथ देयञ्च दत्तञ्चाऽदत्तमेव च।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विध इति॥

तत्र तावददेयस्य स्वरूपभेदानाह बृहस्पतिः।

सामान्यं पुत्त्रदाराधि सर्वस्वन्यासयाचितम्।
प्रतिश्रुतमथान्यस्य न देयं त्वष्टधा स्मृतमिति॥

सामान्यं साधारणं प्रतिश्रुतं वा चाङ्गत्तम्।

नारदोऽपि। अन्वाहितं याचितकमाधिः साधारणञ्च यत्।
निःक्षेपः पुत्त्रदारांश्च सर्वस्वञ्चान्वये सति॥
आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना।
अदेयान्याहुराचार्य्या यच्चान्यस्मै प्रतिश्रुतमिति॥

साधारणबहुस्वामिकं रिक्थादिकं न त्वविभक्तस्वामिकं सुवर्णादिकन्तस्याविभक्त सर्वसम्मतौ देयत्वेन वक्ष्यमाणत्वात्। अत्र पुत्त्रादानमेक पुत्त्रविषयन्तद्दाने सन्ततिविच्छेद प्रसङ्गात्। अतएव विष्णुः,शुक्रशोणित सम्भवः पुरुषो मातापितृ निमित्तक

स्तस्य प्रदानविक्रय परित्यागेषु मातापितरौ प्रभवतो नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषामिति। अतश्च सुतस्य सुतदाराणां वशित्वन्त्वनुशासनम्। विक्रये चैव दाने च वशित्वं न सुते पितुरित्यादीनि स्मृत्यन्तरोक्त वचनानि सुतस्यादेयत्व प्रतिपादकानि एकपुत्र विषयाणीतिज्ञेयानि, अनेकपुत्रेष्वपि मातापितृवियोग सहनक्षम एव देयः। अतएव कात्यायनः। विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः। दाराः पुत्राश्चेति यथादाराः पुत्राश्च विक्रयं दानं वा भर्त्ता न नयेत्तथा मातापितृभ्यां पुत्रा अपि पितृवियोगानिच्छवो न नेया इत्यर्थः उक्तः स्मृतिचन्द्रिकायाम्। न नेयाः स्युरनिच्छव इत्येतदनापद्विषयम्। आपत्काले तु कर्त्तव्यं दानं विक्रयमेव वा।

अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चय इति॥

तानेवाधिकृत्य तेनैवाभि धानात्। मात्रापि पत्यनुज्ञयादेय मित्याह विष्णुः। न तु स्त्रीपुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति। अन्वाहितादिवत् स्त्रीधनमदेयम्। अतएव दक्षः। सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम्।

अन्वाहितञ्च निःक्षेपः सर्वस्वं चान्वये सति॥

आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः।

यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः इति॥

अदेयदाने प्रतिग्रहे च दण्डमाह मनुः।

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति।

तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहस मिति॥

अदेय ग्रहणमदत्तस्याप्युपलक्षणार्थम्। अतएव नारदः।

गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति।

दण्डनीया वुभावेतौ धर्मज्ञेन महीक्षितेति ॥

अदत्तादेय ग्रहणाद्गृहीतस्य परावर्त्तनमपि कार्यमिति गम्यते। अदत्तग्रहणे दाने च दानसिद्ध्यभावात्परस्वत्वानुत्पत्तेरित्युक्तं स्मृतिचन्द्रिकायाम्। देयस्वरूमाह स एव।

कुटम्बभरणाद्द्रव्यं यत्किञ्चिदतिरिच्यते।

तद्देयमुपहृत्यान्यन्न तद्दोषमवाप्नुयादिति ॥

अन्यदुपहृत्य भर्त्तव्य कुटम्बमनवरुध्येत्यर्थः। उपरोधश्च भोजनाच्छादनादिराहित्यनिबन्धनतोऽत्राभिमतो न तु ताम्बूलादिभोगसाधनवैकल्य निबन्धनः। अतएव बृहस्पतिः।

कुटुम्ब भक्तवसनाद्देयं यदतिरिच्यत इति।

भक्तं भोजनं वसनं आच्छादनम्। भक्तवसनाद्यदतिरिच्यत इत्यन्वयः। याज्ञवल्क्योऽपि।

स्वं कुटुम्बाविरोधेन देयं दारसुतादृते इति ॥

कुटुम्बाविरोधेन कुटुम्बानुरोधेन कुटुम्बाभरणावशिष्टं स्वन्देयमित्यर्थः। स्थावर विषये देयमाहतुः प्रजापति बृहस्पती। सप्तागमादृगृह क्षेत्रादयत्क्षेत्रं प्रदीयते।

पित्र्यं वाथ स्वयं प्राप्तं तद्दातव्यं विवक्षितमिति ॥

सप्तागमात्पूर्वोक्त सप्तविधागमयुक्तात्। क्षेत्रग्रहणमुपलक्षणम्। पित्र्यं वंशपरम्परायातम्। स्वयम्प्राप्तं स्वयमर्जितम्। पित्र्यं स्वयम्प्राप्तयोरुपादानं क्रीतादीनामुपलक्षणार्थम्। पित्र्यं वा स्वयम्प्राप्तं वा यद्गृहक्षेत्रादिकम्प्रदीयते तत्सप्तागमान्विताद्गृह क्षेत्रादुद्धृत्य दातव्यमितिस्मृति शास्त्रं विवक्षित मित्यर्थः। अत्र सप्तागमादृगृहं क्षेत्रादित्यभिधानं गृहक्षेत्रादिदानं कुटुम्बपर्याप्ते सागमके गृहे क्षेत्रा-

द्यन्तरे सत्येव नान्यथेत्येव मर्थम्। यत्तु कात्यायनेनोक्तम्।
सर्वस्वं गृहवर्ज्जं तु कुटुम्बभरणाधिकम्।

यद्द्रव्यन्तत् स्वकन्देयमदेयं स्यात्ततोऽन्यथेति।

तद्गृहाद्यन्तराभाव विषयम्। स्वकं स्वकीयम्। यथेष्टवि-
नियोगार्ह द्रव्यमिति यावत्। स्वयं प्राप्तं त्वविभक्तधनैर्भ्रातृभिर
ननुज्ञातमपि देयम्। स्वेच्छादेयं स्वयं प्राप्तं बन्धाचारेण बन्धक-
मिति बृहस्पति स्मरणात्। स्वेच्छादेयं भ्रात्राद्यनुज्ञामन्तरे
णापि देयम्। बन्धकं बन्धाचारेणाधिरूपेण देयमित्यर्थः। यत्तु
तेनैवोक्तम्। विभक्ता अविभक्ता वा दायादाः स्थावरे समाः।

एकोऽप्यनीशः सर्वत्र दानाधमनविक्रये इति॥

तत् समानाधिकाविभक्त स्थावरविषयम्। आधमनमाधी-
करणं विभक्ता अपि स्थावरे समाः किमुताविभक्ता इति द-
ण्डापूपन्यायेन व्याख्येयम्। अन्यथा विभागो निरर्थकः स्यात्।
अतश्च यदुक्तं स्मृत्यन्तरे।

एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयम्।

आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषत इति॥

तत्क्रमायातविभक्तस्थावरविषयं समानधिकस्थावर विष-
यं वेति मन्तव्यम्। स्वार्जित मपि किञ्चित् प्राप्त व्यवहारे
पुत्रेषु सत्सु तदनुमत्यैव दातव्यमित्यभिप्रेत्याह भगवान् व्यासः।

स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्।

असम्भूय सुतान् सर्वान्न दानन्न च विक्रयः॥

ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः।

वृत्तिञ्च तेऽभिकाङ्क्षन्ति न दानन्न चविक्रय इति॥

अत्रोत्तरपदं पूर्वप्रदर्शित बृहस्पति वचनार्थस्य दण्डा-

एषन्यायप्रदर्शनेन दृढीकरणार्थम्। किञ्चिद्भर्त्रा पत्न्यनुज्ञातमेव देयम्। किंचिन्मुख्येनापि भ्रात्राद्यनुज्ञातमेव-देयम्। यथा च बृहस्पतिः।

सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत्।

स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयादिति॥

सौदायिकं वैवाहिकं यस्याः परिणयने लब्धं तस्याः। अनुज्ञयैव दातव्यम्। क्रमायातम्पितृपितामहादि क्रमायातम्। स्त्रीज्ञात्यनुमतं न सकलन्देयम्। वैवाहिके क्रमायाते सर्वदानन्नविद्यत इति तेनैवोक्तत्वात्। देयोक्तिप्रसङ्गेन प्रतिग्रहे प्रकारविशेषं दर्शयति याज्ञवल्क्यः।

प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषत इति॥

प्रकाशः प्रकटःससाक्षिक इति यावत्। पुत्रप्रतिग्रहे प्रकारविशेष उक्तो वसिष्ठेन। पुत्रं ग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवमसन्निकृष्टमेव गृह्णीयादिति। अदूरबान्धवं सन्निहित मातुलादिबान्धवं असन्निकृष्टं असन्निकृष्ट भ्रातृ पुत्रादिव्यतिरिक्तमेव प्रतिगृह्णीयादित्यर्थः। प्रासङ्गिकमुक्त्वा प्रकृतमप्याह याज्ञवल्क्यः।

देयं प्रतिश्रुतञ्चैव दत्त्वा नापहरेत् पुनरिति

इदन्ते दास्यामीति यत् प्रतिश्रुतन्तदवश्यं तस्मै दातव्यं यदि धर्म्मप्रच्युतो न भवति। प्रच्युते पुनर्न्न दातव्यं प्रतिश्रुत्याप्यधर्म्म संयुक्ताय न दद्यादिति गौतमस्मरणात्। दत्त्वा नापहरेत्पुनः। न्यायमार्गेण यत् दत्तं सप्तविधमपि पुनर्नापहर्त्तव्यम् किन्तु तथैवानुमन्तव्यमित्यर्थः। यत्पुनः प्रतिश्रुतन्न ददाति-दत्तं वाऽपहरति तस्य दोषमाह हारीतः।

प्रतिश्रुतार्थादानेन दत्तस्य छेदनेन च।
विविधान्नरकान्याति तिर्य्यग्योनौच जायते॥
वाचैव यत्प्रतिज्ञातं कर्म्मणा नोपपादितम्।
ऋणं तद्धर्म्म संयुक्तमिह लोके परत्र चेति॥

यद्धनं धर्म्म संयुक्तं प्रतिग्रहीतुः प्रवृत्त धर्म्म सम्पत्त्यर्थं वाचा प्रतिज्ञातन्न पश्चाद्दर्पितन्तदिह परत्र च ऋणवन्नापैतीत्यर्थः। प्रतिश्रुतमदद्राज्ञा तद्दाप्योदण्डश्चेत्याह कात्यायनः।

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्।
नदद्याद्दण वद्दाप्यः प्राप्नुयात्पूर्वं साहसमिति॥

मत्स्यपुराणेऽपि। प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृप इति॥

अनयोर्दण्डयोरपराधानुसारेण व्यवस्थादत्तं सप्तविधमदत्तं षोड़शप्रकारमित्याह नारदः।

दत्तं सप्तविधं ज्ञेय मदत्तं षोड़शात्मकमिति।

तत्र दत्तभेदानाह स एव।

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः।
स्त्रीशुल्कानुग्रहार्थञ्च दत्तं दानविदो विदुरिति॥

पण्यमूल्यं क्रीतद्रव्यस्य मूल्यम्। भृति स्वरूपं कात्यायनेन दर्शितम्।

अविज्ञातोपलब्ध्यर्थं दानं यत्र निरूपितम्।
उपलब्धिक्रियालब्धं सा भृतिः परिकीर्त्तितेति॥

प्रयोजनक्रिया सम्पादनार्थं भृतिरिष्यत इत्यर्थः। तुष्ट्या-परितोषेण वन्दिप्रभृतिभ्यो दत्तमितिशेषः। स्नेहात् प्रीत्या दुहित्रादिभ्यो दत्तम्। प्रत्युपकारतः कृतोपकाराय प्रत्युपकारिणा दत्तम्। तत्प्रदर्शनार्थमाह। कात्यायनः।

भयत्राणोपरत्राणार्थास्तथा कार्य प्रसाधनात् ।
अनेन विधिना लब्धं भयत्राणादिकं धनम् ॥
उपकार करणेन लब्धमिति यावत् ॥

स्त्रीशुल्कं विवाहार्थं कन्याबन्धुभ्यो दत्तम् । अनुग्रहार्थं परोपकारः कर्त्तव्य इति विधिबलाद्यत्र कुत्राप्यनुग्रहार्थं दत्तं सफलं भवतीति दर्शयितुन्नारद आह ।

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तं तु सफलम्भवेदिति ॥

उपकारिणि परोपकारे सफलं फलातिशयोपेतमित्यर्थः । तदेतत्पण्यादि सप्तविधं दत्तमेव दान विदोविदुः अपरावर्त्तनीयम्विदुरित्यर्थः । बृहस्पतिरपि ।

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्रहसंप्रीत्या दत्तं सप्तविधं विदुरिति ।

अदत्तानि दर्शय ति नारदः ।

अदत्तन्तु भयक्रोध शोकवेग रुगन्वितैः ।
तथोत्कोच परीहास व्यत्यासछलयोगतः ॥
बालमूढा स्वतन्त्रार्त्त मत्तोन्मत्तापवर्ज्जितम् ।
कर्त्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥
अपात्रे पात्रमित्युक्ते कार्ये वा धर्म्म संहिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतमिति ॥

रुक् उपतापः भयादिकृतोय उपतापस्तदन्वितैरित्यन्वयः । अपवर्ज्जितं दत्तं बालादिभिरपवर्ज्जितमित्यन्वयः । एतदुक्तं भवति भयोपतप्तेन बन्दि ग्राहादिभ्यो दत्तं क्रोधोपतप्तेन क्रोधविषयीभूतानां पुत्त्रभ्रात्रादीनां व्ययं कर्त्तुमितरे-

भ्यो दत्तम्। पुत्रादिवियोग जनित शोकवेगादुपतप्तेन किं स्थितेन धनेनेति तात्कालिकया बुद्धा दत्तम्। उत्कोचेन राजकीयादिभ्यो दत्तम्। उपहासेन दत्तम्। व्यत्यासेन एकः स्वद्रव्यमन्यस्मै ददाति अन्योऽपि स्वीयन्तस्मै ददातीति दान व्यत्यासेन दत्तम्। छलयोगतः शतदानमभिसन्धाय सहस्र-मिति परिभाष्य दत्तम्। बालेनाप्राप्तव्यवहारेण दत्तं मूढेन लोकवेदानभिज्ञेन दत्तम्। अस्वतन्त्रेण दासादिना दत्तम्। आर्त्तेन रोगोपहतेन दत्तम्। मत्तेन धुस्तूरादि भक्षणादिना मत्तेन दत्तं उन्मत्तेन वातपित्ताद्युद्रेकादिना चलितधिया दत्तम्। अयं मदीयं कर्म करिष्यतीति प्रतिलाभेच्छया प्रतिलाभमकुर्व्वाणाय दत्तम्। अपात्रायायोग्याय योग्योऽहं इत्युक्तिमात्रेण दत्तम्। यज्ञादिं करिष्यामीत्युक्ता धनं गृहीत्वा द्यूतादिकर्म्मणि विनियुञ्जानाय दत्तं इत्येवंषोड़श प्रकार-मपिदत्तं पुनः प्रत्याहरणीयत्वाददत्तमुच्यत इत्यर्थः। पुनः प्रत्याहरणीयत्वमेवं विधानमाह कात्यायनः।

कामक्रोधास्वतन्त्रार्त्त क्लीवोन्मत्त प्रमोहितैः।
व्यत्यासपरिहासाय यद्दत्तन्तत् पुनर्हरेत्।
यातुकार्यं प्रसिद्धार्थं मुत्कोचा स्यात्प्रतिक्रिया।
तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात्कथञ्चन॥
अथ प्रागेव दत्ता स्यात्प्रतिदाप्यस्ततोबलात्।
दण्डं चैका दशगुणं माङ्गर्गार्गीयमानवा इति॥

उत्कोचा स्वरूपमाह स एव।

स्तेय साहसिकोद्वृत्त पारदारिक शंसनात्।
दर्शनाद्वृत्त नष्टस्य तथा सत्यप्रवर्त्तनात्॥

प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते ।
न दाता तत्र दण्ड्यः स्यात्मध्यस्थस्यैव दोषभागिति

एतदुक्तं भवति यदि मह्यं न प्रयच्छसि तदा त्वत्कृतं स्तेयादि कथयामीति भीतिमुत्पाद्य स्तेयादिकर्त्तृसकाशाद्धनमादत्ते । तथा त्वं यदि न मह्यन्न प्रयच्छसि तदा पलायमानं त्वां दर्शयामीति भीतिमुत्पाद्य पलायिनः सकाशाद्यत्किञ्चिदादत्ते तथा तत्र सत्यमपि स्वामिनिकटेऽसत्यमिति वदिष्यामीत्युक्त्वा यत्किञ्चिदादत्ते तदुत्कोचाख्यं तद्राज्ञा दात्रे दाप्यं उत्कोचापादकग्राहकौ च दण्डनीयाविति । पुनः प्रत्याहरणीयमिति । बृहस्पतिरप्याह । प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया ।
कार्य्ये वाधर्म्मसंयुक्ते स्वामी तत्पुनराप्नुयादिति ॥

आर्त्तदत्तस्यादत्तत्वं धर्म्मकार्य्यव्यतिरिक्तविषयम् । तथा च कात्यायनः ।
स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयइति ॥

मनुरपि सोपाधिकदानादेर्निवर्त्तनमाह ।
योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यस्य वाप्युपधिम्पश्येत्तत्सर्वं विनिवर्त्तयेदिति ॥

योग उपाधिः येनागामिनोपाधिविशेषेणाधिविक्रयादानप्रतिग्रहाः कृतास्तदुपाधिविगमे तं सर्वेऽपिनिवर्त्तेरन्नित्यर्थः । इति दत्ताप्रदानिकाख्यव्यवहारपदम् । अथाभ्युपेत्याशुश्रूषाख्यव्यवहारपदम् । तस्य स्वरूपमाह नारदः ।
अभ्युपेत्य च शुश्रूषां यस्तान्न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यत इति ॥

शुश्रूषामाज्ञाकारित्वम्। तत्र पञ्चविधः शुश्रूषकः। शिष्यः अन्तेवासी भृतकः अधिकर्म्मकृत् दासश्चेति। तेषाम्मध्ये दासभिन्नाः कर्म्मकराः। ते च शुभकर्म्मकृतः। दासाः पुनः पञ्चदशविधा गृहजातादि भेदेन तेत्र शुभकर्म्मकृतः तदेतत्-सर्वं मनसि निधाय स एवाह।

शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः।
चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः॥
शिष्यान्तेवासि भृतकाश्चतुर्थस्त्वधिकर्म्मकृत्।
एते कर्मकरा ज्ञेया दासास्तु गृहजातयः॥
सामान्यमस्वतन्त्रत्वन्तेषामाहुर्म्मनीषिणः।
जातिकर्म्मकृतस्तूक्तो विशेषो वृत्तितस्तथा॥
कर्म्मापि द्विविधं ज्ञेयमशुभं शुभमेव च।
अशुभं दासकर्म्मोक्तं शुभं कर्मकृतां स्मृतम्॥
गृहद्वाराशुचिस्थान रथ्यावस्कार शोधनम्।
गुह्याङ्गस्पर्शनोच्छिष्ट विण्मूत्र ग्रहणोज्झनम्॥
इच्छतः स्वामिनश्चाङ्गै रुपस्थान मतान्ततः।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परमिति॥

तेषामिति निर्द्धारणे षष्ठी॥ त्रिपञ्चकाः पञ्चदश। शिष्यो वेदविद्यार्थी। अन्तेवासी शिल्पशिक्षार्थी। मूल्येन यः कर्मकरोति स भृतकः। अधिकर्मकृत्। कर्मकुर्वतामधिष्ठाता। वृत्तितः जीवनोपायतः। अशुचिस्थान मुच्छिष्ट प्रक्षेपणार्थं गर्त्तादिकम्। अवस्करो गृहमार्जित पांश्वादि निचयस्थानम्। चतुर्भिरपि गृहद्वारादिभिः शोधनपदं सम्बध्यते। उज्झनन्त्यागः। अन्ततः स्वामिनः। इच्छतः स्वाम्यनुज्ञया मूत्र-

पूरीषादिस्थले निर्माजनार्थमङ्गे रुपस्थानं हस्ताद्यर्पणं तेषां कर्मकराणां दासानां चास्वतन्त्र वलक्षण धर्मं मनीषिण: साधारणमाहु:। जातिकर्मकृत: कर्मकृतो वृत्तिकृतश्च विशेष: शिष्यान्तेवासिनामेवोक्त इत्यर्थ:। तत्र शिष्याणान्त्रैवर्णिकान्यतमलक्षणो जातिकृतो विशेषो वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादि शास्त्र सिद्धोऽवगन्तव्य:। कर्मकृतविशेषन्त्वाह बृहस्पति:।

विद्या त्रयी समाख्याता ऋग्यजु:सामलक्षणा।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रचोदितामिति॥

शिष्य इतिशेष:। तथा च नारद:।

अविद्याग्रहणाच्छिष्य: शुश्रूषेत्प्रयतो गुरुम्।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्त्रे तथैवचेति॥

वृत्तितोविशेषमाह स एव।

समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम्।
प्रतीयात् स्वगृहान्नेषा शिष्य वृत्तिरुदाहृतेति॥

वृत्तिरत्न धर्म्म:। मनुरपि।

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।
प्रदक्षिणं परीत्याग्निं चरेत् भैक्षं यथाविधि॥
भवत्पूर्वञ्चरेद्भैक्ष मुपनीतो द्विजोत्तम:।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरमिति॥

क: पुनरन्तेवासिनां जातिकर्मकृतोविशेष इत्यपेक्षिते बृहस्पतिराह।

विज्ञान मुच्यते शिल्पे हेमकुप्यादि संस्कृति:।
नृत्यादिकञ्च तत्प्राप्तुं कुर्यात्कर्म गुरोर्गृहइति।

कङ्कणकटकादि निर्माण विषयं नृत्यगीतादिकरण विष-

यञ्च आदिशब्दात् स्तम्भकुम्भादि विरचन विषयञ्च। विज्ञानं शिल्पविज्ञानमुच्यते तत्प्राप्तार्थं अन्तेवासी गुरोर्गृहे कङ्कणकरणादिकं कुर्यादित्यर्थ:। अनेन हेमकारादि जातिकृत: कङ्कणकरणादिकर्मकृतश्च विशेषोऽन्तेवासिनां दर्शित:। तेषां कर्मकृतं वृत्तिकृतञ्च विशेषं दर्शयति नारद:।

स्वं शिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया।
आचार्य्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितमिति॥

अन्ते समीपे कृत्वा सुनिश्चितं एतावन्तङ्कालं मत्समीपे स्थातव्यमित्याचार्य्योक्तकालपरिमाणं सुनिश्चितं कृत्वेत्यर्थ:। आचार्य्यस्यापि कर्त्तव्यमाह स एव।

आचार्य: शिक्षयेदेनं स्वगृहे दत्तभोजनम्।
न चान्यत्कारयेत्कर्म पुत्त्रवच्चैनमाचरेदिति॥

अन्यच्छिल्पकर्मव्यतिरिक्तं कर्म। एवञ्चान्तेवासिना कङ्कणकरणादिकर्मफलार्पणमात्रेण शुश्रूषा कार्य्येत्यवगन्तव्यम्। स्वगृहे दत्तभोजनमिति वृत्तिर्दर्शिता। अन्यत्कर्मकारकमाचार्य्यं प्रत्याह कात्यायन:।

यस्तु न ग्राहयेच्छिल्पं कर्म्माण्यन्यानि कारयेत्।
प्राप्नुयात् साहसं पूर्वं तस्माच्छिष्यो निवर्त्तत इति॥

शिष्योऽत्रान्तेवासी। परिभाषितकालात्प्रागेव विद्या प्राप्तावपि परिभाषितकाल समापनं कार्य्यमित्याह नारद:।

शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत्।
तत्र कर्म्म च यत्कुर्य्यादाचार्य्यस्यैव तत् फलमिति॥

याज्ञवल्क्योऽपि। कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे।
अन्तेवासी गुरुप्राप्त भोजनस्तत्फलप्रद इति॥

दुष्टमन्तेवासिनं प्रत्याह नारदः ।

शिक्षयन्तमदुष्टञ्च यस्त्वाचार्यं परित्यजेत् ।

बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हतीति ।

वासयितव्यः स्थापनीयः । आचार्यपार्श्वे इति शेषः । वधो-ऽत्र ताडनन्न प्राणच्छेदः । अपराधाल्पत्वात् । शुश्रूषास-माप्त्यनन्तरमन्तेवासिनः कृत्यमाह स एव ।

गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणाम् ।

शक्तितश्चानुमान्यैनं अन्तेवासी निवर्त्तत इति ॥

भृतकानान्त्वन्तेवासिवन्न जातिकृतो वृत्तिकृतो वा विशेषः । किन्तु भृतिकृतः कर्म्मकृतः कालकृतश्च विशेषः । तदेतदाह बृहस्पतिः । यो भुंक्ते परदासीन्तु स ज्ञेयो वनिताभृतः ।

कर्म्म तत्स्वामिनः कुर्य्याद्यथान्योऽर्थभृतो नरः ॥

बहुधार्थकृतः प्रोक्तस्तथाभागभृतोपरः ।

हीनमध्योत्तमत्वञ्च सर्वेषामेव चोदितम् ॥

दिनमासार्द्धषण्मासत्रिमासाब्दभृतस्तथा ।

कर्म्म कुर्य्यात्प्रतिज्ञातं लभते परिभाषितमिति ।

अयमर्थः । यः परदास्युपभोगेन तत्स्वामिनः कर्म क-रोति स वनिताभृतः । यो धनग्रहणेन कर्मकरोति स अर्थ-भृतः । यः परिकल्पितांशग्रहणेन कर्म्म करोति स भागभृतः । एतावन्तङ्कालमेतत् कर्म्म करिष्यामीति प्रतिज्ञातं कर्म तावन्त-ङ्कालं कुर्य्यात् एवञ्चपरिकल्पितां भृतिं लभत इति । अर्थ-भृतस्य बहुविधत्वमर्थाल्पत्वमहत्त्वाभ्यां ज्ञेयम् । ते चाल्पत्व-महत्त्वे शक्तिभक्त्यानुसारेण द्रष्टव्ये ।

भृतकस्त्रिविधो ज्ञेय उत्तमोमध्यमोऽधमः ।

शक्तिभक्त्यानुरूपा स्यादेषां कर्माश्रया भृतिरिति ॥

नारद स्मरणात्। भागभृतकस्य विभागमाह स एव।

द्विप्रकारो भागभृतः कृषिगोजीविनां स्मृतः।

जातशस्यात्तथा क्षीरात् स लभेत न संशय इति ॥

हीनमध्योत्तमत्वलक्षणः कर्मकृतो भेदोरक्षणादिकर्मनिबन्धन इत्याह स एव।

आयुधी तूत्तमः प्रोक्तो मध्यमस्तु कृषीवलः।

भारवाहोऽधमः प्रोक्तस्तथा च गृहकर्मकृदिति ॥

कृषीवलः कर्षकः। अधिकर्म कृतस्तु स्वरूपमाह नारदः।

सर्वेष्वधिकृतो यः स्यात् कुटुम्बस्य तथोपरि।

सोऽधिकर्मकृतोज्ञेयः स च कौटुम्बिकः स्मृत इति ॥

सर्वेषु भृतकेषु अधिकृत उपरिकृतोऽधिष्ठातृत्वेन कृत इति यावत्। अर्थेष्वधिकृत इति केचित्पठन्ति। अर्थेषु क्षेत्रहिरण्यादिषु अधिकृतः पालकत्वेन नियुक्त इति। कुटुम्बस्योपरीत्यत्राधिकृत इत्यनुषङ्गः। सर्वभृतकेष्वधिष्ठातृत्वेन नियुक्तो यः सोऽधिकर्मकृतो ज्ञेयः। कुटुम्बरक्षणाय व्ययकारित्वेन स्थापितोयः स तु कौटुम्बिन इत्यर्थः। शिष्यान्तेवासिभृतकाधिकर्मकरेभ्यो दासानाम्भेदन्दासशब्दव्युत्पत्तिप्रदर्शनमुखेनाह। कात्यायनः। स्वतन्त्र स्यात्मनोदानाद्दासत्वं दारवद्भृगुरिति।

यथा भर्त्तुः सम्भोगार्थं स्वशरीरदानाद्दारत्वम्। तथास्वतन्त्र स्यात्मनः परार्थत्वेन दानाद्दासत्वमिति भृगुराचार्योमन्यत इत्यर्थः।

अनेनात्यन्तपाराथ्र्यं मासाद्यशुश्रूषकादासाः।

पाराथ्र्यमात्र मासाद्य शुश्रूषकास्तुकर्मकरा इति ॥

भेदोप्युक्त इत्यवगन्तव्यम्। अत्यन्तपारार्थ्यं तु तेषाम्भवति यैः स्वपुरुषार्थं वृत्तिनिरोधेन परार्थत्वमाश्रितमिति स्मृति चन्द्रिकायाम्। दासत्वं ब्राह्मण व्यतिरिक्तेष्वेव। त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचिदिति तेनैवाभिधानात्। अनेन-दासानां जातित भेद उक्तः। विप्रेतरेष्वपि दास्य मानुलोम्येनैव भवति। वर्णानामानु लोम्येन दास्यन्न प्रतिलोमतः। राजन्यवैश्यशूद्राणान्त्यजताञ्च स्वतन्त्रतामिति तेनैवोक्तत्वात्। स्वतन्त्रतां त्यजताम्। अत्यन्तपारार्थ्यम्भजतामित्यर्थः। न प्रतिलोमत इति स्वधर्मपरित्यागिभ्यो यतिभ्योऽप्यन्यत्र द्रष्टव्यं अतएव नारदः।

वर्णानां प्रातिलोम्येन दासत्वन्न विधीयते।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मतेति॥

यथोत्तमवर्णं प्रति हीनवर्णा सवर्णा वा भार्या भवति न पुनर्हीनवर्णं प्रत्युत्तमवर्णा तथैव दासोऽपिभवेदित्यर्थः। एतच्च प्रव्रज्यावसितो हीन वर्णस्यापि दासोभवतीत्यभिधानं क्षत्रियवैश्य प्रव्रज्यावसित विषयन्न तु ब्राह्मण प्रव्रज्यावसितविषयम्। तस्य निर्वास्यत्वाभिधानेन दासत्वाभावात्। तस्य निर्वास्यत्वं दर्शितं कात्यायनेन।

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविट् भृगुरिति॥

कारयेद्राजेतिशेषः क्षत्रञ्चविट्चक्षत्रविट्। सर्वोद्वन्द्वो-विभाषैकवद्भवतीति वचनादेकवद्भावः। निर्वासनञ्च स्वपदेनाङ्कयित्वा कर्त्तव्यमित्याहतु र्दक्षनारदौ।

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति।

स्वपदेनाङ्कयित्वा तु राजा शीघ्रं प्रवासयेदिति॥

न चैवं सति राज्ञ एव तु दासः स्यात् प्रव्रज्यावसितो नरः। न तस्य प्रतिमोक्षोऽस्ति न विशुद्धः कथञ्चनेति नारदेन प्रव्रज्यावसितोराज्ञ एव दासो नान्यस्येत्यभिधानात् स्वधर्मत्यागिनोऽन्यत्रेति यत्तेनैवोक्तं तन्निर्विषयमितीति वाच्यम्। यतोऽवेष्ट्याधिकरणन्यायेन क्षत्रियमात्र वचनेनापि राजशब्देनात्र लक्षणया प्रजापालस्य ग्रहणात् प्रजापालकत्वञ्च राजाधिकृते वैश्यादावपि सम्भवाद्यः क्षत्रियः प्रव्रज्यावसितः स हीनवर्णस्यापि प्रजापालस्य वैश्यस्य दासो भवतीति प्रतिपादनार्थत्वात्। केचित्तु प्रव्रज्यावसितस्य ब्राह्मणस्य दासत्वनिर्वासनयोर्विकल्पमाह तन्न पूर्वोक्त प्रकारेण सम्भवन्त्याङ्गतौ अष्टदोषदुष्टविकल्पाङ्गीकरणस्यान्याय्यत्वात्। दास्यविप्रस्य न क्वचिदिति निषेधाच्च। दारवद्दासतेति वचनाद्ब्राह्मणस्य सवर्णं प्रति दासत्वं प्राप्तं तन्निषेधार्थमाह कात्यायनः।

सवर्णोऽपिहि विप्रं तु दासत्वन्नैव कारयेदिति॥

यदि ब्राह्मणः स्वेच्छया दास्यम्भजते तदाऽसावशुभङ्कर्म न कुर्यादित्याह स एव।

शीलाध्ययनसम्पन्ने तदूनं कर्मकामतः।

तत्रापि नाशुभं कर्म प्रकुर्वीत द्विजोत्तम इति॥

यस्मात्परोपकारः कर्त्तव्य इति विधिः तत्तस्मादूनं कर्म मध्यमोत्तमव्यतिरिक्तमपि कर्म्म कामतो वेतनं मन्तरेणास्वेच्छया-परोपकारार्थं कुर्यादित्यर्थः पूर्वार्द्धस्य। तत्रापि तेष्वपि हीनकर्मसु यदशुभङ्कर्म गृहद्वारशोधनादिकं तन्न कुर्यादित्युत्तरार्द्धार्थः। क्षत्रियवैश्यविषये स्वामिनः कर्त्तव्यमाह मनुः।

क्षत्रियञ्चैव वैश्यञ्च ब्राह्मणोवृत्तिकर्षितौ ।
बिभृयादानृशंस्येन स्वामी कर्म्माणि कारयन्निति ॥

आनृशंस्येन अक्रौर्य्येण । अयमर्थः । वृत्तिकर्षितं क्षत्रियं वैश्यञ्च दासीभूतमक्रौर्य्येण स्वानि कर्म्माणि कारयन् स्वामी पोषयेदिति । अत्र स्वामीत्यनेन न सम्बन्धिजनककर्माणि कारयेदित्याह । कर्म्माणीति सामान्याभिधानेन जघन्यकर्माण्येव कारयितव्यानीति नियमो नास्तीति सूचयति । वृत्तिकर्षिताविल्यनने-गत्यन्तराभावे एव क्षत्रियवैश्ययोर्दासत्वाङ्गीकारः कार्यो न तु गत्यन्तरसम्भव इति दर्शयति । बलाद्दासीकरणे दण्डमाह मनुः ।

दास्यन्तु कारयंल्लोभाद्ब्राह्मणः संस्कृतान् द्विजान् ।
अनिच्छतः प्राभवत्वाद्राज्ञा दाप्यः शतानि षडिति ॥

प्रभवतो भावः प्रभवत्वं तस्मात् प्रभुत्वादित्यर्थः । साधारणादिभ्यः स्वार्थे अञ्वक्तव्य इति वार्त्तिकादञ्त्वं । द्विजातिपदन्न दण्डः शूद्रविषय इति दर्शयति । अत एवाह ।

शूद्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवेति ॥

स च दासः पञ्चदशप्रकार इत्याह नारदः ।

गृहजातस्तथा क्रीतो लब्धोदायादुपागतः ।
अनाकालभृतश्चैव आहितः स्वामिना च यः ॥
मोचितो महतश्चर्णात् युद्धप्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वड़वाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृता इति ॥

गृहजातः स्वगृहे दास्याञ्जातः । क्रीतो मूल्येन स्वाम्य-

न्तरात् प्राप्तः। लब्धः तत एव प्रतिग्रहादिना। दायादुपागतः रिक्थग्राहित्वेन लब्धः। अनाकालभृतदुर्भिक्षे यो मरणाद्दासत्वाय रक्षितः। आहितः स्वामिना ऋणदातर्याधितां नीतः। ऋणमोचनेन दासत्वमभ्युपगतो ऋणदासः। युद्धप्राप्तः समरे विजित्य गृहीतः। पणे जितः दासत्वपणके द्यूतादौ जितः। तवाहमित्युपगतः तवाहन्दासोऽस्मीति स्वयमेवोपगतः। प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः। कृतः एतावन्तं कालं तव दासोभवामीत्यभ्युपगतः। भक्तदासः सर्वकालम्भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः। भक्षितं यावत्तेमूल्यद्वारेण ददामि तावद्दास इत्यभ्युपगत इति स्मृतिचन्द्रिकायाम्। वडवाहृतः वडवागृहदासीतया हृतस्तल्लोभेन तामुद्वाह्य दासत्वेन प्रविष्टः। यश्चात्मानं विक्रीणीते असावात्मविक्रेतेत्येवं धर्मशास्त्रे दासभेदाः पञ्चदश प्रकाराः स्मृताइत्यर्थः। अत्राद्यानां गृहजातक्रीतलब्धदायागतानां चतुर्णां दासत्वापगमः स्वामिप्रसादादेव नान्यथेत्याह स एव।

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते।
प्रसाद स्वामिनोऽन्यत्र दास्य मेषां क्रमागतमिति॥

आत्मविक्रेतुरपि दासत्वं स्वामिप्रसादादन्यतो नापैतीत्याह स एव। विक्रीणीते स्वतन्त्रः सन् य आत्मानन्नराधमः।

सजघन्यतमस्तेषां सोऽपिदास्यान्न मुच्यत इति॥

अत्र प्रसादात् स्वामिनोऽन्यत्र इत्यनुषज्यते। ततश्चायमर्थः। आत्मविक्रेतापि गृहजातादिवत् स्वामिप्रसादं विनादास्यान्न विमुच्यत इति एवञ्च गृहदासादयोऽप्यात्मविक्रेतृपञ्चमाः स्वामिप्रसादादकालभृता इव दास्यान् मुच्यन्त इति

वचोभङ्गादर्शितमिति मन्तव्यम्। स्वामिप्राणरक्षणाद्गृह-जातादयोऽकालभृताश्च सर्वेऽपि दास्यान् मुच्य इत्याह स एव।

यश्चैषां स्वामिनं कश्चिन्मोचयेत् प्राणसंशयात्।
दासत्वात् स विमुच्येत पुत्रभागं लभेतचेति॥

एषामिति निर्द्धारणेषष्ठी। पञ्चदशानां मध्ये अन्यतम-इत्यर्थः। यत्तु। ध्वजाहृतोभक्तदासोगृहजः क्रीतदत्रिमैः। पैत्रिकोदण्डदासश्च सप्तैतेदासयोनयरिति मनु वचने सप्त विधत्वमुक्तन्तेषां दासत्व प्रतिपादनार्थं न परिसंख्यार्थम्। ध्वजागृहदासी एतच्च स्वामिप्रसादात् प्राणरक्षणात् वा दास्या-पगमनं प्रव्रज्यावसितभिन्न दासेषु द्रष्टव्यम्। तस्य दासत्वो-न्मोकाभावात्। अतएव याज्ञवल्क्यः।

प्रव्रज्यावसितोराज्ञोदास आमरणान्तिकैरिति।

राज्ञोदासः पार्थिवस्यैव दासो नान्यस्येत्यर्थः। अनाकाल भृतादीनां प्रव्रज्यावसितात्म विक्रेतृव्यतिरिक्तानान्तरानान्दा-स्यापनयन प्रकारमाह नारदः।

अनाकाल भृतोदास्यान् मुच्यते गो युगन्ददत्।
आहितोऽपिधनं दत्वास्वामी यद्येन मुद्धरेत्।
ऋणं तु सोदयं दत्वाऋणी दास्यात् प्रमुच्यते।
तवाहमित्युपगतो युद्धप्राप्तः पणेजितः॥
प्रतिशीर्ष प्रदानेन मुच्येरं स्तुल्यकर्मणा।
कृतकालव्यपगमात् कृतोदासोविमुच्यते॥
भक्तस्योत्क्षेपणात् सद्यो भक्तदासः प्रमुच्यते।
निग्रहाद्वडवायास्तु मुच्यते वडवाभृत इति॥

एतदुक्तं भवति दुर्भिक्षे पोषणेन कारितो दासो गोयुग्भार्प्य णान् मुच्यते। आहित दासस्तु स्वामिना गृहीत ऋणे प्रत्यर्पिते सति उत्तमर्णदास्याद्विमुच्यते ऋणदासस्तु स्वकृतमृणं येनोत्तमर्णाय यावद्धनन्दत्त्वापाकृतं तस्मै तावद्धनं सवृद्धिकं दत्त्वा विमुच्यते। तवाह मित्युपगतादय स्त्वयोदासाः स्वनिर्वर्त्त्याय स्वीय व्यापारनिवर्त्तक दासान्तर प्रदानाद्विमुच्यन्ते। कृतकालस्तु दासो दास्यावधित्वेन परिभाषितकालस्यातिक्रमणाद्विमुच्यते। भक्तदासस्तु भक्तस्योत्क्षेपणाङ्कितभक्तमूल्यसमर्पणाद्विमुच्यते। गृहदासीलोभेन दासत्वं प्राप्तस्तत्सम्भोगत्यागाद्विमुच्यत इति। दासभावानान्त्यागमाह याज्ञवल्क्यः।

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यत इति॥

अपिशब्देन दत्ताहितौ गृह्येते। ततश्चायमर्थः। बलात्कारेण यो दासकृतः यश्च चौरैरपहृत्य दासत्वेन विक्रीत आहितोदत्तो वा स यस्य पार्श्वे दासभावेन तिष्ठति तेन प्रागुक्त मोचन हेतु मन्तरेणैव शीघ्रं मोचनीय इत्यर्थः। यदि तेन लोभादिवशादसौ न मुक्तस्तदा राज्ञा मोचयितव्य इत्याह नारदः।

चौरापहृतविक्रीता ये च दासीकृता बलात्।

राज्ञा मोचयितव्यास्ते दास्यन्तेषु हि नेष्यत इति॥

चौरापहृत्याश्च ते विक्रीताश्चेति कर्म्मधारयः। यस्तु कस्य दास्यं पूर्व मङ्गीकृत्यापरस्यापि दासत्वमङ्गीकरोति असावपरेणापि विवर्जनीय इति वचः स एवाह।

तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति।

न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तमिति॥

अस्वतन्त्रः परदासत्वेनास्वतन्त्रः। कामं नूतनस्वामिदास्यं काम्यमानं इतरदासीभवन्तं दासं पूर्वस्वामी गृह्णीयादित्यर्थः। एवं यदेतद्दास मधिकृत्योक्तन्तत्सर्वं दास्यामपि समानन्यायत्वाद्योजनीयम्। दासीस्वामिनमधिकृत्य विशेष माह कात्यायनः।

स्वां दासीं यस्तु सङ्गच्छेत् प्रसूता च भवेत्ततः।
अवेक्ष्य वीजं कार्य्या स्याददासी सान्वया तु सेति॥

स्वकृतगर्भाधानमनु सन्धाय सा दासी सन्तानसहिता दासत्व विमोक्षविधिना स्वकृतगर्भादेर्दासत्वपरिहारार्थं अदासीत्वेन कार्या स्यादित्यर्थः। कः पुनर्दासत्वविमोचकोविधिरित्याकाङ्क्षायामाह नारदः।

स्वन्दासमिच्छेद्यः कर्त्तुमदासं प्रीतमानसः।
स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा॥
साक्षताभिः स पुष्पाभिर्मूर्द्धन्यद्भिरवाकिरेत्।
अदासइति चोक्ता त्रिः प्राङ्मुखन्तमथोत्सृजेदिति।

अत्रापि दासशब्देन दास्या अपि ग्रहणम्। लिङ्गस्योद्देश्य विशेषणत्वेन ग्रहाधिकरणन्यायेनाविवक्षितत्वात्। एव मुत्सर्गे सति यद्भवति तदाह स एव।

ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः।
भोज्यान्नोऽप्यप्रतिग्राह्यो भवत्यभिमतः सतामिति॥

स्वाम्यनुग्रहेण दासापाकरणरूपेण वक्तव्यः सम्भाषणार्हः। अदास्या अपि दासेन परिणीता या सा दासीत्वमेव भवतीत्याह कात्यायनः। दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात्।

यस्माद्भर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यत इति॥

दासधनस्यापि तत्स्वामिधनत्वमित्याह स एव ।

दासस्य तु धनं यत्स्यात् स्वामी तस्य प्रभुः स्मृत इति ॥

ब्राह्मण्यादिषु दासीकरणे दण्डमाह कात्यायनः ।

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीय तथैव च ।
राज्ञा तदकृतं कार्य्यं दण्ड्याः स्युः सर्व एव ते ॥
कामात्तु संश्रितां यस्तु कुर्य्याद्दासीं कुलस्त्रियम् ।
सङ्क्रामयन् तवान्यत्र दण्डस्तत्राकृतम्भवेत् ॥
बालधात्री मदासीञ्च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं वा प्राप्नुयात्पूर्वं साहसमिति ॥

तत्कार्य्यं अकृतं निवर्त्तनीयमित्यर्थः । तेन राज्ञा दण्ड्याः स्युरित्यन्वयः । विष्णुरपि । यस्तूत्तमर्णं दास्ये नियोजयति तस्योत्तमसाहसोदण्ड इति । क्वचिद्दासीविक्रयणे दण्डमाह । कात्यायनः । विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।

अनापदिस्थः शक्तः सन् प्राप्नुयात् द्विशतं दममिति ॥

द्विशतं पणानामितिशेषः । भक्तामित्यनेन दुष्टाया विक्रयणे दण्डाभाव इति दर्शितमिति । इति अभ्युपेत्याशुश्रूषाख्यं व्यवहारपदम् । अथ वेतनानपाकर्म्माख्यं व्यवहारपदम् । तत्र मनुः ।

अत ऊर्द्ध्वं प्रवक्ष्यामि वेतनस्याऽनपक्रियामिति ॥

तत्स्वरूपमाह नारदः ।

भृतानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतमिति ॥

वेतनं कर्ममूल्यं तस्यानपाकर्म भृत्याय समर्पणं समर्पितस्य वा परावर्त्तनम् । तत्र समर्पणे विशेषमाह स एव ।

भृत्याय वेतनं दद्यात्कर्म्मस्वामी यथाक्रमम्।
आदौ मध्येऽवसाने तु कर्मणो यद्विनिश्चितमिति॥

तुभ्यमेतावद्दं दास्यामीति यद्वेतनं परिमाणतो निश्चितं तत्त्रिधा विभाज्य कर्मण आदिमध्यान्तेषु त्रिषु कालेष्वन्यतमकाले दद्यादित्यर्थः एतच्चैतावद्वेतनं दास्यामीति भाषायाः सत्वे। असत्वे त्वाह स एव।

भृतावनिश्चितायां तु दशभागमवाप्नुयुः।
लाभं गोवीर्य्यशस्यानाम्वणिग्गोपकृषीवला इति॥

दशभागं दशमम्भागङ्गोवीर्य्यं पाल्यमानगवादिभवम्पयोदध्यादि। यदि कर्मस्वामी भृत्याय दशमम्भागन्न प्रयच्छति तदाऽसौ राज्ञा दाप्य इत्याह याज्ञवल्क्यः

दाप्यस्तु दशमम्भागं वाणिज्यपशुशस्यतः।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षितेति॥

यस्तु स्वामी वेतनपरिच्छेदनकृत्वैव भृत्यं कारयति स तस्माद्वाणिज्य पशुशस्यलक्षणात्कर्मणः सकाशाद्यल्लब्धं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीय इत्यर्थः। यत्तु त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहक इति बृहस्पति वचनम् तद्भक्तावासस्ताध्याक्रष्ट क्षेत्रविषयम्। व्यवस्थित विकल्पन्यायस्। कथमत्र व्यवस्थेत्याकाङ्क्षायामाह स एव।

भक्ताच्छादभृतः सीराद्भागं गृह्णीत पञ्चमम्।
जातशस्यात्त्रिभागं तु प्रगृह्णीयादथाभृत इति॥

अशनाच्छादनाभ्यां भृतः कर्षीवलो लाङ्गलकृष्टं क्षेत्रजातशस्यात्पञ्चमम्भागं गृह्णीयात्। ताभ्यामभृतस्तु तृतीयं

भागमित्यर्थः। अथवा यत्रैतावद्दास्यामीति नास्ति परिभाषा तत्रेदमनूक्तं द्रष्टव्यम्।

समुद्रया न कुशला देशकालार्थदर्शिनः।
नियच्छेयुर्भृतिं यान्तु सा स्यात्प्रागकृता यदीति॥

एतावद्दास्यामीति परिभाषितेऽपि क्वचिच्छतान्न्यूनमपि स्वबुद्धिमात्रपरिकल्पितं देयं क्वचित्ततोऽधिकमपि देयमित्याह। याज्ञवल्क्यः। देशं कालञ्च योऽतीयाल्लाभं कुर्य्याच्च योऽन्यथा।

तत्र स्यात् स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके इति॥

यो भृत्यः स्वाम्यनुज्ञां विना स्वातन्त्र्येण वाणिज्यादिकर्मणः फलसाधकत्वाद्यादकं देशं कालं चातिक्रामति लाभं वा बहुतरव्ययेन स्वल्पं करोति तस्मै पूर्वपरिभाषितभृतिमध्ये स्वामी स्वेच्छानुसारेण किञ्चिद्दद्यात्। यस्तु स्वातन्त्र्येण बहुलाभं करोति तस्मै परिभाषितमूल्याधिकं किञ्चिद्देयं स्वामिना पारितोषिकमित्यर्थः। अनेकभृत्यसाध्यकर्मणि वेतनार्पण-प्रकारमाह स एव।

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम्।
उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथा श्रुतमिति॥

उभयोरपीत्यपिना बहूनां ग्रहणं अस्मिन् गृहादौ कृते भवतामेतावद्दास्यामीति परिभाषिते द्विबहुभिरारब्धं कर्म यदि व्याध्यादिवशान्न समापितं तदा तेषु यो यावत्कर्म करोति तस्मै तत्कर्म्मानुसारेण मध्यस्थपरिकल्पितं वेतनं देयम्। न तु साम्येन दानञ्च परिसमाप्त्यभावाद्दानम्। यदि तैः समापितं तदा यथा परिभाषितं देयन्न तु प्रत्येकं कृत्स्नं दा-

तव्यं नापि कर्मानुसारेण परिकल्प्य दातव्यमित्यर्थः। यस्तु वेतनं गृहीत्वा समर्थोऽपि न कर्म करोति तं प्रत्याह

बृहस्पतिः। गृहीतवेतनः कर्म न करोति यदा भृतः।
समर्थश्चेद्दमन्दाप्यो द्विगुणन्तञ्च वेतनमिति॥

दमं शक्त्यनुसारेण राज्ञे दद्यात्। गृहीतञ्च वेतनं द्वैगुण्येन स्वामिने दद्यादित्यर्थः। नारदोऽपि।

भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेदिति।

याज्ञवल्क्योऽपि।

गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेदिति॥

अस्मिन्नेव विषये वेतनाग्रहणे त्वाह स एव। अगृहीते समन्दाप्य इति यावता वेतनेन भृत्यत्वमङ्गीकृतं तावदेव स्वामिने देयन्न तु राज्ञे दण्डमित्यर्थः। यद्वाङ्गीकृताम्भृतिं दत्त्वा बलात्कारयितव्य इत्याह नारदः।

कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिम्बलादिति॥

प्रतिश्रुत्येति प्रारम्भस्याप्युपलक्षणार्थम् अतएव कात्यायनः। कर्मारम्भं तु यः कृत्वा सिद्धिन्नैव तु कारयेत्।

बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हतीति॥

कियद्द्रव्यं दण्ड इत्यपेक्षायामाहतुर्वृद्ध मनु बृहस्पती।

प्रतिश्रुत्य न कुर्य्याद्यः स कार्यः स्याद्बलादपि।
स चेन्न कुर्य्यात्तत्कर्म प्राप्नुयाद्विशतं दममिति॥

द्विशतं कार्षापणद्विशतमित्यर्थः। यत्तु मनु वचनम्।

भृतोनार्त्तो न कुर्य्याद्यो दर्पात्कर्म यथोदितम्।
स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनमिति॥

तदल्प दण्डत्वाद्भागासिद्धि विषयमिति स्मृति चन्द्रिकायाम्

अङ्कन्यून कर्म करण त्रिपर्यमिति मदनरत्ने। किचिन्नाः न कर्म करणे त्वाह स एव।

यथोक्तमार्त्तः सुस्थोवा यस्तत्कर्म न कारयेत्।
न तस्य वेतनं देयमल्पोनस्यापि कर्मण इति॥

सुस्थो वा कर्म कारयेदिति वदता सुस्थेऽपि स्वयं कर्त्तृत्व नियमो नास्तीति दर्शयति। आर्त्तो यदि आर्त्त्युपशमानन्तरं स्वाङ्गीकृतं कर्म करोति तदार्त्ते दीर्घकालतया कालक्षेपेऽपि भृत्यदोषाभावाद्वेतनमसौ निर्विवादं लभतइत्याह स एव।

आर्त्तस्तु कुर्यात्सुस्थः सन् यथाभाषित मादितः।
सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनमिति॥

आदितः आदौ यथा भाषितं यथा प्रतिज्ञातं तथा कुर्यादित्यर्थः। सुदीर्घस्यापि कालस्य अत्ययेऽपीतिशेषः। यस्तु कालविशेषावधिकं कर्म प्रतिज्ञाय तत्कालापूर्त्तावेव कर्म त्यजति तं प्रत्याह नारदः।

कालेऽपूर्णे त्यजन् कर्म भृते र्नाशमवाप्नुयादिति।

अत्र दण्डमप्याह विष्णुः। भृतकश्चापूर्णे काले त्यजन् सकलमेव मूल्यञ्जह्यात् राज्ञे च पणशतं दद्यादिति। मूल्यं वेतनम्। स्वामिदोषात्त्यागे तु यावति काले कर्म कृतं तत् कालानुसारेण कल्पितं वेतनं लभत इत्याह नारदः।

स्वामिदोषादपक्रामन् यावत् कृतमवाप्नुयादिति।

स्वामिदोषो विनापराधं निष्ठुरभाषणादिः। अत्र दण्डमप्याह विष्णुः। स्वामी चेद्भृतकमपूर्णे काले जह्यात् तस्य सर्वमेव मूल्यं दद्यात् पणशतञ्च राजन्यत्र भृतदोषादिति। स्वामिद्रव्यस्य भृत्यदोषेण नाशेयत् कर्त्तव्यं तदाह स एव। तद्दो-

पेण यद्विनश्येत्तत् स्वामिने देयमन्यत्र दैवोपघातादिति।
दैवोपघातो राजकृतस्याप्युपलक्षणम्। स्वामिने देयं मूल्यं-
द्वारेणेतिशेष। अत्रदासविशेषाद्विशेषमाह वृहन्मनुः।

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितमिति।

प्रमादान्नाशित मनवधाननाशितं सममेवदद्यात्। द्रोह-
नाशितन्तीव्रप्रहारादिना द्रोहेण नाशितं द्विर्द्यिोर्द्विगुणं
दाप्यइत्यर्थः। भृत्यदोषाभावे यदन्यत एव नष्टं तन्न देय-
मित्याह स एव।

न तु दाप्यो हृतञ्चौरैर्दग्धमूढ जलेन वेति।

ऊढं नीयम्। यस्तु वाहकोवाह्यं द्रव्यं प्रज्ञाहीनत्वा-
दिना स्वदोषेण नाशयति तं प्रत्याह नारदः।

भाण्डं व्यसनमागच्छेद्यदि वाह कदोषतः।
दाप्यो यत्तत्र नश्येत्तु दैवराजकृतादृत इति॥

भाण्डं वहनीयं द्रव्यं मुक्तादि। व्यसनन्नाशम्। अत्र-
भाण्डवाहकयोर्ग्रहणक्रमेण वलीवर्दकृषीबलयोरुपलक्षण-
मिति मदनरत्ने। अत्रापि प्रमादान्नाशितं दाप्यः समं द्विर्द्रो-
हनाशितमिति वृद्धमनूक्तो विशेषोऽवगन्तव्यः। यस्तु वा-
हकः स्वदोषेण प्रस्थानविघ्नङ्करोतीति स द्विगुणां भृतिन्दाप्य
इत्याह कात्यायनः।

विघ्नं यो वाहको दाप्यः प्रस्थाने द्विगुणाम्भृतिमिति।

विघ्नं करोतीतिशेषः। वाहकग्रहणं प्रदर्शनार्थं न तु
विवक्षितन्तेनायुधीयादि विघ्नकारिणोऽप्येतदिति मन्तव्यम्।
अतएव नारदः।

द्विगुणां तु भृतिन्दाप्यः प्रस्थाने विघ्नमाचरन्निति।

सामान्येनोक्तवान्। याज्ञवल्क्योऽपि।

प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिमिति।

एतच्च भृत्यन्तरसम्पादनकालासम्भवविषयम्। अङ्गीकृतकर्माकरणस्यापि यदा सहायान्तरलाभेन प्रस्थानविघ्नानापादकत्वन्तदा त्वाह स एव।

प्रक्रान्ते सप्तमम्भागञ्चतुर्थम्पथि सन्त्यजन्।

भृतिमर्द्धे पथे सर्वां प्रदाप्यस्त्याजकोऽपिचेति॥

प्रक्रान्ते कर्मणि स्वाङ्गीकृतं कर्म त्यजन् भृत्यो भृतेः सप्तमम्भागन्दाप्यः। गमने प्रारब्धे पथि त्यजन् भृतेश्चतुर्थं भागम्। अर्द्धे पथे त्यजन् सर्वां भृतिमित्यर्थः। त्याजकोऽपिचेत्यस्यायमर्थः गमनारम्भानन्तरं स्वामी यदि त्याजयति तदा पूर्वोक्तक्रमेण भृत्याय सप्तमभागादिकं दापनीय इति। एतच्चाव्याधितादि विषयम्। व्याधितस्यापराधाभावात्। यच्च स्वामिनात्याजने चतुर्थभागदापन मुक्तं तदविक्रीतम्भाण्ड स्वामिविषयम्। विक्रीतभाण्डस्वामिना यत् कर्त्तव्यं तदाह वृहन्मनुः।

पथि विक्रीय तद्भाण्डम्वणिक् भृत्यं त्यजेद्यदि।

अथ तस्यापि देयं स्याद्भृते रर्द्धं लभेत स इति॥

पथि भाण्डस्य चौरादिभिः प्रतिरोधे राजादिभिरपहृते स्वामिनः कर्त्तव्यमाह।

कात्यायनः। यदा च पथि यद्भाण्डामारङ्गोल ह्रियेत वा।

यावानध्वागतस्तेन प्राप्नुयात्तावतो धनमिति।

भारवाहकस्वीकृतेन यानादिना भाण्डनेतारं प्रत्याह नारदः।

अनयन्नाटयित्वा तु भाण्डवान्यानवाहनम्।

दाप्योभृतिचतुर्भागं सर्वामर्द्धे पथे त्यजन्निति॥

यानं शकटादि वाहनं अश्वादि अयमर्थः। यो यानादिना भाण्डनयनं कर्त्तुम्परकीयं यानादिकम्भाटयित्वा प्रापणादिकार्योपाधिकं परिक्रयं कृत्वा तन्न नयति स यान स्वामिने परिकल्पितस्य भाटकस्य चतुर्थांशन्दाप्यः। यस्तु तन्नीत्वाऽर्द्ध मार्गेत्यजति स सर्वां भृतिन्दाप्य इति। यस्तु शकटादिकं भाटयित्वा तमेवोपकारशून्यमादाय देशान्तरङ्गच्छति भाटकं च न प्रयच्छति तं प्रत्याह वृद्धमनुः।

यो भाटयित्वा शकटं नीत्वा वान्यत्र गच्छति।
भाटं न दद्याद्दाप्यः स्यादनूढस्यापि भाटकमिति॥

अनूढस्यापि अकृतोपकारस्यापीत्यर्थः। यस्तु कृते कृत्ये समनन्तरं वाहनादेः समर्पणं न करोति तस्य समर्पणपर्यन्तभाटकदानमाह।

कात्यायनः। हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः।
नार्पयेत् कृतकृत्यः संस्तावद्दाप्यः सभाटकम्॥
गृहवार्यापणादीनि गृहीत्वा भाटकेन यः।
स्वामिने नार्पयेद्यावत्तावद्दाप्यः सभाटकमिति॥

वारिशब्देन तदाधारभूतं पात्रं लक्ष्यते। नार्पयेत् कृतकृत्यः सन्नित्यनुषङ्गः। परभूमौ गृहनिर्माणाय भाटकदातारं प्रत्याह नारदः।

परभूमौ गृहं कृत्वा स्तोमन्दत्त्वा वसेत्तु यः।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकमिति॥

स्तोमम्भाटकं स्तोमाप्रदानेऽप्याह स एव।

स्तोमाद्विना वसित्वा तु परभूमावनिश्चितः।
निर्गच्छं स्तृणकाष्ठानि न गृह्णीयात् कथञ्चन॥

यान्येव तृणकाष्ठानि त्विष्टकाविनिवेशिताः।
विनिर्गच्छंस्तु तत्सर्वं भूमिस्वामिनि वेदयेदिति॥

स्वामिने निवेदयेदित्यर्थः। अनिश्चित इति वदता तृणकाष्ठादि ग्रहणाग्रहणपरिभाषाविहीनविषयमेतदिति दर्शितम्। परिभाषाविषये तु यथा परिभाषितं कर्त्तव्यम्। भाटके गृहीतानां जलपात्रादीनां भङ्गे नाशे च विशेषमाह स एव।

स्नोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत्।
गृहीतुराभवेद्भग्नं नष्टञ्चान्यत्र संप्लवादिति।

स्नोमवाहीनि भाटकगृहीतानि पूर्णपरिभाषितभाटकालानि तत्स्वामिनं प्रापयेदिति पूर्वार्द्धार्थः। भग्नमेकदेशेन विकृतम् नष्टम्। कात्स्न्येन विकृतम्। संप्लवः परस्परसङ्घर्षः तद्भिन्नप्रकारेण यद्भग्नन्नष्टञ्च तद्भाटकगृहीतुर्भवति। संप्लवेन तु यद्भग्नन्नष्टञ्च तद्भाटकदाता पूर्ववत्कृत्वा मूल्य द्वारेण सादेयमित्यर्थः। व्याधितस्य भृत्यस्य स्वामिना पथित्यागे दण्डमाह कात्यायनः।

त्यजेत्पथि सहायं यः श्रान्तं रोगार्त्तमेव वा।
प्राप्नुयात् साहसं पूर्वं ग्रामे त्र्यह मपालयन्निति॥

स्वाम्यनुज्ञातेन भृत्येनापराधे कृते सोऽपराधः स्वामिन एवेत्याह बृहस्पतिः।

प्रभुणा विनियुक्तः सन् भृतको विदधाति यः।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयादिति॥

स्वामी कृतकर्मणे भृतकाय यदि न वेतनं ददाति तदाऽसौ राज्ञा दापनीयः। इत्याह स एव।

कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते।

राज्ञा दापयितव्यः स्याद्वेतनञ्चानुरूपत इति ॥

वेश्यातदुपभोक्तृविषये नारद आह ।

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।

अनिच्छन् शुल्कदातापि शुल्कहानि मवाप्नुयादिति ॥

एतदव्याधितादि विषयम् । व्याधितादि विषयेत्वाह ।

बृहस्पतिः । व्याधिता सभ्रमा व्यग्रा राजकार्यपरायणा ।

आमन्त्रिता च नागच्छेदवाच्या वडवा स्मृतेति ॥

आमन्त्रिता आहूता । वडवा दासी तद्ग्रहणमत्र पण्यस्त्री प्रदर्शनार्थम् । उपभोक्तारं प्रत्याह नारदः ।

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् ।

अक्रमेण तु सङ्गच्छेद्यातदन्तनखादिभिः ॥

अयोनौ यः समाक्रामेद्बहुभिर्वापिवासयेत् ।

शुल्कं सोऽष्टगुणं दाप्यो विनयन्तावदेवत्विति ॥

वेश्यायास्त्वपराधे दण्डादिकं मत्स्यपुराणे दर्शितम्

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ।

तान्दमन्दापयेद्द्यादितरस्यापि भाटकमिति ॥

इतरस्य दत्तशुल्कस्य । तत्रैव विशेषान्तर मुक्तम् ।

अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात् ।

तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम् ॥

नीत्वा भोगन्न यो दद्याद्दाप्यो द्विगुण वेतनम् ।

राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते ॥

बहूनां व्रजतामेकां सर्वे तद्द्विगुणं धनम् ।

तस्यै दद्युः पृथक् राज्ञे दण्डञ्च द्विगुणम्परमिति ॥

अत्र निर्णेतृनाह नारदः ।

वेश्याप्रधाना यास्तत्र कामुकास्तद्गृहोषिताः ।
तत् समुत्थेषु कार्येषु निर्णयं संशये विदुरिति ॥

इति वेतनादानाख्यव्यवहार पदम् ॥ अथ सम्विद्यतिक्रमाख्यव्यवहारपदम् । तस्य स्वरूपं व्यतिरेकमुखेन दर्शयति । नारदः । पाखण्डनैगमादीनां स्थितिः समयउच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतमिति ॥

पाखण्डाः वैदिकमार्गद्वेषिणः चपणकादयः । नैगमाः सार्थिका वणिज इति मदनरत्ने । नैगमाः वेदप्रामाण्याभ्युपगन्तारः पाशुपतादय इति मिताक्षरायाम् । आदिशब्देन विप्राह्मण समूहादीनां ग्रहणम् । समयस्यानपाकर्म अव्यतिक्रमः । समयपरिपालनमिति यावत् तद्यतिक्रम्यमाणं विवादपदम्भवतीत्यर्थः । तद्रूपयोग्यार्थमाह ।

बृहस्पतिः । वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत् तत्र तेषां वृत्तिं प्रकल्पयेदिति ॥

याज्ञवल्क्योऽपि । राजा कृत्वा पुरे स्थानं ब्राह्मण्यं न्यस्य तत्र तु ।
त्रैविद्यं वृत्तिमद् ब्रूयात् स्वधर्मः पाल्यतामिति ॥

ब्राह्मणानां समूहो ब्राह्मण्यम् ।ब्राह्मण मानववाडवाद्यदिति सूत्रेण यत् । विद्या वेदाः तिसृणां विद्यानां समाहारस्त्रिविद्यम् ॥ त्रिविद्यमधीते इति त्रैविद्यम् । तदधीते तद्वेदेति अण् प्रत्ययः । ननु द्विगोर्लुगनपत्ये इति सूत्रेणाणोलुक्कस्मान्न भवति द्विगुनिमित्तत्वाभावादिति गृहाण । तेषां वृत्तिं प्रकल्पयेदित्यस्याऽर्थो बृहस्पतिनैव विवृतः ।

अनाच्छेद्य करास्तेभ्यःप्रदद्याद्गृहभूमयः ।
मुक्तभाव्यश्च नृपतिर्लेखयित्वा स्वशासनमिति ॥

अनाच्छेद्यकराः। अग्राह्यकराः। एतदुक्तम्भवति। आगामि नृपतिभिरग्राह्यकराः तेभ्य विसृष्टकराश्च गृहभूमयः प्रदद्यादिति। एवं नियुक्तैर्यत्कर्त्तव्यं तदाह याज्ञवल्क्यः।

निजधर्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च य इति॥

निजधर्माविरोधेन श्रौतस्मार्त्तकर्माविरोधेनासामयिकः समयान्निष्पन्नो यो धर्मो गोप्रचारोदकरक्षणदेवगृहपालनादिरूपः सोऽपि यत्नेन पालनीयः। यश्च राज्ञा कृतो निजधर्माविरोधेनैव यः सामयिको धर्मो यावत्प्रयिकम्भोजनन्देयमस्मद्राष्ट्रमण्डले तुरगादयो न प्रस्थापनीय इत्येवं रूपः सोऽपि यत्नेन रक्षणीय इत्यर्थः। बृहस्पतिरपि।

नित्यं नैमित्तिकं काम्यं शान्तिकम्पौष्टिकन्तथा।
पौराणां कर्मकुर्य्युस्ते सन्दिग्धे निर्णयं तथेति॥

पौराणां पुरवासिनामित्यर्थः। एवं राजनियुक्तसमुदायविशेषस्य कार्य्यविशेषउक्तः। सर्वसमुदायानाञ्च कार्य्यमाह स एव। ग्रामश्रेणिगणानाञ्च सङ्केतः समयक्रिया।

बाधाकाले तु सा कार्य्या धर्मकार्य्ये तथैव च॥
चाटचौरभये बाधाः सर्वसाधारणाः स्मृताः।
तत्रोपशमनं कार्य्यं सर्वैर्नैकेन केनचिदिति॥

गणानाञ्चेत्यत्र च शब्दः पाषण्डनैगमादीनां समुच्चयार्थः। ततश्च गणपाषण्डनैगमादीनां समयकरणमन्तरेण यद्युपद्रवो दुःपरिहरः धर्मकार्य्यं च दुःसाध्यन्तदा पारिभाषिकी समयक्रिया सर्वैर्मिलितैः कार्य्या। चाटो वञ्चकः। चाटचौरादिभ्यो भये प्राप्ते तदुपशमनं सर्वैः कार्य्यमित्यर्थः।

धर्मकार्यमपि सम्भूय कार्यमित्युक्तं तेनैव।
सभाप्रपादेवगृहतडागारामसंस्कृतिः॥
तथानाथ दरिद्राणां संस्कारो यजनक्रिया।
कुलायननिरोधश्च कार्यमस्माभिरंशतः॥
यत्रैतल्लिखितं पत्रे धर्म्या सा समयक्रिया।
पालनीयाः समस्तैस्तैर्यः समर्थो विसम्वदेत्॥
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरादिति।

सभा मण्डपः। प्रपा पानीयशालिका। आरामः उपवनम्। संस्कृतिः जीर्णोद्धारः, संस्कार उपनयनादिकः प्रेतदहनादिकश्च। यजनक्रिया सोमयागादिकर्त्तृभ्यो दानम्। कुलायननिरोधः। कुलायनदुर्भिक्षाद्यपगमपर्यन्तस्य धारणम्। कुल्यायननिरोधश्चेति कल्पतरौ पाठः। कुल्यायननिरोधः कुल्यायाः प्रवर्त्तन प्रतिबन्धौ। एवं कृता समयक्रिया न केवलं समुदायिभिरेव पालनीया अपि तु राज्ञापि आह नारदः।

पाषण्डनैगमश्रेणि पूगव्रातगणादिषु।
संरक्षेत्समयं राजा दुर्गे जनपदे तथेति॥

पाषण्डा वेदोक्तलिङ्गधारण व्यतिरिक्ताः सर्वे लिङ्गिनः। तेषु विहितभिक्षाचरणाद्याः सन्ति। नैगमाः सार्थिका वणिक् प्रभृतयः। तेषु सकुक्षकसन्देशहर पुरुषतिरस्कारिणो दण्ड्या इत्येवमादयोबहवः समया विद्यन्ते। अथ वा नैगमाः आप्त प्रणेतृत्वेन ये वेदं प्रामाण्यमिच्छन्ति पाशुपतादयः। श्रेणयः एकशिल्पोपजीविनः। तास्विदमनयैव श्रेण्या क्रियमित्येवमादिकाः समया वरीवर्त्तन्ते। पूगा हस्त्यश्वारोहादयः। व्रातगणशब्दयोरर्थमाह।

कात्यायनः । नानायुधधरा व्राताः समवेतास्तु कीर्त्तिताः ।

कुलानां हि समूहस्तु गणः सम्परिकीर्त्तित इति ॥

पूगे व्राते वास्थ सुत्सृज्य समरेन गन्तव्यमित्येवमादयः समया न वर्त्तन्ते । गणे तु पञ्चमे दिने पञ्चमे वर्षे वा कर्णवेधः कर्त्तव्य इत्येवमादिः समयास्सन्ति । गणादित्यत्रादिशब्देन ब्रह्मपुरीनिविष्टस्य महाजनादेः परिग्रहः । तत्र गुरुर्दक्षिणाद्यर्थमागतो माननीय इत्यादि समयोऽस्ति । दुर्गे तु धान्यादिकं गृहीत्वा अन्यत्र न तद्विक्रेयमित्यादि रस्ति समयः । जनपदे तु क्वचिद्विक्रेतृसकाशाच्छुल्क ग्रहणमित्याद्यनेकविधः समयो वरीवर्त्तते । तदेतं समयजातं यथा न भ्रश्यति तथा राजा कुर्य्यादित्यर्थः । समूहादि पुरुषविषये विशेषमाह ।

वृहस्पतिः । कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।

विश्वासं कृत्वा यः कुर्य्युः कार्याणि समनन्तरमिति ।

कोशेन देवतास्नानोदकपानेन । लेख्यक्रियया समयपत्रेण । मध्यस्थैः प्रतिभूभिः कार्याणि समूह कार्याणि । एतदुक्तं भवति । समुदायिभिः परस्परं समयातिक्रमाभावाय-कोशादिभिर्विश्वासमुत्पाद्य सामयिककार्याणि कर्त्तव्यानीति ।

कात्यायनोऽपि । समूहानां तु यो धर्मस्तेन धर्मेण ते सदा ।

प्रकुर्युः सर्वकर्माणि स्वधर्मेषु व्यवस्थिता इति ॥

सामयिकधर्मनिजधर्मानतिक्रमेण संमूहकार्याणि समुदायिनः कुर्युरित्यर्थः । याज्ञवल्क्योऽपि ।

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।

सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च य इति ॥

निजधर्माविरोधेनेत्यनेन निजधर्म्माविरोधी सामयि-

को धर्मोयथा सन्ध्यावन्दन वेलायां सर्वैरेव स्वव्यापारपरिहारेण राजभवनं प्रत्यागन्तव्यं यो नायास्यति तस्य प्रथम साहसो दण्ड इति नासौरच्य इत्यर्थादुक्तम् कात्यायनोऽपि।

अवरोधेन धर्म्मस्य निर्जितं राजशासनम्।
तस्यैवाचरणं पूर्वं कर्त्तव्यन्तु नृपाज्ञयेति॥

धर्म्मस्य श्रौतस्मार्त्तादिधर्मस्य निर्जितं कृतमित्यर्थः। राज्ञाप्रवर्त्तितान् धर्म्मान्यो नानुपालयति तस्य दण्डतामाह। स एव। राज्ञाप्रवर्त्तितान् धर्म्मान्यो नरो नानुपालयेत्।

गर्ह्यः स पापो दण्ड्यश्च लोपयन् राजशासनमिति॥

विचित्र बुद्धिभिः समुदायिभिरनेकै रेकमत्येन कार्य्यकरणसम्भवात् द्वित्राः पञ्च वा कार्यचिन्तकाः कर्त्तव्या इत्याह। वृहस्पतिः। द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः।

कर्त्तव्यं वचनन्तेषां ग्रामश्रेणिगणादिभिरिति।

कार्य्यचिन्तकेषु हेयोपादेयान्दर्शयति स एव।

विद्वेषिणो व्यसनिनः शालीनालसभीरवः।
लुब्धाति वृद्धबालाश्च न कार्य्याः कार्य्यचिन्तकाः।
शुचयो वेद धर्मज्ञाः दक्षा दान्ताः कुलोद्भवाः॥
सर्व कार्य्य प्रवीणाश्च कर्त्तव्याश्च महत्तमा इति॥

शालीनाः। अधृष्टाः। कार्यचिन्तकाः। समुदाय कार्यसाधकविचारकाः। कार्यचिन्तकानामपि समूह हितवादिनां वचनं सर्वैः समूहिभिः कार्य्यमित्याह याज्ञवल्क्यः।

कर्त्तव्यं वचनं सर्वैः समूहहितवादिनामिति॥

समूहन प्रतिकूलस्य प्रथम साहसं दण्ड इत्याह स एव।

यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दममिति॥

प्रथमं पूर्वसाहसम्। कात्यायनोऽपि।

युक्तियुक्तं वचो हन्याद्वक्तुर्योऽनवकाशतः।
अयुक्तञ्चैव यो ब्रूयात्स दाप्यः पूर्वसाहसमिति॥

बृहस्पतिरपि। यस्तु साधारणं हिंस्यात् क्षिपेत्त्रैविद्यमेव वा।
सम्बिक्रियां विहन्याच्च स निर्वास्यस्ततः पुरादिति॥

साधारणम्। समुदाय ग्राह्यं दण्डादि द्रव्यम्। हिंस्यात्। दण्डादेः साह.य्य करणान्नाशयेत्। क्षिपेत् तिरस्कुर्यादित्यर्थः। समूहिनामप्य धर्म्मेण द्वेषादिना कार्य्यकरणे दण्डमाह स एव। बाधां कुर्युर्यैविकस्य सम्भूता द्वेष संयुताः।

राज्ञा तु विनिवार्यास्ते शास्याश्चैवानुबन्धत इति॥

अनुबन्धतः निग्रहतारतम्यानुसारेण मुख्यानामपराध विशेषे दण्डविशेषमाह याज्ञवल्क्यः।

गणद्रव्यं हरेद्यस्तु सम्बिदं लङ्घयेच्च यः।
सर्वस्व हरणं कृत्वा तं राष्ट्राद्विप्रवासयेदिति॥

मुख्य दण्डने समूहस्यैवाधिकारः। अतएव कात्यायनः।

साहसीभेद कारी च गण द्रव्य विनाशकः।
उच्छेद्याः सर्व एवैते विख्याप्यैव नृपे भृगुरिति॥

नृपे विख्याप्य गणेनोच्छेद्या इत्यर्थः। समूहाशक्तौ तस्य दण्डो राज्ञा विधेयः। अतएव मनुः।

यो ग्राम देशसङ्घानां कृत्वा सत्येन सम्बिदम्।
विसम्वदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत्॥
निगृह्य दापयेच्चैनं समय व्यभिचारिणम्।
चतुः सुवर्णान् षण्णिष्कांश्छतमानञ्च राजतम्॥
एवं दण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः।

ग्रामजातिसमूहेषु समय व्यभिचारिणामिति ॥

एतेषां प्रवासेन चतुः सुवर्णपरिष्कशत मानरूपाणाञ्चतुर्णां दण्डानाञ्चाति विद्यागुणाद्यपेक्षया व्यवस्था कल्पनीया। यत्तु कश्चिदेतेषाञ्चतुर्णां दण्डानां क्रमेण ब्राह्मणादि चतुर्वर्ण विषयत्वमित्याह तदज्ञानविलसितम्। एतादृश व्यवस्थायां प्रमाणाभावात्। ब्राह्मणस्य प्रवासनं क्षत्रियादीनाञ्चतुः सुवर्णादि दण्ड इत्यस्यानुचितत्वाञ्च। मर्मोद्घाटकादीनां पुरान्निर्वासन मेव दण्ड इत्याह बृहस्पतिः।

अरुन्तुदः सूचकश्च भेद कृत्साहसी तथा।
श्रेणिपूगनृपद्विष्टः क्षिप्रं निर्वास्यते तत इति ॥

अरुन्तुदः मर्मोद्घाटकः। सूचकः पिशुनः। पिशुनौ खलसूचकावित्यभिधानात्। भेदकृत् समुदायिषु वैमत्यकृत्। समूहस्थानान्निर्वास्यते समूहेनेतिशेषः न च समूहस्य दण्ड करणेऽनधिकारात्समूहेतिशेषकरणमयुक्तमिति वक्तव्यम्। पूर्वोक्त कात्यायन वचनेन समूहस्यैव तुल्यदण्डनेऽधिकारस्य प्रतिपादितत्वात्।

पूगश्रेणिगणाध्यक्षाः पुरदुर्ग निवासिनः।
वाग्धिग्दण्ड परित्यागं प्रकुर्युः पापकारिणाम् ॥
तैः कृतं यत्स्वधर्म्मेण निग्रहानुग्रहं नृणाम्।
तद्राज्ञायनु मन्तव्यं निसृष्टार्था हि ते स्मृता इति ॥

बृहस्पतिनाप्यभिधानाच्च। वाग्दण्डः पापिष्ठोऽसीत्यादि भाषणम्। धिग्दण्डोधिक्काभि भाषणम्। परित्यागोऽसम्यव- हार्य्यत्व करणं निर्वासनं वा। उभयत्रापि लोके परित्याग शब्दप्रयोग दर्शनात्। एतच्चार्थं दण्डादेरुपलक्षणार्थम्।

निग्रहानुग्रहमित्येते पुनः साम्येनाभिधानात् निसृष्टार्था अनुज्ञातकार्य्याः। नारदोऽपि।

पृथग्गणांस्तु ये भिन्द्युस्ते विनेया विशेषतः।
आवहेयुर्भयं घोरं व्याधिवत्तेह्युपेक्षिता इति॥

गणान् श्रेण्यादिरूपान् समुदायान्। बृहस्पतिरपि।

तत्र भेदमुपेक्षां वा यः कश्चित्कुरुते नरः।
चतुः सुवर्णषण्निष्कां तस्य दण्डो विधीयत इति॥

सुवर्णचतुष्टयषण्निष्कयोः शक्त्यादितारतम्यानुसारेण गुणवद्गुणवद्विषयत्वेन वा व्यवस्था मन्तव्या। पाषण्डादि सर्व्वसमूहेषु राज्ञा यथा वर्त्तितव्यन्तदाह नारदः।

यो धर्मः कर्म यच्चैषामुपस्थान विधिश्च यः।
यच्चैषां प्रत्युपादान मनुमन्येत तत्तथेति॥

धर्मःसत्यवदनादिः। कर्मप्रातःपर्य्युषितभिक्षाटनादिः उपस्थानविधिः समूहकार्यार्थं मृदङ्गादि ध्वनिमाकर्ण्य मण्डपादौ मेलनम्। प्रत्युपादानञ्जीवनाय तापसवेश परिग्रहः। एषां पाषण्डिनामित्यर्थः। अन्यदपि राजकृत्यमाह स एव।

प्रतिकूलञ्च यद्राज्ञः प्रकृत्या च मतञ्चयत्।
बाधकञ्च यदर्थानां तत्तेभ्योऽविनिवर्त्तयेदिति॥

यद्राज्ञः प्रतिकूलम्।

यथा यस्य राज्ञस्तु कुरुते शूद्रोधर्म विवेचनम्।
तस्य प्रसीदते राष्ट्रं बल कोशश्चनश्यति इति॥

एवञ्च सार्थिकादि शूद्र कर्तृकयोर्विवादे धर्म्म विवेचनं च यद्राज्ञ इत्यस्योदाहरणम्मन्तव्यम्। प्रकृत्या स्वभावत एव। मतं अवज्ञातार्थं पाषण्डादिषु ताम्बूलभक्षणादिकम्। यच्चा-

यीनां बाधकान्धन नाशकरादिकं रसवाधादिकं तत्तेभ्योपि निवर्त्तयेत्। यथा तेन कुर्वन्ति तथा कुर्यादित्यर्थः। अन्यदपि निवर्त्त्यमाह स एव।

दोषवत्करणं यत्स्यादनाम्नाय प्रकल्पितम्।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्त्तयेत्॥

लोभादिदोषवत्करणं श्रुतिस्मृति विरुद्धं विधवादौ वेश्यात्वादिकं पाषण्डादिभिः प्रकल्पितम्। तद्बहुकाल प्रवृत्तमपि राज्ञानिवर्त्तनीयमित्यर्थः। त्रैविद्यानां प्रतिपादितं धर्मं श्रेण्यादिष्वतिदिशति याज्ञवल्क्यः।

श्रेणिनैगम पाषण्डिगणानामप्ययं विधिः।
भेदञ्चैषां नृपो रक्षेत्पूर्ववृत्तिं च पालयेदिति॥

समूहकार्यार्थमागताय यद्राज्ञा समूह पूजार्थं दत्तन्तद्यदि समूहायासौ न ददाति तदा एतद्दत्तं एकादश गुणं दाप्य इत्याह स एव।

समूह कार्य आयातान् कृतकार्यान् विसर्जयेत्।
स दानमानसत्कारैः पूजयित्वा महीपतिः॥
समूहकार्य्यं प्रहितो यल्लभेत तदर्पयेत्।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत् स्वयमिति॥

यल्लभेत समूहं सम्माननार्थमितिशेषः। यतो राजदत्तं सर्वसाधारणमतो यथांशतो विभागं कृत्वाग्राह्यं निःस्वादिभ्यो वा दातव्यमित्याह बृहस्पतिः।

ततो लभ्येत यत्किञ्चित् सर्वेषामेव तत्समम्।
षण्मासिकं मासिकं वा विभक्तव्यं यथांशतः॥

देयं वा निःस्वबृद्धान्धस्त्री बालातुररोगिषु।
सान्तानिकादिषु तथा धर्म्म एष सनातन इति॥

एकस्य पुरुषस्य षण्मास निर्वाहाय पर्य्याप्तं कुटुम्बस्य वैकस्य षण्मासनिर्वाहाय पर्य्याप्तं लब्धं वा यथांशतः स्वस्वांशानुरूपेण विभजनीयन्निःस्वादिभ्यो वा देयमिति तात्पर्य्यार्थः राजप्रसादलब्धव द्रव्यमपि सर्वेषां सममित्याह स एव।

यत्तैः प्राप्तं रक्षितं वा गणार्थं वा ऋणं कृतम्।
राजप्रसाद लब्धञ्च सर्वेषामेव तत्सममिति॥

अयमर्थः। तैः समूहकार्य्यार्थं प्रहितैर्यत्सीमाविवादावधिं क्षेत्रारामादिकं धर्म्माधिकरणेन्यायतः प्राप्तम्। यच्च परैरपह्रियमाणं रक्षितं यच्च समूहप्रयोजनार्थमुपात्तमृणम्। यच्च राजप्रसादलब्धं तत्सर्वं सर्वेषां समुदायिनां सममिति। गण कृतमृणं सर्वेषां सममित्यस्य क्वचिदपवादमाह कात्यायनः।

गणमुद्दिश्य यत्किञ्चित्कृत्वर्णं भक्षितम्भवेत्।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेदिति॥

तैः मुख्यैः ये तु समुदायानुग्रहात्तदन्तर्भावं प्राप्ताः ये च समुदायक्षोभादिना ततोवहिर्भूतास्तान् प्रत्याह स एव।

गणानां श्रेणिवर्गाणां गताः स्युर्येपि मध्यताम्।
प्राक्तनस्य धनर्णस्य समांशाः सर्व एवेति॥
तथैव भोज्य वैभव्य दानधर्म क्रियासु च।
समूहस्थोऽंशभागीस्यात् प्रागतस्त्वंशभाङ्नत्विति॥

इति सम्विद्व्यतिक्रमाख्यं व्यवहार पदम्। अथ क्रीतानुशयाव्यवहारपदम्। तत् स्वरूपमाह नारदः।

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते।
क्रीतानुशय इत्येतद्विवाद पदमुच्यत इति॥

न बहु मन्यते। सम्यगसम्यगिति पूर्वं विचार्य न गृहीत मित्यर्थः। क्रीतं परीक्षणीयमित्याह बृहस्पतिः।

परीक्षेत स्वयं क्रीत मन्येषाञ्च प्रदर्शयेत्।
परीक्षितं बहुमतं गृहीता न पुनस्त्यजेदिति॥

अन्येषां पण्यगुणदोष विदामितिशेषः नारदोऽपि।

क्रेता पण्यं परीक्षेत प्राक्स्वयं गुणदोषतः।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्नभवेत्पुनरिति॥

चर्मादीनां परीक्षा सद्यः कार्या। तथा च व्यासः।

चर्म्मकाष्ठेऽष्टकासूत्र धान्यासवरसस्य च।
वसु कुप्य हिरण्यानां सद्य एव परीक्षणमिति॥

अत्र वसु शब्देन रूप्यं गृह्यते। कुप्यं हेमव्यतिरिक्तं त्रपुसीसादिकम्। तथा च हेमरूप्ये प्रस्तुत्यामर सिंहः। ताभ्यां यदन्यत्तत्कुप्यमिति। क्रीतपण्य द्रव्य विशेषण परीक्षणका-लावधिमाह नारदः।

त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु।
मुक्तावज्र प्रबालानां सप्ताहं स्यात्परीक्षणम्॥
द्विपदामर्द्धमासन्तु पुसान्तद्द्विगुणं स्त्रियाः।
दशाहः सर्ववीजानामेकाहो लोहवाससाम्॥
अतोऽर्वाक्पण्य दोषस्तु यदि सञ्जायते क्वचित्।
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयादिति॥

त्र्यहात् क्रयदिना दारभ्येतिशेषः। पञ्चाहादित्यादावप्ये-वमेव शेषोऽवगन्तव्यः। त्र्यहं विक्रेत्रे प्रतिदेयमित्यादि विधि-

दर्शनात् त्र्यहाद्दोह्य मित्यादि परीक्षणं प्रीतिदोह्यादि द्रव्य विषयमिति गम्यत इति स्मृति चन्द्रिकायाम्। दोह्यं महि-ष्यादिकम्। वाह्यं बलीवर्दादिकम्। मुक्ताग्रहणं रत्नोपल-क्षणम्। द्विपदाम्पुंसान्दासानामित्यर्थः। तद्द्विगुणं मासेत्यर्थः स्त्रिया दास्यादित्यर्थः। पूर्वोदाहृत चर्मकाष्ठेत्यादि व्यासवचनेन भक्षणार्थं गृहीतानां धान्यादीनां सद्यः परीक्षणाभिधानात् सर्ववीजानामित्यत्र वीजशब्दोवाद्यर्थ गृहीतधान्यपरः। अन्यथा सद्यः परीक्षत्व प्रतिपादक व्यासवचन विरोधः स्यात् अतोऽ-र्वाक् त्र्यहादेरभ्यन्तर इत्यर्थः।

कात्यायनोऽपि। भूमेर्दशाहोऽनुशयः क्रेतुर्विक्रेतुरेवचेति।

भूमेर्क्षेत्रादिरूपाया अनुशयः परावर्त्तनयोग्यः कालः परीक्षाकाल इति यावत्। यथोक्तपरीक्षाकालादतिक्रमे-दोष दर्शनेन प्रतिदानमित्याह स एव।

अविज्ञातन्तु यत् क्रीतं दुष्टं पश्चाद्विभावितम्।
क्रीतन्तत् स्वामिने देयम्पण्यकालेऽन्यथा नत्विति।

अविज्ञातं परीक्षाशैथिल्यात्तत्वतोऽपरिज्ञातम्। दुष्टं वि-भावितं दोषवत्तया ज्ञातमित्यर्थः। काले परीक्षाकाले। अन्यथा तत्कालात्यये दुष्टतया परिभावितमपि तत् स्वामिने देयम्। अविज्ञातन्तु यत्क्रीतमित्यनेन यत् क्रयात् प्राक् अपरीक्ष्य क्रीतन्तत् परीक्षा समये दोषदर्शने परावर्त्तनीयम्। यत्तु परीक्ष्य गृहीतं तन्न परावर्त्तनीयमिति दर्शितमर्थं नारद आह।

क्रीत्वा नानुशयं कुर्याद्वणिक्पण्य विचक्षणः।
क्षयं वृद्धिञ्च जानीयात् पण्यानामागमन्तथा॥

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनरिति ॥

अनुशयं पश्चात्तापम् । पण्यानां अश्वादीनां अस्मिन्देशे-मूल्यहानिरस्मिन्देशे तदाधिक्यमिति क्षयवृद्धी एतद्देशसम्भवमित्यागमश्च क्रयात् प्रागेव जानीयादित्यर्थः । दोषदर्शन मन्तरेण परीक्षाकाल एव प्रत्यर्पणे विशेषमाह कात्यायनः ।

क्रीत्वा चानुशयं पश्चात् त्यजेद्दोषादृते नरः ।
अजुष्टमेव काले तु स मूल्याद्दशमं वहेत् ॥
क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते ।
षड्भागन्तस्य मूल्यस्य दत्त्वा क्रीतं त्यजेन्नर इति ॥

अजुष्टमनभियुक्तम् । काले परीक्षाकाले । अत्रमूल्य दशमभागदानं यदुपभुज्यमानमपि न नश्यति भूम्यादिकं तद्विषयं उपभोगविनश्वरवीजादिविषयं षड्भागदानमिति व्यवस्था ज्ञेया । ननु, विजानताऽप्यनुशयो नकार्यः क्रीत्वा नानुशयं कुर्य्यादिति निषेध सद्भावादिति चेत्सत्यं अपवादस्य सत्त्वात् स चापवादोदर्शितो नारदेन ।

क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्य विक्षतमिति ॥

मन्यत इत्यनेन वस्तुतो दोषाभाव उक्तः द्वितीयादिदिवस मप्रत्यर्पणे विशेषमाह स एव ।

द्वितीयेऽह्नि ददत् क्रेता मूल्यात्त्रिंशांशमाहरेत् ।
द्विगुणं तत्तृतीयेऽह्नि परतः क्रेतुरेव तदिति ॥

परतः तृतीयाह्नः परतः क्रेतुरेव तत्क्रीत्वा अनुशयादि कुर्वानन्नपि नकुर्य्यादित्यर्थः । यत्तु मनुवचनम् ।

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत चेति।

तदुपभोगे नश्वरचेत्र रत्नयानशयनादि विषयम्। यत्तू पभोगेन सदोषमपि विकारप्रापितं तत् परीक्षाकालमध्येऽपि न प्रतिदेयमित्याह नारदः।

परिभुक्तन्तु यद्वासः क्लिष्टरूपं मलीमसम्।
सदोषमपि तत् क्रीतं विक्रेतुर्नभवेत्पुनरिति॥

वासोग्रहणमुपलक्षणमिति मदनरत्ने वासो विषयतैवास्येति माधवीये। पण्यानां देशकाल उपचयापचयौ ज्ञातव्यावित्याह नारदः। क्षयं वृद्धिञ्च जानीयात्पण्यानामागमन्तथेति।

अश्वादि पण्यानामस्मिन् कालेऽस्मिन्देशे च क्षयं वृद्धिं वा जानीयात्तथागमं कुलीनत्वादिज्ञानार्थं उत्पादकजन्मभूम्यादिकञ्च जानीयादित्यर्थः। क्रयकाले मूल्यक्षयवृद्धिदोष दर्शनमन्तरेण क्रीतविक्रीतयोः प्रत्यर्पणे पुनर्ग्रहणे दण्डमाह। याज्ञवल्क्यः। वृद्धिं क्षयं वा वणिजा पण्यानामविजानता।

क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भाग दण्डभागिति॥

वृद्धिं मूल्य वृद्धिं अविजानता क्रेत्रा। एवं मूल्य क्षयमविजानता विक्रेत्रेत्यर्थः। परीक्षाकालातिक्रमेण प्रत्यर्पणे दण्डमाह। मनुः।

अदशाहेतु दशाहस्य न दद्यान्नापि दापयेत्।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षडिति॥

दशाहग्रहणं परीक्षाकालस्य पूर्वोक्तस्योपलक्षणम्। सर्वमेतत्परिभाषणेऽपरिभाषणे तु तदनुसारेणैव प्रतिदानं तदभावादिकं मन्तव्यम्। इति क्रीतानुशयाख्य व्यवहारपदम्।

अथ विक्रीयासम्प्रदानाख्य व्यवहारपदम्। तत् स्वरूपमाह। नारदः। विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते।

विक्रीयासंप्रदानं तद्विवाद पदमुच्यत इति॥

तत्र विक्रेय द्रव्यस्य द्वैविध्यषड्विधत्वे क्रमेणाह स एव।

लोकेऽस्मिन् द्विविधम्पण्यं जङ्गमं स्थावरं तथा।

षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः।

गणिमन्तुलिमं मेयं क्रियया रूपतः श्रियेति॥

दानम्विक्रयः। आदानं क्रयः। गणयित्वा यस्य क्रयः तद्गणिमम्। गणिमं संख्येयं क्रमुकफलादिकं एवं तुलिमादिकं तुलिमन्तुलाधृतं हेमचन्दनादिकम्। मेयम्व्रीह्यादिकम्। क्रियया वाहनदोहनादि रूपया युक्तमिति शेषः। रूपतः रूपेण युक्तं वस्तु पण्याङ्गनादि। श्रिया दीप्त्या युक्तं पद्मरागादिकम्। यदा विक्रेता मूल्यं गृहीत्वा याचमानाय क्रेत्रे विक्रीतवस्तु ददाति तदा यत्कर्त्तव्यं तदाह स एव।

विक्रीय पण्यम्मूल्येन क्रेतुर्यो न प्रयच्छति।

स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलमिति॥

यो गृहीत मूल्यो विक्रेता अजातानुशयाय क्रेत्रे प्रार्थ्यमानाय नार्पयति तच्च पण्यं यदि स्थावरात्मकं तदा क्षयेण सहितमसौ दाप्यः। यदा तु जङ्गमात्मकं तदा क्रियाफलेन सहितं इत्यर्थः। विक्रयानन्तरं जात उपभोगो ऽत्र क्षयः। क्रियाफलं दोहनादि क्रियाफलं क्षीरादिकम्। इदञ्च क्रयकालापेक्षया अर्पणकाले मूल्याधिक्ये वेदितव्यम्। मूल्यह्रासे त्वन्यथाभिधानात्। तथाच स एव।

अर्घश्चेदवहीयेत सोदयम्पण्यमावहेदिति॥

अर्वाक् चेदपचीयेतेति कल्पतरौ पाठः। अर्वाक् विक्रीतस्य क्रेत्रे समर्पणात्पूर्वं अपचीयेत हीनमूल्यं भवेत्सोदयम्पण्यमावहेत्। विक्रयकाले यावन्मूल्यं गृहीतं तावता मूल्येनार्पणसमये मूल्यह्रासवशाद्यावदुपचय सहितं लभ्यते तावद्दद्यादित्यर्थः। यदा तु मूल्यसाम्यं तदा पण्योपचय रूपस्यासम्भवात्।

निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च।

याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतमिति॥

वचनोक्ता वृद्धि सहितम्पण्यं दाप्यः। अतएव याज्ञवल्क्यः।

गृहीत मूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति।

सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते इति॥

गृहीत मूल्यम्पण्यं विक्रेता यदि प्रार्थयमानाय स्वदेश वणिजे क्रेत्रे न समर्पयति तच्च पण्यं यदि क्रयकाले बहुमूल्यं सत्कालान्तरे अल्पमूल्येनैव लभ्यते तदा सोदयं वृद्धा सहितं विक्रेता क्रेत्रे दापनीयः। यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति किन्तु क्रयकाले यावदेव यतो मूल्यस्य यत्पण्यमिति प्रतिपन्नम् तावदेव तदा तत्पण्यमादाय तस्मिन्देशे विक्रीणीतस्य यो लाभस्तेनोदयेन सहितं दापनीयः वचनत्रयस्यार्थः। चतुर्थस्य तु यो देशान्तरात्क्रयणार्थमागत्य क्रीणाति तस्मै देशान्तरे तत्पण्य विक्रये यो लाभस्तेन सहितं तत्पण्यं दापनीय इत्यर्थः। देशान्तरलाभ सहितपण्य दानन्न केवलमाद्यं शस्यस्य एव किन्तु मूल्यस्य वृद्धोक्तेऽपीत्याह नारदः।

स्थायिनामेष नियमोदिग्लाभं दिग्विचारिणमिति।

स्थायिनां विक्रेतृदेश स्थायिनां एष नियमः स्थावरस्य स्वयंदाप्य इत्यादिवचनोक्तोनियम इत्यर्थः। विष्णुर्विक्रेतुर्दण्ड-

मप्याह। गृहीतमूल्यं यः पण्यं क्रेतुर्नैव दद्यात्तत्तस्य सोदयं दाप्यो राज्ञा च पणशतं दण्डइति। एतच्चानुशय रहितक्रय विक्रेतृ विषयमिति मदन रत्ने। यस्तु विक्रीयानुशयवशान्नार्पयति यश्च क्रीत्वाऽनुशयवशान्नगृह्णाति तौ प्रत्याह कात्यायनः।

क्रीत्वा प्राप्तान्न गृह्णीयाद्यो न दद्याददूषितम्।
स मूल्याद्दशभागन्तु दत्त्वा स्वन्द्रव्यमाप्नुयात्॥
अप्राप्तेऽथ क्रियाकाले कृते नैव प्रदापयेत्।
एष धर्मो दशाहात्तु परतोऽनुशयो नत्विति॥

अदूषितं जरादिनेतिशेषः। दोह्यवाह्यादिपण्यस्य दोहन वाहनादिरूपः कालोऽल्पक्रियाकालस्तस्मिन्नप्राप्ते सति अग्रहणेऽदाने वा कृते सति न दशमभागं प्रदापयेत् किन्तु तमदत्त्वैव स्वीयं द्रव्यं प्राप्नुयादिति। एष धर्मो दशाहात्प्राग्वेदितव्यः तत ऊर्द्धमनुशयो न कर्त्तव्यः। विक्रीयासम्प्रयच्छतो यद्विक्रीतं पण्यविक्रेतृपार्श्वे स्थितं तस्य यदि नाशः स्यात्तदा विक्रेतुरेव हानिरित्याह याज्ञवल्क्यः।

राजदैवोपघाते न पण्ये दोषमुपागते।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छत इति॥

अत्र याचितस्येतिविशेषणोपादानात् याचनाभावेन विक्रेतुर्हानिरित्यर्थाद्गम्यते। नारदोऽपि।

उपहन्येत वा पण्यं दह्येतापह्रियेत वा।
विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छत इति॥

यथा याचितस्याप्रयच्छतो विक्रेतृहानिस्तथा दीयमानं पण्यमगृह्णतः क्रेतुरपीत्याह स एव।

दीयमानन्न गृह्णाति क्रीतम्पण्यञ्च यः क्रयी।

स एवास्य भवेद्दोषो विक्रेतुर्यो प्रयच्छत इति ॥

अप्रयच्छतः विक्रेतुर्यो दोषः स एवास्य भवेदित्यन्वयः। क्रेतुर्दोषाभिधानस्य फलं पण्यस्य मूलं क्रेत्रे विक्रेत्रा न प्रत्यर्पणीयमिति। दीयमानन्न गृह्णातीति वदता दीयमान ग्रहणेन मूल्यहानिरिति दर्शितम्। क्रयानन्तरं क्रेत्रा न याचितं विक्रेत्रा च न समर्पितं जातश्चौराद्युपद्रवस्तत्र द्वयोः समाहानिः। क्रेतृविक्रेत्रोरुभयोरपि याचनानर्पण शैथिल्येनसापराधत्वादित्युक्तं देवलभट्टैः स्मृतिचन्द्रिकायाम्। याज्ञवल्क्योऽपि।

हानिश्चेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेदिति ॥

क्रेतृदोषो दीयमानस्याग्रहणं यत्र पुनर्जातानुशयः। क्रेताविक्रेत्रा दीयमानन्न गृह्णाति तत्राप्याह नारदः।

दीयमानन्न गृह्णाति क्रीत्वा पण्यं च विक्रयी।

विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयादिति।

क्रयी जातानुशय इतिशेषः। याज्ञवल्क्योऽपि।

विक्रीतमपि विक्रेयं पूर्वक्रेतर्य्यगृह्णतीति ॥

यस्त्वदुष्टं पण्यं दर्शयित्वा सदोषं विक्रीणीते यश्चान्य हस्ते विक्रीतं तत्क्रेत्रनुशयाभाव एवान्यत्र विक्रीणीते तयोः समानो दण्ड इत्याह नारदः।

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति।

स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव तु ॥

तथान्यहस्ते विक्रीय योऽन्यस्मै तत्प्रयच्छति।

द्रव्यन्तद्द्विगुणं दाप्यो विनयं तावदेव त्विति ॥

याज्ञवल्क्योऽपि। अन्य हस्ते च विक्रीतं दुष्टं वा दुष्ट वद्यदि।

विक्रीणीते दमस्तस्य मूल्यात्तु द्विगुणो भवेदिति ॥

बुद्धिपूर्व विषयमेतत्।

ज्ञात्वा सदोषं यः पण्यं विक्रीणीते विचक्षणः।

तदेव द्विगुणं दाप्यस्तत्समं विनयं तथेति।

बृहस्पतिनोक्तत्वात्। अबुद्धिपूर्वक विक्रये तु क्रयपरावर्त्तन मेव। अन्यत्रापि विषय विशेषे परावर्त्तनमाह बृहस्पतिः।

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा।

अस्वतन्त्रेण मूढेन त्याज्यन्तस्य पुनर्भवेदिति ॥

एतत्सर्वं दत्तमूल्ये पण्ये द्रष्टव्यम्। अतएव नारदः।

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्त्तित इति ॥

यत्र पुनर्मूल्यं न दत्तं तत्रापि स एवाह।

अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रय इति ॥

अदत्त मूल्ये तु पण्ये वाङ्मात्रेण क्रये कृते न परावर्त्तनीय मित्येवमादिसमयाभावे सति प्रवृत्तौ निवृत्तौ न कश्चिद्दोष इत्यर्थः। यत्र पुनर्वाङ्मात्र क्रयपरिहारार्थं विक्रेतुर्हस्ते क्रेत्रा किञ्चिद्द्रव्यं दत्तं तत्र क्रेतृदोष वशेन क्रयासिद्धौत्वाह व्यासः। सत्यङ्कारं च यो दत्त्वा यथा कालं न दृश्यते।

पण्यं भवेन्निसृष्टन्तद्दीयमानमगृह्णत इति ॥

निसृष्टं भवेत् उत्सृष्टं भवेदित्यर्थः। अत्र पण्य द्रव्यस्योत्सर्गः सत्यङ्कारद्रव्योत्सर्गोऽभिमतः। अन्यथा वाङ्मात्र क्रयकर्त्तृ तुल्यत्वेन विक्रेतुः सत्यङ्कारद्रव्यग्राहकत्व कृत मन्यत्र विक्रयणाद्यपराधनिमित्तकं सत्यङ्कारद्रव्यस्य द्वैगुण्येन प्रतिदानं न स्यात्। अत्रापि विक्रीतमविक्रेय मित्यनुसन्धेयम्। अस्मिन्नेव विषये विक्रेतृदोषवशेन क्रयासिद्धौ त्वाह याज्ञवल्क्यः।

सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेदिति ॥

सत्यङ्कारः सत्यापनं कृतस्य क्रयस्य सत्प्रतीकरणमिति यावत्। क्लीवे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियामित्यमर कोषाभिधानात्। सत्यङ्काराय कृतं समर्पितं सत्यङ्कारकृतं क्रयं कृत्यं कर्त्तुं यद्विक्रेतृ हस्तेकृतमित्यर्थः। इति विक्रयासम्प्रदानाख्य व्यवहार पदम्। अथ स्वामिपाल विवादाख्य व्यवहार पदम्। तत्र मनुस्तदभिधान प्रतिज्ञां करोति।

पशुषु स्वामिनां चैव पालानाञ्च व्यतिक्रमे।
विवादं सम्प्रवक्ष्यामि यथा वद्धर्म्म तत्वत इति ॥

स्वामिपालयोः प्रतिदिन कृत्यमाह नारदः।

उपानयेद्गा गोपाय प्रत्यहं रजनीक्षये।
चीर्णा पीताश्च ता गोपः सायाह्ने प्रत्युपानयेदिति ॥

चीर्णास्तृणादिकं भक्षितवतीः। पीताः पीतवतीः। स्वामिना प्रातर्यावन्तः समर्पितास्तावन्तो गोपालेन सायं प्रत्यर्पणीया इत्यर्थः। गोग्रहणं पशुमात्रोपलक्षणार्थम्। तथाच याज्ञवल्क्यः।

यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तथेति ॥

गवादि परिपालकस्य भृतिपरिमाणमाह नारदः।

गवां शताद्वत्सतरी धेनुः स्याद्द्विशता भृतिः।
प्रति सम्वत्सरं गोपे संदोहश्चाष्टमेऽहनीति।

प्रतिसम्वत्सरं सम्वत्सरे सम्वत्सरे गोशतपरिपालने वत्सतरीद्विहायनी गौर्भृतिः। द्विशत परिपालने धेनुर्दोग्ध्री सवत्सेति यावत्। अष्टमे दिवसे सन्दोहः सर्वासां गवान्दोहश्च भृतित्वेन कल्पनीयइत्यर्थः। बृहस्पतिरपि।

तथा धेनुभृतः क्षीरं लभेताष्टमेऽह्नीति ।

धेनुभृतः धेन्वाभृतः द्विशतपालक इत्यर्थः। तथा च सन्दोहो धेन्वा समुच्चीयते न वत्सतर्य्येति मदनरत्ने। कल्पतरौ तु धेनु भृतो गोपाल इति व्याख्यातन्तेन वत्सतर्य्यापि समुच्चीयत इति गम्यते। गोग्रहणं महिष्यादीनामुपलक्षणम्। न्यूनाधिक परिपालनत्वे तदनुसारेण भृतिकल्पना द्रष्टव्या। इयञ्च वत्सतर्य्यादि भृतिकल्पनापरिभाषित भृत्यभाव विषया। परिभाषिते तु परिभाषानतिक्रमेणैव देया। मनुस्तु प्रकारान्तरेण भृतिपरिमाणमाह।

गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्।

गोस्वाम्यनुमतो भृत्यः सा स्यात्पालेऽभृतेभृतिरिति॥

दशानान्दोग्ध्रीणां मध्ये वरामुत्कृष्टां स्वीकृत्य तत्क्षीर भृतो भृत्यो गोपो दशदोग्ध्रीपालन कृद्‌ गृह्णीयाद्‌भृत्यर्थम्। सैषाभृतिः पूर्वं द्रव्यान्तरेणाभृते ज्ञेया। यस्तु द्रव्यान्तरेण भृतः तत्र तदेव भृतिरित्यर्थः। यस्तु भृतिं गृहीत्वा पशून्मारयेत् विनाशयति वा तं प्रत्याह याज्ञवल्क्यः।

प्रमाद मृतनष्टांश्च प्रदाप्यः कृतवेतनः इति॥

प्रमादग्रहणं पशुपालकदोषोपलक्षणार्थम्। मनुना प्रमादनाशः स्पष्टीकृतः।

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम्।

हीनं पुरुषकारेण प्रदद्यात्पाल एवत्विति॥

श्वहतम्। शुनाहतम्। विषमे दुर्गमप्रदेशे। पुरुषकारः पुरुष प्रयत्नः। यत्पुरुष प्रयत्नेन हीनं सन्नाशादिकं प्राप्तं तद्दातव्यमित्यर्थः। पुरुषकारश्च वृहस्पतिना दर्शितः।

क्षमि चोरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत्।
व्यायच्छेच्छक्तितः क्रोशे स्वामिने वा निवेदयेदिति ।

व्यायच्छेत् व्यसनाभावाय यतेतेत्यर्थः। चौरैर्बलात्कारेणापहृते न दाप्या इत्याह मनुः।

विघुष्य तु हृतश्चौरैर्न पालोदातु मर्हति।
यदि देशे च काले च स्वामिनः स्वस्य शंसतीति॥

विघुष्य शृङ्कादिभिर्घोषं कृत्वा। देशे स्वाम्यवस्थानदेशे। काले अपहरणकालाव्यवहितकाले। विषयविशेषे पशुपालस्य दण्डमाह व्यासः।

गृहीतमूल्यो गोपालस्तांस्त्यक्त्वा निर्जने वने।
ग्रामचारी नृपैर्बाध्यः शलाकी च वनेचर इति॥

शलाकी नापित इति कल्पतरौ। पुरुषेण प्रयत्नाकरणे दण्डमाह नारदः।

स्याच्चेद्गोव्यसनं गोपोऽव्यायच्छेत्तत्र शक्तितः।
अशक्तस्तूर्णमागम्य स्वामिने चानिवेदयेत्॥
अव्यायच्छेत्। विक्रोशन् स्वामिने चानिवेदयन्।
वोढु मर्हति गोपस्तम्विनयञ्चैव राजनीति॥

तङ्ग्वादिकम्। पशूनान्दैवान्मरणे पालकस्य दोषाभावत्वज्ञानोपायमाह व्यासः।

मृतेषु च विशुद्धः स्याद्वालशृङ्गादि दर्शनात्।

आदिशब्देन कर्णादीनां ग्रहणम्। तथा च मनुः।

कर्णौ चर्म च वालांश्च वस्तिं स्नायुञ्च रोचनाम्।
पशुषु स्वामिनान्दद्यान्मृतेष्वङ्गानि दर्शयेदिति॥

अङ्कादि दर्शयेदिति क्वचित्पाठः। अङ्कः शृङ्गकर्णादि-

रूपचिह्नकम्। आदिशब्दः साक्षिसंग्रहार्थः। पशुषु मृतेष्वङ्कादिकं स्वामिने दर्शयेत्। रोचनादिकं यत्प्रयोजनं तत्तस्मै दद्याच्चेत्यर्थः। नष्टगवादिदानञ्च तत्स्वामिने मूल्यद्वारेण ज्ञातव्यम्। अतएव विष्णुः। वृको वा पशूनां हत्वाद्युपघाते पालेत्वऽनायति पालक दोषो विनष्ट पशूनां मूल्यं स्वामिने दद्यादिति। अनायति। अनागच्छति। विनष्ट द्रव्य प्रमाणमाह याज्ञवल्क्यः। पालदोष विनाशे तु पाले दण्डो विधीयते।

अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव चेति॥

अर्द्ध त्रयोदशपणः अर्द्धरहितत्रयोदशपणः। सार्द्ध द्वादशपण इति यावत्। तास्तृतीय पूर्वपदाः समानाधिकरणेन समस्यन्त उत्तरपदलोपश्चेति वार्त्तिकादुत्तरपदलोपी कर्मधारयः। यत्तु केनचिदर्द्धाधिक त्रयोदशपणोदण्ड इति व्याख्यातं तत्सार्द्ध द्विमात्रादिषु अर्द्ध द्विमात्रादि महाभाष्यकार शब्दप्रयोग दर्शनादुपेक्ष्यम्। पालदोषमाह मनुः।

अजाविके तु संरुद्धे वृकैः पाले त्वनायति।

यां प्रसह्य वृको हन्यात् पाले तत् किल्बिषम्भवेदिति॥

अनायति। उपद्रव निवारणाय अनागच्छतीत्यर्थः। यां अजाविक जातीयाम्। सुगमस्थलस्य विषयमेतत्। दुर्गमस्थलस्य विषये त्वाह स एव।

तासाञ्चेदवरुद्धानां चरन्तीनां मिथोवने।

यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषीति॥

अवरुद्धानां पालकेन स्थापितानामित्यर्थः। गवादिप्रचारणार्थं भूमिमाह याज्ञवल्क्यः।

ग्राम्येच्छया गोप्रचारो भूमी राजवशेन वा।

ग्राम्येच्छया ग्रामीण जनवर्गेन राजेच्छया वा। गोप्रचारो गवां तृणादिभक्षणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः। गवां स्थानासनसौकर्य्याय ग्रामक्षेत्रयोरन्तरमाह स एव।

धनुः शतं परीणाहो ग्रामक्षेत्रान्तरम्भवेत्।
द्विशते खर्वटस्य स्यान्नगरस्य चतुःशतमिति॥

परीणाह शब्देनात्र सर्वासु दिक्षु अनुप्रशस्यस्थलं गृह्यते। एतादृशन्धनुःशतम्परिमितं ग्रामक्षेत्रयोरन्तरं कार्यम्। खर्वटस्य शतद्वय परिमितन्नगरस्य शतचतुष्टयपरिमितमित्यर्थः। खर्वटः अनेन कारु कृषीवलयुक्तो ग्राम इति मदनरत्ने। माधवाचार्य्यैस्तु प्रचुरकण्टक सन्तानो ग्राम इति व्याख्यातम्। तत्र शस्योत्पत्तेः प्रागेवावरणं कार्य्यमित्याह कात्यायनः।

अजातेष्वेव शस्येषु कुर्य्यादवरणं महत्।
दुःखेन विनिवार्य्यन्ते लब्धस्वादुरसा मृगा इति॥

एवं पशुनिवारणार्थं कृतेऽप्यावरणे तमतिक्रम्य पशुभिः शस्यादि विनाशे कृते कर्त्तव्यमाह मनुः।

पथिक्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः।
स पालः शतदण्डार्हो विपालं वारयेत्पशुमिति॥

पथिक्षेत्रे। मार्ग समीपे क्षेत्रे। ग्रामान्तीये ग्रामसमीपवर्त्तिनि। सपालः पशुः पणशतदण्डार्हः तत्पशुपालः पणशतं दण्डनीय इत्यर्थः। अयञ्च दण्डः पशुपालेन समर्थेन सता पशावनिवार्य्यमाणे वेदितव्यः। अतएव नारदः।

उत्क्रम्य तु वृतिं यः स्याच्छस्यघातो गवादिभिः।
पालः शास्यो भवेत्तत्र न चेच्छक्तो निवारयेदिति॥

आवरणाभावेनापरिहार्ये शस्योपघातेऽपि न पालस्य दण्डः। तथा च मनुः।

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणामिति॥

अनेनावृत चेच्छस्योपघाते पशुरक्षिणां दण्ड इत्यर्थादुक्तम्भवति। अदीर्घकालप्रचारविषय मेतत्। दीर्घकालप्रचारे तु अपरिवृतेऽपि पशुपालो दण्डार्हो भवति। अतएवाल्पकाल प्रचारे दोषाभावं दर्शयति विष्णुः। पथि ग्रामविवीतान्तेन दोषोऽल्पकालमिति। पशु विशेषे दण्डपरिमाणमाह याज्ञवल्क्यः।

माषानष्टौ तु महिषी शस्यघातस्य कारिणी।
दण्डनीया तदर्द्धं तु गौस्तदर्द्धमजाविकम्॥
भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः।
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसममिति॥

परशस्य घातकारिण्या महिष्याः स्वामी अष्टौ माषान् दण्डाः। गोः स्वामी चतुरः। छागस्वामी द्वौ द्वौ मेषस्वामी च द्वौ द्वौ। एतेषां पशूनां शस्य भक्षणादारभ्य तत्रैव उपविष्टानां स्वामी यथोक्त दण्डाद्द्विगुणं दण्डं ग्राह्यः। विवीतस्य तृणाद्युपघातेऽपि शस्योपघातवद्दण्डनीयः। खरस्याप्युष्ट्र स्वामी महिषीस्वामी स्वामिवद्दण्डनीयः। अत्र पशुस्वामिनो दण्ड इत्यभिधातव्ये महिष्यादि ग्रहणं प्रतिपशु दण्ड प्रदर्शनार्थम्। भक्षयित्वोपविष्टवत्स विषये यथोक्ताच्चतुर्गुणो दण्डः। तथा च स्मृत्यन्तरम्। वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुण इति॥

अत्रापराधानुसारेण दण्डनार्थं ताम्रिकमाषो ग्राह्यः न

पुनः सौवर्णो राजतो वेति स्मृतिचन्द्रिकायाम्। तास्मिन्माषञ्च कर्षपरिभाषितस्य कार्षात् षोड़शो भागो भवति। अयमेव पण-स्य पञ्च वापि प्रकीर्त्तिता इति याज्ञवल्क्योक्तपञ्च सुवर्णपरिमि-तत्वपक्षे पण चतुर्थोऽंशस्य विंशतिमाषात्म कार्षापणस्य "माषो विंशतिमोभागः पणस्य परिकीर्त्तित" इति नारदोक्तो विंशो-भागोऽपि भवति। एतेन स्मृतिचन्द्रिकायाम् अपराधानुसा-रेण दण्डनार्थं माषो "विंशतिमो भागः पणस्य परिकीर्त्तित" इति नारदोक्तोमाषः कैश्चित् स्वीकृत इत्येकीयमतत्वेनोपन्यस्य "सङ्ख्यारश्मिरजोमूला मनुना समुदाहृता"। "कार्षापणान्ता सा दिव्येनियोज्या विनये तथे"ति बृहस्पतिवचनविरोधेन दूषितं तदुभयथाप्यर्थ भेदाभावेन विरोधाभावान्निरस्तं मन्तव्यम्। यत्तु, मनुनोक्तं सपादं पणमर्हतीति तत्स्वामिमतिपूर्वं पश्वयतिक्रम विषयम्। याज्ञवल्क्य वचनन्त्व बुद्धिपूर्व विषय-मिति न तयोर्विरोधः। यत्तु,

पणस्य पादौ द्वौ गान्तु द्विगुणं महिषीं तथा।
तथाजाविकवत्सानां पादोदण्डः प्रकीर्त्तित इति॥

स्मृत्यन्तरं तद्भक्षयित्वोपविष्टगवादिविषयम्। यत्तुनार-देनाभिहितम्।

माषङ्गां दापयेद्दण्डं द्वौ माषौ महिषीन्तथा।
तथा जाविकवत्सानां दण्डः स्यादर्द्धमाषिक इति॥

तन्मुहूर्त्तमात्र भक्षण विषयं अतएवाहतुः शङ्खलिखितौ। रात्रौ चरन्ती गौः पञ्चमाषान्दिवा त्रीन्मुहूर्त्तं माषं ग्रासे त्वदण्डमिति। ग्रासेत्वदण्ड इत्यस्यायमर्थः। महिष्यादिभिः परग्रस्तेषु कवलमात्रभक्षणे कथञ्चित्कृते पालस्वामिनो वा

स्वल्पोऽपि दण्डो नास्तीति। आतुरपशुविषये बहुशस्य-नाशेऽप्येवमेव दण्डाभाव प्रतिपादन मुखेनाह नारदः ।

राजग्रहगृहीतो वा वज्राशनिहतोऽपि वा ।
अथ सर्पेण दष्टो वा वृक्षाद्वा पतितो भवेत् ॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनामिति ॥

गोमिनां गोस्वामिनाम् । आतुराणामनिवार्यत्वादित्यभिप्रायः । अनातुराणामपि केषाञ्चित्पशूनां दण्डाभावमाह स एव । गौः प्रसूता दशाहान्तु महोक्षा वाजि कुञ्जराः ।

निवार्याः स्युः प्रयत्नेन तेषां स्वामी न दण्डभागिति ॥

दशदिनपर्य्यन्तप्रसूताया निरोद्धुमशक्यत्वान्न स्वामी दण्ड भाक् । महोक्षस्य सर्वासाङ्गर्भाधानार्थं सर्वदा बन्धनायोगात् तत्स्वामी न दण्डभाक् । वाजि कुञ्जराणां स्वामिनोऽदण्ड-भागित्वे हेतुमाहोशनाः ।

अदण्डा हस्तिनो ह्यश्वा प्रजापाला हि ते स्मृता इति ॥

स्वामि ग्रहणं पालकस्याप्युपलक्षणार्थम् । यदाह मनुः ।

अनिर्दशाहां गां सूतां वृषान्देवपशूं स्तथा ।
सपालान्वा विपालान्वा अदण्ड्यान्मनुर ब्रवीदिति ॥

वृषा महोक्षाः । यद्वा वृषोत्सर्ग विधानेनोत् सृष्टाः । देवपशवः देवालयेषु देवोपभोगार्थं स्थापिताः पशवः ।

याज्ञवल्क्योऽपि । महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।

पालो येषान्न ते मोच्या दैवराज परिप्लुताः ॥

अनिर्दशाहा आगन्तुकः स यूथात्परिभ्रष्टः सन् देशान्तरात् समागतः । येषां पालो नास्ति तेऽपि दैवराजोपहताः शस्यादि-

नाशकारिणो न दण्ड्या इत्यर्थः। आदि शब्देन सूतवत्सादीनां ग्रहणम्। अतएवोशनाः।

अदण्ड्या सूतवत्सा च संज्ञा रोगवती कृशा।

अदण्ड्याः काणकूटाश्च वृषाश्च कृतलक्षणाः।

अदण्ड्यागन्तुका गौश्च सूतिका चाभिसारिणीति॥

कूटः एकशृङ्गः। कृतलक्षणः प्रतप्तायसेन कृतलाञ्छनः। अभिसारिणी स्वयूथात्प्रच्युता पुनः स्वयूथगामिनी परशस्यविनाशेन केवलं पशुस्वामी दण्डनीयः स दममपि दापनीय इत्याह बृहस्पतिः।

शस्यान्निवारयेद्रक्षन् चौर्य्ये दोषो द्वयोर्भवेत्।

स्वामी सदममन्दाप्यः पालस्ताडनमर्हतीति॥

सदश्च समश्च सदमम्। समूलशस्यनाश विषयमेतत्। अतएव नारदः।

समूलशस्यनाशे तु तत्स्वामी प्राप्नुयात् सदम्।

बधेन गौ र्यो मुच्येत दण्डं स्वामिनि पातयेदिति॥

तत् स्वामी शस्यस्वामी सदं प्राप्नुयात्। पशुस्वामिनः सकाशादितिशेषः। बधोऽत्र कशादिना ताडनम्। न प्राणच्छेदः। पालस्ताडनमर्हतीति वचनात्। सदश्च सामन्तादिभिः परिकल्पितो देयः। अतएव स एवाह।

गोभिस्तु भक्षितं शस्यं यो नरः प्रतियाचते।

सामन्तानुमतन्देयं धान्यं यत्तत्र वापि तमिति॥

यत्तु सदयाचननिषेधकम्।

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते।

पितरस्तस्य नाश्नन्ति नचापि त्रिदिवौकसः॥

इत्युशनोवचनन्तद् ग्रामादिसमीपस्थानाहत्तक्षेत्र विषयमिति माधवाचार्याः। श्राद्धकालादौ गोभक्षित विषयमिति मदनरत्न कृतः। सर्वासाङ्गवामुत्सवे श्राद्धदिवसे चादण्ड्यत्वमाह स एव।

अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैवचेति।

गोभिः श्राद्धकालादौ भुक्तमतिश्रेयस्कर मित्याशयेनाह। व्यासः। श्राद्धस्य च द्विजैर्भुक्तं परिक्षीणञ्च बान्धवैः।

गोभिश्च नरशार्दूल! वाजपेयाद्विशिष्यत इति॥

एतत्पदमुपसंहरति मनुः।

एतद्विधान मातिष्ठेद्धार्मिकः पृथिवीपतिः।

स्वामिनाञ्च पशूनाञ्च पालानाञ्च व्यतिक्रम इति॥

इति स्वामिपालविवादाख्य व्यवहारपदम्।

अथ सीमा विवादाख्य व्यवहारपदम्। तत् स्वरूपमाह नारदः। सेतुकेदारमर्यादाविकृष्टाकृष्टनिश्चयः।

क्षेत्राधिकारो यत्र स्याद्विवादः क्षेत्रजस्तु सः।

तस्यार्थः सेतुर्जल प्रवाहबन्धः। केदारः क्षेत्रम्। मर्य्यादा सीमा। विकृष्टो लाङ्गलप्रहतो देशः अकृष्टस्तद्रहितः एतेषां निश्चयो यत्र विवादे स्यात् स क्षेत्राधिकारः क्षेत्रविषयको विवादः क्षेत्रज उच्यत इति। अयं विवादः षड्विधः तथा च। कात्यायनः। आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च।

अभोगभुक्तिः सीमा च षड्भूवादस्य हेतवः।

ममैषाधिका भूरस्तीत्युक्तेनेति विवाद आधिक्यविवादः एतावती भूस्तव नेत्युक्ते ममैतावतीति यो विवादः स न्यूनताविवादः अत्र ममांशोऽस्तीत्युक्ते सति योविवादः सोऽस्तित्वविवादः अत्र तवांशो नास्तीत्युक्ते विद्यत इत्येवंविधो विवादो नास्तित्वविवा-

दः। सीमाविवाद इति षड्विधो विवाद इत्यर्थः। तत्र सीमा चतुर्विधा। देशसीमा ग्रामसीमा क्षेत्र सीमा गृहसीमाचेति। तस्याश्चतुर्विधाया अपि यथासम्भवं पञ्चविधत्वमाह।

नारदः। ध्वजिनी मत्सिनी चैव नैधानी भयवर्जिता।
राजशासननीता च सीमा पञ्चविधा स्मृता॥

ध्वजिनी वृक्षादिचिह्निता वृक्षाश्च न्यग्रोधादयः। तदाह।

मनुः। सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्।
शाल्मलीन् सालतालांश्च क्षीरिणश्चैव पादपानिति॥

मत्सिनी जलचिह्निता। नैधानी निखाततुषाङ्गारादिलक्षिता। भयवर्जिता। अर्थिप्रत्यर्थि परस्पर सम्प्रतिपत्तिनिर्मिता। राजशासननीता ज्ञातृचिह्नाद्यभावे राजेच्छया निर्मिता। तथा च व्यासः। ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्त्तिता॥
स्वच्छन्दगा बहुजला कषकूर्मसमन्विता।
नित्यप्रवाहिणीयत्र सीमा सा मत्सिनी मता॥
तुषाङ्गारकपालैस्तु कुम्भैरायतनैस्तथा।
सीमा प्रचिह्निता कार्य्या नैधानी सा निगद्यते इति।

नित्यप्रवाहिणीत्यनेन कूपवाप्यादीनि प्रकाशचिह्नान्युपलक्ष्यन्ते। तानि च वृहस्पतिना दर्शितानि।

वापीकूपतडागानि चैत्यारामसुरालयाः।
स्थलन्निम्नं नदी स्रोतः शरगुल्मनगादयः॥
प्रकाशचिह्नान्येतानि सीमायां कारयेत् सदा।
निहितानि तथान्यानि यानि भूमिर्न भक्षयेत्॥
अश्मनोऽस्थीनि गोबालांस्तुषान् भस्मकपालिकाः।

करीषमिष्टकाङ्गारशर्करा बालुकास्तथा॥

तानि सन्धिषु सीमाया अप्रकाशानि कारयेत्।

चैत्यं इष्टकादिभिः रचितञ्च त्वरादिकम्॥ स्थलं उन्नतो भूप्रदेशः। निम्नं परिखा। नगा अश्वत्थादयो वृक्षाः। आदिशब्देन मार्गादीनां कार्पासवीजानाञ्च गृहणम्। अस्थीनि पशुमनुष्याद्यस्थीनि। तुषाङ्गारकपालैरिति करीषादीनामन्येषां लिङ्गानामप्युपलक्षणम् तानि निखापयेत्।

तत्प्रयोगन्तु बालानां प्रयत्नेन प्रदर्शयेत्।

वार्द्धकेच शिशूनान्ते दर्शयेयुस्तथैव च॥

एवं परम्पराज्ञाने सीमाभ्रान्तिर्न जायत इति।

प्रदर्शयेदित्यन्तुच्छान्दसम्बहुत्वएवकवचनम्। एतेषां लिङ्गानां कथञ्चिदभावे निश्चयोपायमाह नारदः।

निम्नगापहृतोत्सृष्ट नष्ट चिह्नासु भूमिषु।

तत् प्रदेशानुमानैश्च प्रमाणैर्भोगदर्शनैः॥

निम्नगाया नद्या अपहृतेन अपहरणेन उत्सृष्टानि स्वस्थानान्नष्टानि चिह्नानि यासान्तास्तथोक्ताः। प्रमाणैः साक्षिसामन्तादिभिः एवं निरूपितैर्लिङ्गैर्निर्णयं कुर्य्यादित्याह मनुः।

एतैर्लिङ्गैर्नयेत् सीमां राजा विवदमानयोः।

यदि संशय एव स्याल्लिङ्गानामपि दर्शने॥

साक्षिप्रत्यय एवस्यात्सीमावाद विनिर्णयः।

साक्षिप्रत्ययः साक्षिहेतुकः। लिङ्गाभावपक्ष परिग्रहार्थोऽपिशब्दः ते च साक्षिणः सीमाविषयाः सीमालिङ्गविषया वा। साक्षिषु विशेषमाह वृहस्पतिः।

आगमञ्च प्रमाणं च भोगकालञ्च नाम च।

भूभागलक्षणाश्चैव ये विदुस्तेऽत्र साक्षिणः॥

प्रमाणमियन्त उभयेषामपि साक्षिणामभावे सामन्तवशान्निर्णयं कुर्यादित्याह मनुः।

साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः।
सीमाविनिर्णयं कुर्य्युः प्रयता राजसन्निधौ॥

यदा पुनर्लिङ्गानि न सन्ति वर्त्तमानानि वा सन्दिग्धानि तदा निश्चयोपायमाह याज्ञवल्क्यः।

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा।
रक्तस्रग्वसनाः सीमान्नयेयुः क्षितिधारिणः॥

सामन्ताः सन्निहितग्रामक्षेत्रादुपभोक्तारः। समग्रामाश्चत्वारोऽष्टौ इत्यादि प्रकारेण समसङ्ख्याकाः। तथा च कात्यायनः। ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्त्तितम्।

गृहं गृहस्य निर्दिष्टं सामन्तात्परिरभ्य हि।

ग्रामस्य समन्ताच्चतसृषु दिक्षु परिरभ्य सम्बध्य स्थितो ग्रामः सामन्तः क्षेत्रादष्येवं ज्ञेयम्। सामन्तानां यदा रागद्वेषादिना प्रकटदोष सद्भावस्तदा सामन्त वशान्निर्णयः कार्यः तदाह। कात्यायनः। स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात्।

तत् संसक्तैस्तु कर्त्तव्य उद्धारो नात्र संशयः॥

तत् संसक्तैः सामन्तसंसक्तैः। सीमाया उद्धारः सीमायानिर्णय इत्यर्थः। तथा चैतदुक्तम्भवति। चतसृषु दिक्षु स्थितसामन्त ग्रामादिभ्योऽनन्तरत्वेन तद्दिशि स्थित ग्रामादि भोक्तारस्तत्संसक्तास्तत्प्रदर्शित सीमालिङ्गैर्ग्रामादेः सीमान्निर्णयेदिति। यदा तु सामन्त सामन्तानामपि प्रकट दोषस्तदा तत् सामन्तैर्निर्णयस्तदाह कात्यायनः।

संसक्त सक्तदोषे तु तत् संसक्ताः प्रकीर्त्तिता इति।

तत् संसक्ताः संसक्तसंसक्तसक्ता इत्यर्थः। एवं चैतदुक्तं भवति चतसृषु दिक्षु स्थित संसक्त ग्रामादिभ्योऽनन्तरत्वेन तद्दिशि-स्थितग्रामादि भोक्तारः संसक्तास्तैः प्रदर्शित सीमालिङ्गैर्ग्रामादेः सीमान्निर्णयेदिति। यदा पुनरेतेषामपि प्रकटदोषत्वन्तदा मौलादि वशान्निर्णयः कार्य इत्यप्याह स एव।

कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता।

त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह॥

सम्मिश्र कारयेत्सीमामेवं धर्मविदो विदुः।

अन्यान् सामन्तव्यतिरिक्तान् सीमालिङ्गाभिज्ञान् नगरादीनित्यर्थः। नगरायश्च दर्शिता नारदेन। नगरग्रामगणितोये च वृद्धतमा नराः। सीमालिङ्ग ज्ञातार इति शेषः। मौलादिभिः मौलवृद्धोद्धृतैः। सम्मिश्र मेलयित्वा। मौलादीनाञ्च लक्षणं दर्शितं कात्यायनेन।

ये तत्र पूर्वं सामन्ताः पश्चाद्देशान्तरङ्गताः।

तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्त्तिताः॥

निष्पाद्यमानं यैर्दृष्टं तत्कार्य्यं नृगुणान्वितैः।

वृद्धा वा यदि वाऽवृद्धास्ते च वृद्धाः प्रकीर्त्तिताः॥

नृगुणान्वितैः पुरुषगुणान्वितैः। वाकारोऽनास्थायां वयोवृद्धत्वस्याप्रयोजकत्वात्। ये परम्परया कार्यज्ञातारस्ते उद्धर्त्तार इत्याशयः। तथा च संसक्तसंसक्तेषु स्फुटदोषदुष्टेषु पूर्वसामन्ताद्युपेतनागरिकग्राम्यजनश्रेणि वयोवृद्ध दर्शितैः सम्यक् लिङ्गैः सीमानिर्णयः कार्य्यः। यदा तु प्रतिवादिना सामन्तेषु कश्चिद्दोष उद्भावितः ते च न प्रकटदोष-

युक्तास्तदोक्तो विशेषो मनुना ।

सामन्ता साधनं पूर्वमनिष्टोक्तौ गुणान्विताः ।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः ॥

अनिष्टोक्तौ प्रतिवादिना गुप्तदोषाभिधाने तत्सामन्तास्ततो द्विगुणा ग्राह्यास्तेष्वपि दोषाभिधाने तत्सामन्तास्ततो द्विगुणग्राह्याः । तत्रापि तथात्वे मौलवृद्धादयः सामन्तत्रिगुणा ग्राह्या इत्यर्थः । साक्ष्यादीनामेतेषां यदा अभावस्तदा त्वाह मनुः । सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम् ।

इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ॥
व्याधान् शाकुनिकान् गोपान् कैवर्त्तान् मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥

वनगोचराणां ग्रहणं सीमासन्निहित देशकर्षकाणामसत्त्वे विज्ञेयम् । अतएवोक्तं नारदेन ।

सीमासु च वहिर्ये स्युर्येऽपि तत्कृषिजीविनः ।
गोपाः शाकुनिका व्याधा ये चान्ये वनगोचरा इति ॥

अत्र च सर्वत्र स्थावरविवादे क्षेत्रादि विवादे च सामन्तादयो निर्णायकाः तथा च कात्यायनः ।

तेषामभावे सामन्ता मौल वृद्धोद्धृतादयः ।
स्थावरे षट्प्रकारेऽपि कार्य्या नात्र विचारणा ॥

क्षेत्रवास्तु तडागेषु आरामवन सेतुषु ।
समेतभावात् सामन्तैः कुर्यादत्र विनिर्णयम् ।
ग्रामसीमासु च तथा तद्वन्नगरदेशयोः ॥

तेषां साक्षिणाम् । याज्ञवल्क्योऽपि ।

आरामायतन ग्रामनिपानोद्यानवेश्मसु ।

एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु॥

आयतनन्निवेशनन्निपानं पानीयस्थानं वर्षाम्बुप्रवहो हर्म्यु-द्भूत जलप्रवाहः पुनः कात्यायनोऽपि।

क्षेत्रकूपतडागानां केदारारामयोरपि।

गृह प्रसदावसथनृपदेव गृहेषु च।

केदारः क्षुद्रसेतुयुक्तः क्षेत्रविशेषः। गोवलीवर्दन्यायेन भि-न्नोक्तिः प्रसदः प्रसादः। बृहस्पतिपि।

सर्वत्र स्थावरे वादे विधिरेष प्रकीर्त्तितः।

राज्ञा ग्रामीणानां वादिप्रतिवादिनोश्च समक्षं साम-न्तादयः प्रष्टव्याः तैर्यदुक्तं तत्तत्र लेखनीयमित्याह मनुः।

ग्रामीयक कुलानान्तु समक्षं सीम्नि साक्षिणः।

प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥

ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम्।

निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः।

सीमलिङ्गं साक्ष्यभिप्रायेण सीमलिङ्गानीत्युक्तम्। सीमा-साक्षिणस्तु सीमां ब्रूयुः। तथा च बृहस्पतिः।

शपथैः शापिताः स्वैः स्वै ब्रूयुः सीमाविनिर्णयम्।

दर्शयेयुश्च लिङ्गानि तत्प्रमाणमिति स्थितिः॥

स्वैः स्वैः। सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैरित्यादि-नोक्त व्यवस्थानतिक्रमेणेत्यर्थः। यदा तु ये सीमालिङ्ग साक्षिणः सीमाचिह्नानि दर्शयितुन्न शक्नुवन्ति केवलं सीमामात्रं जान-न्ति तदा ते कथं ब्रूयुरित्याकाङ्क्षायामाह मनुः।

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्त वाससः।

सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसमिति॥

सर्वोम्मृदम्। सीमाक्रममाणा इति शेषः। नयेयुरिदं द्वयोर्निरासार्थं बहुवचनन्त्वेकस्य। नारदेन।

एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत्।
रक्तमाल्याम्बरधरो भूमिमादाय मूर्द्धनीति॥

एकस्याभ्यनुज्ञानात्। बृहस्पतिरपि।

ज्ञातृचिह्नैर्विना साधुरेकोऽप्युभयसम्मतः॥
रक्तमाल्याम्बरधरो मृदमादाय मूर्द्धनि॥
सत्यव्रतः सोपवासः सीमां तां दर्शयेन्नरः।

ज्ञातृचिह्नैर्विना सीमायाः ज्ञातॄणां लिङ्गानाञ्चा सत्वे। ननु कथमेकस्य सीमानिर्णायकत्वं नैकः समुन्नयेत्सीमान्नरः प्रत्ययवानपि।

गुरुत्वादस्य कार्य्यस्य क्रियैषा बहुषु स्थिता।

इत्येकस्य नारदेन निषेधादिति चेन्नैवम्। स उभयानुमतधर्मविद्यतिरिक्त विषय इति न काप्यनुपपत्तिः। अयञ्च निर्णयः सीमाक्रमणदिनादारभ्य पक्षत्रय पर्य्यन्तं साक्षिसामन्तादीनान्दैविकराजिकोपद्रवाभावे अवसेयः न तु सीमाक्रमणाव्यवहितोत्तरमेव। तथा च कात्यायनः।

सीमा चंक्रमणे कोशे पादस्पर्शे तथैव च।
त्रिपक्षपक्ष सप्ताहं दैवराजिक मिष्यते॥

यथासङ्ख्यमिति शेषः। यदा तु साक्ष्यादीनां पक्षत्रयाभ्यन्तरे दैविकराजिकोपद्रवः अन्यथा वा मिथ्यावादित्व निश्चय स्तदा ते पणशतद्वयं दण्डं प्रत्येकं दाप्याः। तथा च मनुः।

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः।
विपरीतन्नयन्तस्तु दाप्याः स्युर्द्विशतन्दमम्॥

यथोक्तेन शिरोभिस्ते गृहीत्वोर्वीमित्यादिनोक्त प्रकारेण नयन्तो निर्णयं कुर्वन्त: यथाभूतेनार्थेनेतिशेष:। द्विशतं पणशतद्वयम्। पणशतद्वयं दण्डं प्रत्येकम्। यथोक्तेन शिरोभिस्ते गृहीत्वा दाप्या इत्यर्थ:। सामन्तानां मिथ्यावादित्वे राज्ञा मध्यम साहसिकाख्येन दण्डेन दण्डनीया:। तथा चाह याज्ञवल्क्य:। अनृते तु पृथक् दण्ड्याराज्ञा मध्यम साहसम्। सामन्ता यद्यनृतं मिथ्याभूतं सीमानिर्णयं कुर्यु: तदा मध्यमसाहसं कार्षापणानां चत्वारिंशत् अधिकानि पञ्चाशतानि दण्डनीया:। नारदोऽपि।

अथचेदनृतं ब्रूयु: सामन्ता: सीम्नि निर्णये।
सर्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यम साहसम्।

सामन्त व्यतिरिक्तानां तत्संसक्तादीनां मिथ्यावादित्वे पूर्व साहसाख्येन दण्डेन प्रत्येकं ते दण्डनीया:। तथा च नारद:।

शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि।
प्रत्येकन्तु जघन्यास्ते विनेया: पूर्व साहसमिति॥

मौलादीनामनृतवादित्वे त मेव दण्डं स एवाह।

मौल वृद्धादयश्चान्ये दण्डनीया: पृथक् पृथक्।
विनेया: प्रथमेनैव साहसेनानृते स्थिता इति॥

आदि ग्रहणेन गोपशाकुनिकादि वन गोचराणां ग्रहणम्। दण्डनीया: मिथ्यावादित्वेन दण्डयितु मर्हा: मौल वृद्धादय: पृथक् पृथक् प्रथमेन साहसेन विनेया दण्ड्या इत्यर्थ:। यद्यपि सामन्तादीनां साक्ष्यपेक्षया दण्डाल्पत्व मुक्तं तथापि तेषां वाचनिकं दण्डाधिक्यमिति न कोऽपि दोष:। यद्यपि शाकुनिकादयो बहुधा पापरतत्वाल्लिङ्ग प्रदर्शनोपयोगे-

नान्यथा सिद्धा न साक्षात् सीमानिर्णये उपयुज्यन्ते तथापि वृक्षादिलिङ्गप्रदर्शन एव मिथ्याभावितत्वे सम्भवात्तदभिप्राये-णैव दण्डविधानम्। लोभादिना भेदेनोक्तौ अनुक्तौ च साक्ष्या-दीनां दण्डमाह कात्यायनः।

बहूनान्तु गृहीतानां न सर्वे निर्णयं यदि।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम्॥

एवमज्ञानादिना अनृतवचने साक्ष्यादीन् दण्डयित्वा पुनः सीमाविचारः प्रवर्त्तयितव्यः। तथा च स एवाह।

अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत्।
कीर्त्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम्॥

साक्ष्यादीनां सर्वेषां अज्ञानोक्तौ भेदेनोक्तौ च पुनर्विचारणं लेख्यप्रमाणेन कर्त्तव्यम्। अतएव शङ्खलिखितावपि। सा-मन्तविरोधे लेख्यप्रत्यय इति। यदा पुनः सामन्तप्रभृ-तयो ज्ञातारश्चिह्नानि च न सन्ति तदा राजा स्वेच्छया निर्णयं कुर्यात्। तथा च याज्ञवल्क्यः।

अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तिता॥

ज्ञातॄणां सामन्तादीनां लिङ्गादीनाञ्च वृक्षादीनामभावे राजैव स्वातन्त्र्येण सीमानं प्रवर्त्तयेत्। नारदोऽपि।

यदा च न स्युर्ज्ञातारः सीमाया न च लक्षणम्।
तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम्॥

इष्टतः इच्छया सार्वविभक्तिकस्तसिः। ग्रामद्वयमध्यव-र्त्तिनीं विवादास्पदीभूतां भुवं समं प्रविभज्यास्येयम्भूरित्युभयोः समर्प्य तन्मध्ये सीमालिङ्गानि कुर्य्यात्। यदा तस्यां भूमावुप-कारातिशयो दृश्यते तदा तत्रैव सा सकला भूर्योजनीया न

त्वभयत्र। तथा च मनु:।

सीमायामविषह्यायां स्वयं राजैव धर्मवित्।
प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिरिति।

अविषह्यायां ज्ञातृचिह्नरहितायाम्। प्रदिशेत् प्रवेशयेदित्यर्थ:। अयञ्च निर्णयो राज्ञा निर्णयान्तरवदव्यवहितोत्तरमेव न कर्त्तव्य: किन्तु सीमालिङ्गानि यदा आवरकाद्यभावात् स्फुटं दृश्यन्ते तदा कर्त्तव्य: तथा च मनु:।

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयो:।
ज्यैष्ठे मासि नयेत् सीमां सुप्रकाशेषु सेतुषु॥

द्वयोर्ग्रामाधिपयोर्विवादे सीमां प्रति समुत्पन्ने ज्यैष्ठे मासीत्युपलक्षणं मासान्तरेऽपि सेतु इतिषु सीमालिङ्गेषु व्यक्तेषु विवादाध्यासितां सीमान्निर्णयेदित्यर्थ:। ग्रामग्रहणं नगरादेरुपलक्षणार्थम्। अतएव कात्यायन:।

सामन्ताश्चेत्तु सामन्तै: कुर्यात् क्षेत्रादि निर्णयम्।
ग्रामसीमादिषु तथा तद्वन्नगरदेशयोरिति॥

यदा पुन: ग्रामादीनां सीमात्वेन परिकल्पिता नदी कदाचित् ग्रामान्तरं भित्वा प्रवहन्ती दक्षिणभागे स्थितां पूर्वं काञ्चिद्भूमिं वामभागनिविष्टां करोति तथा यत्रैकग्रामसम्बन्धिनी भूरन्यत्र राज्ञा योज्यते तत्र निर्णयोपायमाह बृहस्पति:।

अन्य ग्रामात् समाहृत्य दत्ताऽन्यस्य यदा मही।
महानद्याथ राज्ञा च कथन्तत्र विचारणा॥
नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही।
अन्यथा न भवेल्लाभो नराणां राजदैविक:॥
क्षयोदयौ जीवनञ्च दैवराजवशान्नृणाम्।

तस्मात् सर्वेषु कार्येषु तत्कृतन्न विचालयेत् ॥

न च नदीकृतस्य दैवकृतत्वाभावः शङ्कनीयः। दैव शब्दस्य भाग्यवाचित्वान्नदीकृतमपि दैवकृतम्मित्येव। तथा चाह स एव।

ग्रामयो रुभयोर्यत्र मर्यादा कल्पिता नदी।
कुरुते दानहरणं भाग्या भाग्यवशान्नृणाम्॥
एकत्र कूलपातन्तु भूमेरन्यत्र संस्थितिम्।
नदीतीरे प्रकुरुते तस्य तान्न विचालयेत् ॥

तस्य नदीवशात्प्राप्तभूमिकस्य तां प्राप्तांभूमिन्न विचालयेत् नान्यथा कुर्यात्पूर्व स्वामी नापच्छिन्द्यादित्यर्थः। एतदनुप्तशस्यतीर विषयम्। उप्तशस्यविषये पुनः स एवाह।

क्षेत्रं सशस्यमुल्लङ्घ्य भूमि श्छिन्ना यदा भवेत्।
नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम् ॥

तां सशस्यां भूमिं पूर्वस्वामी यावदुत्पन्नस्य शस्यफल प्राप्तिस्तावल्लभेतेत्यर्थः। फलप्राप्ते रूर्ध्वं पुनः पूर्ववचन विषय समानता। राजदत्त विषये क्वचित् प्रतिप्रसवमाह स एव।

या राज्ञा क्रोधलोभेन छलन्यायेन वा हृता।
प्रदत्ताऽन्यस्य दुष्टेन न सा सिद्धिमवाप्नुयात् ॥

स्वत्व हेतु प्रतिग्रहादि लब्धक्षेत्र विषयमेतत्। स्वत्व हेतु प्रतिग्रहादि प्रमाणाभावे पुनः स एवाह।

प्रमाणरहितां भूमिं भुञ्जानो यस्य या हृता।
गुणाधिकाय वै दत्ता तस्य तान्न विचालयेत् ॥

प्रमाण रहितां स्वत्वहेतु प्रतिग्रहादि प्रमाण रहिताम्। गृहादि विषयकं निर्णयमाह स एव।

निवेश कालादारभ्य गृहचर्यादशादिकम् ।
येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ॥

येन स्वामिना यावत् प्रचारभूम्यादियुक्तं यथा येन पूर्वादिदिगभिमुखद्वारादि युक्तत्वादि रूपेणोपभुक्तं तत्तस्य स्वामिनः सकाशान्न विचालयेत् नान्यथा कुर्यादित्यर्थः । अत्र निवेशकालादारभ्येत्यभिधानान्मध्ये कृतया व्यवस्थाया निवर्त्त्यत्वं दर्शितम् । निवेशकालादारभ्य स्थितानि गवाक्षादिकानि प्रातिवेश्मिकाद्यनिष्टकारिण्यपि न निवर्त्त्यन्ते इत्युक्तं तेनैव ।

वातायनं प्रणाली च तथा निर्व्यूहवेदिका ।
चतुःशालस्यन्दनिकां प्राङ्निविष्टां न चालयेत् ॥

वातायनं गवाक्षः । प्रणाली पाषाणादि निर्मित जलनिर्गमोपायः । निर्व्यूहो द्वारनिर्गतकाष्ठ विशेष इति कल्पकल्पतरौ । निर्व्यूहोगृहकोण इति स्मृतिचन्द्रिकायाम् । वेदिका रथ्यादि प्रदेश संस्कृतोन्नता भूमिः । चतसृणां शालानां समाहारः चतुःशालम् । तस्मात् स्यन्दनिका वृष्टिजलनिपातः । कात्यायनोऽपि । मेखलाभ्रमनिष्काशगवाक्षान्नोपरोधयेत् ।
प्रणालीं गृहवास्तुञ्च पीड़यन्दण्डभाग्भवेत् ॥

मेखला कुड़्य मूलबन्धः । भ्रमस्तु जलनिर्गमः । निष्काशः हर्म्यादिभित्तिषु निर्गतं काष्ठादिनिर्मितमस्पृष्ट भूमिकमुपवेशनस्थानम् । नोपरोधयेत् न निरुन्ध्यात् । गृहवास्तुः वास भूमिः पूर्वमविद्यमानाः परानिष्टकारिण एतेन कर्त्तव्या इत्यप्याह स एव ।

त्रिवेशन भयादूर्ध्वं नैते योज्याः कदाचन ।
दृष्टिपातं प्रणालीञ्च न कुर्य्यात्परवेश्मनु ॥

दृष्टिपातो गवाक्षः। परवेश्मसु परवेश्माभिमुख्येन। परकुड्य-निकटे पुरीषोत्सर्गादिकमपि न कर्त्तव्यम्। तथा च बृहस्पतिः।

वर्चःस्थानं वह्निचयङ्गर्त्तोच्छिष्टाम्बु सेचनम्।
अत्यारात्परकुड्यस्य न कर्त्तव्यं कथञ्चन॥

वर्चः स्थानम्। पुरीषोत्सर्गस्थानम्। अत्यारादति-समीपे। अरत्निद्वयसम्मित प्रदेश इत्यर्थः। तथा च कात्यायनः।

विण्मूत्रोदकमेकञ्च वह्निश्वभ्रनिवेशनम्।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत्॥

संसरण शब्दार्थनिर्वचनपुरः सरन्तस्यानिरोद्धव्यत्वमाह। बृहस्पतिः। यान्त्यायान्ति जना येन पशवश्चानिवारिताः।
तदुच्यते संसरणन्न रोद्धव्यन्तु केनचित्॥

तथा च सम्यगनिवारितं सरन्त्यस्मिन्निति संसरणन्निर्वच-नमित्यर्थः। चतुष्पथादयोऽपि न निरोद्धव्याः। तथा च नारदः।

अवस्करस्थलश्वभ्रभ्रमस्यन्दनिकादिभिः।
चतुष्पथ सुरस्थान राजमार्गान्न रोधयेत्॥

अवस्करः पुरीषम्। गृहादि शोधनार्थं पांशु समूह इति हरिहरादयः। स्थलं वेदिका श्वभ्रङ्गर्त्तः। भ्रमो जल निर्गम-मार्गः। स्यन्दनिका पटल प्रान्तः। अन्यदपि आदि शब्देन तादृशं ग्राह्यम्। रथ्यामार्गो राजमार्गः न तु चतुष्पथ इति कल्पतरुः। न चतुष्पथ राजमार्गयोरभेद इति शङ्कनीयं तयोर्भेदात्। तथा च कात्यायनः।

सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः।
अनिषिद्धा यथाकालं राजमार्गः स उच्यते॥

अनिषिद्धा इत्यस्य पूर्वेणान्वयः। यत्र राजकीयैरकाले गमनं प्रतिषिध्यते स राजमार्ग इत्यर्थः। क्षेत्रस्य समीपे मध्ये वा यस्य सर्वदा मार्गोऽस्ति तत्र निरोधो न कर्त्तव्यः। तथा च शङ्खलिखितौ। मार्ग क्षेत्रे पथिविसर्गो राजमार्गे रथस्य परिवर्त्तनमिति। पथिविसर्गः पथोविसर्गः। राजमार्गे यावता प्रदेशेन रथैः परिवर्त्तते तावान् प्रदेशस्त्यक्तव्य इत्यर्थः। संसरणानामवरोधकारिणान्तु दण्डो माषको दाप्यः। तथाह बृहस्पतिः। दस्तत्र सङ्करं श्वभ्रं वृक्षारोपण मेवच।

कामात्पुरीषं कुर्याच्च तस्य दण्डस्तु माषकः॥

सङ्करोऽत्र शकटादि सङ्कीर्णता। वृक्षोपादानं लतादीनामप्युप लक्षकम्। माषोऽत्र ताम्रिकः दण्डस्य अपराधानुसारेण कल्पयितु मुचितत्वात्। येतु राजमार्गे पुरीषोत्सर्गादिकं कुर्वते तेषामधिकोदण्डः। तथा च मनुः।

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि।

स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत्॥

आपन्नादिषु तु दण्डस्तेनैवोक्तः।

आपन्नतस्तथा वृद्धा गर्भिणी बाल एव च।

परिभाषण मर्हन्ति तच्च शोध्यमिति स्थितिः॥

परिभाषणं क्रूरभाषणम्। तडागादौ ततोऽप्यधिकोदण्डः। तथा च कात्यायनः।

तडागोद्यानतीर्थानि यो मेध्येन विनाशयेत्।

अमेध्यं शोधयित्वा तु दण्डयेत् पूर्वसाहसम्॥

ये पुनर्मलिनवस्त्र प्रक्षालनादिना तीर्थानि दूषयन्ति तस्याप्ययमेव दण्ड इत्याह। स एव।

दूषयेत्प्रिद्धतीर्थानि स्थापितानि महात्मभिः।
पुण्यानि पावनीयानि प्राप्नुयात् पूर्व्वसाहसम्॥

मर्यादा प्रभेदनादौ दण्डमाह। याज्ञवल्क्यः।

मर्य्यादायाः प्रभेदे तु सीमातिक्रमणे तथा।
क्षेत्रस्य हरणे दण्डाः अधमोत्तममध्यमाः॥

अनेकक्षेत्र व्यवच्छेदिका साधारणी भूमर्य्यादा सीमा-तस्याः प्रकर्षेण भेदने सीमातिक्रमणे सीमामतिलङ्घ्य कर्षणे क्षेत्रस्य च भयादिप्रदर्शनेन हरणे यथाक्रमेणाधमो-त्तममध्यमसाहसदण्डा वेदितव्याः। यत्तु विष्णु वचनम्। सीमाभेत्तार मुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेदिति। तत्र हि सीमामतिलङ्घ्य कर्षकः पुनः सीमाकरणम्पुनस्तत्र कर्षकस्याकरणमित्येवं व्याख्येयम्। तेन न पूर्व्ववचनविरोधः क्षेत्रग्रहणं गृहाद्युपलक्षणार्थम्। अज्ञानात् क्षेत्रादिहरणे ऽधर्मएव। यथाह मनुः।

गृहन्तडागमारामं क्षेत्रं वा भीषया हरन्।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः॥

वृद्ध मनुः। स्थापितां चैव मर्यादामुभयोर्ग्रामयोस्तथा।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम्॥

अपह्रियमाणक्षेत्रादि भूयस्त्वे उत्तमोऽपि दण्ड्य प्रयो-क्तव्यः। बधः सर्व्वस्वहरणं पुरान्निर्वासनाङ्कने।

तदङ्गच्छेद इत्युक्तो दण्डउत्तमसाहसमिति॥

स्मरणात्। यत्तु, शङ्खलिखिताभ्यां सीमातिक्रमणे दण्डा-धिक्यमुक्तम्। सीमाव्यतिक्रमेत्वष्ट सहस्रमिति तत् सम्पूर्ण सीमातिक्रम विषयम्। सीमासन्धिषूत्पन्न वृक्षादिफलं नैव

ग्राह्यं यथाह कात्यायनः।

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः।
फलं पुष्पञ्च सामान्यं क्षेत्रस्वामिषु निर्द्दिशेत्॥

सामान्यं साधारणं क्षेत्रयोः स्वामिषु क्षेत्रस्वामिषु। तथा चान्यतरेणैव तद्वृक्षीयफलादि गृहणे तदनुरूपेण दण्डा इति ध्वनितम्। यदा पुनरन्य क्षेत्रे वृक्षादिरुत्पन्नोऽन्य क्षेत्रे शाखादि प्रसृताः तत्र कः स्वामीत्याकाङ्क्षायां स एवाह।

अन्य क्षेत्रे तु जातानां शाखा यत्रान्य संस्थिताः।
स्वामिनं तं विजानीयाद्‌ यस्य क्षेत्रस्य संश्रिताः॥

संश्रिताः प्ररूढाः। परक्षेत्रे प्रार्थनया क्रियमाणं सेतु कूपादिकं क्षेत्र स्वामिना निषेद्धव्यं तथाह याज्ञवल्क्यः।

न निषेध्योऽल्प बाधस्तु सेतुः कल्याणकारकः।
परभूमिं हरन्‌कूपः स्वल्पक्षेत्रो बहूदकः॥

अल्पबाधः अल्पपीड़ाकारः कल्याणकारको बहूपकारकः। स्वल्पक्षेत्रः स्वल्पक्षेत्रवर्त्ती आभ्यां विशेषणाभ्यां यः सेतुक्षेत्र-मध्यवर्त्तितया बहुपीड़ाकर स्तदा दिक्षु सन्निहित क्षेत्रवर्त्ति-तया अल्पोपकारको वा तदा निषेद्धव्य इति दर्शितम्। तत्र नारदोऽपि। परक्षेत्रस्य मध्येतु सेतुर्न प्रतिषिध्यते।

महागुणोऽल्पदोषश्चे द्वृद्धिरिष्टा क्षये सति॥

क्षये अल्पक्षेत्रक्षये सत्यपि वृद्धिर्यत इष्टा अतो महागुणः स्वक्षेत्रेऽपि उपकारकरोऽल्पदोषश्चेत्तदा न प्रतिषेद्धव्य इत्यर्थः। अन्यक्षेत्रे सेतुकूपादिवर्त्तनं तत्स्वाम्याद्याज्ञालाभपूर्वकं कर्त्तव्यमित्याह याज्ञवल्क्यः।

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत्।

उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥

यस्तु क्षेत्रस्वामिनं तद्वंश्यं तदभावे राजानं वा प्रार्थ्य अर्थादानेन वा तत्क्षेत्रे सेत्वादिकं करोति स सेत्वाद्युत्पन्ने फलोपभोगं दृष्टमदृष्टं वा न लभते किन्तु तत्स्वाम्येव तल्लभते तदभावे राजा। अतस्तदाज्ञां गृहीत्वा सेत्वादिकं कर्त्तव्यमित्यर्थः। जीर्णानां अन्यदीय सेत्वादीनां उद्धारोऽपि तत् स्वाम्याद्यनुज्ञां गृहीत्वा कार्य्यं इत्याह नारदः।

पूर्वं प्रवृत्तमुत्पन्नमपृष्ट्वा स्वामिनन्तु यः।
सेतुं प्रवर्त्तयेद्यस्तु न स तत्फलभाग्भवेत् ॥
मृते तु स्वामिनि पुन स्तद्वंश्ये वापि मानवे।
राजान मामन्त्र्य ततः कुर्यात् सेतुप्रवर्त्तनम् ॥
अतोऽन्यथा क्लेशमायान् मृगव्याध निदर्शनात्।
मृगव्याध दृष्टान्तः स्फुटीकृतस्तेनैव,
दूषवस्तस्य नश्यन्ति यो विद्ध मनुविद्यति।
तस्य मृगव्याधस्य। कात्यायनोऽपि ॥
अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः।
गृहोद्यान तड़ागानां संस्कर्त्ता लभते न तु ॥
देयं स्वामिनि चायाते तन्निवेद्य नृपे यदि।
अथावेद्य प्रयुक्तस्तु तद्गतं लभते व्ययम् ॥

नृपे अनावेद्य कृतं यत्तडागादि संस्कारार्थं व्ययन्तत् स्वामिनि ग्रामान्तरादागते तेन देयमपि न प्राप्नोति। नृपे निवेद्य संस्करणे तदर्थं व्ययं प्राप्नोति। फलन्तु स्वाम्यनु मत्यलाभेन प्राप्नोतीत्यर्थः। यः परक्षेत्र महमिदं कृषामीत्यूरीकृत्य पश्चाद्यो न कृषति नाप्यन्येन कर्षयति तं प्रत्याह याज्ञवल्क्यः।

फालाहतमपि क्षेत्रं यो न कुर्य्यान्नकारयेत्।
स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत्॥

यद्यपि फालाहतं किञ्चिद्धलेन विदारितं सम्यग्वीजावापयोग्यं न भवति तथाप्यकृष्टक्षेत्रस्य फलं यावत्तत्रोत्पत्तियोग्यं सामन्तादि कल्पितं तावदसौ स्वामिने दापनीयः।

तच्च पूर्वं कर्षकादाच्छिद्य परेण कारयेत्।

व्यासोऽपि। क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्य्यान्न च कारयेत्।
स्वामिने स शदं दाप्यो राज्ञे दण्डञ्च तत्समम्॥

शदं क्षेत्रफलम्। तत्समं तदनुरूपमित्यर्थः।

स्वामिग्राह्यं क्षेत्रफलमपि किं यदित्याकाङ्क्षायां स एवाह।

चिरावसन्ने दशमं कृष्यमाणे तथाष्टकम्।
सुसंस्कृतेऽपि षष्ठं स्यात्परिकल्प्यं यथास्थितिरिति॥

चिरावसन्ने चिरकाल संकृष्टे क्षेत्रेऽहमिदं कृषामीत्यूरीकृत्योपेक्षिते सामन्तैर्य्यथास्थिति क्षेत्रस्थित्यनुसारेणैतावदत्रोत्पत्तुं योग्यमिति परिकल्प्य क्षेत्र स्वामिने तस्य दशमभागं कृष्यमाणे अचिरावसन्ने स्वीकृत्यानुपेक्षिते तु अष्टमभागं सुसंस्कृतेऽप्युपेक्षितं षष्ठं भागन्दाप्य इत्यर्थः। यस्तु क्षेत्र स्वामिनः सामर्थ्यवैकल्यादिनाऽधोलाघवावस्थां प्राप्ते क्षेत्रे स्वाम्यनिवारितः सन् स्वयमेव तत्कर्षणादिकं करोति तदा स क्षेत्रस्वामिने फलं न दापनीयः। किन्तु तस्य फलं स्वयमेव गृह्णीयादित्याह नारदः। अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः।

क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम्।

प्रेतास्मृताः। नष्टाः कुलगता इति चिरमपरिचिताः॥

क्षेत्रिकेषु क्षेत्र स्वामिषु तेन क्षेत्रस्वामिना तत्पुत्रादिना वा स-

मागतेनैवं विधाय कर्षादिखिलभञ्जनार्थं वयन्तत्त्वैवस्वीयं चेत्र ग्राह्यमिति स एवाह ।

विकृष्यमाणे चेत्रे तु चेत्रिकः पुनराव्रजेत् ।
खिलोपचारन्तत्सर्वं दत्त्वा चेत्रमवाप्नुयात् ॥

अर्द्धखिलाद्यवस्था कदा चेत्रस्य भवतीत्याकांक्षायां स एवाह । संवत्सरेणार्द्धं खिलमितः स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नान्तु चेत्रं स्यादटवीसमम् ॥

कर्षणरहितं सम्वत्सरेणाऽर्द्धं खिलम्भवति यत्नसाध्यम्भवति- वर्षत्रयेतु ईहितं खिलं महायत्न साध्यं भवति। वर्षपञ्चकेतु ईहितक्षेत्रं अटवीतुल्यं स्यात् अतिदुष्कर्षम्भवेदित्यर्थः। खिल- भञ्जनार्थं व्ययदानासामर्थ्ये चेत्रे स्वामिनः चेत्रफलस्याष्टमो- भागः कर्षकेण वर्षाष्टकं स्वामिने देयः अवशिष्टं सर्वं स्वयमेव ग्राह्यम्। चेत्रं च वर्षाष्टकानन्तरन्तत् स्वामिनेदेयम्। तथा च कात्यायनः। अशक्तितो न दद्याच्च खिलार्थे यः कृतोव्ययः।
तदष्टभागहीनन्तु कर्षकः फलमाप्नुयादिति ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिने तु तदिति ॥

इति सीमाविवादाख्य व्यवहारपदम् ।

अथ दण्डपारुष्याख्य व्यवहार पदम् । तत् स्वरूपं दर्श- यति । नारदः । परगात्रे ष्वभिद्रोहो हस्त पादायुधादिभिः।
भस्मादिभिश्चोपघातो दण्डपारुष्य मुच्यते इति ॥

परगात्रेषु स्थावरजङ्गमात्मकेषु। आदिग्रहणात् पाषा- णादीनां ग्रहणम्। तथा अभिद्रोहो हिंसनं दुःखोत्पादनं भस्मादिभिरित्यादि ग्रहणाद्रजः पङ्कपुरीषादीनां ग्रहणम्। उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनम्। तदुभयं दण्डपा-

रुष्य मित्यर्थः। तस्य त्रैविध्यमाह स एव।

तस्यापि दृष्टन्त्रैविध्यं हीनमध्योत्त मक्रमात्।
अवगोरणा निःशङ्कपातन क्षतदर्शनैः॥
हीनमध्योत्तमानाञ्च द्रव्याणां समतिक्रमात्।
त्रीण्येव साहसान्याहु स्तत्र कण्टकशोधनमिति॥

अवगोरणं ताडनाद्युद्योगः। निःशङ्कपातन न्निःशङ्कप्रहरणम्। त्रीण्येव साहसानि त्रिप्रकाराण्येव साहसकृतानि दण्डपारुष्याणीत्यर्थः। अन्यानपि भेदानाहपरिशिष्टकारः। दुःखं रक्तं व्रणं भङ्गं छेदनं भेदनन्तथा। कुर्य्याद्बयः प्राणिनां तद्धि दण्डपारुष्यमुच्यत इति। स्थावर जङ्गम प्राणिनां प्राण्यन्तर कृतनखादिना छेदनादिभवं दुःखं रक्तव्रणादिकञ्च दण्डपारुष्यमुच्यत इत्यर्थः। व्यासोऽपि।

भस्मादिना प्रक्षिपणो ताडनञ्च करादिना।
आवेष्टनञ्चांशुकाद्यैर्दण्डपारुष्यमुच्यत इति॥

आदि ग्रहणाद्दुःखकरं कर्द्दमपांशुमलादि द्रव्यं गृह्यते। करादिनेत्यादि शब्देन पाषाणेष्टकायुधादि द्रव्यम्। अंशुकाद्यैरित्यादिशब्देन रज्जुशृङ्खलादि द्रष्टव्यम्। दण्डपारुष्यस्य पञ्चप्रकारा विधयो नारदेन दर्शिताः।

विधिः पञ्च विधस्तूक्त एतयोरुभयोरपि।
पारुष्ये सति संरम्भादुत्पन्ने क्रुद्धयोर्द्वयोः॥
स मान्यते यः क्षमते दण्डभाग्योऽतिवर्त्तते।
पूर्वं माचारयेद्यस्तु नियतं स्यात्सदोषभाक्।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः।
द्वयो रापन्नयोस्तुल्य मनुबध्नाति यः पुनः॥

स तयोर्दण्डमाप्नोति पूर्वो वा यदि चेतरः ।
पारुष्य दोषावृतयोर्युगपत्सम्प्रवृत्तयोः ॥
विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः ।
श्वपाकषण्ढ चाण्डालव्यङ्गेषु वधवृत्तिषु ॥
हस्तिपव्रात्यदासेषु गुर्वाचार्यनृपेषु च ।
मर्य्यादातिक्रमे सद्यो घात एवानुशासनम् ॥
यमेव ह्यति वर्त्तेरन्नेते सन्तज्जनं नृषु ।
स एव निर्णयं कुर्य्यात् न तद्विनयभाङ्नृपः ॥
मला ह्येते मनुष्याणां धनमेषां मलात्मकम् ।
अतस्तान् घातये द्राजा नार्थ दण्डेन दण्डयेदिति ॥

अयमर्थः । वाग्दण्ड पारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते न तस्य केवलं दण्डाभाव एव किन्तु पूज्यत्वमपि । तथा पूर्वं कलहे प्रवृत्तस्य दण्डगुरुत्वम् । कलहे च बृद्ध वैरानुसन्धातुरेव दण्डभाक्त्वम् । तथा तयोर्द्वयोरपराध विशेषापरिज्ञाने सम एव दण्डः । तथा श्वपचादिभिरार्य्याणामपराधे कृते सज्जना एव दण्डदाने अधिकारिणस्तेषामशक्यत्वे तान् राजा घातयेदेव नार्थं गृह्णीयादिति । यत्तु वृहस्पति वचनम् ।

आक्रुष्टस्तु समाक्रोशं ताड़ितः प्रतिदापयन् ।
हत्वापराधिनञ्चैव नापराधी भवेन्नर इति ॥

तत्पूर्वं प्रवृत्तसमं दण्डम् । पश्चात् प्रवृत्तस्य नेत्येवं परन्न तु दण्डाभावपरम् । दण्डपारुष्यस्वरूप सन्देहे निर्णायकमाह याज्ञवल्क्यः ।

असाक्षिक हते चिह्नैर्युक्तिभिश्चागमेन च।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयादिति॥

यदा कश्चिद्‌हस्तहमनेनाहत इति राज्ञे निवेदयति तदा चिह्नैर्व्रणादिभिस्तत्स्वपगतैर्लिङ्गैः युक्तिभिः कारणप्रयोजन पर्य्यालोचनादिभिः आगमेन जनप्रवादेन च शब्दाद्दिव्येनवा कूट चिह्नकृत् सम्भावनभयात् परीक्षा कार्य्येत्यर्थः। एवं निश्चिते साधन विशेषेन दण्ड विशेषमाह स एव।

भस्मपङ्करज.स्पर्शे दण्डो दशपणः स्मृतः।
अमेध्यपार्ष्णि निष्ठूतस्पर्शने द्विगुणस्ततः॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च।
हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनमिति॥

अमेध्यानि अश्रु श्लेष्मादीनि। पार्ष्णिः पादस्य पश्चिमोभागः। निष्ठूतं मुखनिःसारितञ्जलम्। मोहश्चित्तवैकल्यं मदोमद्यपान जन्योऽवस्थाविशेषः। आदिशब्देन ग्रहावेशादीनां ग्रहणम्। पुरीषादिस्पर्शने त्वाह कात्यायनः।

छर्द्दि मूत्र पुरीषाद्यैः स्पर्शने स चतुर्गुणः।
षड्गुणः कायमध्ये स्यान्मूर्द्ध्नि त्वष्टगुणः स्मृत इति॥

ताड़नाय हस्तस्योद्गूरणे दण्डमाह स एव।

उद्गूरणे तु हस्तस्य कार्य्योद्वादशकोदमः।
स एव द्विगुणः प्रोक्तः पातने तु सजातिष्विति॥

वृहस्पतिरपि। उद्यतेऽस्त्र शिलाकाष्ठे कर्त्तव्यः प्रथमोदम इति॥

विष्णुरपि। हस्तेनोद्गूरयित्वा दशकार्षापणान् पादेन विंशतिं काष्ठेन प्रथम साहसं शस्त्रेणोत्तममिति। दण्ड इत्यनुवर्त्तते। अधमः शस्त्रेणोत्तमस्य यदोद्गूरणं करोति तदा

सावुत्तमसाहसं दण्ड इत्यर्थः। बृहस्पतिरपि।

मध्यमः शस्त्रसम्पाते संयोज्य तुल्ययोर्द्वयोः।
कार्यः कृतानुरूपस्तु लग्ने घाते दमो बुधैः॥
इष्टकोपलकाष्ठेन ताड़ने तु द्विमाषकः।
द्विगुणः शोणितोद्भेदे दण्डः कार्यो मनीषिभिरिति।

विष्णुरपि। शोणितेन विना दुःखमुत्पादयित्वा द्वात्रिंशत्पणान् सहशोणितेन चतुःषष्टिमिति। अत्र सर्वत्र दण्डभेदोऽपराधाल्पत्वमहत्त्वानुसारेण व्यवस्थापनीय इति। ताड़नार्थं हस्तपादाद्युद्योगे दण्ड विशेषमाह याज्ञवल्क्यः।

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ।
परस्परन्तु सर्वेषां शस्त्रे मध्यम साहसमिति॥

हस्ते पदे वा ताड़नार्थमुद्यते यथाक्रमं दशविंशति पणकौ दमौ। परस्परं बधार्थंशस्त्र उद्यते सर्वेषां वर्णानां मध्यम साहसो दण्ड इत्यर्थः। काष्ठादिभिस्ताड़ने योग्याह स एव।

शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः।
द्वात्रिंशतं पणं दण्ड्यो द्विगुणो दर्शनेऽसृजइति॥

त्वङ्मांसास्थि भेदे मनुराह।

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः।
मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थि भेदक इति।

मांसभेत्ता ब्रणकर्त्ता। कात्यायनोऽपि।

कर्णौष्ठ घ्राणपादाक्षि जिह्वाशिश्न करस्य च।
छेदने चोत्तमोदण्डो भेदने मध्यमो भृगुरिति॥

पादाद्याघर्षणादौ त्वाह याज्ञवल्क्यः।

पादकेशांशुककरोल्लुञ्चनेषु पणान्दश।

पीड़ाकर्षांशुकावेष्टा पादाध्यासे शतं दमः॥

पाद केश कराणामन्यतमं गृहीत्वा य उल्लुञ्चति झटित्याकर्षयत्यसौ दशपणान् दण्ड्यः। यो वस्त्रेणावेष्ट्य गाढं संपीड्याकृष्य पादेन घट्टयति स शतं पणान् दण्ड्य इत्यर्थः। कराद्यभिघातेऽपि स एव।

करपाददन्तभङ्गे छेदने कर्णनासयोः।
मध्योदण्डो व्रणोद्भेदे मृतकल्पहते तथा॥
चेष्टा भोजन वाग्रोधे नेत्रादि प्रतिभेदने।
कन्धरा बाहुसक्थ्नाश्च भङ्गे मध्यमसाहसः॥
एकघ्नतां बहूनाञ्च यथोक्ताद्विगुणोदम इति।

करपाददन्तानां प्रत्येकं भेदे कर्णनासिकयोश्च छेदने मृतकल्पहते च मध्यम साहसोदण्डः। गमन भोजन भाषण निरोधे नेत्रादि प्रतिभेदने च ग्रीवा बाहूरुभङ्गे च मध्यम साहस एव दण्डः। मिलित्वैकास्याङ्गभङ्गङ्कुर्वतां बहूनां यस्मिन्नपराधे यो दण्ड उक्तस्तत्र तस्माद्विगुणोदण्डः प्रत्येकं मन्तव्य इत्यर्थः।

कात्यायनोऽपि। मनुष्याणां पशूनाञ्च दुःखाय प्रहृते सति।
यथा महत्तरं दुःखं दण्डं कुर्य्याद्यथातथेति॥

प्रातिलोम्यापराधे दण्डमाह याज्ञवल्क्यः।
विप्रपीडाकरश्छेद्यमङ्गमब्राह्मणस्य तु।
उद्गूर्णे प्रथमोदण्डः संस्पर्शे तु तदर्द्धिक इति॥

अब्राह्मणस्य क्षत्रियादेः। संस्पर्शे शस्त्रादिस्पर्शे। तदर्द्धिकः प्रथमसार्द्धदण्ड इत्यर्थः। ब्राह्मणबधार्थमुद्यते शस्त्रे प्रथमसाहसाभिधानं न शूद्रविषयम्। अतएव मनुः।

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः।
छेत्तव्यन्तत्तदेवास्य तन्मनोरनुशासनम्॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदन मर्हतीति।

अत्र क्षत्रियवैश्ययोः पीडाकारिणोऽपि शूद्रस्यायमेव दण्डः। श्रेयांसमिति सामान्येनोपादानात्। समानन्यायत्वाच्च क्षत्रियपीडाकारिणोवैश्यस्य तु याज्ञवल्क्य प्रतिपादित एवदण्डः। भस्मादिसंस्पर्शे पुनः क्षत्रियवैश्ययोः प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमा इति वक्ष्यमाण वाक्पारुष्यन्यायेन स कल्प्यः। नारदोऽपि। येनाङ्गेनापरोवर्णो ब्राह्मणस्यापराध्नुयात्।

तदङ्गन्तस्य छेत्तव्यमेवं बुद्धिमवाप्नुयात्।
राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः।
शूल्यं तमग्नौविपचेद्ब्रह्महत्याशतानिचेति॥

कृतागसि कृतापराधे। शूलमारोपयेत् संश्रियेत तच्छूल्यम्। प्रातिलोम्यानु लोम्यविषये वाक्पारुष्ये उक्तान्दण्डानत्रिष्वातिदिशति कात्यायनः॥

वाक्पारुष्ये यथैवोक्ताः प्रातिलोम्यानु लोमतः।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रममिति॥

शूद्रस्य तत्राप्यङ्गच्छेद एव। तथा चाहतुर्मनु नारदौ।

अवनिष्ठीवतोदर्पात् द्वावोष्ठौ छेदयेन्नृपः।
अवमूत्रयते मेढ्रमव अर्द्धयतो गुदम्॥
केशेषु गृह्णतो हस्तौछेदयेदविचारयन्।
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु चेति॥

ताडने दुःसहव्रणाद्युत्पत्तौ त्वाह कात्यायनः।

देहेन्द्रिय विनाशे तु यथा दण्डं प्रकल्पयेत्।

तथा तुष्टिकरं देयं समुत्थानञ्च पण्डितैरिति॥

तुष्टिकरं व्रणितुष्टिकरम्। समुत्थानं व्रणारोपणं तन्निमित्तकश्च व्ययः व्रणगौरवाद्यनुसारेण पण्डितैरौषधार्थं पथ्यार्थञ्च कल्पितमाव्रणशोषणं देयम्। समुत्थानव्ययञ्चासौ दद्यादाव्रणरोपणमिति तेनैवोक्तत्वात्। यत्कलहकालेऽपहृतन्तत् स्वामिने दातव्यमित्याह वृहस्पतिः।

अङ्गावपीडने चैव भेदने छेदने तथा।

तत्तद्व्ययन्दाप्यः स्यात्कलहापहृतञ्च यदिति॥

याज्ञवल्क्योऽपि। कलहापहृतन्देयं दण्डश्च द्विगुणस्ततः।

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम्।

दाप्यो दण्डञ्च यो यस्मिन् कलहे समुदाहृत इति॥

ग्राम्यपश्वभिद्रोहे दण्डमाह विष्णुः। ग्राम्यपशुघाती कार्षापणन्दण्ड्यः पशुस्वामिने तु तन्मूल्यन्दद्यादिति। मूल्यदानंमृतपशुविषयम्। मरणाभावे तु समुत्थानव्ययन्दद्यात्। तथा च स एव। सर्वे पुरुषपीडाकराः समुत्थानव्ययन्दाप्याः ग्राम्यपशुपीडाकराश्चेति। बहुभिरेकस्य हनने दण्डमाह स एव। एकं बहूनां घ्नतां प्रत्येकमष्टोक्तो दण्डो द्विगुण इति॥ सम्भूय ताडनउच्चैः क्रोशन्तन्ताड्यमानमुपेक्ष्यमाणानां तत्समीपवर्त्तिनामपि तमेव दण्डं स एवाह। द्विगुणः उक्तः क्रोशन्तमनभिधावता तत्समीपवर्त्तिनां सताञ्चेति। क्वचिद्दशक्य प्रतीकारविषये प्राणिघातनिबन्धनो दण्डो नेत्याह मनुः।

छिन्ननास्ये भग्नयुगे तिर्य्यक् प्रतिमुखागते।

अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च॥

छेदने चैव यन्त्राणां योक्त्ररश्मो स्तथैव च।

आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीदिति ॥

छिन्ननास्ये बलीवर्दादेर्नासिकास्थरज्ज्वादौ त्रुटिते। युगे भग्ने शकटादि युगकाष्ठभग्ने। यन्त्राणां शकटादि काष्ठानां बन्धनानां रज्ज्वादीनाम्। शक्यप्रतीकारे तु प्रेक्षकस्याह स एव। यत्राप्रवर्त्तते युग्मं वैगुण्यात्प्राजकस्य तु।

तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतन्दममिति ॥

प्राजकः शकटादिनेता। द्विशतग्रहणं तत्प्राणिहिंसायां विशेषविहितदण्डोपलक्षणार्थमिति स्मृतिचन्द्रिकायाम्। यत्र समर्थप्राजकदोषेण प्राणिहिंसा न तत्र स्वामिनो दण्डः किन्तु प्राजकस्येत्याह स एव।

प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हतीति।

आप्तः समर्थ इत्यर्थः। स्थावरप्राणिपीडायां स एवाह।

वनस्पतीनां सर्वेषामुपभोगो यथा यथा।

तथा तथा दमः कार्य्यो हिंसायामिति धारणेति ॥

वनस्पतिग्रहणं स्थावरप्राणिमात्रोपलक्षणम्। उपभोगो यथा यथेत्यनेन येषामाम्रादीनां फलमुपभुज्यते तेषां हिंसायामधिको दण्डः। येषाञ्चम्पकादीनां पुष्पमुपभुज्यते तेषान्ततोन्यूनः। येषां पत्रमुपभुज्यते तेषान्ततोऽपि न्यून इति दर्शितम्। एतदेव विवरणपूर्वकं विष्णुराह। फलोपभोगद्रुमच्छेदी तूत्तमसाहसम्पुष्पोपभोगच्छेदी मध्यमसाहसं वल्लीगुल्मलताच्छेदी कार्षापणशतं तृणच्छेद्येकं सर्वे तत्स्वामिनां तदुत्पत्तिमिति। दण्ड इत्यनुवर्त्तते। सर्वे फलोपभोगद्रुमच्छेद्यादयः तत्स्वामिनां छिन्नद्रुमादिस्वामिनां तदुत्पत्तिं फलभोगद्रुमाद्युत्पत्तिं पुनः प्रतिरोपितभोगकालपर्य्याप्तां दद्यु-

रिति शेषः । पशुभिद्रोहे दण्डमाह याज्ञवल्क्यः ।

दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनाञ्च द्विपणप्रभृति क्रमात् ॥
लिङ्गस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दम इति ॥

क्षुद्रपशूनाम् अजाविकप्रभृतीनाम् । ताडनेन दुःखोत्पादने । शोणितोत्पादे रक्तस्रावणे । शाखाशब्देनात्र शृङ्गादिकं गृह्यते अङ्गानि करचरणादीनि तेषां छेदने च यथाक्रमं द्विपणप्रभृतिर्दण्डः । द्विपणश्चतुष्पणः षट्पण इत्येवं रूपः। तेषां लिङ्गच्छेदने मारणे च मध्यमसाहसो दण्डः स्वामिने मूल्यदानञ्च । महापशूनाङ्गोगजवाज्यादीनाम् एतेषु स्थानेषु पूर्वोक्ताद्दण्डाद्द्विगुणो दण्डो वेदितव्य इत्यर्थः। विष्णुरपि । पशूनां पुंस्त्वोपघातीति कार्षापणशतमत्रप्रकृताम् । स एव । गजाश्वोष्ट्रगोघातीत्वेककरण दुष्कार्यौ विमांसविक्रयी ग्रामपशुघाती कार्षापणशतं दण्ड्यः । पशुस्वामिने च तन्मूल्यं दद्यात् । अरण्यपशुघाती पञ्चाशत् कार्षापणान् । पक्षिघातीमत्स्यघाती च दशकार्षापणान् । कीटोपघाती कार्षापणमिति । विमांसं शृगालादिमांसमिति कल्पतरौ कात्यायनोऽपि ।

द्विपणो द्वादशपणो बधे तु मृगपक्षिणाम्।
सर्पमार्जारनकुलशूकराश्वबधे नृणाम्॥
गोकुमारीदेवपशुमुक्षाणं वृषभं तथा।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं वध इति ॥

परकुड्याभिघाते परगृहे कण्टकादि प्रक्षेपे च दण्डमाह याज्ञवल्क्यः । अभिघाते तथा छेदे भेदे कुड्यावपातने ।

पणान्प्राप्यः पञ्चदशविंशतिन्तद्व्यय न्तथा ॥
दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरन्तथा ।
षोड़षाद्यः पणान्दण्डो द्वितीयो मध्यमन्दम इति ॥

मुद्गरादिना कुड्यस्याभिघाते विदारणे द्वैधीकरणे च यथा क्रमम्पञ्चपणोदशपणोविंशतिपणोदण्डः । कुड्यस्यावपातने तु समुच्चिता एते त्रयोदण्डाः ग्राह्याः । कुड्यसम्पादनार्थञ्च धनमपि तत् स्वामिने दद्यात् । परगृहे कण्टकादिप्रक्षेपणे षोडशपणोदण्डः । विषभुजङ्गादि प्रक्षेपणे मध्यमसाहसोदण्ड इत्यर्थः । स्थावराभिद्रोहे दण्डमाह स एव ।

प्ररोहिशाखिनां शाखास्कन्धसर्व विदारणे ।
उपजीव्यद्रुमाणान्तु विंशतेर्द्विगुणोदमः ॥
चैत्यश्मशान सीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणोदमो वृक्षेऽथ विश्रुते ॥
गुल्म गुच्छक्षुपलता प्रतानौषधिवीरुधाम् ।
पूर्वस्मृतादर्द्ध दण्डः स्थानेषूक्तेषु कर्त्तने इति ॥

प्ररोहिशाखिनां वटादीनां शाखाच्छेदने स्कन्धच्छेदने समूलवृक्षच्छेदने च यथाक्रमं विंशतिपणदण्डादारभ्य पूर्वस्मादुत्तरोत्तरं द्विगुणोदण्डः । विंशतिपणश्चत्वारिंशत्पणोऽशीतिपण इत्येवंरूपः । अप्ररोहि शाखिनामाम्रादीनां उपजीव्यद्रुमाणां पूर्वोक्तेषु स्थानेषु छेदने पूर्वोक्ता एव दण्डाः चैत्यादि स्थानेषूत्पन्नानां वृक्षाणां शाखादिछेदने पूर्वोक्ताद्दण्डाद्विगुणाः विश्रुते चाश्वत्थपलाशादिके द्विगुणो दण्डः । गुल्मा मालत्यादयः कुरण्टकादयः क्षुपाः करवीरादयः लताः द्राक्षातिमुक्तादयः । प्रतानाः काण्ड प्ररोहरहिताः । ओषध्यः फल-

धान्यताः शालिप्रभृतयः। वीरुधः गुडूचीप्रभृतयः। एतेषु पूर्वोक्तेषु स्थानेषु विकर्त्तने छेदने पूर्वोक्ताद्दण्डादर्द्धदण्डो वेदितव्य इत्यर्थः। भार्य्यादीनामपराधे रज्जुवेणुदलाभ्यामधमाङ्गे ताड़येत्। अन्येनोत्तमाङ्गे च ताड़यन् दण्ड्य इत्याह यमः।

भार्य्या पुत्रश्च दासश्च दासी शिष्यश्च पञ्चमः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥
अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कथञ्चन।
अतोऽन्यथा प्रवृत्तस्तु यथोक्तं दण्डमर्हतीति॥
भार्य्या पुत्रश्च शिष्यश्च दासो भ्राताऽथ सोदरः।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौर किल्बिषमिति॥

शिष्यानुवृत्तावापस्तम्बोऽपि। अपराधेषु चैनं सततमुपालभेत अतित्रास उपवास उदकोपस्पर्शनमिति दण्डाः यथातन्मात्रनिवृत्तिरिति अपराधनिवृत्ति पर्य्यन्तं अपराधानुरूपं दण्डपातनं कर्त्तव्यमित्यर्थः। यत्र तु आत्मनः कश्चिद्द्वेषात्ताड़नादि चिह्नं विधाय परमभिद्रवति तत्र साक्ष्यादिभिर्दिव्येन वा परीक्षणं कर्त्तव्यमित्याहतुर्नारदबृहस्पती।

कश्चित् कृत्वात्मनश्चिह्नं द्वेषात्परमभिद्रवेत्।
हेत्वर्थ मतिसामर्थ्यैस्तत्र युक्तं परीक्षणमिति॥

याज्ञवल्क्योऽपि। असाक्षिकहते चिह्नै युक्तिभिश्चागमेन च।

द्रष्टव्यो व्यवहारस्तु कूटचिह्न कृताद्भयादिति॥

कात्यायनोऽपि। हेत्वादिभिर्नपश्चेच्च दण्डपारुष्य कारणम्।

तदा साक्षिस्तत्र दिव्यं नाविनियोजयेदिति।

इति दण्डपारुष्याख्यव्यवहारपदम्।

---

## तथा वाक्पारुष्याख्य व्यवहारपदम्।

तस्य च स्वरूपमाह नारदः।

देशजाति कुलादीनामाक्रोशं न्यङ्ग संयुतम्।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते इति ॥

आक्रोशः आक्षेपः भर्त्सनमिति यावत् कलहप्रियाः गौडा इति देशाक्रोशः। अत्यन्तलोलुपा ब्राह्मणा इति जात्याक्रोशः। क्रूरचरिता वैश्वामित्रा इति कुलाक्षेपः। न्यङ्गमवद्यन्तदुभययुक्तं यदुद्वेगजननार्थं वाक्यं तद्वाक्पारुष्यमित्यर्थः। तस्य त्रैविध्यमाह स एव। निष्ठुराश्लीलतीव्रत्वादपि त्रिविधं स्मृतम्

गौरवानुक्रमात्तस्य दण्डोऽपि स्यात् क्रमाद्गुरुरिति ॥

निष्ठुरादीनां स्वरूपमाह स एव।

साक्षेपन्निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम्।
पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिण इति ॥

धिङ्मूर्ख! जाल्म! इत्यादि साक्षेपम्भाषणं निष्ठुरम्। न्यङ्गसंयुतं अवद्यम्भगिन्यादिगमनसंयुतम्। अश्लीलं पतनीयैः सुरापानादिभिरुपाक्रोशैस्तीव्रं वाक्पारुष्यमित्यर्थः।
कात्यायनोऽपि। "यत्त्वसत्यैर्न्यङ्गितैरङ्गैः परमाक्षिपति क्वचित्।

अभूतैर्वाथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा ॥
न्यग्भावकरणं वाचा क्रोधात्तु कुरुते यदा।
वृत्तदेश कुलानान्तु अश्लीलासा बुधैः स्मृता॥

महापातकयोक्ती च रागद्वेषकरी च या।
जातीभ्रंशकरी वाथ तीव्रा सा प्रथिता तु वागिति ॥

कल्पतरौ न्यङ्गावगूरणमिति पठित्वा निकृष्टाङ्गप्रकाशनेन तिरस्करणमिति व्याख्यातम्। न्यग्भावकरणमिति तु माधवादिसंमतः पाठः। प्रथममध्यमोत्तमभेदेन त्रैविध्यमाह। बृहस्पतिः। देश ग्राम कुलादीनां क्षेपः पापेन योजनम्।

द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥
भगिनी मातृसम्बन्धमुपपातक शंसनम्।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेय कथनं महापातक दूषणम्।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनमिति ॥

द्रव्यं विनेत्यत्र द्रव्यशब्दोऽभिधेयपरः। तेनोच्यमानार्थव्यतिरेकेणैवंविधमभिधानं वाक्पारुष्यमित्यर्थ इति कल्पतरौ। द्रव्यं विना द्रव्यवैशिष्ट्यं विनेति मदनरत्ने। अभिघट्टनं उद्घाटनम्। निष्ठुराक्रोशे दण्डमाह याज्ञवल्क्यः।

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रिय रोगिणाम्।
क्षेपं करोति चेद्दण्ड्यः पणानर्द्ध त्रयोदशानिति ॥

अन्यथास्तोत्रनिन्दास्तुतिः। न्यूनाङ्गाः करादिरहिताः। न्यूनेन्द्रियाः नेत्रादि रहिताः। रोगिणः कुष्ठादयः अर्द्ध त्रयोदशान्। अर्द्धाधिक द्वादशपणानित्यर्थः। एतत् सवर्णविषयम्। अतएव बृहस्पतिः।

समजाति गुणानान्तु वाक्पारुष्ये परस्परम्।
विनयोविहितः शास्त्रे पणा अर्द्धत्रयोदशाइति ॥

विष्णुरपि। समवर्णाक्रोशने द्वादशपणान्दण्डाइति। पर-

स्वरमिति शेषः। मनु नारदावपि।

समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे।
वादेष्ववचनीयेषु तदेव द्विगुणं भवेदिति॥

शङ्ख लिखितावपि। समवर्णे व्यतिक्रमे द्वादशपणा यथारूपविशिष्टाक्षेपेषु विशिष्टस्य चतुर्विंशतिरविशिष्टस्यातिक्रमे च विशिष्टस्य ततोऽर्द्धमिति। अत्र द्वादशसार्द्धद्वादशयोरुत्कृष्टानुत्कृष्टत्वेन व्यवस्था द्रष्टव्या। कात्यायनोऽपि।

यो गुणान् कीर्त्तयेत् क्रोधान्निर्गुणे वा गुणज्ञताम्।
अन्य संज्ञानियोजीच वाग्दुष्टं तन्नरं विदुरिति॥

नारदोऽपि। दुष्टस्यैव तु यो दोषान् कीर्त्तयेत् क्रोध कारणात्।
अन्यायदेशवादी च वाग्दुष्टं तन्नरं विदुरिति॥

अत्र क्रोधकारणादित्यनेन दुष्टपरित्यागार्थं दोषकीर्त्तनेन दोष इति सूचितम्। अतएवोक्तं कात्यायनेन।

यत्र स्यात्परिहारार्थं पतितत्वेन कीर्त्तितम्।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेदिति॥

वचनात् दोष कीर्त्तनात्। यत्राभियोगादौ पातित्यादिकं साधयेत्तत्रापि वचनाद्दोषो न स्यादिति यन्न विभावयेदित्यस्यार्थ उक्तः स्मृति चन्द्रिकायाम्। अत्रापि दण्डपारुष्य न्यायेन युगपत् प्रवृत्तयोर्दण्ड तुल्यत्वं अयुगपत् प्रवृत्तयोः पूर्वप्रवृत्तस्य दण्डाधिक्यमिति द्रष्टव्यम्। जाति गुणकृते विशेषे दण्ड वैषम्यमाह बृहस्पतिः। समाश्रयोः समो दण्डोन्यूनस्य द्विगुणोदमः।
उत्तमस्याधिकः प्रोक्तो वाक्पारुष्ये परस्परमिति॥

हीनस्योत्तमाक्षेपे द्विगुणः। उत्तमस्य हीनाक्षेपेऽर्द्ध परिमितोदण्ड इत्यर्थः। याज्ञवल्क्योऽपि।

अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च।
दण्ड प्रणयनं कार्यं वर्णजात्युत्तराधरैरिति॥

अर्द्धः सार्द्धद्वादशपणात्मक इत्यर्थः। पूर्ववाक्ये पञ्चविंशतिको दमइति पञ्चविंशतेः प्रकृतत्वात्। वर्णा ब्राह्मणादयः। जातयो मूर्द्धाभिषिक्तादयः। ते च ते उत्तराधराश्च वर्णजात्युत्तराधरास्तैरन्योन्याक्षेपे क्रियमाणे दण्डस्य प्रणयनं ऊहनीयं ज्ञातव्यम्। उत्तराधरभावमालोच्य दण्डः कल्पनीय इत्यर्थः। तमेव कल्पनीयं दण्डं प्रदर्शयति मनुः।

शतं ब्राह्मण माक्रुश्य क्षत्रियोदण्ड मर्हति।
वैश्योऽप्यर्द्धशतं द्वे वा शूद्रस्तु बधमर्हति॥
विप्रः पञ्चाशतं दण्ड्यः क्षत्रियस्याभिशंसने।
वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दम इति॥

वृहस्पतिरपि।

क्षिपन्विप्रादिकं दद्यात् पञ्चाशत्पणिकं दममिति॥

शङ्खलिखितावपि। आक्रोशे ब्राह्मणस्य क्षत्रियः पणशतं दण्ड्यः शतार्द्धं वैश्यस्य पञ्चविंशतिं शूद्रस्येति। वृहस्पतिरपि।

विप्रे शतार्द्धं दण्डस्तु क्षत्रियस्याभिशंसने।
विशस्तथार्द्धं पञ्चाशच्छूद्रस्यार्द्धत्रयोदश॥
सच्छूद्रस्याय मुदितो विनयोऽनपराधिनः।
गुणहीनस्य पारुष्ये ब्राह्मणो नापराघ्नुयात्॥
वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतम्भवेत्।
तदर्द्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति॥
शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः।
वैश्यस्य चैतद्विगुणः शास्त्रविद्भिरुदाहृतः॥

वैश्यमाक्षारयन् शूद्रोदाप्यः स्यात् प्रथमं दमम् ।
क्षत्रियं मध्यमञ्चैव विप्रमुत्तमसाहसमिति ॥

जिह्वाच्छेदनरूपोऽत्रोत्तमसाहसो द्रष्टव्यः । तथा च स एव ।

धर्म्मोपदेशकर्त्ता च वेदोदाहरणान्वितः ।
आक्रोशकस्तु विप्राणां जिह्वाछेदेन दण्ड्यते इति ॥

शूद्र इत्यनुषङ्गः । आपस्तम्बोऽपि ।

जिह्वाच्छेदनं शूद्रस्यार्यं धार्म्मिकमाक्रोशत इति ॥

गौतमोऽपि । शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गम्मोच्यो येनोपहन्यादिति । अभिसन्धाय बुद्धिपूर्वं वा चातिक्रम्य अभिहत्य उग्रेण दण्डेन ताड़यित्वा अङ्गं मोच्यते नाङ्गेन वियोजनीय इत्यर्थः । गुर्वाद्याक्रोशेत्वाहतुः शङ्खलिखितौ । तथाऽधिक्षतान् विप्रान् गुरूंश्च निर्वासनम्मुण्डनं ताड़नं वा गोमयानुलेपनं खरारोहनं दर्पहरणं वा दण्डो वेति । दण्डः कार्षापणशतरूपः । अतएव विष्णुः । गुरूनाक्षारयन् कार्षापणशतमिति । पुत्रादिभिर्मात्रादीनामाक्रोशे दण्डमाह मनुः ।

मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् ।
आक्षारयन् शतन्दाप्यः पन्थानञ्चाददद्गुरोरिति ॥

भ्रातरं ज्येष्ठभ्रातरम् । एतच्च सापराधेषु मात्रादिषु निरपराधायां जायायामिति मिताक्षरायामभाणि । श्वश्रुः आद्यविक्षेपे दण्डमाह बृहस्पतिः ।

क्षिपन् श्वश्र्वादिकं दद्यात् पञ्चाशत्पणिकं दममिति ।

बाह्वादिच्छेदन निष्ठुरभाषाभिभाषणे दण्डमाह याज्ञवल्क्यः ।

बाहुग्रीवा नेत्रसक्थि विनाशे वाचिके दमः ।

शत्यस्तद्द्विक: पादनासाकर्णकरादिष्विति ॥

बाह्वादिविनाशे वाचिके करिष्यामीति वाचा प्रतिपादितं शत्य: शतपरिमितो दण्ड:। पादादिभङ्गं करिष्यामीत्याक्षेपे पञ्चाशत्परिमितो दण्डइत्यर्थ:। एवंवादिनोऽशक्तस्य दशपणा दण्डनीया इत्याह स एव।

अशक्तस्तु वदन्नेवं दण्डनीय: पणान्दशेति।

य: पुन: शक्तोऽशक्तस्य बाह्वादिभङ्गाक्षेपं करोति न केवलं स दण्ड्य: किन्तु अशक्तक्षेपार्थं प्रतिभुवमपि दापनीय इत्याह। स एव। तथाशक्त: प्रतिभुवन्दाप्य: क्षेमायतस्य त्विति।

अश्लीलभाषणेदण्डमाह स एव।

अभिगन्तास्मि भगिनीं मातरं वा तवेति ह।

शपन्तन्दापयेद्राजा पञ्चविंशतिकं दममिति ॥

तीव्राक्रोशे दण्डमाह स एव।

पतनीय कृते क्षेपे दण्डमुत्तमसाहस:।

उपपातक युक्ते तु दाप्य: प्रथमसाहसमिति।

पतनीयै: पातित्यहेतुभिर्ब्रह्महत्यादिभि:। उपपातकानि-गोवधादीनि। मनु रपि।

ब्राह्मणक्षत्रियाभ्यान्तु दण्ड: कार्यो विजानता।

ब्राह्मणे साहस: पूर्व: क्षत्रिये त्वेव मध्यम: ॥

विट्शूद्रयोस्त्वेवमेव स्वजातिं प्रतितत्त्वत:।

छेदवर्जं प्रणयनं दण्डस्येति विनिश्चय: ॥

पापोपपातककारो महापातकशंसका:।

आद्यमध्योत्तमान्दण्डान्दद्युस्ते यथाक्रममिति ॥

विष्णुरपि। परस्पर पतनीये क्षेपे कृतेह्युत्तमसाहसं उप-

पातकयुक्तन्तु मध्यमम्। त्रैविद्यवृद्धानां क्षेपे जातिपूगानाञ्च ग्रामदेशयोः प्रथममिति। देशाद्याक्रोशे दण्डमाह बृहस्पतिः।

देशादिकं क्षिपन्दाप्यः पणानर्द्धत्रयोदश।
पापेन योजयन् दर्पाद्दाप्यः प्रथमसाहसम्॥
एष दण्डः समाख्यातः पुरुषापेक्षया मया।
समन्यूनाधिकत्वेन कल्पनीयो मनीषिभिरिति॥

याज्ञवल्क्योऽपि।

मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोरिति।

राज्ञ आक्रोशे दण्डमाह नारदः।

अवक्रुश्य च राजानं वर्त्मनि स्वे व्यवस्थितम्।
जिह्वाच्छेदाद्भवेच्छुद्धिः सर्वस्वहरणेन वेति॥

याज्ञवल्क्योऽपि। राज्ञोऽनिष्टप्रवक्तारन्तस्यैवाक्रोशकन्तथा।

तन्मन्त्रस्य च भेत्तारञ्छित्त्वा जिह्वाम्प्रवासयेदिति॥

सत्यदोषाभिधानेऽपि वाक्पारुष्यदण्डोऽस्त्येव। तथा च नारदः। पतित पतितेत्युक्त्वा तथा चौरेति वा पुनः।

वचनात्तुल्यदोषः स्यान्मिथ्याद्विर्दोषतां ब्रजेदिति॥

मनुनारदावपि।काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम्।

तथ्येनापि ब्रुवन्दाप्योदण्डङ्कार्षापणावरमिति॥

विष्णुरपि। काणखञ्जादीनान्तथ्यवाद्यपि कार्षापणद्वयमिति

एतच्च दुष्टत्तविषयमिति माधवीये विद्यारण्यश्रीपादैरभ्यधायि। मिथ्यावदनशीलानां दण्डमाह कात्यायनः।

अनृताख्यानशीलानाञ्जिह्वाच्छेदो विशोधनमिति।

हारीतोऽपि। मिथ्याभाषिणां मेलकानाञ्च राजा जिह्वाञ्छिन्द्याद्दण्डयेद्वेति मेलकोभक्षकः। कस्यचिद्वाक्पारुष्य

कृतोऽर्हं दण्डमार्होशनाः ।

मोहात्प्रमादात्संहर्षात् प्रीत्या वोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दण्डार्द्धन्तस्य कल्पयेदिति ॥

वक्ष्ये इत्यत्र वक्ष्मीतिशेषः इति वाक्पारुष्याख्यव्यवहार पदम्

---

## अथ स्तेयाख्यव्यवहार पदम् ।

तल्लक्षणमाह मनुः । स्यात्साहसं त्वन्वयवत् प्रसभङ्कर्म यत्कृतम् ।
निरन्वयम्भवेत् स्तेयं हृत्वापह्नुयते च यदिति ।

अस्यायमर्थः । अन्वयवद्द्रव्यरक्षकराजाद्यध्यक्षादि समक्षं बलावष्टम्भेन यत्परधनापहरणादिकं क्रियते तत् साहसम् । स्तेयं पुनर्निरन्वयं स्वाम्याद्यसमक्षं यद्वञ्चयित्वा परधनाद्यपहरणं तदुच्यते । यच्च राजाद्यध्यक्षादि समक्षमपहृत्य नमयेदं कृतमिति भयान्निह्नुते तदपि स्तेयमिति । अतएव नारदः ।

उपायैर्विविधैरेषां छलयित्वापकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिण इति ॥

एषामित्येतच्छूद्रनिर्दिष्टान्याह स एव ।

मृद्भाण्डासन खट्वास्थिदारुचर्मतृणादि यत् ।
शमीधान्यं कृतान्नञ्च क्षुद्रं द्रव्यमुदाहृतम् ॥
वासः कौशेयवर्ज्जञ्च गोवर्ज्जम्पशवस्तथा ।
हिरण्यवर्ज्जं लोहञ्च मध्यं व्रीहियवादि च ॥
हिरण्यरत्न कौशेयस्त्री पुङ्गोगजवाजिनः ।
देवब्राह्मणराज्ञाञ्च विज्ञेयन्द्रव्यमुत्तममिति ॥

बलात्कार कृतमपहरणं साहसान्तर्गतं स्तेयमित्याह।

स एव। तस्यैव भेदः स्तेयः स्याद्विशेषस्तत्र तूच्यते।

आधिसाहसमाक्रम्य स्तेयमाधिश्छलेनत्विति।

तस्यैव साहसस्यैव। आधिः पीड़ा धनापहरणादिद्वारा आक्रम्य प्रसह्य परस्य क्रियमाण क्लेशः साहसरूपं स्तेयम्। छलेन क्रियमाण आधिः केवलस्तेयमित्यर्थः। तस्करज्ञानोपाय माह याज्ञवल्क्यः। ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा।

पूर्वकर्म्मापराधी च तथा चाशुद्धवासकः॥

अन्येऽपि शङ्कया ग्राह्या जातीनामादिनिह्नवैः।

द्यूतस्त्रीपान सक्ताश्च शुष्कभिन्नमुखस्वराः॥

परद्रव्यगृहाणाञ्च पृच्छका गूढचारिणः।

निराया व्ययवन्तश्च विनष्टद्रव्यविक्रया इति॥

ग्राहकैराज पुरुषैर्लोप्त्रेणापहृत भाजनादिना चौर्य्यैः। अशुद्धवासः अप्रज्ञातस्थानवासी। जातिनिह्नवो नाहं शूद्र इत्येवंरूपः। नामनिह्नवो नाहंडित्थ इत्येवं रूपः। आदि ग्रहणात् स्वदेशग्राम कुलाद्यपलापेन च लक्षिता ग्राह्याः घृतपण्याङ्गना मद्यपानादिष्वति प्रसक्ताः तथा कुतस्त्योऽसित्वमिति चौरग्राहिभिः पृष्टो यदि शुष्कमुखोभिन्नस्वरो वा भवति। बहुवचनात् स्विन्नललाटादीनां ग्रहणम्। तथा ये निष्कारणङ्कियदस्य द्रव्यं किंवास्य गृहमित्येवं पृच्छति। येच वेषान्तरधारणेनात्मानङ्गूढयित्वा चरन्ति। ये चायाभावेऽपि बहुव्ययकारिणः ये च विनष्टद्रव्याणाञ्जीर्णवस्त्रभिन्न भाजनादीनामनिर्ज्ञात स्वामिकानां विक्रयकारिणः ते सर्वेऽपि चौर्यसम्भावनया ग्राह्या इत्यर्थः। एवंविधलिङ्गयुक्तान् पुरुषान् गृहीत्वैते चौरा भ-

वन्ति नवेति सम्यक् परीक्षेत न तावन्मात्रेण निश्चिनुयात्। चौरस्यापि लिङ्गसम्बन्धसम्भवात्। अतएव नारदः।

अन्यहस्तात्परिभ्रष्टमकामादुत्थितम्भुवि।
चौरेण वा प्रतिक्षिप्तं लोप्त्रं यत्नात्परीक्षयेत्॥
असत्याः सत्यसङ्काशाः सत्याश्चासत्यसन्निभाः।
दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणमिति॥

स्तेयस्य त्रैविध्यमाह स एव।

तदपि त्रिविधं ज्ञेयं द्रव्यापेक्षम्मनीषिभिः।
क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणादिति॥

चौरस्य द्वैविध्यमाह बृहस्पतिः।

प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः।
प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधेति॥

प्रकाशतस्करानाह स एव।

नैगमा वैद्यकितवाः सभ्योत्कोचकवञ्चकाः।
दैवोत्पातविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः॥
अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः।
प्रकाशतस्करा ह्येते तथा कुहकजीविन इति॥
प्रतिरूपकाः प्रतिरूपकाराः। अतएव नारदः।
प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः।
उत्कोचकाः सोपधिका वञ्चकाः परयोषितः॥
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः।
इत्येवमादयो ज्ञेया प्रकाशतस्करा भुवीति॥

नैगमादिव्याजेन ये परद्रव्यापहारकास्ते नैगमाद्याः अप्रकाशे तस्कर स्वरूपभेदानाह व्यासः।

साधनाङ्गान्विता रात्रौ विचरन्त्यविभाविताः ।
अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः ॥
उत्क्षेपकः सन्धिभेत्ता पान्थमुड्ग्रन्थिभेदकः ।
स्त्रीपुंसोश्च पशुस्तेयी चौरो नवविधः स्मृत इति

रात्राविति प्रायिकम् । अरण्यादौ दिवापि सम्भवात् । उत्क्षेपकः धनिनामनवधानतान्निश्चित्य तत् समीपस्थं धनमुत्कृत्य ग्राहकः । सन्धिभेत्ता गृहयोः सन्धौ स्थित्वा तत्रत्यभित्तिभेत्ता । पान्थमुदककान्तारादौ पथिकानान्धनप्रत्यापहारकः । ग्रन्थिभेदकः परिधानीयादिग्रथितं धनं गृहीतुं तद्ग्रन्थिमोचका इति । प्रकाशतस्कराणां दण्डमाह स एव ।

स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेश वृत्तयः ।
गृह्णन्ति छद्मनाचार्थ मनार्य्यास्त्वार्यलिङ्गिनः ॥
नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः ।
यथा तेनानिवर्त्तन्ते तिष्ठन्ति सन्नये तथेति ॥

दोषानुरूपतो दण्ड्या न तु धनानुरूपत इत्यभिप्रायः । केषाञ्चित् प्रकाशतस्कराणां दण्डमाह बृहस्पतिः ।

प्रच्छाद्य दोषं व्यामिश्र पुनः संस्कृत्य विक्रयी ।
पण्यं तद्द्विगुणं दाप्यो वणिग्दण्डञ्च तत्समम् ॥
अज्ञातौषधिमन्त्रस्तु यश्च व्याधे रतत्ववित् ।
रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चौरवद्भिषक् ॥
कूटाक्षदेविनः क्षुद्रा राजभाव्यहराश्च ये ।
गणका वञ्चकाश्चैव दाण्ड्यास्ते कितवाः स्मृताः ॥
अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्वएव ते ॥

ज्योतिर्ज्ञानन्तथोत्पातमविदित्वा तु ये नृणाम्।
श्रावयन्त्यर्थलोभेन विनेयास्ते प्रयत्नत:॥
दण्डाजिनादिभिर्युक्त मात्मानं दर्शयन्ति ये।
हिंसन्ति छद्मना नृणां बध्यास्ते राजपूरुषै:॥
अल्पमूल्यन्तु संस्कृत्य नयन्ति बहुमूल्यताम्।
स्त्रीबालकान्वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारत:॥
हेमरत्नप्रवालाद्यान् कृत्रिमान् कुर्वते तु ये॥
क्रेतुर्मूल्यं प्रदाप्यास्ते राज्ञा तद्द्विगुणं दमम्।
मध्यस्थं वञ्चयन्त्येकं स्नेहलोभादिना यदा।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणन्दममिति॥

भाव्यं करविशेष:। मनुरपि।

सर्वकण्टकया पिष्टं हेमकारन्तु पार्थिव:।
अवर्त्तमान मन्याये छेदयेल्लवश: क्षुरैरिति॥

विष्णुरपि। द्यूते च कूटाक्षदेविनां करच्छेद इति। अप्रकाशतस्कराणां दण्डमाह स एव।
उत्क्षेपकस्य सन्दंशच्छेत्तव्यो राजपूरुषै:। सदंशोऽत्र कर:।
तथा च याज्ञवल्क्य:। उत्क्षेपक ग्रन्थिभेदौ करसन्दंशहीनकौ।

कार्य्यौ द्वितीयापराधे करपादैकहीनकाविति॥

अङ्गुष्ठ तर्जन्योर्ग्रन्थिमोचने साधकतमत्वेनात्र सन्दंश शब्देन तयोर्ग्रहणम्। प्रथमापराधे तौ क्रमेण पाणि सन्दंशाभाववन्तौ कर्त्तव्यौ। द्वितीयापराधे उभावप्येकपाणिपादाभावावेतौ कर्त्तव्यावित्यर्थ:। सन्धिभेत्तृणां दण्डमाह मनु:।

सन्धिम्भित्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्करा:।

तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेदिति ॥

तानिति शेषः। बृहस्पतिरपि।

सन्धिच्छेदकृतो ज्ञात्वा शूलमाग्राहयेत् प्रभुरिति ॥

आग्राहयेत् आरोपयेदित्यर्थः। पान्थमुखे दण्डमाह। स एव। तथा पान्थमुखं वृक्षे गले बद्धावलम्बयेदिति ॥

पान्थ मुखं पथिलुण्ठकान्। ग्रन्थिभेदकस्य दण्डमाह मनुः। अङ्गुली ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे।

द्वितीये हस्त चरणौ तृतीये बधमर्हतीति ॥

अङ्गुली तर्जन्यङ्गुष्ठौ। द्वितीये हस्तस्य छेदः चरणस्य च तृतीये बध इत्यर्थः। अतएव नारद आह।

प्रथमे ग्रन्थिभेदाना मङ्गुष्ठहस्तयोर्बध इति ॥

स्त्रीहर्त्तुर्दण्डमाह व्यासः।

स्त्रीहर्त्ता लोहशयने दग्धव्यो वै कराग्निनेति।

पुंहर्त्तुर्दण्डमाह स एव।

नरहर्त्तुर्हस्तपादौ च्छित्वा स्थाप्यश्चतुष्पथ इति ॥

गोहर्त्तुर्दण्डमाह बृहस्पतिः।

गोहर्त्तुर्नासिकाञ्छित्वा बद्धाम्भसि निमज्जयेदिति ॥

नारदः। सर्वस्वं हरतो नारीं कन्यां तु हरतो बधः।

वाजिवारण लोहानां चाददीत बृहस्पतिरिति ॥

सर्वस्व मित्यनुषङ्गः। पशुहर्त्तुर्दण्डमाह व्यासः।

पशुहर्त्तुरर्द्ध पादं तीक्ष्णशस्त्रेण कर्त्तयेदिति ॥

पशुहर्त्ता पश्वनुसारेण दण्डनीय इत्याह नारदः।

महापशून् स्तेनयतो दण्डमुत्तमसाहसम्।

मध्यम पशून्पूर्वन्तु क्षुद्रपशून् तथा स्मृत इति ॥

हृत इति षष्ठी। बन्दिग्रहादीनां दण्डमाह याज्ञवल्क्यः।

बन्दिग्रहांस्तथा वाजि कुञ्जराणां च हारिणः।
प्रसह्यघातिनश्चैव शूलान्नारोपयेन्नर इति॥

अङ्गच्छेदादयः उत्तमसाहसत्वाद् ब्राह्मण व्यतिरिक्तेपूत्तम द्रव्यापहार विषयाः।

साहसेषु य एवोक्त स्त्रिषु दण्डमनीषिभिः।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमादिति॥

नारदेनोक्तसाहसस्योत्तमद्रव्यविषयत्वेन व्यवस्थापनात्तेन क्षुद्रमध्यम द्रव्योऽक्षेपकादीनां तदनुरूपो न करच्छेदादिः। तस्करस्यापहृतं धनन्तत् स्वामिने दापयित्वा दण्डः। कर्त्तव्य इत्याह याज्ञवल्क्यः।

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैरिति।

धान्यायाहरणे दण्डमाह मनुः।

धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं बधः।
शेषेऽप्येकादेशगुणं दाप्यस्तस्य च तद्धनमिति॥

कुम्भो विंशतिप्रस्थाः शेषे दशकुम्भाधिकान्न्यूने। तस्य धान्य स्वामिनः। रत्नहरणे दण्डमाह स एव।

मुख्यानाञ्चैव रत्नानां हरणे बधमर्हतीति।

स एव। सुवर्णरजतादीनामुत्तमानाञ्च वाससाम्।

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदन मिष्यते॥
शेषे त्वेकादश गुणं मूल्याद्दण्डं प्रकल्पयेत्।
पुरुषाणां कुलीनानान्नारीणाञ्च विशेषत इति॥

अत्र सुवर्णादीनां संख्याकर्षशतेत्याहुः वृद्धा इति मदन रत्ने। अत्राङ्गच्छेदादिदण्डो ब्राह्मण व्यतिरिक्त विषयः।

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेदिति ॥

याज्ञवल्क्यस्मरणात्। चिह्नं ललाटे श्वपदाकाराङ्कनम्। तथा च मनुः।

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः।

स्तेये च श्वपदं कार्य्यं ब्राह्मणस्य शिरः पुमानिति ॥

एतच्च प्रायश्चित्तमकुर्वतां दण्डोत्तरकालं नतु प्रायश्चित्तं चिकीर्षताम्। प्रायश्चित्तञ्च कुर्वाणाः पूर्वे वर्णा यथोदितम्। नाङ्क्या राज्ञा ललाटे तु दाप्यमुत्तमसाहसमिति। मनुस्मरणात्। जात्यादिभेदेन च दण्डतारतम्यमाह स एव।

अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषम्।

षोड़शैवतु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य तु ॥

ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतम्भवेत्।

द्विगुणा वा चतुःषष्टि स्तद्दोषगुणवेदिन इति ॥

यस्मिन्नपराधे यो दण्ड उक्तः स शूद्रकर्तृके तस्मिन्नष्टगुणः दापनीयः वैश्यकर्त्तृके षोडशगुणः क्षत्रियकर्त्तृके द्वात्रिंशद्गुणः। ब्राह्मणकर्त्तृके चतुःषष्टिगुणः। शतगुणो वा अष्टाविंशत्युत्तरशतगुणोवेत्यर्थः। माषान्यून मूल्यानां क्षुद्राणां मूल्यात् पञ्चगुणोदम इत्याह नारदः।

काष्ठभाण्डतृणादीनां मृन्मयानान्तथैव च।

वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्म्मणाम् ॥

शाकानामार्द्रमूलानां हरणे फलमूलयोः।

गोरसेक्षुविकाराणां तथा लवणतैलयोः ॥

पक्वान्नानां कृतान्नानां मत्स्यानामौषधस्य च।

सर्वेषामल्पमूल्यानां मूल्यात्पञ्च गुणो दम इति ॥

यत्पुनः क्षुद्रद्रव्यविषये द्विगुणदण्डप्रतिपादकं मनुवचनम् । सूत्रकार्पासकिण्वानाङ्गोमयस्य गुडस्य च ।

दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ।
वेणुवैदलभाण्डानां लवणानान्तथैव च ।
मृन्मयानां च हरणे मृदोभस्मन एव च ॥
मत्स्यानां पक्षिणाञ्चैव लवणस्य घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् ॥
अन्येषाञ्चैवमादीनां मद्यानामोदनस्य च ।
पक्वान्नानाञ्च सर्वेषां तन्मूल्याद्द्विगुणोदम इति ॥

तदल्पप्रयोजनविषयम् । पाय्यादीनामल्पप्रयोजनद्रव्यापहारेण दण्डः । तथाच स एव ।

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥
चणकव्रीहिगोधूमयवानां मुद्गमाषयोः ।
अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेका पथि स्थितैः ॥
तथैव सप्तमे भक्ते भक्तानि षडनश्नता ।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मण इति ॥

न केवलं चौरस्यैव दण्डः किन्त्वचौरस्यापि चौरोपकारिण इत्याह याज्ञवल्क्यः । भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।

दत्त्वा चौरस्य वा हन्तुर्जानतो दम उत्तम इति ॥

भक्तं अशनम् । अवकाशो निवासस्थानम् । अग्निश्चौरस्य शीतापनोदनाद्यर्थः । उदकन्तृषितस्य । मन्त्रः चौर्यप्रकारोपदेशः उपकरणं चौर्यसाधनम् । व्ययः अपहारार्थन्देशान्तरङ्गच्छतः पाथेयम् । एतानि चौरस्य हन्तुर्वा दुष्टत्वं जानन्नपि

यः प्रयच्छति तस्योत्तमसाहसो दण्ड इत्यर्थः कात्यायनोऽपि ।

चौराणाम्भक्तदा ये स्युस्तथाग्न्युदकदायिनः ।
क्रेतारश्चैव भाण्डानां प्रतिग्राहिण एव च ॥
समदण्डाः स्मृता ह्येते ये च प्रच्छादयन्ति तानिति ।

चौरोपेक्षाकारिणं प्रत्याह नारदः ।

शक्ताश्च यदुपेक्षन्ते तेऽपि तद्दोषभागिनः ।
उत्क्रोशताञ्जनानान्तु ह्रीयमाणे धने तथा ॥
श्रुत्वा येनाभिधावन्ति तेऽपि तद्दोषभागिन इति ।

इति स्तेयाख्यव्यवहारपदम् ।

---

## अथ साहसाख्यं व्यवहारपदम् ।

तस्य स्वरूपमाह । नारदः ।

सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहोबलमिहोच्यते इति ॥

तस्य चातुर्विध्यमाह बृहस्पतिः ।

मनुष्यमारणञ्चौर्यं परदाराभिमर्शनम् ।
पारुष्य मुभयञ्चेति साहसं स्याच्चतुर्विधमिति ॥

उभय पारुष्यम्वाग्दण्डपारुष्ये । तस्य त्रैविध्यमाह ।

नारदः । तत्पुनस्त्रिविधं ज्ञेयम्प्रथमं मध्यमन्तथा ।
उत्तमञ्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथगिति ॥

एतेषां स्व स्वरूपमाह स एव ।

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपोपमर्द्दाद्यैः प्रथमं साहसं स्मृतम् ॥

वासः पश्वन्नपानानां गृहोपकरणस्य च।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम्॥
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम्।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसमिति॥

भङ्गः फलादि स्वरूपनाशनम्। आक्षेप आक्रोशः वाक्तिरस्करणमिति यावत्। अपमर्द्दः स्वरूपावशेषेण पीडनम्। एतेनैव प्रकारेणेत्यर्थः। त्रिविधेऽपि साहसे दण्डमाह नारदः।

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः॥
उत्तमे साहसे दण्डः सहस्रावर इष्यते।
बधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने॥
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहस इति॥

ब्राह्मणस्य तु महत्यप्यपराधे शारीरदण्डाभावमाह स एव।

अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः।
बधादृते ब्राह्मणस्य न बधे ब्राह्मणोऽर्हतीति॥

यमोऽपि। न शारीरो ब्राह्मणस्य दण्डोभवति कस्यचिदिति।

महत्यपराधे ब्राह्मणस्य दण्डमाह स एव।

गुप्ते तु बन्धने बद्धा राजा भक्तं प्रदापयेदिति।

नारदोऽपि। शिरसोमुण्डनं दण्डस्तस्य निर्वासनं पुरात्।
ललाटे चाभिशस्ताङ्कः प्रयाणङ्गर्दभेन चेति॥

परद्रव्यापहरणरूप साहसस्वरूपकन्तस्य दण्डमाह।

याज्ञवल्क्यः। सामान्य द्रव्यप्रसभहरणं साहसं स्मृतम्।
तन्मूल्याद्दिगुणोदण्डोनिह्नवे तु चतुर्गुण इति॥

बहुभिर्जनैः प्रहरादिकालक्रमेण रक्षमाणस्य द्रव्यस्य बला-

त्कारेण हरणं साहसरूपं स्तेयमिति पूर्वार्द्धार्थः। तन्मूल्या-दपहृत द्रव्यमूल्यात्। निह्नवे अपलापे यः साहसं करोति-तद्दिगुणन्दमम्। यस्तु साहसं कृत्वा निह्नुते स चतुर्गुणन्दाप्य इत्युत्तरार्द्धार्थः। साहसिकस्य प्रयोजयितारं प्रत्याह स एव।

यः साहसं कारयति स दाप्यो द्विगुणन्दमम्।
यश्चैव मुक्त्वाहन्दाता कारयेत्स चतुर्गुणमिति॥

द्विगुणन्दमं साहसिकदण्डाद्दिगुणं दण्डम्। साहसिक विशेषं प्रत्याह स एव।

अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्याप्रहारदः।
संदिष्टस्याप्रदाता च समुद्रगृहभेदकृत्॥
सामन्तकुलिकादीनामपकारस्य कारकः।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः॥
स्वच्छन्दविधवागामी विक्रुष्टेनाभिधावकः।
अकारणेन विक्रोष्टा चाण्डालश्चोत्तमान् स्पृशन्॥
शूद्रप्रव्रजितानाञ्च दैवे पित्र्ये च भोजकः।
अयुक्तं शपथं कुर्वन् अयोग्यो योग्य कर्मकृत्॥
वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत्।
साधारणस्यापलापी दासीगर्भ विनाशकृत्॥
पितृ पुत्र स्वसृभ्रातृदम्पत्याचार्यशिष्यकाः।
एषामपतितान्योन्यत्यागी च शतदण्डभागिति॥
अज्ञानकर्तृके साहसिके पितारिबान्धवाः।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः॥
विज्ञेयोऽसाधुसंसर्गाच्चिह्नैर्होढेन वा नरैः।
एषोदिता घातकानान्तस्कराणाञ्च भावना॥

गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथेनावबोद्धव्यः सर्ववादेष्वयं विधिरिति ।

चिह्नं रक्तलेपादि होढोऽपहृतस्य धनादिकम् । ज्ञानानन्तरकर्त्तव्यमाह व्यासः ।

ज्ञात्वा तु घातकं सम्यक् ससहायं सबान्धवम् ।
हन्याच्चित्रबधोपायैरुद्वेजनकरैर्नृप इति ।

बृहस्पतिः । प्रकाशघातका ये तु तथा चोपांशुघातकाः ।
ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्बधैरिति ॥

ब्राह्मणक्षत्रियादिविषयमेतत् । यत आह बौधायनः । क्षत्रियादीनां ब्राह्मणस्य बधः सर्वस्वहरणञ्च तेषामेव तुल्यापकृष्टबधे यथाबलमनुरूपं दण्डञ्च कल्पयेदिति । तेषां क्षत्रियादीनान्तुल्यापकृष्टबधे सजातीयहीनजातीयबधे दण्डं शारीरदण्डम् । एकघातार्थं प्रवृत्तानां बहूनान्दोषानुरूपन्दण्डमाह । कात्यायनः । एकश्चेद्बहुभी हन्युः संरब्धैः पुरुषैर्नराः ।
मर्मघाती तु यस्तेषां स घातक इति स्मृतः ॥

यो मर्मघातकः स एव बधापराधदण्डभागित्यर्थः ।

स एव । आरम्भकृत्सहायश्च दोषवक्ताऽनुदेशकः ।
आश्रयः शस्त्रदाता च भक्तादायी विकर्मिणाम् ॥
युद्धोपदेशकश्चैव तद्विनाशप्रवर्त्तकः ।
उपेक्षाकार्य्ययुक्तश्च दोषवक्ताऽनुमोदकः ॥
अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः ।
यथा शक्त्यनुरूपन्तु दण्डमेषां प्रकल्पयेदिति ॥

बृहस्पतिरपि । एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः ।
मर्मप्रहारको यस्तु घातकः स उदाहृतः ॥

मर्म्मघाती तु यस्तेषां यथोक्तं प्रापयेद्दमम् ।
आरम्भकृत्सहायश्च दोषभागी तदर्द्धतः ॥
अतस्त्वल्पमहत्त्वञ्च मर्म्मस्थानञ्च यत्नतः ।
सामर्थ्यञ्चानुबन्धञ्च ज्ञात्वा चिह्नैः प्रसाधयेदिति ॥

विषयविशेषे मनुष्य वधकर्त्तुर्दण्डाभावं दोषाभावप्रदर्शन मुखेनाह मनुः । शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनाञ्च वर्णानां विप्लवे कालकारिते ॥
आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे ।
स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यतीति ॥

यत्र देशे काले च धर्मस्तटाकारादि रूपोभेदनच्छेदनापरुद्ध्यते तेऽत्र तथा शूद्रेतरवर्णसङ्करे परदाराक्रमणादिरूपे राजाभावकालकारिते । तथात्मनः परतः प्राणसंशये । तथा दक्षिणानां सङ्गरे गोग्रहणनिमित्तके युद्धे । तथा स्त्रीविप्राभ्युपपत्तौ दुर्बलहिंसा निवारणे । धर्म्माद्धेतोर्धर्मं दुष्यति यतः। अतस्तत्र द्विजातिभिः क्षत्रधर्माश्रयणरहितैरपि समर्थैः शस्त्रं ग्राह्यमित्यन्वयः। अत्रद्विजाति ग्रहणं ब्राह्मणवैश्य विषयम् । प्रजापालनार्थं क्षत्रियस्य च नान्तरेणैवशस्त्र ग्रहणस्य प्राप्तत्वादिभिसन्धायैव बौधायन आह ।

ब्राह्मणार्थे गवार्थे च वर्णानां वापि सङ्करे ।
गृह्णीयातां विप्रविशौ शस्त्रं धर्म्मव्यतिक्रमे इति ।

यत्तु परीक्षार्थमपि ब्राह्मण आयुधन्नाददीतेत्यापस्तम्बवचनम् । यच्च बौधायनवचनम् । हास्यार्थमपि ब्रह्म आयुधं नाददीतेति । तद्द्वयमपि धर्म्मोपरोधादि भिन्नविषयम् । साहसस्तेयस्य क्रोधलोभकृतत्वमाह ।

बृहस्पतिः। साम्प्रतं साहसस्तेयं श्रूयतां क्रोधलोभजमिति।
स्त्रीसंग्रहणाख्यसाहसस्वरूपमाह स एव च।

अनिच्छन्त्या यत्क्रियते सुप्तोन्मत्तप्रमत्तया।
प्रलपन्त्या वा रहसि बलात्कारकृतन्तु तदिति॥

अनिच्छन्त्या परपुरुषेण सहेतिशेषः। अनिच्छन्त्या यानि चिह्नानि तस्याः कर्त्तव्यं राजकर्त्तव्यं चाह संवर्त्तः।

नेच्छन्त्या यानि चिह्नानि बलात्कारकृतानि च।
परपुंसः प्रसङ्गेषु नारीणान्तानि शृणुत॥
नखदन्तक्षतक्षामासकचग्रहवीक्षिता।
सद्योविश्वासिता नारी बलात्कारेण दूषिता॥
उच्चैर्विक्रोशयन्ती च रुदन्ती लोकसन्निधौ।
तस्य नामवदन्ती च यथाहन्तेन दूषिता॥
शोचेदेवं विधैर्लिङ्गैर्व्रणीकृतपयोधरा।
चिह्नालङ्कारकेशैश्च व्याकुलीकृतलोचना॥
राज्ञा सभ्यैः सभांनीत्वा स्वयमन्विष्य तत्क्षणात्।
यद्ब्रूयात् सहजान्तत्र तत् कर्त्तव्यं प्रयत्नतः॥
विवादे साक्षिणामत्र प्रकुर्वीत परिग्रहम्।
प्रार्थनादभिशस्तस्य न दिव्यन्दातुमर्हतीति॥

अत्र दण्डमाह मनुः।

सहस्रं ब्राह्मणोदण्ड्योविप्रां गुप्ताम्बलाद्व्रजन्निति।

गुप्तां स्वनियमेन रक्षिताम्। क्षत्रियादिसैवर्णविषयेदण्डमाह बृहस्पतिः। सहसा काम येद्यस्तु धनन्तस्याखिलं हरेत्।

उत्कृत्य लिङ्गवृषणौ भ्रामयेद्गर्दभेनत्विति॥

कामयेत् परस्त्रियङ्गच्छेत्। अयमेव दण्डोऽनुलोमप्रति-

लोमजात्योः स्वजातीय परभार्यागमने वेदितव्य इति मदनरत्ने । हीनजातीय परस्त्रीगमने ब्राह्मणादिष्वेतदर्द्धपरिमितो दण्डः । उत्कृष्टजातीयपरदारगमने द्वयमेव दण्डो-वधसहितः कार्य इत्याह स एव ।

दमोनेयः समायान्तु हीनायामधिकस्ततः ।
पुंसः कार्योऽधिकायान्तु गमने स प्रमापणमिति ॥

दमः सहसाक्रामयेदिति वाक्योक्तः । नेयः प्रापणीयः । यत्तु वधमात्राभिधायकं कात्यायन वचनम् ।

स्त्रीषु कृतोपभोगः स्यात्प्रसह्य पुरुषो यदा ।
वधे तत्र प्रवर्त्तेत कार्य्यातिक्रमणं हि तदिति ॥

तन्निर्गुणस्य भार्यागमने वेदितव्यम् ।

इति साहसाख्य व्यवहारपदम् ।

---

## अथ स्त्रीसंग्रहणाख्यं व्यवहारपदम् ।

तस्य त्रैविध्यमाह बृहस्पतिः ।

पाप मूलं संग्रहणं त्रिप्रकारन्निबोधत ।
बलोपधिकृते द्वे तु तृतीय मनुरागजमिति ॥

एतेषां स्वरूपं दर्शयति स एव ।

अनिच्छन्त्या यत् क्रियते मत्तोन्मत्त प्रमत्तया ।
प्रलपन्त्या वा रहसि बलात्कार कृतन्तुतत् ॥
छद्मना गृहमानीय दत्त्वा स्वं मदकारणम् ।
संयोगः क्रियते यत्र तदुपधिकृतं विदुः ॥
अन्योन्यस्यानुरागेण दूतीसंप्रेषणेन वा ।

कृतं रूपार्थं लोभेन ज्ञेयं तदनुरागजमिति ॥

अनुरागज संग्रहस्य त्रिविधत्वं दर्शयति स एव।

तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तममिति ॥

व्यासोऽपि। संग्रहस्त्रिविधो ज्ञेयः प्रथमोमध्यमस्तथा।

उत्तमश्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथगिति ॥

एतेषां स्वरूपमाहतुर्व्यासवृहस्पती।

कटाक्षावेक्षणं हास्यं दूतीसंप्रेषणं तथा।

स्पर्शोभूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ॥

प्रेषणं गन्धमाल्यानां फलधूपान्न वाससाम्।

सम्भाषणञ्च रहसि मध्यमं संग्रहं विदुः ॥

एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा।

एतत् संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिरिति ॥

स्त्रीसंग्रहणस्य ज्ञानोपायमाह याज्ञवल्क्यः।

पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया।

सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथेति ॥

परभार्यया सह केशाकेशिक्रीडनेन सद्यः अभिनवैः कामजैः कररुहदशनादिकृत ब्राह्मणादिलिङ्गैर्द्वयोः सम्प्रतिपत्त्यावयं स्त्रीसंग्रहणवान् इति प्रतिपत्तव्य इत्यर्थः। उपायान्तरमाह स एव।

नीवीस्तन प्रावरण सक्थि केशावमर्शनम्।

अदेशकाल सम्भाषं सहैकस्थानमेवचेति ॥

कुर्वाण इतिशेषः। सक्थि ऊरू। मनुरपि।

स्त्रियं स्पृशेददेशेयः स्पृष्टो वा मर्षयेत्तया।

परस्परस्यानुमते सर्वं संग्रहणं स्मृतमिति ॥

यस्तु दर्पादिना मयेयम्भुक्तेति वदति सोऽपि तथा विधत्वेन ग्राह्य इत्याहतुर्मनुनारदौ।

दर्पाद्वा यदिवा मोहात् श्लाघया वा स्वयं वदेत्।
पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतमिति ॥

बलात्कारकृतस्य स्त्रीसंग्रहणस्य साहसान्तर्भूतत्वेन तत्रैव दर्शितत्वादुपधिकृते दण्डमाह बृहस्पतिः।

दण्डानाकामयेद्यस्तु तस्य सर्वहरोदमः।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्तत इति ॥

सर्वहरः सर्वस्वहरः एतत् सजातीयविषयम्। हीनोत्कृष्टगमने तु क्रमेणार्द्धं धनं सर्वस्वहरणरूपोवधसहितसर्वस्वहरणरूपोदण्डो वावगन्तव्यः। दमोनेयः समायान्त्विति साहसवाद निरूपणदर्शितवचनात्। तत्र वचने पुरुषस्यापकर्षणभवे युक्तो दण्डो न स्त्रिया इति नोक्तस्तस्याः दण्डः। तेन साहस स्त्रीसंग्रहणवत् प्रकृतेऽपि सजातीयोपभुक्तायाः संव्यवहार्य्यायाः प्रायश्चित्ताचरणानन्तरव्यवहितोपभुक्ताया इति ज्ञातव्यमित्युक्तं मदनरत्ने। अनुरागज त्रिविध संग्रहणे दण्डमाह स एव।

त्रयाणामपि चैतेषां प्रथमोमध्यम उत्तमः।
विनयः कल्पवत्याक्राङ्गनादधिकोद्रविणाधिक इति ॥

अधिकः प्रथमं साहसादिभ्योऽधिकः। सम्भोगे दण्डमाह याज्ञवल्क्यः।

स्वजातावुत्तमोदण्ड आनुलोम्येतु मध्यमः।
प्रातिलोम्येवधः पुंसो नार्याः कर्णादिकर्त्तनमिति ॥

चतुर्णामपि वर्णानां बलात्कारेण सजातीयपरभार्यागमने साशीतिपणसहस्रोदण्डः। यदा त्वानुलोम्येन हीनजातीयागमने मध्यम साहसः। उत्कृष्टजातीयागमने गन्तुर्बधः। तस्याः कर्णादिकर्त्तन मित्यर्थः। एतच्चानुरागजं ग्रहणविषयं स्त्रिया अपि दण्डाभिधानात्। बलात्कारोपधिकृतयोस्तु स्त्रिया अनपराधित्वेन दण्डाभावात्। अस्मादेव प्रातिलोम्येन गमने पुरुषस्य बधं विधाय स्त्रियास्तदर्द्धं तुल्यकर्णनासादिकर्त्तन विधानात् सजातीयागमने पुरुषस्य यावुक्ता वुत्तममध्यमसाहसौ दण्डौ तदर्द्धं स्त्रियादण्ड इति सूचितम्। अतएव कात्यायनः। सर्वेषुचापराधेषु पुंसोद्यर्थ दमस्तथा।

तदर्द्धं योषितोदद्युर्बधे पुंसोऽङ्गकर्त्तनमिति॥

स्त्रिया इतिशेषः। यदा पुनः सवर्णामगुप्तां आनुलोम्येनगुप्तां वा ब्रजति तदाविशेषमाह मनुः।

सहस्रं ब्राह्मणोदण्ड्यो गुप्तां विप्रां बलाद्व्रजन्।
शतानि पञ्चदण्ड्यःस्यादिच्छन्त्या सह सङ्गतः॥

सहस्रं ब्राह्मणोदण्डं दाप्यो गुप्ते तु ते ब्रजन्।
शूद्रायां क्षत्रियविशोः सहस्रन्तु भवेद्दम इति॥

ते क्षत्रियवैश्ये। एतच्च गुरुसखिभार्य्यादिव्यतिरिक्त विषयम्। तत्र दण्डान्तरविधानात्। तदाह नारदः।

माता मातृष्व सा श्वश्रूर्मातुलानी पितृष्वसा।
पितृव्य सखिशिष्यस्त्री भगिनी तत्सखीस्नुषा॥
दुहिताचार्य्यभार्य्या च सगोत्रा शरणागता।
राज्ञीप्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥
असामान्य तमाङ्गच्छन् गुरुतल्पगउच्यते।

शिश्नस्योत्कर्त्तनात्तत्र नान्योदण्डो विधीयत इति ॥

यत्तु प्रातिलोम्ये गमने क्षत्रियादेः पुरुषस्य वधइत्युक्तं योगीश्वर वचने। तद्गुप्ताविषयमन्यथा धनदण्डः। तथा च मनुः। उभावपि हितावेव ब्राह्मण्या गुप्तया सह।

विप्लुतौ शूद्रवद्दण्डौ दग्धव्यौ वा कटाग्निना।

ब्राह्मणीं यद्यगुप्तान्तु सेवेतां वैश्यपार्थिवौ।

वैश्यम्पञ्चशतं कुर्य्यात् क्षत्रियन्तु सहस्रिणमिति ॥

पञ्चशतम्पणशतपञ्चकदण्डभाजमित्यर्थः। एवं सहस्रिण-मित्यत्रापि। क्षत्रियस्य गुप्तवैश्यागमने वैश्यस्य च गुप्ताक्षत्रि-यागमने क्रमेण पणसहस्रपणशतपञ्चकं तयोर्दण्ड इत्याह स एव। वैश्यश्चेत् क्षत्रियाङ्गुप्तां वैश्यां वा क्षत्रियोव्रजेत्।

यो ब्राह्मण्यामगुप्तायान्तावुभौ दण्डमर्हत इति ॥

शूद्रस्यागुप्तोत्कृष्टस्त्रीगमने लिङ्गच्छेदनसर्वस्वापहरणे गुप्ता गमने तु वधसर्वस्वापहारौ। तथा च स एव।

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्।

अगुप्तेकाङ्गसर्वस्वो गुप्तौ सर्वेण हीयत इति ॥

अयञ्च बधाद्युपदेशः प्रजापालनाधिकाराद्राज्ञ एव न द्वि-जातिमात्रस्य। ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीतेति शस्त्रग्रहणस्य निषिद्धत्वात्। यदा तु राज्ञो निवेदने काल-विलम्बेन कार्य्यातिपातस्तदा द्विजातिमात्रस्यापि शस्त्रग्रहणे ऽधिकारोऽस्त्येव। शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो यत्रोपरुध्यते।

नाततायिबधे दोषो हन्तुर्भवति कश्चन ॥

प्रच्छन्नं वा प्रकाशं वा मन्युस्तम्मन्युमृच्छतीति।

शस्त्रग्रहणाभ्यनुज्ञानात्। परस्त्रिया सह सम्भाषणकर्त्तु-

दण्डमाह मनुः। परस्य पत्न्या पुरुषः संलापं योजयेत्सह।

पूर्वमाक्षारितो दोषैः प्राप्नुयात् पूर्वसाहसमिति॥

आक्षारितः अभिग्रस्तः। दोषैः नानास्त्र्युपभोगवाञ्छाभिः। पापबुद्ध्या यः सम्भाषणं करोति तद्विषयमेतत्। अतएव।

यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात्।

न दोषं प्राप्नुयात् किञ्चिन्न हि तस्य व्यतिक्रम इति॥

मनुष्टहस्त्युक्तपूर्वसाहसमध्यमसाहसयोरुत्कृष्टसजातीयासम्भाषणादिविषयत्वेन व्यवस्था परिकल्पनीया। परपुरुषेण सह पित्रादिभिर्निषिद्धं सम्भाषणं या करोति सा पणशतं दण्ड्या परस्त्रिया सह पित्रादिभिर्निषिद्धसम्भाषणं यः पुरुषः करोति स पणशतद्वयं दण्डनीयः। द्वयोरपि निषिद्धपरस्परसम्भाषणादिकुर्वतोः सम्भोगे यो दण्डः स एव दण्ड इत्याह याज्ञवल्क्यः। स्त्रीनिषेधे शतन्दद्यात् द्विशतन्तु दमम्पुमान्।

प्रतिषेधे तयोर्दण्डो यथा सङ्ग्रहणे तथेति॥

निषिध्यते इति निषेधः कर्मणि हलश्चेति घञ्। चारणादि स्त्रीव्यतिरिक्तविषयमेतत्।

नैष चारणदारेषु विधिर्नात्मोपजीविषु।

सज्जयन्ति हि ते नारी निगूढाश्चारयन्ति चेति॥

मनुस्मरण तु नटाः आत्मोपजीविनः वेषोपजीविनः। एतेषान्दारेषु एष विधिर्न। अभिभाषणादिनिमित्तकदण्डविधिर्न। परस्ते नारीः स्वभार्याः सज्जयन्ति पुरुषान्तरे संयोजयन्ति प्रच्छन्नीकृत्य चारयन्ति चेत्यर्थः। साधारणस्त्रीगमने दण्डमाह याज्ञवल्क्यः।

अवरुद्धासु दासीषु भुजिष्यासु तथैव च।

गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकन्दममिति ।

स्वामिना या शुश्रूषार्थं गृहे एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धाः अवरुद्धाः । पुरुषान्तरेणावरुध्य भुज्यमाना भुजिष्याः या दास्यो भुजिष्या अवरुद्धा वा तासु सर्वपुरुषगम्यास्वपि गमने पञ्चाशत्पणान्दण्डः । तासाम्परपरिगृहीतत्वेन परस्त्रीतुल्यत्वात् । चशब्दाद्वेश्यास्वैरिणीनामपि ग्रहणम् । तास्वपि सर्वपुरुषसाधारणासु परपरिगृहीतासु गमनेऽयमेवदण्ड इति मन्तव्यम् । एतदेवाभिप्रेत्याह नारदोऽपि ।

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या ।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् ।
गम्यास्वपि हि नोपेयाद्यत्ताः परपरिग्रहा इति ॥

अब्राह्मणीति स्वैरिण्यविशेषणम् । स्वैरिणी स्वतन्त्रा-पुंश्चली । निष्कासिनी कुटुम्बान्निर्गतेति मदनरत्ने । साप्यनवरुद्धा दासीति विज्ञानेश्वरमाधवाचार्य्यप्रभृतयः । भुजिष्या स्वा स्वेति सम्बन्धः । व्यासोऽपि ।

परोपरुद्धागमने पञ्चाशत्पणिको दमः ।
प्रसह्य वेश्यागमने दण्डोदशपणः स्मृत इति ॥

प्रसह्य वेतनदानं विना अत्रानवरुद्धासु वेश्यादिषु गम्यत्वाभिधानञ्च पापाभावप्रतिपादनार्थं किन्तु राजदण्डाभाव प्रतिपादनार्थम् । पशुवेश्यादिगमने प्राजापत्यं विधीयत इत्यादिवचनैः प्रायश्चित्तस्मरणात् बलात्कारेण अनवरुद्धदास्यभिगमने दण्डमाह याज्ञवल्क्यः ।

प्रसह्य दास्यभिगमे दण्डोदशपणः स्मृतः ।

बहूनां यद्यकामासौ चतुर्विंशतिकः पृथगिति॥

पुरुषसम्भोगजीविकासु दासीषु स्वैरिण्यादिषु शुल्कदानमन्तरेण बलात्कारेणाभिगच्छतो दशपणोदण्डः। यद्येतामनिच्छन्तीमेकाम्बलात्कारेण बहवो गच्छन्ति तर्हि प्रत्येकं चतुर्विंशतिपणात्मकोदण्ड इत्यर्थः। यदि पुनः सा स्वेच्छया भाटकं गृहीत्वा पश्चान्नेच्छति तदा बलाद्व्रजतामपि बहूनामदोषः यदि तस्या व्याध्याद्यभिभवो न भवेत्। अतएव नारदः।

व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा।

आमन्त्रिता चेन्नागच्छेदवध्या वडवा स्मृतेति॥

पारदार्य्य प्रसङ्गात् कन्यायामपि दण्डमाह याज्ञवल्क्यः।

अलङ्कृतां हरन् कन्या मुत्तमं त्वन्यथाधमम्।

दण्डं दद्यात् सवर्णासु प्रातिलोम्ये बधः स्मृत इति॥

अलङ्कृतां विवाहाभिमुखीं तां सवर्णां कन्यामपहरन् उत्तम साहसं दण्डनीयः। तदनभिमुखीं हरन् प्रथमसाहसम्। उत्कृष्टवर्णं जातां हरतः क्षत्रियादेर्बध इत्यर्थः। आनुलोम्येन सकामाहरणे प्रथमसाहसोदण्ड स्तथा च स एव।

सकामास्वनुलोमासु नदोषस्त्वन्यथादम इति॥

कन्यादूषणे दण्डमाह स एव।

दूषणे तु करच्छेद उत्तमायां बधः स्मृतः।

शतं स्त्रीदूषणे दद्याद्दे तु मिथ्याभिशंसनमिति॥

पशून् गच्छन् शतं दाप्यो हीनां स्त्रीङ्गाञ्च मध्यममिति॥

यद्यकामां कन्यान्नखक्षतादिना प्रसह्य दूषयति तदाकरच्छेदः। यदा तु अङ्गुलि प्रक्षेपेन तामेव योनिक्षितां कुर्वन् दूषयति तदा विशेषमाह मनुः।

अभिपद्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः ।
तस्याशु कर्त्त्ये अङ्गुल्यौ दण्डञ्चार्हति षट्शतमिति ॥

सकाम दूषणेऽप्याह स एव ।

सकामां दूषयन् कन्यां नाङ्गुलिच्छेद मर्हति ।
द्विशतं तु दमं दाप्य. प्रसङ्गवि.निवृत्तय इति ॥

यदा कन्या विदग्धा वा कन्यां दूषयति तदाप्याह स एव ।

कन्यैव कन्यां या कुर्य्यात्तस्यास्तु द्विशतोदमः ।
या तु कन्यां प्रकुर्य्यात् स्त्री सा सद्यो मौण्ड्यमर्हति ॥
अङ्गुल्योरेव वा च्छेदः खरेणोद्वहनन्तथेति ॥

कुर्य्यात् योनिक्षतवतीमिति शेष. । यदा पुनरुत्कृष्टजातीयां कन्यां सकामामकामां वाभिगच्छति तदा हीनस्य क्षत्रियादेर्बधः । यदा सकामां सवर्णामभिगच्छति तदा शुल्कं गोमिथुनं तत्पित्रे दद्यात् । अनिच्छति तस्मिन् दण्डरूपेण राज्ञे दद्यात् । सवर्णामकामाङ्गच्छतो बध एव । तदाह मनुः ।

उत्तमां सेवमानस्तु जघन्योबधमर्हति ।
शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता यदि ॥
योऽकामां दूषयेत्कन्यां स सद्यो बधमर्हति ।
सकामां दूषयंस्तुल्यो न बधं प्राप्नुयान्नरइति ॥

चाण्डाल्यादि गमने दण्डमाह याज्ञवल्क्यः ।

अन्त्याभिगमनेत्वङ्क्यं कुबन्धेन प्रवासयेत् ।
शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्य्यागमे बध इति ॥

अन्त्या चाण्डाली तद्गमने । त्रैवर्णिकां प्रायश्चित्तानभिमुखान् सहस्रं त्वन्त्यजस्त्रियमिति मनुवचनानुसारेण पण सहस्रं दण्डयित्वा कुत्सितवर्णेन भगाकारेणाङ्कयित्वा स्वराष्ट्रा-

न्निर्वासयेत्। शूद्रः पुनश्चाण्डालीङ्गच्छंश्चण्डाल एव। अङ्ग्य एवेतिमाधवीये पाठः। चाण्डालस्य तूत्कृष्टजातिस्त्र्यभिगमने वध एवेत्यर्थः। योनि व्यतिरिक्त स्थले गच्छतोदण्डमाह स एव। अयोनौ गच्छतो योषां पुरुषं वाभिमेहतः।

चतुर्विंशतिको दण्ड स्तथा प्रव्रजितागमे इति॥

यस्तु योषां मुखादावभिगच्छति पुरुषं वाभिमुखो मेहति तथा प्रव्रजितां वा गच्छति असौ चतुर्विंशतिपणान्दण्डनीय इत्यर्थः। स्त्रीकृते संग्रहणे दण्डमाह बृहस्पतिः।

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना।

कामयेत्तत्र सा दण्ड्या नरस्यार्द्धदमः स्मृतइति॥

वचसा स्त्रियं प्रलोभ्य गच्छतः पुरुषस्य यो दण्डस्तं ग्राह्याः तद्दण्डार्द्धं पुरुषो ग्राह्य इत्यर्थः।

इति स्त्री संग्रहणाख्य व्यवहारपदम्।

---

## अथ स्त्रीपुंयोगाख्य व्यवहारपदम्।

तत्स्वरूपमाह नारदः।

विवाहादि विधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्यते।

स्त्रीपुंसयोगसंज्ञं तद्विवाद पदमुच्यत इति॥

विवाहादिशब्देन स्त्रीपुंधर्मा गृह्यन्ते। अतएव मनुर्व्यवहारपदोद्देशकाले स्त्रीपुं धर्मोविभागश्चेत्युद्दिश्य प्रतिज्ञा पूर्वकं तेषां निरूपणं चकार।

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः।

संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान्॥

इत्यादिना संयोगे अन्योन्यसन्निधाने। विप्रयोगे। देशतः कालतो वा व्यवधाने। शाश्वतान्नित्यान् अवश्यानुष्ठेयानिति यावत्। के ते धर्म्मा इत्याकाङ्क्षायामाह स एव।

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्।

विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वश इत्यादि॥

पुरुषैः भर्तृपुरुषैः। विषये दण्डहेतुभूतचाञ्चल्यादि विषये। नारदोऽपि।

स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः।

अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयदिति॥

अतोऽन्यैरपि स्वस्त्रीणामस्वातन्त्र्यं यथा भवति तथा कल्पयितव्यमित्याशयः। पुरुषेण स्वस्त्रीव्यभिचारादवश्यं रक्षणीया। तथा च हारीतः। एकव्रतस्कन्नभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति जीवति जारजः कुण्डोमृते भर्त्तरि गोलकस्तस्माद्रेतोपाघाताज्जायां रक्षेज्जायानाशे कुलनाशः कुलनाशे तन्तुनाशस्तन्तुनाशे देवपितृयज्ञनाशो देवपितृयज्ञनाशे आत्मनाश आत्मनाशे सर्वस्वनाश इति। एकव्रतस्कन्न भावात्। स्त्रीणां एकभर्त्तेति नियम नाशात्। परेन्द्रियोपहतत्वात्। परस्मिन् पुंसि इन्द्रियस्य मनसोरागादिना उपहतत्वात्। कुल सङ्करकारिण्यस्तु ज्जाति स्वभावानुगत प्रजोत्पादनेन न कुलसाङ्कर्य्यम्। अतएव शङ्ख लिखितौ। यस्मिन् भावोऽर्पितः स्त्रीणामार्त्तवे तादृशं तन्तु ञ्जनयन्तीति। तन्तुः पुत्रादि सन्ततिः। मनुरपि।

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः।

द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥

इमं हि सर्ववर्णानां पश्यतो धर्म्ममुत्तमम् ।
यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्बला अपि ॥
स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च ।
स्वधर्म्मं हि प्रयत्नेन जायां रक्षन् हि रक्षित इति ॥

द्वयोः कुलयोः भर्त्तृकुल पितृकुलयोः । अनेन कुलद्वयवृद्धैरपि रक्ष्या इति श्लोककथनमुखेन दर्शितम् । अतएव वृहस्पतिः । सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्या स्त्री स्वबन्धुभिः।
श्वश्र्वादिभिः पालनीया गुरुस्त्रीभिर्दिवानिशम् ।
मनुरपि । कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्त्तरि पुत्त्रस्तु वाच्यो मातुररक्षितेति ॥

काले कन्यादानयोग्ये काले । वाच्योनिन्द्यः । अनुपयन् अनुगच्छन् । स एव ।

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ।
पुत्त्रास्तु स्थाविरे भावे नस्त्री स्वातन्त्र्यमर्हति ॥
याज्ञवल्क्योपि । रक्षेत्कन्याम्पिता विन्नां पतिः पुत्त्रस्तु वार्द्धके ।
अभावे ज्ञातयस्तेषान्न स्वातन्त्र्यं क्वचित्स्त्रिया इति ॥

विन्ना विवाहिता । पतिपुत्त्रविहीनायास्तु रक्षणं पतिपक्षान्तर्गतेन प्रत्यासन्नेन कार्य्यं । तथा च नारदः ।

मृते भर्त्तर्य्यपुत्त्रायाः पतिपक्षः प्रभुः स्त्रियः ।
विनियोगात्म रक्षासु भरणेषु च ईश्वरः ॥
परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये ।
तत् सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियः ॥
पितृपक्षस्याप्यभावे स एवाह ।
पक्षद्वयावसाने तु राजा भर्त्ता स्मृतः स्त्रियः ।

स तस्या भरणं कुर्य्यान्निगृह्णीयात्पथच्युतामिति ॥

विनियोगः कर्मणि नियोजनम् । भर्त्तापोषकः स्त्रीस्वभावं दर्शयति दक्षः ।

जलौकावत् स्त्रियः सर्वा भूषणाच्छादनाशनैः ।
सुहितापि कृता नित्यं पुरुषं ह्यपकर्षति ॥
जलौकारक्तमादत्ते केवलं सा तपस्विनी ।
इतरा तु धनञ्चित्तं मांसं वीर्य्यं बलं सुखम् ॥
सा शङ्का बालभावे तु यौवनेऽभिमुखी भवेत् ।
तृणवन्मन्यते नारी वृद्धभावे स्वकम्पतिम् ॥
स्वकाम्ये वर्त्तमाना सा स्नेहान्न च निवारिता ।
अपथ्यानुभवेत् पश्चाद्यथा व्याधिरुपेक्षिता इति ॥

सुहिता तृप्ता कृतापीत्यन्वयः । अपकर्षति सततमाक्षामत्वं करोति स्वकाम्ये स्वेच्छायाम् । अपथ्या अत्यन्ताहितहेतुभूता मनुरपि । नैता रूपं प्रतीक्षन्ते नासां वयसि संस्थितिः ।

सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥
पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥
शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्य्याञ्च स्त्रीभ्योमनुरकल्पयत् ॥
नास्ति स्त्रीणां क्रियामन्त्रैरिति धर्म्मो व्यवस्थितः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः ॥
तथा च श्रुतयो बह्व्योनिगीतानिगमेष्वपि ।
स्त्रीलक्षण परीक्षार्थन्तासां शृणुत निष्कृतीः ॥
यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ।

तन्मे रेतः पिता वृक्तामित्यस्यैतन्निदर्शनम्॥
ध्यायत्यनिष्टं यत्किञ्चित्पाणिग्राहस्य चेतसा।
तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते॥
एवं स्वभावं ज्ञात्वासाम्प्रजापतिनिसर्गजम्।
परमं यत्न मातिष्ठेत्पुरुषो रक्षणम्प्रति इति॥

निरिन्द्रिया निर्वीर्य्या धैर्य्य प्रज्ञादिरहिता इति यावत्। स्त्रियोऽनृतमिति प्रायशोऽनृतवदनशीलत्वादुच्यन्ते। श्रुतयः श्रुतिवाक्यानि। निगमेषु वेदेषु स्त्रीलक्षणं स्वरूपन्तासां श्रुतीनाम्मध्ये या निष्कृतिरूपा व्यभिचार प्रायश्चित्तरूपास्ताः श्रुतीः शृणु त स्त्रीस्वभाव ज्ञानार्थ मित्यर्थः। महाभारतेऽपि।

कुलीना रूपवत्यश्च नाथवत्यश्च योषितः।
मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद!
अनर्थित्वान्मनुष्या सा भयात्परिजनस्य च।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्त्तृषु॥
यौवने वर्त्तमानानां मृष्टाभरणवाससाम्।
नारीणां स्वैर वृत्तीनां स्पृहयन्ति कुलस्त्रियः॥
यदि पुंसाम्गति र्ब्रह्मन्! कथञ्चिन्नोपपद्यते।
अन्योन्यञ्च प्रवर्त्तन्ते न च तिष्ठन्ति भर्तृषु॥
अलाभात् पुरुषाणाञ्च भयात्परिजनस्य च।
वधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः॥
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः।
नान्तकः सर्वभूतानान्न पुंसां वामलोचना॥
कामानामपि दातारन्दातारं मानसान्वयोः।
रक्षितारन्न सृप्यन्ति भर्त्तारं यत्नतः स्त्रिय इति॥

श्रीरामायणेऽपि । नैवङ्गनानान्दयितो नापि द्वेष्योऽस्ति कश्चन ।

सर्वमेवावलम्बन्ते लतागहनजा इवेति । अथ रक्षण-प्रकारः । तत्र मनुः ।

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।

एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुमिति ॥

प्रसह्य आक्रम्य । अवरुध्येति यावत् । यद्यप्यवरोधेन शरीर-व्यभिचाराद्रक्षणं शक्यन्तथापि मानस व्यभिचाराद्रक्षण मशक्य मित्याशयेन मनुना न कश्चिद्योषितः शक्यः प्रसह्य परिरक्षितुमि-त्युक्तम् । न च मानसव्यभिचाराद्रक्षण मनर्थकमन्यजत्वाभावेन प्रजाविशुद्धि विघाताभावादिति वक्तव्यम् । यत आह स एव ।

यादृशम्भजते स्त्रीहि सुतं सूते तथाविधम् ।

तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियो रक्षेत् प्रयत्नत इति ॥

यादृशं पुरुष मृतुकाले स्त्री मनसा भजते तत्समानशीलं पुत्रं जनयतीति पूर्वार्द्धार्थः । अतएवाहतुः शङ्खलिखितौ । यस्मिन्भावोऽर्पितः स्त्रीणामार्त्तवे तच्छीलं पुत्रं जनयन्तीति । मानस व्यभिचारादपि स्त्रियं रक्षेदिति शेषः । तथा च मनुना तस्मादित्यादिनोत्तरार्द्धेनायमेवार्थो दर्शितः । परिरक्षणो-पायानाह मनुरेव ।

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।

शौचे धर्म्मे च पक्त्याञ्च पारिणाह्यस्य चेक्षणे इति ॥

अर्थस्य संग्रहे । स्वेन समानीतार्थ सन्निधाने । व्यये स्वे-नोक्तव्यये । शौचे गृहादिशुद्धिकरंसंमार्जनोपलेपनादौ । धर्म्मे अग्निहोत्राद्यनुकूललौकिकव्यापारे । पक्त्यां पाकव्या-पारे । पारिणाह्यं पीठादि गृहोपकरणं तस्य इदई विचा-

रणे। निरन्तर गृहव्यापार नियोजनादिना पुरुषान्तर चिन्ता राहित्यं यथा भवति भार्यायां तथा कुर्यादिति तात्पर्यार्थः । वृहस्पतिरपि ।

आयव्ययेऽथ संस्कारे गृहोपस्कररक्षणे ।
शौचाग्निकाय संयोज्याः स्त्रीणां शुद्धिरियं स्मृतेति ॥

एवंविध व्यापारासक्त चित्ततया साध्व इति व्यपदिश्यन्त इत्याह मनुः ।

आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिता इति ॥

आत्मना गृहव्यापारासक्तेनान्तःकरणेन सुरक्षिताः साध्वाः । आप्त पुरुषरक्षितास्तु स्त्रियो न सम्यग्रक्षिता इत्याह स एव ।

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिरिति ॥

आप्तकारिभिः पुरुषैः गृहेरुद्धा इत्यन्वयः । आप्ताश्च ते कारिणश्चाप्तकारिणः । अरक्षिताः सम्यग्रक्षाविहीना इत्यर्थः । भर्त्तुर्द्धर्मनिष्ठत्वमपि स्त्रीणां रक्षणोपाय इति दर्शयितुं सएवाह । यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।

तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥
अक्षमाला वसिष्ठेन संयुक्ता ऽधमयोनिजा ।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयतामिति ॥

भार्याया भरणमवश्यकमित्याह स एव ।

देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥

देवैर्दत्ता देवदत्ता दैववशयातेति यावत् । तां भार्यां स्वयम्बरे पतिर्विन्दते । तत्र स्वव्यापाराद्देवदत्तामित्यनेन

विवाह लक्षणस्य स्त्रीपुंसयोः सम्बन्धस्य न स्वाधीनत्वं कि-न्तर्हि दैवकृतत्वमिति दर्शितम्। दैवदत्तत्वञ्च स्त्रीणां सोमो-ददद्गन्धर्वाय गन्धर्वो ददद्‌ग्नये। रयिञ्च पुत्रांश्चाददग्निर्म-ह्यमथो इमामित्यादिभ्यः श्रुतिवाक्येभ्योऽवगम्यते। तेन दैवै-र्दत्ताया अभरणेन दातॄणां देवानां द्रोह आपाद्यत इत्यर्थवाद इत्युक्तं मदनरत्ने। न च साध्वी मित्यस्य पतिव्रतामित्यर्थ प-रत्वेन व्यभिचारिण्या भरणमनावश्यकमिति वक्तव्यम्। तस्या-पि कदन्नादिनाऽवश्यभरणीयत्वात्। तथा च नारदः।

व्यभिचारे स्त्रियामौण्ड्यमधः शयनमेव च।
कदन्नञ्च कुवासश्च कर्म्म चावस्करोजनमिति॥

स्त्रियाः अत्यर्थ व्यभिचारे जाते मुण्डनमधः शयनञ्च साधयेत्। कदन्नं कुवासश्च भरणार्थं दद्यात्। अमेध्यशोधन रूपं कर्म्म-कारयेदित्यर्थः। दोषरहिताया भार्यायाः परित्यागिनं प्रत्याह नारदः। अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम्।

त्यजन् भार्य्यमिव स्थाप्यो राज्ञा दण्डेन भूयसेति॥

विष्णुरपि। निर्दोषां परित्यजन् पत्नीञ्चेति चौरवच्छास्य इत्यनुषङ्गः। निर्दोषान्त्यागहेतु भूतदोष रहिताम्। दण्डेन स्थापयितु मशक्येत्याह योगीश्वरः॥

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम्।
त्यजन् दाप्यस्तृतीयांशमद्रव्योभरणं स्त्रिया इति॥

तृतीयांशन्तद्धनतृतीयांशम्। राज्ञा भार्याया दाप्यः। अल्प-धनः भरणमात्रपर्य्याप्तं धनं दाप्य इत्यर्थः।

इति स्त्रीपुंयोगाख्य व्यवहारपदम्।

---

## अथ विभागाख्य व्यवहारपदम् ।

यत्रमन्वादिवचन व्याख्यासु बहुधाबुधाः ।
विवदन्ते दाय भागः स प्रबन्धेन वर्ण्यते ।

तल्लक्षणमाह नारदः ।

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इतिप्रोक्तं तद्विवादपदं बुधैरिति ॥

पित्रोरत्नं पित्र्यद्दति ॥ कृतैकशेषात्पितृशब्दाद्यत् । अग्रे-मातृधनस्यापि विभागकथनात् । पित्र्यस्य पुत्रैरिति च द्वय-मपि सम्बन्धिमात्रोपलक्षणम् पत्नीत्यादिनान्येषामपि भर्त्रा-दिधने तन्निरूपणात्। अतएवोपक्रमे मनुना पित्रादि पदन्नो-पात्तम्। एष स्त्रीपुंसयोरुक्तो धर्म्मो वो रति संहितः।

आपद्यपत्यप्राप्तिश्च दायधर्मं निबोधतेति ॥

दायधर्म्मोऽप्यत्र विभागरूपोऽभिप्रेतस्तस्यैवाग्रे लक्षण कथन पूर्वकन्निरूपणात् । उद्देशावसारेऽपि स्त्रीपुन्धर्म्मोविभागश्चेति तस्यैव विवादपदत्वेनोद्देशात् । अतएव चाग्रे यावत् सम्बन्धि धनविभागमेव प्रदर्शितवान्मनुः । दायशब्दश्चायं स्वामिस-म्बन्धमात्र द्रव्येस्वत्वन्तद्रूपोबदति । तथा च निघण्टुकारः । "विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीपिण" इत्याह । अत्रापि पितृपदं सम्बन्धिमात्रोपलक्षण मन्यत्रापि दायशब्दप्रयोगात् । विभक्तव्यं विभागार्हमित्यर्थः । अन्यथैकपुत्रादिस्वामिके विभा-गाभावाद्दायशब्द वाच्यता न स्यात्। यत्तु जीमूतवाहनेनदीयत इति व्युत्पत्त्या दाय शब्दो ददाति प्रयोगश्चगौणः मृतप्रव्रजि-तादि स्वत्व निवृत्तिपूर्वकपर स्वत्वोत्पत्तिफलसाम्यात्। न तु स्व-

तादीनां तत्र त्यागोऽस्ति। तच्च पूर्वद्रव्यस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्येऽन्य स्वत्वं तत्र निरूढोदायशब्द इत्युक्तं तन्न सुन्दरम्। निरूढत्वाङ्गीकारे दाय ददातिशब्दयोर्गौणत्वोपन्यासानर्थक्यात्। सर्वथाऽवयवार्थ राहित्ये हि निरूढत्वं न च योगरूढत्वम्। अवयवार्थवाधस्य स्वयमेवोपन्यास्यात्। गौणमवयवार्थं परिकल्प्य तदङ्गीकारस्य निष्प्रयोजनत्व मन्योन्याश्रयत्व मनुभवविरोधो व्याघातश्च। तत्स्वाम्योपरम इति च जन्मनापि स्वत्वस्योपपादयिष्यमाणत्वादव्यापकम्। विभाग शब्दस्त्वनेक स्वाम्यानां द्रव्यसमुदायविषयाणां तत्तदेकदेशे व्यवस्थापने शक्तः। अतएवैक पुत्रादीनां पित्रादि धन स्वाम्ये विभागशब्दाप्रयोगो दायोऽनेन लब्ध इत्येव च प्रयोगः। यत्रापि चैकं दासीगवादिवह्न साधारणं तत्रापि तत्तत्काल विशेषनियत दास्यदोहनादिना तस्य तस्यादिना व्यञ्जनादस्त्वेकदेश स्वाम्य व्यवस्थापन रूपो विभाग शब्दार्थः। अतएव।

एकां स्त्रीं कारयेत्कर्म्म यथांशेन गृहे गृहे इति।

वहृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते इति॥

युक्त्या विभजनीयं तदन्यथानर्थकम्भवेदिति।

च बृहस्पत्यादि वचनेषु वक्ष्यमाणरीत्या तदुपपादयिष्यते। सच दायोद्विविधोऽप्रतिवन्धः सप्रतिवन्धश्च। पुत्त्रादीनां पित्रादिधने पुत्त्रत्वादिनैव सत्यपि स्वामिनि पित्रादौ जन्मनैव स्वत्वोत्पत्तेः स तेषामप्रतिबन्धोदायः। स्वामि सद्भावस्या प्रतिबन्धकत्वात्। यस्तु विभक्तस्यासंसृष्टिनोऽपुत्त्रस्य मृतस्य पितृभ्रात्रादीनां तद्धनरूपोदायः स सप्रतिबन्धः। स्वामि सद्भावस्य प्रतिबन्धकस्यापगम एव तत्र स्वत्वोत्पत्तेः। ननु सर्वोऽपि सप्रतिबन्ध एव

दायः। स्वामि सद्भावे पुत्रादीनामपि जन्ममात्रेण स्वत्वस्य वक्तुमशक्यत्वात्। तथाहि। यदि जन्मनैव पुत्रादीनां पित्रादिधने स्वत्वं स्यात्तर्ह्युत्पन्नमात्रस्य पुत्रादेस्तत् साधारणमिति तदनुमतिं विना द्रव्यसाध्येष्वाधानादिषु पित्रादीनामनधिकारापत्तौ जातपुत्रः कृष्णकेशोऽग्नीनादधीतेति श्रुतिविरोधः। किञ्च। विभागात् प्राक् पित्रादि प्रसादलब्धस्याविभाज्यत्वं वचनं व्यर्थं स्यात्। तद्धि पित्रा पुत्रान्तरानुमत्या यदि दत्तं सर्वैरेव दत्तमिति विभाग प्राप्त्यभावादेव प्रतिषेधोऽनर्थकः। अननुमत्या तु साधारण द्रव्यस्य दानमेव न सम्भवतीति पित्रादि प्रीतिदत्तत्वादिवाच्ये युक्तिरयुक्ता। एवं पुत्राद्यनुमति मन्तरेण स्त्र्यादीनामपि भर्त्रादिभिः प्रीतिदानस्यासम्भवात्तदनुमतौ तु तैरपि दत्तत्वात्।

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्।
सा यथा काममश्नीयाद्दद्याद्वा स्थावरा दृते इति॥

वचने यथा काममश्नीयाद्दद्याद्वेत्यनेनाविभाज्यत्वं भर्त्तृ प्रीति लब्धस्य यदभिहितं तदपि व्यर्थम्। न चेदमविभागावस्थायां प्रीतिदानं तस्य चाविभाज्यत्वञ्च प्रतिपादयति किन्तु स्थावरादृते यद्दत्तमित्यन्वयाद्विभागोत्तरमपि भर्त्रा स्त्रियै स्थावरञ्च प्रीत्या देयमज्ञानाद्दत्तमपि तेन पुत्रादिभिरपहृत्य विभजनीयमस्थावरन्तु न प्रत्याहर्त्तव्यमित्यनुवादमात्रम्। स्थावरस्य स्त्रियै प्रीतिदान प्रतिषेधमात्रं तात्पर्य्येण बोधयतीति शङ्कनीयम्। यथा च यस्य व्यवहितयोजना प्रसङ्गेनायुक्तत्वात्। स्थावरप्रीतिदानप्रतिषेधमात्रता सन्दर्भत्वेऽन्यांशस्यानुवादमात्रं व्यर्थत्वापरपर्य्यायस्यापद्यते।

अथ। मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य तु सर्वस्य न पिता न पितामहः॥
तथास्य पितृप्रसादाद् भुज्यन्ते वस्त्राण्याभरणानि च।
स्थावरन्तु न भुज्येत प्रसादे सति पैतृक इति॥

वचनमदस्य विभाग प्राक्कालीनस्थावर प्रसाद दान प्रतिषेधपरं वाच्यं मणिमुक्तादि प्रसाददानानुमति पुरःसरं तत्प्रतिषेधाभिधानात्। अन्यथा तस्यानुवादमात्रत्वेन वैयर्थ्यापत्तेः। तथा च जन्मना पुत्रादीनां स्वत्वान्मणिमुक्तादिषु तदनुमतिमन्तरेणापि दानेपितुः स्वातन्त्र्यम्। स्थावरे तु तदनुमत्यैवेति विशेष इति वचनद्वयार्थस्य वाच्यत्वाज्जन्मना स्वत्वमायातीति-मैवम्। तस्य पितामहोपात्तस्थावर विषयत्वात्। अतीते पितामहे तत् स्वाम्यनाशात्पितापुत्रयोः साधारणे तदीयद्रव्य स्वत्वेऽपि स्थावर एव पुत्रानुमत्यपेक्षा मणिमुक्तादौ तु-नेति तदर्थात्। यत्तु गौतमवचनं उत्पत्त्यैवार्थं स्वामित्व लभते इत्याचार्य्या इति। जन्मनः स्वत्वहेतुत्वे मिताक्षराकृता प्रमाणत्वेनोपन्यस्तन्तद्दाय भागतत्वकृता व्याख्यातमेव। पितृस्वत्वोपरमे तज्जन्यत्वस्य हेतुभूतेनोत्पत्तिमात्ररूपसम्बन्धेनान्य सम्बन्धाधिकेन जनकधने पुत्राणां स्वामित्वमुक्तं पुत्त्रो-लभते नान्यः सम्बन्धीत्यार्य्या मन्यन्त इति। न तु पितृस्वत्वेविद्यमानेऽपि तत्र पुत्र स्वत्वमिति तदर्थः। नारद देवलवचन विरोधात्। पितर्यूर्ध्वं गते पुत्रा विभजेयुर्धनम्पितुरिति नारद।

पितुर्धन मित्याह। अन्यथा धनम्विभजेयुरित्येवावक्ष्यत्।
पितर्य्युपरते पुत्रा विभजेयुर्धनम्पितुः।
अस्वाम्यं हि भवेदेषां निर्दोषेपितरि स्थिते इति॥

देवलोऽपि पितुर्द्धनमित्युक्तोत्तरार्द्धेनास्वाम्यं हीति स्पष्टमेव तेषामस्वत्व न्तत्वहेतुत्वेनोक्तवान्। निर्दोषे पातित्यादि स्वत्वापगमकदोषरहिते मनुरपि।

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।

भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोरिति॥

जीवतोर्म्मातापित्रोस्तद्धने पुत्त्राणामस्वाम्यं व्यक्तमेवाह। यत्तु शङ्खलिखितावाहतुः। न जीवति पितरि पुत्त्रा रिक्थम्भजेरन्। यद्यपि स्वाम्यम्पश्चादधिगतन्तैरनर्हा एव पुत्त्रा अर्थधर्मयोरस्वातन्त्र्यादिति स्मृति चन्द्रिकाकारेण च व्याख्यातम्। यद्यपि तैः पुत्रैः स्वकीयजन्मनः पश्चादनन्तरमेव पितृधनं स्वाम्यमधिगतं प्राप्तन्तथापि जीवति पितरि तद्धनं तदिच्छाम्बिना न विभजेरन्नर्थधर्मयोरस्वातन्त्र्यात्पितृपारतन्त्र्याद्विभागकरणेऽनर्हाः पुत्त्रा इति। तेनानेन वचनेन जन्मना पुत्त्रादीनां पित्रादि स्वामिकधने स्वत्वमिति तदपि न। मन्वादि वचनानां बहूनामस्वाम्य प्रतिपादकानामनुरोधेनास्यान्यथा वर्णनीयत्वात्। वर्णितञ्च कल्पतरौ। यद्यपि पश्चादधिगतं पितृधनं व्यापारनिरपेक्षैः पुत्रैर्विद्यादिभिरुपात्ते धने स्वाम्यन्तथापि तत्राप्यस्वाम्यञ्जीवति पितरि किमुत पितृधने अर्थधर्म्मयोस्तेषां पितरि जीवत्यस्वातन्त्र्यादिति किञ्च। स्वत्वं शास्त्रैकसमधिगम्यं तत्र च रिक्थक्रयादिवज्जन्मनः स्वत्वहेतुत्वेनानुक्तेर्ज्जन्मना स्वत्वमप्रमाणकमेव। अतएव यथा भार्य्यादिवचनम्। भार्य्या पुत्त्रश्च दासश्च त्रय एवाधनाः स्मृताः।

यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमिति॥

पारतन्त्र्य मात्र प्रतिपादनपरन्तथाऽस्वाम्यवचनान्य पीत्यपा-

त्तम्। भ.र्य्यादिव्वध्यग्न्यादि वचनैः कर्त्तनादिनाचार्यकत्वेन स्वामित्वे सिद्धे युक्तमस्वातन्त्र्यमात्रपरत्वमन्यथा पुत्रादिषु धनसाध्येषु पुराणादिश्रुतन्तेषामधिकारित्वमपि विरुद्ध्येत। अत्र तु प्रत्युत जन्मनः स्वत्वहेतुत्वे प्रमाणाभावाद्व्यर्थमेवान्यथानेक वचनवर्णनम्। किञ्च यदि स्वत्वं लौकिकं स्यात्तर्हि तदुपायानामपि लौकिकत्वात्स्वामिरिक्थक्रयसम्विभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितम्। निर्विष्टं वैश्यशूद्रयोरिति गौतमवचनं व्यर्थमेव स्यादनुवादमात्रत्वान्न हि पाकादोदनो भवतीत्यादि शास्त्रे निष्प्रयोजन मनुवादमात्र मुच्यते। तस्य हि वचनस्यायमर्थः। रिक्थं दायः क्रयः प्रसिद्धः। सम्विभागो दायस्यैवैकदेशनिष्ठस्वामित्वव्यञ्जकोविभागः परिग्रहः पूर्वमपरेणास्वीकृतस्यारण्यादि साधारण प्रदेशसम्बन्धिनस्तृणजलकाष्ठादेः स्वीकारः। अधिगमोऽज्ञात स्वामिकस्य निध्यादेः प्राप्तिः। एतेषु स्वत्वहेतुषु सत्सु स्वामी भवति। जातेषु च जायते। ब्राह्मणस्य लब्धं प्रतिग्रहादि प्राप्तमधिकमसाधारणं रिक्थादयस्तु सर्वसाधारणाः। अधिक मित्युत्तरत्र सर्वत्र सम्बध्यते। क्षत्रियस्य विजितं युद्धविजयदण्डादि प्राप्तमसाधारणम्। वैश्यस्य निर्विष्टं कृषिगोरक्षणादि भृतिलब्धम्। शूद्रस्य द्विजशुश्रूषादि भृतिलब्धम्। निपूर्वस्य विशेर्भृति वाचकत्वम्। निर्वेशो भृति भोगयोरितित्रिकाण्डाभिधानात्। वैश्यशूद्रग्रहणस्योपलक्षणत्वादन्येषामप्यनुलोमज प्रतिलोमजातानां सूतानामश्वसारथ्यमित्याद्यौशनसादि प्रतिपादितं वृत्तिजातं निर्विष्टशब्देन संगृह्यते। सर्वस्य भृतिरूपत्वात्। किञ्च—

योऽदत्तादायिनो हस्ताल्लिप्सेत न ब्राह्मणोधनम्।
याजनाध्यापनेनापि यथास्तेनस्तथैव स:॥

इत्यदत्तादायिनश्चौरस्य हस्ताद्याजनादि स्वहत्त्यापि धन मर्ज्जयतो दण्डविधान मनुपपन्नं स्वत्वस्य लौकिकत्वे। स्ववृत्त्यार्ज्जयतोनिरपराधत्वात् मन्मते तु शास्त्रैकसमधिगम्यत्वात् स्वत्वस्य चौरदात्वकयाजनादावेतद्वचनादेव स्वत्वानुत्पादकत्वात्तद्विधानमुपपन्नतरम्। अपिच ममस्वमनेनापहृतमिति व्यपदेशो नस्यात्स्वत्वस्य लौकिकत्वे। अपहर्त्तुरेव तत्र स्वत्वात्। मन्मते त्वपहारस्य निषिद्धत्वेन स्वत्वानुत्पादकत्वादुपपन्नोऽयं व्यपदेश:। यदि च सुवर्णत्वादिकमिव तत्व स्वत्वमपि प्रत्यक्षप्रमाणकन्तर्हि सुवर्णत्वादौ यथा न सन्देहस्तथास्य स्वमिदमस्य वेत्यपि सन्देहो नस्यान्निर्णीतत्वात्। इदमेवोक्तं संग्रहकारेण।

वर्त्तते यस्य यद्धस्ते तस्य स्वामी स एव न।
अन्य स्वमन्यहस्तेषु चौर्य्याद्यै: किन्न दृश्यते।
तस्माच्छास्त्रत एव स्यात् स्वाम्यं नानुभवादपि।
अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा।
विदितोऽर्थागम: शास्त्रे तथाऽवर्णि पृथक् पृथगिति॥

शास्त्रे स्वामी रिक्थ क्रयेत्यादौ साधारणासाधारणरूपोऽर्थागम: स्वत्वोपाय: पृथक् पृथग्वर्णितस्तया विदितो लौकिकत्वे तच्छास्त्रानर्थक्यं स्यादिति इत्यर्थ:। अन्यत् स्पष्टम्। यथावर्णमिति स्मृति चन्द्रिकायां पाठ:। पूर्वपाठस्तु मदनरत्नलिखित:। अथ यद्यस्य यथेष्टं विनियोज्यं तत्तस्य स्वमिति लोकप्रसिद्धे यथेष्टविनियोज्यत्वं स्वत्व-

मिति चौर्य्याद्यर्ज्जितेनातिप्रसङ्गस्तत्र चौरादेर्य्यथेष्टविनियोज्यत्वाभावाद्विनियोगकाले त्रासादिदर्शनात्। अतएव सन्देहोऽप्युपपन्नः सुवर्णत्वादिति तुल्यत्वाभावात् स्वत्वस्य नैवम्। असम्भवात्। शास्त्रेण सर्वस्य कुटुम्बभरणादौ विनियोगविशेषनियमादैच्छिकविनियोगविषयत्वस्य कुत्राप्यप्रसिद्धेः। तदप्याह संग्रहकारः शङ्कोपन्यास पुरःसरम्।

न च स्वमुच्यते तद्यत् स्वेच्छया विनियुज्यते।
विनियोगोऽस्य सर्वस्य शास्त्रेणैव नियम्यते इति॥

अत्र पूर्वार्द्धे शङ्कोपन्यास उत्तरार्द्धे तत्परिहारः। न च रिक्थादिवदुत्पत्त्यैवार्थस्वामित्वमिति गौतमवचन उत्पत्तेरपि जन्मापरपर्य्यायायाः स्वत्वहेतुत्वोक्तेः सत्यपि स्वत्वस्य तदुपायानाञ्च शास्त्रैकसमधिगम्यत्वे जन्मना पुत्रादेः पित्रादिधने स्वत्वमस्त्येवेति वाच्यम्। तस्यानेकदूषणैरन्यथा व्याख्यानस्य प्रागेवोक्तत्वात्। इदमेवाभिसन्धाय धारेश्वरेणापि शास्त्रैकसमधिगम्यमेव स्वत्वमिति सिद्धान्तितम्। अपि च। जीवत्यपि पित्रादौ पुत्रादेस्तद्धने जन्मना स्वत्वे तदनिच्छायामपि पुत्रादीच्छयैव विभागः स्यात्। अस्वातन्त्र्यवचनान्नैवमिति चेत् न। तथा सति दृष्टादृष्टविरोधमात्रं भवेद्व्यवहारस्तु सिद्ध्येदेव। यथा पित्रादिभिः सह पुत्रादिभिश्चतुष्पाद्व्यवहारे प्रवर्त्यमाने तेषां दृष्टादृष्टयोः श्रेयो विघातमात्रं शिष्ये पितुः पुत्र इत्यादि वचनार्थ इति प्राक्प्रपञ्चितं तथात्रापि स्यात्। अस्त्विति चेन्न सकलनिबन्धविरोधात्। क्वचिज्जन्मनैवेति प्राचीनग्रन्थलिखनमपि जन्मनि बन्धनत्वात्पितापुत्रादिसम्बन्धस्य पितृमरणस्य च तत्स्वत्वापगमहेतुत्वेन परम्परया वर्ण-

नीयम्। किञ्च। ऊर्द्धं पितुश्चेत्यादि मनुवचनं जन्मना पुत्राणां स्वत्वपदे जीवति पितरि सत्यपि पुत्राणां स्वाम्ये तदिच्छया विना तद्विभाग ऊर्ध्वन्तु स्वेच्छयेति विभागनिषेधार्थं प्रागिति वाच्यं तच्चान्याय्यंअस्वाम्यपरत्वापत्तेः। न च पितुरुपरमकालविधानार्थं विभाग विधानार्थं चेति युक्तम्। दृष्टार्थत्वाद्विभागस्योभयस्याप्यनुपपत्तेः। नापि नियम विधिर्विभागस्य 'एवं सहवसेयुर्वा पृथग् वा धर्मकाम्यये''ति मनुना विकल्पाभिधानात्। कालविधौ च पितृपरमानन्तरकाल एव विभागो नैमित्तिकस्य निमित्तानन्तर्य्यवाधोऽयं स्यात्। जातेष्टिवज्जातप्राणवियोगापत्ति सरूपविशेष विरोधस्यात्राभावात्। अतो जीवतोः पित्रोस्तद्धने स्वाम्यं नास्ति किन्तु परतयोस्तयोरिति तत्कालीनस्वत्वज्ञापनार्थं मन्वादि वचनं विभागस्तु स्वातन्त्र्यात्तत्कालीन इच्छाप्राप्तोऽनूद्यते। तथाचैतद्वचनविरोधादपि न जन्मना स्वत्वं वक्तुं शक्यम्। उपरमवत्पतितत्वादिकमपि पित्रादि स्वत्वनाश कारणं वक्ष्यते। तस्मात् पित्रादि स्वत्वनाश एव तद्धने पुत्रादीनां स्वाम्यं न तत्स्वत्व समकालीनमिति स्वाम्यादि सद्भावस्य सर्वत्र प्रतिबन्धकत्वात् सर्वोऽपि सप्रतिबन्ध एव दाय इति द्वैविध्यमनुपपन्नमिति। अत्रोच्यते। यदि स्वत्वापगम एव पुत्रादीनां तद्धने स्वत्वं तर्हि निर्दोषे पित्रादौ जीवति तेषां धनसाध्य वैदिक कर्मस्वनधिकारप्रसङ्गे जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादि श्रुतिविरोधस्तुल्यः स्वकपोलकल्पितहेत्वाभास समर्थित स्मृत्यर्थानुरोधेन श्रुति सङ्कोचोऽयुक्तः। आहिताग्न्यादिष्ट प्रद्मयस्ते पित्रादौ जीवत्यपि पुत्रादीन् प्रति तत्सद्भावविशेषात्।

सकलयाज्ञिक शिष्टानां तदनुष्ठानदर्शनाच्च। जातपुत्र कृष्ण
केशपदाभ्यां दयोहृद्धानतिक्रमस्यैव विवक्षा न तु तयोरव्यव-
स्थिततयोः स्वरूपेणेति विरोधाधिकरणे भाष्यवार्त्तिकादौ
स्थितत्वात्। न च यथा पुत्रानुमत्या पितुर्भवन्मते तदधिकार
स्तथा मन्मतेऽपि पुत्रादीनामपि पित्राद्यनुमत्येति वाच्यम्।
यतो द्वयोरपि मते पितुः स्वत्वस्य धने विद्यमानत्वात् स्वत्व-
त्यागरूप प्रधान निष्पत्तिरविहता भवन्मते तु पुत्रादीनां स्वत्व-
स्यैवा भावादनुमतेश्च स्वत्वाजनकत्वाद्यागादि प्रधान निष्पत्तिः
एव कथम्। वस्तु तस्तु पितुः पुत्रानुमतिरपि नापेक्षिता स्वा-
तन्त्र्यात्। पित्राद्यनुमतिस्तु पुत्रादेरपेक्षिता पारतन्त्र्यादि-
त्येतावान्विशेषो यथा स्त्रियाः स्वधनेनापीष्टा पूर्त्तादि व्रतादौ
भर्त्रादेरनुमतिस्तत्पारतन्त्र्य वचनात्। अननुमतौ तु स्वतन्त्रः
प्रत्यवायो वैगुण्यं वा कर्मणि न तु प्रधानस्वरूपा निष्पत्तिः।
पित्राद्यनुमतेः स्वत्वोत्पादकत्वञ्चैतदनुरोधात्कल्प्यमानमलौ-
किकमशास्त्रीयञ्च। तस्माच्छास्त्रैकसमधिगम्येऽपि स्वत्वे कथ-
ञ्चिज्जन्मनोऽपि रिक्थादि वचनादधिगमादिपदेन संग्राह्य
आवश्यकः श्रुति स्मृतिपुराणशिष्टाचारलिङ्गस्य निर्दोषे जीव-
त्यपि पित्रादौ पुत्रादि यज्ञाद्यनुष्ठानाधिकारस्यानुरोधात्।
वस्तुतस्तु लौकिकमेव स्वत्वं लोके च जातमात्राणामेव पुत्रा-
दीनां पित्रादिधने स्वाम्य व्यवहारोऽन्येषामपीति साधयि-
ष्यामः। यच्च पित्रादीना मनुमत्ययोग्यपुत्रादिसाधारणस्वत्वे
कथमनुमति मन्तरेणाधानादिकं स्यादित्युक्तन्तदनुमतियोग्ये-
ष्वपि पुत्रादिषु स्वातन्त्र्यात्पित्रादीनां न तदनुमत्यपेक्षा किमु-
तानुमत्ययोग्येष्विति परिहृतप्रायमेव तद्विधिबलादेवाधिकारो

ऽवगम्यत इति तु विज्ञानेश्वराचार्य्यः । अतश्चोत्पत्त्यैवार्थस्वामित्वमिति गौतमवचनस्य यज्ञीमूतवाहनरघुनन्दनाभ्याम्पारम्परिकोत्पत्तिस्वत्वहेतुत्वेन व्याख्यानं कृतन्तदपि व्यर्थमेव। यत्तु शङ्खवचनन्तस्यापि स्मृतिचन्द्रिकोक्तव्याख्यैव साधीयसी। कल्पतरूक्तव्याख्यायान्तु विद्याद्युपात्ताध्याहारेऽनुपस्थितभूयःपदाध्याहारः प्रसज्येत। जन्मपदाध्याहारस्तु पुत्रत्वाद्याक्षेपोपस्थितेरल्पाध्याहाराच्च नायुक्तः। तेन श्रुत्युपष्टब्धस्मृत्यनुरोधान्मनुनारददेवलादिवचनानामेवास्वातन्त्र्य-परत्ववर्णनमुचिततरम्। यदप्युक्तं प्रीतिदत्तस्याविभाज्यत्ववचनानि जन्मना स्वत्वाभ्युपगमेऽनुपपन्नानीति। तदपि न। अनुमत्यभिप्रायेण स्थावरप्रीतिदानाभावस्थिरीकरणार्थतयोपपत्तेः। स्वातन्त्र्याद्वा पितुरनुमतिमन्तरेणापि तेन दत्ते स्थावरव्यतिरिक्ते पुत्राणामविभाज्यत्वमुच्यते। अतएव स्थावरे विशेषवचनम्। स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्।

असम्भूयसुतान् सर्वान्न दानन्न च विक्रय इति ॥

मणिमुक्ता प्रवालानामित्यादि वचनन्तु जन्मना स्वत्वपक्ष एवोपपन्नतरम्। न च पितामहोपात्तस्थावरमात्रविषयत्वमिति युक्तम्। न पिता न पितामह इति द्वयग्रहणात्। पितामहस्य हि स्वार्जितमपि पुत्रे पौत्रे च सत्यपि न देयमिति वचनं जन्मना स्वत्वङ्गमयति। यथा परमते मणिमुक्ताप्रवालादीनां पैतामहानामपि पितुरेव स्वत्वन्तत् स्मरणात्तथास्मिन् मतेऽपि पुत्रादीनान्तत्र जन्मना स्वत्वे साधारणेऽपि पितुर्दानाधिकार इत्यविशेषः। तस्मात्पैतृके पैतामहे च द्रव्ये पुत्रादीनां यद्यपि जन्मनैव स्वत्वं तथापि पितुरावश्यकेषु धर्म

कृत्येषु वाचनिकेषु च प्रसाददानकुटुम्बभरणापद्विमोक्षादिषु च स्थावरव्यतिरिक्त द्रव्यविनियोगे स्वातन्त्र्यमिति ध्येयम्। स्थावरादौ तु स्वार्ज्जिते पित्रादि परम्पराप्राप्ते च पुत्रादिपारतन्त्र्यं तुल्यमेव।

स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितम्।
असम्भूय सुतान् सर्वान्न दानन्न च विक्रयः॥
ये जाता येऽप्य जाताश्च ये च गर्भे व्यवस्थिताः।
वृत्तिञ्च तेऽभिकाङ्क्षन्ति नदानन्न च विक्रयः॥

इत्यादि वचनात्। अस्याप्यपवादो वक्ष्यते यच्च स्वत्वस्य शास्त्रैकसमधिगम्यत्वाच्छास्त्रे च जन्मनः क्वापि स्वत्वहेतुतानाभिधानात्। कथञ्जन्मना पुत्रादीनाम्पित्रादि धने स्वत्वस्वीकार इत्युक्तम्। तत्त् शास्त्रैकसमधिगम्यत्वमभ्युपेत्यापि गौतमादिवचन उत्पत्तेरपि स्वत्वोक्तेः परिहृतमेव प्राक्। वस्तुतस्तु न स्वत्वस्य शास्त्रैक समधिगम्यत्वं युक्तियुक्तम्। सर्वथा शास्त्र ज्ञानगन्धरहितानां प्रत्यन्तवासिनां म्लेच्छादीनामपि समस्तमिदमन्यस्य स्वमिति व्यपदेशस्तत्कृतश्च क्रयविक्रयादि व्यवहारो दृश्यते। तेनान्वयव्यतिरेकाभ्यां क्रयाद्युपायकं स्वामित्वमपि तैर्यथेष्ट विनियोगार्हत्वरूपं पदार्थान्तररूपं वा प्रत्यक्षादि प्रमाणादेवावगतमित्यवश्यं वाच्यम्। एतत्तर्कोपष्टम्भोऽनुमानवाक्य प्रयोगोऽपि विज्ञानयोगिनोक्तः। स्वत्वं लौकिकं लौकिकार्थक्रियासाधनत्वाद्व्रीह्यादि वदत्रान्वय दृष्टान्तः। आहवनीयादीनां हि शास्त्रैकसमधिगम्यानां न लौकिकार्थक्रियासाधनत्वमस्तीति व्यतिरेक दृष्टान्तः। तेनान्वय व्यतिरेकोहेतुः। यद्यथाहवनीयादीनामपि यागादिलौकिक क्रियासाधनत्वमप्यस्ति।

तथापि तल्लोक प्रमाणकाम्बयादिरूपेण नालौकिकाहवनीयादिरूपेणेति न व्यभिचारः। इह तु सुवर्णादिरूपेण न क्रयादि साधनत्वमपि तु स्वत्वेनैवेति सुवर्णत्वादिना भरणाद्यर्थक्रिया साधनत्वात्तद्यथा लौकिकं रूपमेवं स्वत्वमपि सर्वानुगतं लौकिकमेव तच्च स्वत्वेन क्रयादि क्रियानिर्वाहो लोके। न चैवं स्वामी रिक्थेत्यादि स्मृतीनां लोकसिद्धार्थानुवादकत्वे नानर्थक्यापत्तिरिति वाच्यम्। धर्माधर्मोपयोगितया व्याकरणस्मृतावनादि वाचकत्वन्तदभावरूपं साधुत्वासाधुत्वविवेकस्येव तस्योपपत्तेः। साधुशब्दाधिकरणे ह्येतदवस्थितं यत्सङ्कीर्णव्यवहारिणां लोकानामविविक्तं लौकिकमेव साधुत्वं शास्त्रेण विविच्यते। नन्वलौकिक साधुत्वं साधुभिर्भाषितेत्यादि विधान्योन्याश्रय प्रसङ्गादित्यादि। एव मतापि तथा च नय विवेके भवनाथः। लोक सिद्धस्वार्ज्जनजन्मादि अतएवानिन्द्यं प्रथमलोकधी विषय व्यवस्थितं तन्निवन्धनार्था स्मृतिर्व्याकरणादि स्मृतिवदिति। जन्मादीत्यादिपदेन क्रयादि ग्रहणम्। व्याकरणादित्यादिपदेन सङ्गीतरत्न परीक्षा सामुद्रिकाणां ग्रहणम्। रागादीनामपि हि लोकसिद्धानामेवानभियुक्तां प्रति विवेकार्थमेव तल्लक्षण कथनमित्युक्तं स्मृत्यधिकरणे आचार्य्यचरणैः स्वामीरिक्थेत्यादि वचनन्तु प्रागेव व्याख्यातम्। रिक्थ शब्दस्तु निष्प्रतिबन्ध दायपरः संविभाग शब्दश्च स प्रतिबन्धदायपर इति मिताक्षरायां विज्ञानेश्वरेण व्याख्यातम्। स्मृतिचन्द्रिकाकृता तु रिक्थं पित्रादि धने पुत्रादीनां स्वामित्वापादकं जन्मनैवेति व्याख्याय संविभागः पित्रादिधने विशेषनिष्ठ स्वामित्व सम्पादको विभाग

इति संविभागशब्दो व्याख्यातस्तत्र। स्वस्य सतो विभागात् स्वत्वहेतुत्वेन तत्प्रतिपादनानौचित्यात्। एकदेशस्थत्वस्थापनमात्रं हि स्वविभागेन क्रियते। मुख्यामुख्यहेतुत्व ग्रहणे स्वामिपदे वैरूप्यापत्तेः। अतएवाह मिताक्षरायां विज्ञानेश्वराचार्य्यः। विभाग शब्दस्यानेक स्वामिकधनविषयः प्रसिद्धोनान्यदीय विषयो न प्रहीण विषय इति। लोके पुत्रादीनां जन्मनैव स्वत्वं प्रसिद्धतरमिव। यदपि पत्नी दुहितरश्चेत्यादिवचनं तदपि स्वामि सम्बन्धनिबन्धनानेकदायहर प्राप्तौ लोक प्रसिद्धेऽपि स्वत्वे व्यामोहनिरासार्थम्। प्रायेण व्यवहार स्मृतीनां लोकसिद्धार्थानुवादकत्वमिति सकलनिबन्धृभिरभिधानात्। नियतौपाधिकं स्वत्वं लोकसिद्धमेवेति भगवतोगुरोरपि संमतम्। लिङ्गानये हि तृतीये वर्णके द्रव्यार्ज्जन नियमानां क्रत्वर्थत्वे स्वत्वमेव न स्यात् स्वत्वस्यालौकिकत्वादिति पूर्वपक्षा सम्भवमाशङ्क्य द्रव्यार्जनप्रतिग्रहादीनां स्वत्व साधनत्वं लोकसिद्ध मेवेति पूर्वपक्षः समर्थितस्तेन। न च द्रव्यार्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति याग एव न संवर्त्तेत। प्रलपितमिदङ्केनापि। अर्जनं स्वत्वं नापादयतीति विप्रतिपिद्धमिति ग्रन्थेन। अस्यार्थोकाङ्कता विवृत एवम्। यदा द्रव्यार्जन नियमानां क्रत्वर्थत्वन्तदानियमानां स्वत्वोपायतामिदं शास्त्रं न बोधयति। क्रत्वर्थता बोधने व्यापृतत्वात्। तथा सति प्रतिग्रहादि प्राप्तस्य स्वमित्यत्र प्रमाणाभावादस्तेन च स्वत्यागात्मकयागासम्भवात् कस्येदम्। द्रव्यार्जननियमा भवेयुरिति पूर्वपक्षासम्भव इति। शङ्कार्थः। प्रलपितमित्याद्युत्तरस्तस्यार्थः। अर्जन प्रतिग्रहादेः स्वत्वहेतुताया लोक सिद्धत्वेन शास्त्रस्य तत्राव्यापारान्नियमानां

क्रत्वर्थतैव तेन गम्यत इति न यागासम्भवो नियमानर्थक्यञ्चेति। सिद्धान्तेऽपि तेन स्वत्वस्य लौकिकत्वाभ्युपगमेनैव विचारप्रयोजनमुक्तम्। अतो नियमातिक्रमः पुरुषस्य न क्रतोरिति। अस्यायमर्थ एवं वित्तः। यदा द्रव्यार्जननियमानां क्रत्वर्थत्वं तदा नियमार्जितेनैव क्रतुर्न नियमातिक्रमार्जितेन द्रव्येण। न तु पुरुषस्य नियमातिक्रमदोषः पूर्वपक्षे। सिद्धान्ते वर्जननियमस्य क्रत्वर्थत्वाभावात्केवलं पुरुषार्थत्वादिति क्रमार्जितेनापि द्रव्येण क्रतुसिद्धिरप्रत्यूहा। पुरुषस्यैव तु नियमातिक्रमदोष इति। अनेन नियमातिक्रमार्जितस्यापि स्वत्वमभ्युपगतमन्यथा क्रतुसिद्ध्यभिधानविरोधात्। तत्रैवाधिकरणे कुमारीस्वामिनोऽप्यङ्गभवतः स्वत्वं लौकिकमित्येवाभिमतमिति। तत्रत्यवार्त्तिकतन्त्ररत्नाभियोगभाजं सुलभमेव। अतएव हि शास्त्रदीपिकायां, पार्थसारथिः रागप्राप्तत्वादर्जनस्य शास्त्रीयम्। रागतश्च पुरुषार्थतया प्राप्तिः प्रत्यक्षेणैवार्जितं द्रव्यं पुरुषस्रीणयत्पुरुषार्थं विज्ञायते न तदनुमाने क्रत्वेकशेषतया शक्यं विज्ञातुम्। तस्मात् पुरुषार्थं द्रव्यं क्रतुरपि पुरुषकार्य्याणामन्यतम इति कार्य्यान्तरवत्क्रतावप्युपयुज्यत इत्येतावान् विशेषः। न तु तस्यैवाङ्गत्वादा सति जीवनलोपात्क्रतुरेव न सम्वर्त्तेतेति प्रघट्टकेन। अत्रार्जनस्य शास्त्रीयत्वन्निरस्तेतास्वत्वस्य तदुपायानाञ्च लोकसिद्धत्वं स्पष्टतरमेवोक्तम्। अन्यदपि तेनैवोक्तम्। तस्मात् पुरुषार्थन्द्रव्यार्जनमेवञ्च दृष्टार्थम्भवति। नियमस्तु दृष्टाभावात्काममदृष्टार्थः स्यात्। अदृष्टमपि पुरुषधर्मार्जनविषयत्वात्। नियमस्य पुरुषगतमेव कल्प्यते। तेनाशास्त्रोपायान्तरेणार्जयन् प्रत्यवैतीति गम्यत इति। ततश्च स्वामी रिक्थेत्यादि वचसां

लौकिकमेव रिक्थादीनां स्वत्वोपायत्वमनूद्य तदतिरिक्तोपाय निवृत्तौ तात्पर्य्यान्नियमविधयेति नानार्थशङ्कापि। तृप्ति साधनभोजनाश्रित दिङ्नियमवत्। द्रव्यार्जनमेव क्रत्वर्थं पुरुषार्थं त्वविचारोदाहरणान्न यमस्तु पूर्वपक्ष युक्तितयोपन्यस्तः। स एव तत्रोदाहरणमित्येवभट्टगुरुमतयोर्भेदः स्वत्वस्य लौकिकत्वं तूभयसम्मतमिति निष्कर्षः। तत्तद्दूषणभूषणादि तु तन्त्राभियोगवतामाकरे एव व्यक्तं प्रस्तुतानुपयोगादिह नोच्यते। एतेन चौर्य्यादि प्राप्तस्यापि स्वत्वं स्यादिति यत्संग्रहकारधारेश्वराभ्यां स्वत्वस्य लौकिकत्वे दूषणमभिहितं तदपि परास्तम्। चौर्य्यादिषु स्वत्वोपायत्वस्य लोकएवा प्रसिद्धेरन्यस्य स्वमिदन्नास्येत्येवं व्यवहारात्। क्रयाद्युपाय सन्देहादेवस्वत्व सन्देहोऽपीदमस्य वास्य वेत्याकारको नानुपपन्नः। मम स्वमनेनापहृतमिति न ब्रूयादपहर्त्तुरेव स्वत्वादिति च यत्स्वत्वस्य लौकिकत्वे दूषणमभिहितं तदप्येतेनालूनविशीर्णम्। यच्चोक्तं संग्रहकृता। शास्त्रेण सर्वस्य तत्र विनियोगनियन्त्रणाद्यथेष्टविनियोगजस्वरूपस्वत्वा सम्भवः। इच्छया क्वापि नियोगासम्भवादिति। तदप्यापाततः। नहि वयमैच्छिकविनियोगोपहितत्वं ब्रूमोऽपितु तदर्हत्वमात्रम्। अन्यथा राजादिभयादिच्छा प्रतीघातेऽपि तत्र स्याद्विनियोगेच्छानिच्छादशयोश्च स्वत्वतदभावौ विरुद्धौ प्रसज्येयाताम्। राजादिनियन्त्रणादिव शास्त्रनियन्त्रणादप्यैच्छिकविनियोगाभावेऽपि तदर्हत्वस्यानपायात्। अतएव दुर्वृत्तेनाशास्त्रीयविनियोगेऽस्य स्वव्यवहारो नास्ति। प्रत्यवायमात्रपरं शास्त्रातिक्रमात्। तदर्हता च तदर्जितत्वप्रयुक्तमस्त्येव। तथा च नयविवेकेऽप्युक्तम्। तच्च तस्य

तदर्हं यद्येनार्जितमिति । तदर्हं यथेष्टविनियोगार्हमित्यर्थः । प्रतिबन्धादङ्कुरमजनयतोऽपि कुशूलस्य वीजस्य वीजत्वप्रयुक्तमङ्कुरोत्पादनार्हत्वमिव । वस्तुतस्तु वीजत्वाङ्कुरार्हत्वयोरिव स्वत्वत्वयथेष्टविनियोगार्हत्वयोरपि भेद एव । अन्यथार्हतावच्छेदकापरिचये ऽर्हताया दुर्निरूपत्वात् । तेन ब्राह्मण्यमिव स्वत्वमपि तदुपायज्ञानव्यङ्ग्यं पदार्थान्तरमेवोत्पत्तिविनाशशालि । ब्राह्मण्यन्तु जातिरूपं नित्यमित्येतावान् परभेदः । इदञ्चाकरे व्यक्तं लीलावत्यादौ च । अत्र मिताक्षरायां स्वत्वलौकिकालौकिकत्वविचारप्रयोजनमुक्तं शास्त्रैकसमधिगम्ये स्वत्वे । मनुः ।

यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम् ।
तस्योत्सर्गेण शुध्यन्ति दानेन तपसैव च इत्यादि ॥

स्मरणादसत्प्रतिग्रहादि यस्य यदर्जनोपायत्वेन निषिद्धन्तदर्जिते तस्य स्वत्वाभावाच्चौर्य्याद्यर्जितवत्तत्पुत्राणामपि तदविभाज्यमेव । लौकिकत्वे तु स्वत्वस्य तदर्जितेऽपि पितुः स्वत्वात्तत्पुत्राणां पितृधनत्वेन तद्विभाज्यम् । अर्जयितुरेव प्रतिषेधातिक्रमनिमित्तप्रत्यवायात्प्रायश्चित्तम् । तत्पुत्रादीनान्तु दायरूपधर्म्मोपायतस्तत्स्वमिति न प्रायश्चित्तमपि ।

सप्तवित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव वेति ॥

मनुस्मरणात् । प्रयोगो वृद्ध्यर्थन्द्रव्यप्रयोगः कर्मयोग आर्त्विज्यादिकरणम् । तत्र दायादीनां त्रयाणां वर्णचतुष्टयसाधारण्येन जयस्य क्षत्रियं प्रतियोगस्य स्वयं कृतस्य वैश्यं शूद्रञ्च प्रतिधर्म्यत्वम् । अस्वयंकृतस्यापदि च स्वयं कृतस्यापि सर्वान्

प्रति। कर्मयोगस्य तु विप्रं प्रत्येवेति विशेष इति। अत्र मदनरत्नकारो दूषणमाह। स्वत्वस्य शास्त्रैकसमधिगम्यत्वेऽप्यसत्प्रतिग्रहादिनिषेधो न स्वत्वानुत्पादकतान्तेषां वदन्ति। किन्तु प्रत्यवायमात्रहेतुताम्। इतरथा।

आपद्गतः सम्प्रगृह्णन् भुञ्जानो वा यतस्ततः।
न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः॥
कुसीदं कृषिवाणिज्यं प्रकुर्वीतास्वयङ्कृतम्।
आपत्काले स्वयं कुर्व्वन्नैनसा युज्यते द्विज इति॥

वचनैरेनसा न युज्यत इत्यभिधानेनापदि प्रत्यवायाभावावगमेनापदि प्रत्यवायस्यैवावगमात्। प्रतिषेध प्रतिप्रसवयोः समानविषयत्वौचित्यात्। अतएवानापदि तत्र द्रव्यपरित्यागपूर्वकं जपतपोरूपं प्रायश्चित्तमेव विदधाति। न चौर्य्यादिवद्राजदण्डमपि किञ्चिद्वचनमसत्प्रतिग्रहादौ। तेनासत्प्रतिग्रहादेः पूर्वपक्षसिद्धान्तयोर्द्वयोरपि तेषां स्वत्वोत्पादकत्वाविशेषात्तदर्जितस्य पुत्रादिविभाज्यत्वमपि तुल्यमिति नैतत्प्रयोजनं विचारस्यास्य युक्तमिति। अत्र वदामः। शास्त्रैकसमधिगम्य स्वत्ववादिनो मते यथा चौर्य्यादिनिषेधस्य स्वत्वानुत्पादकत्वदण्डप्रयोजनं विचारस्यास्य युक्तमिति। अत्र कर्त्तुः प्रायश्चित्तार्हता प्रयोजकत्वपरता। तथाऽसत्प्रतिग्रहादिनिषेधस्याप्यस्तु यथा चापदुपाधिना।

तथैव सप्तमे भक्ते भक्तानि षडनश्नता।
अश्वस्तनविधानेन हर्त्तव्यं हीनकर्मणः॥

आख्यातव्यश्च तत्तस्मै पृच्छते यदि पृच्छतीत्यादि प्रतिप्रसवतश्चौर्य्ये तन्निनयाभावस्तथाऽसत्प्रतिग्रहादेरप्यस्तु। अ-

न्यथोभयत्वापि ततः पञ्चमहायज्ञाद्यनिष्पत्तिप्रसङ्गः शास्त्रीयत्वे स्वत्वस्याप्रसक्तचौर्य्योपायकत्वनिषेधः कथमिति चेत्। अधिगमान्तर्भावेन कथञ्चित्तत्प्रसक्तेस्तेनावश्यवक्तव्यत्वात्। अपरथा प्रतिषेधानुपपत्तेः। शास्त्रप्राप्तप्रतिषेधे च विकल्पापत्तिभिया दीक्षितो न जुहोतीत्यादिवद्भाष्यकारमतेन पर्य्युदासत्वं सामान्य विशेषभावेन विशेषनिषेधसामान्य विध्योर्बाध्य बाधक भावोऽपि वा मतान्तरेणेत्यपि स्वीकार्य्यमेवागत्या। प्रतिग्रहादेस्तु प्रसक्तिर्ब्राह्मणादेरस्त्येवेत्यापत्तदभावोपाधिकौ प्रति प्रसव प्रतिषेधावप्युपपन्नतरौ। तर्ह्यि सत्प्रतिग्रह स्वयं कृतवाणिज्यादावनापदि ब्राह्मणस्य राजदण्डोऽपि स्यादितिचेन्न इष्टापत्तेः। नहि स्वधर्म्मत्यागिनो राजदण्डाभावः कस्यापि सम्मतः। स च क्वचित् सामान्य रूपेणोक्त एव स्मर्य्यते क्वचिद्विशेषान्नात इत्यन्यदेव। अतएवा लौकिक स्वत्ववादिन इदमप्यपर दूषणम्। चौर्य्यादि निषेधस्य त्रितयप्रयोजकतागौरवम्। पर्य्युदासत्वादि स्वीकार गौरवश्च लौकिक स्वत्ववादिनस्तु दण्ड प्रत्यवायमात्र परत्वम्। तेषां स्वत्वानुपायत्वस्य लोकसिद्धत्वादिति रागप्राप्त निषेधे पर्य्युदासादि स्वीकारानापत्तिश्चेति लाघवमिति। तस्माच्छास्त्रैक समधिगम्ये स्वत्वेऽसत् प्रतिग्रहादेस्तदनुपायत्वात्तदर्जिते पितुः स्वत्वाभावः स्यादेवेत्यापाद्यचौर्य्याद्यर्जित पितृधनाविभागवद सत्प्रतिग्रहाद्यर्जितस्याप्यविभाज्यत्वम्। लौकिकेतु तस्मिन् लोके तेषामपि तदुपायत्वासिद्धं तद्विभाज्यमिति मिताक्षरोक्तं साध्येव प्रयोजनम्। इदञ्चोपलक्षणम्। पूर्वपक्षे चौर्य्याद्यर्जितपितृधन स्वीकारे यथा पुत्रादीनामपि दण्ड प्रायश्चित्तं भवत्येव तथा

ऽसत्प्रतिग्रहाद्यर्जित तद्ग्रहणेऽपीत्यपि प्रयोजनमवश्यं अर्ज-
यितुरेव प्रायश्चित्तमित्यभिधानेनोचितत्वात्। इदन्त्विह वि-
चार्य्यम्। स्वत्वस्य लौकिकत्वे चौर्य्यस्य लोके तदनुपायत्वे सिद्धे
षड्भक्तान शनाद्यापदि यच्चौर्य्य मनुमतन्तेन चोरिते स्वत्व-
मुत्पद्यते न वा। नाद्यः लोकेऽनुपायत्वेनाव धारितात्तदुत्पत्ते
रभ्युपगन्तुमशक्यत्वात्। नहि प्रत्यक्ष विरुद्धं शास्त्र सहस्रे-
णापि जलादेर्दहिजनकत्वादि बोध्यते। न द्वितीयः अस्वेन प-
ञ्चमहायज्ञादि प्रधानानिष्पत्तेः। न च क्षुत् प्रतिघातमात्रमेव
तेन क्रियतां नान्यद लौकिकमिति वाच्यम्। शिष्टाचार विरो-
धात् नहि "शिष्टाः पञ्चमहायज्ञाद्यकृत्वा तदुपयुज्यते। यदन्नः
पुरुषो लोके तदन्नास्तस्य देवता" इति स्मरणाच्च। अतएव
विश्वामित्रस्य। अश्वयाजनीं श्वपच गृहात् हृत्वैन्द्रादि देवो-
द्देशेन त्यक्त्वा भोक्ष्यामीति मनसिकृत्य यदा यथा देवतान्तद्भागां
स्त्यक्तुं प्रवृत्तस्तदातुष्टैरिन्द्रादिभिर्वृष्टिः सृष्टा। शस्यञ्च तत्-
क्षणमेव प्रभूतमभूदित्याख्यायिका पुराणेषु स्मर्य्यते। शास्त्रैक
समधिगम्ये तुस्वत्वे यथा शास्त्रश्चौर्यादेरपि स्वत्वोत्पादकत्वतद-
भावौ न विरुद्धौ। लौकिक स्वत्वं तदुपायवादिनस्तूभयतः
पाशारज्जुरियमिति। अत्र प्रतिविदध्यः। यद्यपि चौर्य्यस्य
स्वत्वोत्पादकत्वन्न लोकसिद्धं तथाप्यनेनैव समभक्ताशनकाले
षड्भक्तान शिनोऽप्य विधानाद्गम्यते। स्वत्वमात्रस्यहि शास्त्री-
यत्वं विरुद्धत्वम तज्ज्ञानानां क्रयादि स्वत्वसाध्य व्यवहारानुप-
पत्तेः। अतश्चौर्य्य निषेधोदण्ड पापमात्र बोधक एव। चौर्य्यस्य
स्वत्वोत्पादकत्त्वा प्रसक्तेर्न तदभावपरः। यथा ब्राह्मण्यस्य स-
र्वत्र प्रत्यक्षत्वेऽपि जात्युत्कर्ष स्थले शास्त्रीयत्वमेव। पुरुषेयत्ता
नियमस्य शास्त्रैक गम्यत्वात्। यथाङ्गराचार्य्यः। एतावन्मा-

त्वन्विहागमिकं प्रत्येतव्यम्। नह्ययं परुषेय तानि यमोलोक-प्रमाणगम्य इति। तत्रापि तावत् पुरुषपरम्पराजन्य व्यक्तौ ब्राह्मण्यमभिव्यज्यत इति व्यङ्ग्यव्यञ्जकभाव एव परं शास्त्रीय-व्यञ्जके ज्ञानवतस्तादृशव्यक्तौ ब्राह्मण्यप्रत्यक्षमेव। व्यक्तिप्रत्यक्ष प्रमुखजाति प्रत्यक्ष सामग्रीसम्भारादित्यपि वदन्ति। इह तु चौर्य्यमात्रस्यैव स्वत्वानुत्पादकत्वग्रहात्तादृशस्य तस्य स्वत्वोत्पादकतैव शास्त्रेण बाध्यते। न च प्रत्यक्षविरोधः। नहि प्रत्यक्षविरुद्धं शास्त्रसहस्रेणापि बोधयितुं शक्यमिति वाच्यम्। नह्यनुत्पादकत्वमपि लोकात्। तादृशेन व्यवहाराभावादन्वय-व्यतिरेकगम्या स्वत्वस्य चौर्य्योपायकता नावगम्यत इत्येतावत्। तथा च पुत्रेष्ट्यादीनां लोकानवगत पुत्रादि जनकता यथाशास्त्रादवगम्यते तेषां दृष्टोपायान्तरजन्यताया-मपि तथेहाप्यस्तु। स्वर्गाहवनीयादीनामलौकिकमात्ररूपाणां दृष्टोपायाभावोऽप्यधिक इत्यन्यदेतत्। प्रतिबन्धक प्रतिबद्धदाहादि जनकता यथोत्तेजकमन्त्राणामथर्वादि शास्त्रगम्यालोक-प्रमाणगम्यत्वात् उत्तेजकतायाश्च प्रतिबन्धक प्रतिबद्धकार्य-जनकतातिरिक्ताया अनिर्वाच्यत्वात्। शक्तिनाशतदुत्पत्ति-कल्पनायामतिगौरवात्। यत्तु जन्मना स्वत्वन्निराकुर्वता जीमूतवाहनेन क्वचिज्जन्मनैवेति। जन्मनिबन्धनत्त्वात्पिता पुत्रस्य सम्बन्धस्य पितृमरणस्य च कारणत्वात्परम्परया वर्णनमिति प्राचीनलिखनाभिप्रायमुक्त्वा कथमुत्पादनरूपेण पितृगतव्यापारेण पुत्रे स्वत्वोत्पत्तिरित्याशङ्कोक्तं अन्यव्या-पारेणाप्यन्यस्य स्वत्वमविरुद्धं शास्त्रमूलकत्वादस्य। दृष्टञ्च लोकेऽपि दाने हि चेतनोद्देश्यकत्यागादेव दानव्यापारात् स-

अदानस्य द्रव्ये स्वामित्वम्। न च स्वीकरणात् स्वत्वं स्वीक-र्त्तुरेव दातृत्वापत्तेः। परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनम्। यथा हि देवतोद्देशेन त्यागं कुर्वन्नपि यजमानो न होता किन्तु तस्यैव यागस्य होमाभिधाननिमित्त भूतप्रक्षेपं कुर्वन्नृत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात्। किञ्च। मनसा पात्र मुद्दिश्येत्यादिशास्त्रे स्वीकारात् प्रागेव दानपदं दृष्टम्। ननु ग्रहणं स्वीकारः। अभूततद्भावेच्चि प्रयोगादस्वं स्वं कुर्वन् व्यापारः स्वीकारो भवति कथन्ततः प्रागेव स्वत्वम्। उच्यते। उत्पन्नमपि स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्ट व्यवहारार्हं क्रियते इति स्वीकारशब्दार्थः। याजनाध्यापनसाहचर्याच्च प्रतिग्रहस्य स्वत्वमजनयतोऽप्यर्ज्जन रूपता न विरुद्धा। याजनादौ दक्षिणादानादेव स्वत्वात्। पितृनिधन कालीनज्जीवनमेव वा पुत्रस्यार्जनम्भविष्यति। किञ्च। भ्रातादि धने तन्मरणात्तन्मरणकालीनजीवनाद्वा भ्रात्रन्तरादेः स्वत्वमकामेनापि वाच्य न्तद्वदिहाप्यस्त्विति। तदेतदुत्तानमति विलसितम्। तथा हि शास्त्र मूलत्वादस्येति तावत् स्वत्वस्य लौकिकत्वसाधनादेव निराकृतम्। यदपि दृष्टश्च लोकेऽपीत्यादि तदप्यापातसुन्दरम्। न हि प्रतिग्रहीतर्य्यस्वीकुर्वत्यपि तस्य स्वत्वमुत्पद्यते। पात्रविशेषोद्देशेन त्यागे तेनास्वीकृतेऽपि तत् स्वत्वोत्पत्तौ परस्मै तस्य प्रतिपादनासम्भव प्रसङ्गात्। यदपि स्वीकर्त्तुरेव दातृत्वापत्तेरिति तदप्ययुक्तम्। परस्वत्वापत्तिफलकव्यापारस्य दानत्वात्स्वअदानस्वीकाराद्य कूजानुभालादिव्यापारस्य दानपदार्थत्वात्तत् फलोपहिततातु तस्य सम्प्रदानस्वीकारमन्तरेण न सम्भव-

तीति सम्प्रदानव्यापारस्तद्घटकः। न तु सएव दानशब्दार्थः। यदपि यथा हीत्यादि तदपि न। यजमान कर्त्तृकाग्निहोत्र-होमादौ तदविरोधात्। यत्रापि दर्शपूर्णमासादौ त्यागमात्रं यजमानेन क्रियते। चरुहवत्तस्य प्रक्षेपोऽध्वर्य्वादिभिस्तत्रापि विविक्तकर्त्तृकत्वाद्यथास्वन्तद्व्यवहाराविरोधात्। अत्यक्तस्य प्रक्षेपपरं होमशब्दवाच्यता नास्ति। स तु त्यागः स्वकर्त्तृकोऽन्यकर्त्तृको वाऽ वच्छेदकोऽस्तु। न तावता कश्चिद्दोषः। अतएव यागस्य न प्रक्षेपापेक्ष आत्मलाभो होमस्य तु तदपेक्षएव। दानस्य तु प्रतिग्रहीतव्यापार सापेक्षतैव। तदभावे दान पदार्थानिष्पत्तेः। यच्च किञ्चेत्यादि। तदपि यत्किञ्चित्। उत्सर्गस्यैव तत्र विधानात् न तु दानस्य। अतएव दाता तत् फलमाप्नोतीत्युक्त मन्यथा तस्यानुवादत्वापत्तेः। दानत्वेहितस्य तत् फलाभावाप्रसक्तेस्तु तत् फलमाप्नोतीति व्यर्थमेव स्यात्। अतस्तत्र जलप्रक्षेपरूपः पात्रोद्देश्यकमुत्सर्गएव ददातिनाविवक्षितोदानत्वनिष्पत्तिस्तु तस्य सम्प्रदानकर्त्तृक स्वीकारेसत्येवेति परमार्थः। अतएवोत्सृजे इत्येव तत्र सङ्कल्पवाक्यं शिष्टानान्नतु दास्ये इति सम्प्रददे इति वा। अतः प्रतिग्रहादेव दानस्य फलेऽपि सम्प्रदानस्य स्वत्वमिति प्रतिग्रहस्यार्जन रूपत्वमविरुद्धम्। स्वत्वजनकोहि व्यापारोऽर्जनशब्दार्थः। अतएवाह प्रभाकरः। प्रलपितमिदं केनापि। अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमिति। अयास्य ग्रन्थः प्रागेव विवृतः। किञ्च। प्रतिग्रहस्य ममेदमिति ज्ञानरूपस्य दातृव्यापारमात्रोत्पन्न स्वत्वव्यवहारार्थतामात्र सम्पादकतायामर्जनशब्दस्य तत्र गौणता स्यात्। अन्यस्मै तत्प्रतिपादनानु

पर्यन्तिश्च पूर्वयुक्ता। तदस्वीकारे प्रागुत्पन्न तत् स्वत्वनाशश्च कल्प्यः स्यात्। न च दातृव्यापारात्तत् स्वत्वनाशात्साधारण सम्प्रदानस्वत्वोत्पत्तिरवश्याभ्युपेया त्वयापि। अपरथैतत्-स्वत्वनाशेऽन्यस्य च स्वत्वानुत्पत्तेर्मध्यकस्य तस्य परिग्रहादि-नाऽन्यस्य यस्य कस्यापि वनगतास्वामिकतृण काष्ठादाविव तत्र स्वत्वं स्यात्परिपालनाप्रसक्तिश्च। तथा मन्मतेऽपि पात्र विशे-षोद्देश्यकत्यागे पात्र विशेषस्योत्पन्नमपि स्वत्वन्तदस्वीकारे न-श्यत्यन्यस्य स्वीकारात्तस्योत्पद्यत इति न कोऽपि विरोधः साधा-रण स्वत्वविनाशासाधारण स्वत्वोत्पत्तिरिति वाच्यम्। यतस्तत्र साधारण स्वत्वव्यवहाराभावेन तदुत्पत्तिरप्रमाणिका नैव स्वी-क्रियते गौरवाच्च। किन्तु दातुरेव यथेष्टविनियोगार्हस्वत्वा-पगमेऽपि परस्वत्वापत्ति फलाभावे दानशब्दार्थानिष्पत्तेर्विधि-शिरस्कत्वार्थिनः प्रतिपादनावधिपरिपालनीयत्वरूपं स्वत्वम-स्त्येव। यथा हुते हविषि भस्मसाद्भावावधि अस्पृश्यस्पर्शादिनि-षेधाश्रयण निमित्तदोषश्रयणानुरोधेन तथा चान्यस्वत्वानुत्प-त्तावपि न मध्यकत्वपरिग्रहाद्यनिवारणादिदोषः। शिष्टाचारो-ऽप्युभयत्र परिपालनरूपस्तन्मूलकएव। न चोत्सर्गमात्रस्य तत्र त्वया विध्यभ्युपगमात्परस्वत्वापादनादरएव न स्यादिति वाच्यम्। तादृशोत्सर्गस्यैव विधितात्पर्यविषयत्वात्। होमस्थ-लेऽप्यन्यथा भस्मसाद्भावानादरापत्तेः। यच्च याजनाध्यापन साहचर्य्यात्प्रतिग्रहस्यापि स्वत्वाजनकत्वेऽपि गौणमेवार्जनत्व-मिति। तदप्यबोधात्। तत्र हि ये ये द्विजप्रभृतीनाम्भागास्तेषा-न्तेषा न्तेभ्यो भृतिरूपेणैव दक्षिणाकाले प्रतिपादनम्। परि-क्रय व्यवहारोऽप्यतएव स्वामिकर्म्मपरिक्रय इति जैमिनिसूत्रा-

दौ विस्तरेण निर्णीतएव विस्तरन्तु तत्रैव द्रष्टव्यम् । कर्म्मकरानतिजनिका भृतिरेव हि परिक्रयः । एवमध्यापनेऽपि शिष्योऽध्यापकायाध्यापनभृतिमेव तत् सन्तोषजननीमध्ययनान्तेऽर्पयन्ति । नियतभृतिकरणे तु भृतकाध्यापनमुपपातकम् । अतएव याजनाध्यापनयोः प्रतिग्रहाङ्गतिशब्दवाच्यनिर्वेशाच्च पृथगभिधानमुभयमिश्रितत्वात् । तेन तयोरपि मुख्यमेवार्जनत्वम् । दक्षिणात्वव्यवहारोऽप्यतएव ऋत्विगध्यापकदेये । यदपि भ्रात्रादि धने भ्रात्रन्तरादि स्वत्वोत्पादकत्वन्तन्निधनस्य तत्कालीनभ्रात्रन्तरादि जीवनस्य वा क्लृप्तमिति पुत्रादावपि पित्रादि निधनन्तत्कालीनञ्जीवनं वा स्वत्वोत्पादकमस्तु नत्वक्लृप्तं पुत्त्रादि जन्मनैवेत्युक्तम् । तदपि जन्मनोऽपि स्वत्वोत्पादकत्वस्यावश्यकत्वोपपादनादेव परिहृतम् । यच्चोक्त मूर्द्ध्वम्पितुश्चेत्यादि मनुवचनमपि जन्मनः स्वत्वापादकत्वेन घटते । प्राग्विभागनिषेधार्थत्वे तस्यास्वार्थपरत्वापत्तेः विभागदृष्टार्थत्वेन तद्विधानकालविधानयोरसम्भवात् । विभागस्य पक्षप्राप्तस्य नियमार्थत्वसहवासविधिविरोधाद्यापत्तेः । तस्मात्पितरि सति मातरि च सत्यान्तद्धन स्वाम्याभाव उपरतयोरेव तयोः पुत्त्रादे स्तद्धनस्वाम्यमिति प्रतिपादनार्थमेव तद्वाच्यमिति । तदत्युत्तानाभिधानम् । अस्वार्थविधानापत्तेस्तुल्यत्वात् । प्रागस्वातन्त्र्येण कालविधिपरत्वे बाधकाभावात् । इच्छाप्राप्त कालानुवादेऽपि व्यवहारशास्त्रत्वेनाविरोधात् । एतेन जातेष्टिवच्छेषिविरोधादि निमित्तानन्तर्यबाधकाभावात्पित्रुपरमानन्तरक्षणएव विभागः प्रसज्येतेत्यप्यपास्तम् । कालविधानेन पितृपरमस्य निमित्तत्वाबोधनाच्च । अन्यथा निमित्ते-

सति नैमित्तिकस्वावस्थकत्वात्पित्रोरूर्द्धं विभागकरणे प्रत्यवायोऽपि प्रसज्येत। पतितत्वपरिव्राज्ययोः पितृत्वनाशोऽप्यधिकः जन्मना स्वत्वन्तुल्यमेव। पातित्ये तु प्रायश्चित्तानाचरण एव स्वत्वनाशो विभागानर्हता च। अन्यथा द्रव्य साध्यं प्रायश्चित्तमपि पित्रोः स्वद्रव्येण न स्यात्। अतएव मातुर्निवृत्ते रजसीत्याद्यपि कालविधिपरमेव। न तु पातित्यादिवत्तत्र स्वत्वाभावः। सतु लोकत एव विभागनिषेधाच्च भ्रातृणामविवेत्यादि वक्ष्यते। किञ्च। तदेवं पितृस्वत्वापगमएकः कालः अपरश्चानपगत एव पितृस्वाम्ये पितुरिच्छयेति कालद्वयमित्युक्त्वा मध्ये मिताक्षरोक्तं विभागकालत्रयं दूषयित्वा। तस्मात्पतितत्वनिस्पृहत्वोपरमैः पितृस्वत्वापगम एकः कालः अपरश्च सतिस्वत्वे तदिच्छात इति कालद्वयमेव युक्तमित्युपसंहरता जीमूतवाहनेनैव पितृस्वत्वानपगमेऽपि पुत्त्राणां विभागो ह्यीनक्तस्तत्र पुत्त्राणाम्पितृधने स्वत्वोत्पादः कथम्। कथञ्च जीवतोः पित्रोरस्वाम्य प्रतिपादकवचनैः सह न विरोधः। अस्वस्य विभागासम्भवात्कथन्तेषां विभागः। पितृस्वत्वापगम एवोर्द्ध्वं पितुश्चेत्यनेन विवक्षितोऽतएव स्वरूपदम्परित्यज्योर्द्धमित्युक्तम्। पितृस्वत्वापगमोर्द्धमित्यर्थः पितृस्वत्वापगमश्च तन्निधनादिवक्तस्य पतितत्वनिस्पृहत्वाभ्यामपीत्यादि स्वग्रन्थे पूर्वापरविरोधश्च न कथम्। अत्राप्युपरतस्पृहत्वादिना पुत्राणां स्वत्वम्पितृधने भवतीति स्वाधनादयमेकःकाल इति उक्तम्। तत्राप्युपरतस्पृहत्वादिनेत्यनेन पितृस्वत्वापगमएव यदि विवक्षितस्तर्ह्यनपगते पितृस्वत्वे तदिच्छाऽपरः काल इत्यभिधानविरुद्धम्। पितृस्वत्वापगमकालीनपुत्रादिजीवनस्यैवार्जनस्य तदीयस्य

स्वीकारात्पितृस्वत्वे सति पुत्राणान्तदनं स्वत्वस्वीकारः कथम्। नह्युनाश्रमित्वमातृरजोनिवृत्तिमात्रेण पितुः स्वत्वापगमपूर्वद्रव्यस्वामिसम्बन्धाधीनत्वात् स्वाम्योपरमे यत्तद्द्रव्ये स्वत्वन्तत्रानिरूढोदायशब्द इति स्वोक्तदायशब्दार्थाभावात्पितृस्वत्वानपगमे यत्रविभागस्तत्र दायशब्दप्रयोगोऽपि दुःस्थ इत्यादि बहुव्याकुली स्यात्। जन्मना स्वत्वस्वीकारेतु सर्वमनाकुलमित्यादि सुधीभिरूह्येयम्। अतएव मिताक्षरादौ पूर्वस्वामिसम्बन्धाधीनं यद्धनन्तत्स्वत्वमन्यस्य तदेव दाय शब्दवाच्यमित्युक्तन्न तु पूर्वस्वाम्योपरमोऽपि तत्र प्रवेशितः। तस्मिद्ध' द्विविधो दाय इति मिताक्षरोक्तविभागकालत्रयसमर्थनन्तु तत् प्रस्तावे प्रपञ्चयिष्याम इत्यलम्प्रसक्तानुप्रसक्तविचारेणेति। यच्च जीमूतवाहनेनैव मिताक्षरोक्तम्। विभागो नाम द्रव्यसमुदायविषयाणामनेक स्वाम्यानान्तदेकदेशेषु व्यवस्थापनमिति विभागशब्दार्थः। न च सम्बन्धाविशेषात् सर्वेषां सर्वधनोत्पन्नस्य स्वत्वस्य द्रव्यविशेषेव्यवस्थापनं विभाग इति वाच्यमित्याशङ्क्य सम्बन्ध्यन्तरसद्भावप्रतिपन्नस्य सम्बन्धस्यावयवेष्वेव विभागव्यङ्ग्यस्वत्वापादकत्वात्। कृत्स्नपितृधनगतास्वत्वोत्पादविनाशकल्पनागौरवात्। यथेष्ट विनियोगफलाभावेनानुपयोगाच्चेति दूषयित्वा उच्यते। एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमना प्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः। विशेषेण भजनं स्वत्वज्ञापनं वा विभाग इति व्युत्पत्त्येत्युक्तम्। तद्दायतत्वशतोपन्यस्य दूषितम्। यत्रास्य स्वत्वन्तत्रैवगुटिकापात इति कथं वचनाभावान्निश्चेतव्यम्। यत्र हि पितुर्निधनानन्तरन्तदीयाभ्वयोरेक-

मादाय भ्रात्रा यदर्जितन्तत्रार्जकस्य द्वौभागावपरस्यैकः सर्वसंमतः। तत्र यदि प्राचीनधनविभागकाले गुटिकापातादर्जकेन स एवांशः पश्चाल्लब्धस्तदाप्रादेशिक स्वत्ववादिमते प्रागर्ज्जकस्यैव सोऽंश इति तेनार्जितधने कथं भ्रात्रन्तरस्य विभागः। तत्रैवास्वत्वेन तदुत्पन्ने सुतरां स्वत्वाभावादंशस्य चाविभाज्यत्वात्। यदि वार्जकेतरेण सोऽंशोलब्धस्तदा तेनार्जितधनस्य समभाग एव युक्तः। एकस्य स्वायासेनापरस्यांशायासेनार्जकत्वादिति दूषिते। वस्तुतस्तु सम्बन्धाविशेषात् सर्व सम्बन्धिनां सर्वधनोत्पन्नस्य स्वस्य गुटिकापातादिना प्रादेशिकव्यवस्थापनविभागः। कृत्स्नधनगत स्वत्वोत्पादविनाशावप्यगत्या कल्प्येते। संसृष्टतायां प्रादेशिकस्वत्वोत्पादकृत्स्नधनस्वत्वोत्पादविनाशाविव तच्च विभक्तोयः पुनः पित्रा भ्रात्रावैकत्र संस्थितः "पितृव्येणाथवा प्रीत्या सतु संसृष्टउच्यत" इति बृहस्पति वचने येषामेवहि पितृभ्रातृपितृव्यादीनाम्पितृपितामहोपार्जितद्रव्येणाविभक्तं स्वत्वमुत्पत्तितः सम्भवति। तएव विभक्ताः सन्तः पुनः परस्परप्रीत्या पूर्वकृतविभागन्ध्नते। यत्तन्ममापि यन्ममधनन्तत्तवापीत्येकस्मिन् कार्ये एकरूपतया स्थितास्ते संसृष्टाः। नत्वनेकरूपाणान्धनसंसर्गमात्रेण सम्भूयकारिणां वणिजामपि संसर्गित्वम्। नापि विभक्तानान्द्रव्यसंसर्गमात्रेण। प्रीति पूर्वकताद्दृगभिसन्धिं विनेत्यभिदधता दायभागकृतापि स्वद्दस्तितम्। साधारण स्वत्वादेवहि "बन्धुनामविभक्तानाभोगन्नैव प्रदापयेत्।" इति कात्यायन वचनं यथा श्रुतमेव सङ्गच्छते। यावद्भुक्तधनमात्रे स्वं स्वत्वस्यापि सत्वात्। अतएवात्रपरस्परस्य चौर्यमपि नायं धत्ते। एवञ्च।

साक्षित्वम्प्रातिभाव्यञ्च दानं ग्रहणमेव च।
विभक्ताभ्रातरः कुर्य्युर्नाविभक्ताः परस्परमिति।

नारदवचने परस्परनिरूपितदानादिनिषेधोऽपि न्याय मूलकएव। दानादेर पूर्वमपि देयादौ प्रतिग्रहीत्रादेः स्वत्वसत्वाद्दानप्रतिग्रहादेरसम्भवात्। अविभक्तत्वादेव चाविभक्त द्रव्येण यत्कृतं दृष्टादृष्टार्थं कर्म तत्र सर्वेषां फलभागित्वम्। तथा च नारदः। भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते।

विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्॥

व्यासोऽपि। स्थावरस्य समस्तस्य गोत्रसाधारणस्य च।

नैकः कुर्य्यात्क्रयन्दानं परस्परमतं विना॥

अत्र समस्तस्येति विशेषणोपादानात्कृत्स्नधनगतमेव प्रत्येकस्वत्वंकीयते। तस्मात्तुल्य धनसम्बन्ध्यन्तरसत्वेन सम्बन्धि सकाशात्सं क्रान्तधनं तस्यापि ममापीति सम्बन्धिना प्रतीयते तद्विमतौ दानादिकं प्रतिपिद्ध स्वार्थम्। अतोनैकदेशगतं स्वत्वमिति। इदञ्च द्रव्यसमुदायविषयाणामनेक स्वाम्यानामेकदेशे व्यवस्थापनंविभाग इति वदतोमिताक्षराकृतोऽप्यभिमतमिति लक्ष्यते। इदन्त्विह विचार्य्यम्। द्रव्यसमुदायनिरूपितं स्वामिगतं स्वाम्यम्। स्वामिनिरूपितञ्च द्रव्यसमुदाये स्वत्वं व्यासज्यवृत्ति प्रत्येक वृत्तिवा। नाद्यः। एकैकस्वामित्वस्वत्वाश्रयनाशे तन्नाशस्यावशिष्टसमुदायगततदुत्पत्तेश्च कल्पनायामतिगौरवापत्तेः प्रत्येकस्य प्रत्येकंद्रव्ये दानक्रयादि यथेष्टविनियोगानर्हत्वापत्तौ व्यवहारविसम्वादापत्तेश्च। नद्वितीयः विभागे सति तावतान्नाशोत्पादकल्पनापत्तेः। स्वस्य सतोविभागो नतु विभागात् स्वत्वमिति ग्रन्थविरोधाच्च। अत

ब्रूमः। प्रत्येकदृष्टीनि सम्बधाविशेषात् स्वाम्यानि च सन्त्येव। परस्परविभागागते परस्परस्यान्यान्यदीयद्रव्ये तानि नश्यन्ति परमरणपारिव्रज्यादिनेवेति न काप्यनुपपत्तिः। व्यवस्थापनमपीदमेव अन्यथैकदेश उत्पादनमित्येव वदेत्। अतएव विनाशमात्रकल्पना न तु स्वत्वान्तरोत्पाद कल्पना। जीमूतवाहनमते च कुत्र वास्तवं ममस्वत्वमिति विभागात्प्रागनिरूपणात्तदधीनश्रौतस्मार्त्तलौकिककर्म्मोच्छेदः। अनुमत्याविभागोत्तर कृतयापरस्पर द्रव्येपरस्पर स्वत्वान्तरोत्पत्ति स्वीकारे तदुत्पादविनाशकल्पनागौरवंयत्त्वयामिताक्षराकृते प्रत्यापादितं ततोऽपि तवाधिकमापन्नम्। व्यवहारानुपयोगेन समुदायस्वत्वस्य निष्प्रयोजनता चयोपन्यस्ता साप्येकदेशगत स्वत्वाभ्युपगमे तुल्येवेति कृतमतिदूरंगत्वा।

---

## अथ विभागकालकर्त्तृनिरूपणम्।

तत्र मनुः। ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।

भजेरन् पैतृकं रिक्थमनीशास्तेहि जीवतोः॥

पैतृकम्पित्रोः सम्बन्धिप्रागुभयोपादानात्। अतएव पितुरूर्द्धमिति पितृधनमिभागकालः। मातुरूर्द्धमिति मातृधनविभागकालोऽभिहितः। च शब्दस्तु कालान्तरसमुच्चयार्थः नतु द्वयोरूर्द्धमिति नियमार्थः। पितृधनविभागे मातृजीवनस्याप्रतिबन्धकत्वात्। मातृधनविभागे पितृजीवनस्य। तथा चाह संग्रहकारः।

पितृद्रव्य विभागः स्याज्जीवन्त्यामपि मातरि।

न स्वतन्त्रतया स्वाम्यं यस्मान्मातुः पतिं विना ॥
मातृद्रव्यविभागोऽपि तथा पितरि जीवति।
सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिःपतिरिति ॥

पत्युरभावेऽपि पुत्रेषु सत्सु यतोमातुस्तद्धने स्वातन्त्र्येण स्वाम्यं नास्त्यतस्तस्यां जीवन्त्यामपि पितृधनविभागोयुक्तः। यतश्चापत्येषु सत्सु भार्य्याधने पत्युः स्वाम्याभावस्ततस्तस्मिन् जीवत्यपि पुत्राणां मातृधनविभागाधिकार इति भावः। अतश्चानीशास्तेहि जीवतोरित्यपि तत्तद्धने व्यवस्थाया अस्वातन्त्र्य प्रतिपादकन्नत्वस्वत्वप्रतिपादकं जन्मना स्वत्वस्य पुत्राणाम्पितृधने व्यवस्थापनात्। याज्ञवल्क्यः।

विभागञ्चेत्पिता कुर्य्यात् स्वेच्छया विभजेत्सुतान्।
ज्येष्ठं वाश्रेष्ठभागेन सर्वे वास्युः समांशिनः ॥

अत्रेच्छया पिता सुतान्विभजेदिति वदन् जीवत्यपि पितरि पितुरिच्छा यदा सोऽपि विभागकाल इति सूचयति। तदाच पितैव विभागकर्त्ता। "अस्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थिते" इत्यनेन पुत्राणामस्वातन्त्र्यप्रतिपादनात्। निर्द्दोषे इति विशेषणात्पादित्यादिर्निर्द्दोषवति सत्यपि पितरि पुत्राणान्तत्पारतन्त्र्याभावात्तदिच्छा यदा सोऽपि विभागकालः पुत्राणाञ्च तदाविभागकर्त्तृत्वमित्युक्तम्भवति। अन्योऽपि पुत्रेच्छया विभागकालः पितरि द्रव्यनिस्पृहे निवृत्तरमणे मातरि च निवृत्तरजस्कायाम्। यथाह नारदः।

अत ऊर्द्ध्वम्पितुः पुत्त्राविभजेयुर्द्धनं समम्ति।
पित्रोरूर्द्ध्वं विभागमुक्ता।
मातुर्न्निवृत्ते रजसि प्रत्तासु भगिनीषु च।

निवृत्तेवापि रमणात्पितर्युपरतस्पृहे ॥

इति जीमूतवाहनेन तु विनष्टेवाप्यशरण इति पाठोलिखितः विनष्टे पतिते अशरणे गृहस्थाश्रमरहित इति व्याख्यातञ्च। निवृत्तेवापि रमणादिति पाठान्तरमनाकरमित्यप्युक्तन्तदयुक्तं मिताक्षरादिबहुनिबन्धलिखितत्वात् पुत्रा धनं विभजेयुरित्यनुषङ्गः। गौतमोप्यूर्ध्वं पितुः पुत्त्रा रिक्थं विभजेरन्निव्युक्ता" निवृत्तेचापि रजसि मातुर्जीवतिचेच्छतीत्याह। बृहस्पतिरपि। पित्रोरभावे भ्रातृणां विभागः सम्प्रदर्शितः।

मातुर्निवृत्ते रजसि जीवतोरपि शास्यत इति ॥

तथा सरजस्कायामपि मातर्यनिच्छत्यपि पितरि दीर्घरोगग्रस्तेऽधर्मवर्त्तिनि पुत्त्रेच्छया विभागः। यथाह शङ्खः। अकामे पितरि ऋक्थविभागोवृद्धे विपरीतचेतसि रोगिणि चेति। नारदोऽपि। व्याधितः कुपितश्चैव विषयासक्तमानसः।

अयथा शास्त्रकारीच न विभागे पिता प्रभुरिति ॥

अत्रपित्र्युपरमएकः कालो निवृत्ते चापिरजसीतिद्वितीयो जीवति चेच्छतीति तृतीय इति मिताक्षरायाञ्जीमूतवाहनोक्तं दूषणम्। मातृरजोनिवृत्तेः पितुरुपरतस्पृहत्वविशेषणत्वे।

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।

त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥

इति मनुना विवाहकालविधानात्। वनम्पञ्चाशतो व्रजेदित्याश्रमान्तरगमनकालविधानाच्च। तदारजोनिवृत्तेर्मातुरसम्भवे पितरि वोपरतस्पृहेवानप्रस्थे तत्पुत्राणामिच्छया विभागाभावप्रसङ्गात्। निर्विशेषणमुपरतस्पृहत्वमेव पितृधन-

विभागकाल इति तूच्यमाने अनुपरतस्पृहे पितरि पतितेऽप्यविभाग प्रसङ्गात्। अयमप्यपर:काल इत्यभिधाने कालचतुष्टयापत्तिः पितुरुपरमः पतितत्वं निःस्पृहत्वमिच्छा चेति। तस्मात् पतितत्व निःस्पृहत्वोपरमैः पितुः स्वत्वापगम एकः कालोऽपरश्च सति तत् स्वत्वतदिच्छात इति कालद्वयमेव युक्तमिति। तन्मिताक्षराक्षराशयापरिज्ञानात्। नहि तेन कालत्रयं नियमोऽभिहितः। तथेत्यादि ग्रन्थेन कालान्तरस्यानुपदमेव प्रतिपादनात्। नियमस्य निर्बीजत्वात्। पितृस्वत्वापगम एकः कालोऽपरश्चानपगत एव पितृस्वाम्ये तदिच्छात इति कालद्वयमित्यप्ययुक्तम्। निवृत्त रजस्कायां मातरित्वनन्वयापत्ते: नहि मातृ निवृत्तरजस्कतामात्रेण पितृस्वत्वापगमः। जन्मना स्वत्वावस्थापनात्पितृ स्वत्वापगमस्य कालोपलक्षणत्वासम्भवाच्च। एवं दीर्घरोगग्रस्तत्वेऽपि न स्वत्वापगम इति कालद्वयनियमस्तथापि दुःसमाधः। इष्टापत्तौ तद्वचनविरोधः। यच्चोक्तं तेनैव। मातुर्निवृत्ते रजसीतिपितामहादिधनाभिप्रायम्। निवृत्ते रजसि पुत्रान्तरसम्भवाभावात्तदानीमपि पितुरिच्छयैव पुत्राणां विभागः। अनिवृत्ते रजसि क्रमागतं धनविभागे पश्चाज्जातानां वृत्तिलोपापत्तेः।

यथासौ युक्तः। ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः।

वृत्तिञ्च तेऽभिकाङ्क्षन्ति वृत्तिलोपो न विद्यत इति॥

वचनात्। यतएव पितृधने कालद्वयमतएव स्मृ गौतमादिभिरूर्द्ध्वंतपदम्परित्यज्योर्द्ध्व मित्युक्तम्। ऊर्द्ध्वंपितुः स्वत्वापगम इत्यर्थः। यदि चास्य पितृधन विषयता स्यात्तदूर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धन मित्यस्य निर्विषयता

भवेत्। निवृत्ते रजसि पुत्त्रोत्पत्त्यसम्भवात्। मातृधन गोचरत्वञ्चास्य नाशङ्कनीयमेव। मातुरेव निर्द्दनतापत्तेः। अतो निवृत्ते रजसीति पैतामहधन विषयम्। नचेच्छामनपेक्ष्य रजोनिवृत्तिमात्रं विभागनिमित्तं सम्भवत्यनिच्छया विभागाभावात् कस्येच्छयेत्यपेक्षायामूर्द्ध्वं पितुः पुत्त्रा रिक्थं विभजेयुर्निवृत्ते रजसि मातुर्जीवति चेच्छतीति गौतमवचनात्पितुरेवेच्छात इति निर्णीयत इति पितामहादि धनविभागस्यापि पित्रोरभाव इत्येकः कालः। मातुर्निवृत्ते रजसि पितुरिच्छात इति कालद्वयमेवेति। तदप्यनभियुक्त प्रमोदनम्। वृत्तिलोपापत्तेः पितृधनेऽपि तुल्यत्वात्। ऊर्द्ध्वं विभागादित्यस्य निर्विषयत्वापत्तेरपि पितामहादि धनेऽपि तुल्यत्वात्। सस्पृहे पितरि पातित्यादि दुष्टे पितामहधनेऽपि पुत्त्रेच्छया विभागस्य सकलसम्मतत्वादवश्यवाच्यत्वाच्च। वस्तुतस्तु पितामहादिधने भूर्या पितामहोपात्तेत्यादि नासहृशस्य पितापुत्त्र स्वाम्यस्य वक्ष्यमाणत्वात् पुत्त्रेच्छयापि तस्य विभाग उचित एव। यत्त्वत्र व्याख्यानान्तरमनीशत्वस्य तद्धनगोचरत्वादि कल्पनन्तत् सर्वन्तद्वचनविवेचने निराकरिष्यामः। वयन्तु स्वातन्त्र्यार्हे पितरि जीवति तदिच्छैव विभागनिमित्तम्। पातित्यपारिव्रज्यादिभिस्तदनर्हे पुत्त्रेच्छापि। तदुपरमे तु स्वेच्छाया निमित्तत्वमर्थसिद्धमिति कालत्रयमेवानेन प्रकारेण। अन्यथा बहूनामुपरतस्पृहत्वादीनां विकल्प समुच्चयादिककल्पनानुपपत्तौ विशेषणविशेष्यभावाद्यव्यवस्थापत्तौ बहुव्याकुलीभावः। अतएव क्वचिद्वचने केषाञ्चिदेवोपादानमनुपादानञ्च केषाञ्चित् सङ्गच्छते। एकमूल कल्पनालाघवे-

नोपरतस्पृहत्वादिभिः पितुः स्वातन्त्र्याभावस्यैकस्य सर्वैरुपलक्षणात् । अनीशास्ते हि जीवतोः निर्दोषे पितरि स्थिते । जीवतोरपि शस्यते इत्यादि वचन स्वरसोऽप्येवमेव । अतएव पित्रोर्जीवतोर्भ्रातृणां सहवासोमुख्यस्तदनुमत्यादिना ज्येष्ठस्य कार्यक्षमस्यान्यस्य वा पुत्रस्य स्वातन्त्र्यमन्येषान्तदनुरोधवृत्तित्वमिति च पक्षद्वयमुक्तवन्तो व्यामाद्यः । "भ्रातृणां जीवतोः पित्रोः सहवासो विधीयते" इति व्यासः । जीवति पितरि पुत्राणामर्थादान विसर्गाक्षेपेषु न स्वातन्त्र्यम् । कामन्तीने प्रोषिते आर्त्तिङ्गते ज्येष्ठो वार्थांश्चिन्तयेदिति हारीतः । शङ्खलिखितौ तु स्पष्टममाहतुः । पितर्य्यशक्ते कुटुम्बव्यवहारान् ज्येष्ठः प्रतिकुर्य्यादनन्तरो वा कार्य्यज्ञस्तदनुमतो नत्वकामे पितरि रिक्थविभागो वृद्धे विपरीत चेतसि दीर्घरोगिणि वा ज्येष्ठ एव पितृवदर्थान्पालयेदितरेषामृक्थ मूलं हि कुटुम्बमस्वतन्त्राः पितृमन्तो मातुरप्येवमवस्थितायाः इति । तस्माद्यथोक्तरीत्या विभागस्य कालत्रयमेवेति ब्रूमः । अत्र मनु वचने समेत्येत्यनेन पाक्षिकं साहित्यमनूद्यते बहुत्ववत् । अन्यथैकेच्छया द्वयोश्च भ्रात्रोर्विभागो न स्यात् सममिति तु नियस्यते । यच्च विवक्ष्यामः । यत्तु पित्रोरिति द्विवचन निर्देशात्सोदरभ्रातृणां पितृधन विभागोऽपि मातुरभाव एव कार्य्यः। न तु मातृधन विभागार्थं मातुरभावोपादानम् । जीवतोरपीत्यस्य मातृधन गोचरत्वानुपपत्तेरन्य धनगोचरत्वमवश्यं वाच्यमतो यत्रैव पित्रोरभावो निमित्तं तत्रैव जीवतोरपीत्यपि शब्देन जीवनस्यापि प्रशस्तत्वकीर्त्तनान्न मातुरभावो मातृधने व्याख्येय इति जीमूत वाहन आह तदसम्बद्धम् । पि-

तुश्च मातुश्चेति मनु वचने श्रर्थाद्भिर्देशादन्यथापि द्विवचनस्य विभाग सम्बन्धविवक्षामात्रेण व्याख्यानं युक्तम्। इतरथैकतरधनेऽन्यतरभावास्याहृष्टार्थत्वापत्तेः। यच्चोक्तं जीवतोरित्यादेर्म्मातृधनगोचरत्वानुपपत्तेरित्यादि। तस्यापि कोऽभिप्रायः। मातुः पितरि जीवत्यस्वातन्त्र्यान्न तद्धनगोचरत्वमिति यदि तर्हि सत्स्वपत्येषु भार्य्याधनेऽपि पितुः स्वास्त्वदभावस्यापि तत्रानुपयोगादन्य विषयत्वापत्तिः। अभिप्रायान्तरन्त्वसम्भवदुक्तिकमेवेति वक्ष्यामः। तस्मादृष्टार्थत्वात्तत्तद्धन विषय एव तदभावः। संग्रहकाराद्युक्तो युक्तः। यथा च पित्रोर्जीवतोर्भ्रातॄणां सहवासो मुख्यस्तथा तदूर्द्धमपि। तथा च शङ्खलिखितौ। कामं सहवसेयुरेकतः संहता वृद्धिमापद्येरन्निति। संहताः सहवसन्तो द्रव्योपचयसाहाय्यादिना परस्पर कृतेन वृद्धिमाप्नुयुरित्यर्थः। नारदोऽपि।

विभृयाद्दैकतः सर्वान् ज्येष्ठो भ्राता यथा पिता।
भ्राताशक्तः कनिष्ठो वा शक्त्यपेक्षा कुलस्थितिः॥

मनु रपि। ज्येष्ठएवतु गृह्णीयात्पित्र्यन्धनमशेषतः।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा॥
ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।
पितॄणामनृणश्चैव स तस्मात्सर्व्वमर्हति॥
यस्मिन्नृणं संनयति येन चानन्त्यमश्नुते।
स एव धर्म्मजः पुत्रः कामजानितरान् विदुः॥
पितेव पालयेत् पुत्रान् ज्येष्ठभ्रातॄन् यवीयसः।
पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्म्मतः॥
ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः।

ज्येष्ठ: पूज्यतमो लोके ज्येष्ठ: सद्भिरिहार्हित:॥
यो ज्येष्ठो ज्येष्ठवृत्ति: स्यान्मातेव स पितेव स:।
अज्येष्ठवृत्तिर्यस्तु स्यात्स सम्पूज्यस्तु बन्धुवत्॥
यो लोभाद्विनि कुर्व्वीत ज्येष्ठो भ्रातॄन्यवीयस:।
सोऽज्येष्ठ: स्यादभागश्च नियन्तव्यश्च राजभिरित्यादि।
वचनानि च यद्गुण ज्येष्ठवशवर्त्तितया सर्वेषां सहवास: प्रशस्त:।
धर्मवृद्धि कामनया तु विभाग: कार्य्य इत्याहतु र्मनु प्रजापती।

एवं सहवसेयुर्वा पृथग्वा धर्मकाम्यया।
पृथग्विवर्द्धते धर्म स्तस्माद्धर्म्या पृथक् क्रिया॥

धर्मस्य देवाद्यर्च्चनरूपस्तस्यैव सहवासे पृथक्त्व श्रवणात्।
तथा च बृहस्पति:। एकपाकेन वसताम्पि तृदेव द्विजार्च्चनम्।

एकम्भवेद्विभक्तानान्तदेव स्याद्गृहे गृहे इति।

यत्तु संग्रहकारेणाग्निहोत्रादि धर्मवृद्धिरपि धर्मवृद्धि-शब्देन गृह्यत इत्युक्तम्।
यदाह। क्रियते स्वं विभागेन पुत्त्राणाम्पैतृकन्धनम्।

स्वत्वे सति प्रवर्त्तन्ते तस्माद्धर्म्या: पृथक् क्रिया इति॥

प्रवर्त्तन्ते साध्यन्ते अग्निहोत्रादि क्रिया इति विशेष इति।
तन्न, जन्मनैव पुत्त्राणाम्पितृधन स्वत्वाद्विभागात्प्रागपि श्रौतस्मार्त्त कर्म्माधिकारं प्रतिपादयद्भिरस्माभि: प्रागेव प्रत्यासि।
तस्मात्पञ्चमहायज्ञादि धर्मएव धर्मशब्देनात्र ग्राह्य:।
दत्तासु भगिनीषु चेतितु न कालार्थङ्किन्तु तासामवश्यदानार्थम्। यथा

यच्छिष्टम्पितृदायेभ्यो दत्तर्णम्पैतृकन्तत:।
भ्रातृभिस्तद्विभक्तव्य मृणी न स्याद्यथा पितेति।

नारदवचन स्वणादानावश्यकत्वार्थं न विभागकालार्थम्। पिता च यदि स्वेच्छया पुत्रान् विभजति तदापि निरङ्कुशेच्छा नोपादेया किन्तु।

ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिन इति।

पक्षयोर्मध्ये यः पक्षइष्टः स ग्राह्य इति योगीश्वर वचनार्थः। ज्येष्ठं श्रेष्ठभागेन मध्यमं मध्यमभागेन। कनिष्ठं कनिष्ठभागेन। सर्वे वा ज्येष्ठादयः समांशभाजः कार्य्या इति विज्ञानेश्वराचार्य्याः। प्राच्यास्तु स्वेच्छयेति पृथक्पक्षान्तरं ज्येष्ठादिभागसमभागौ च द्वौ पक्षाविति पक्षत्रयमतएव ज्येष्ठं वेति प्रथमो वा शब्दः स्वेच्छयेति पक्षापेक्षया समञ्जसो वक्ष्यमाणपक्षापेक्षत्वे क्लिष्टः स्यादित्याहु रुपपत्तिञ्च तत्र वदन्ति।

पितैव वा स्वयं पुत्रान् विभजे द्वयसि स्थितः।
ज्येष्ठं वा श्रेष्ठभागेन यथा वास्य मतिर्भवेदिति॥

नारदवचने। ज्येष्ठं वेत्यादिनैकं विषमविभागप्रकारमुक्त्वा यथा वास्येत्युक्तेरन्योऽपि न्यूनाधिक भागः पितुरिच्छयास्तीति गम्यते। हारीतोऽपि। जीवन्नेव वा विभज्य वनमाश्रयेद्वृद्धाश्रमं वा गच्छेत्स्वल्पं वा संविभज्य भूयिष्ठमादाय वसेद्यद्युपदस्येत्पुनस्तेभ्यो गृह्णीयादिति। वृद्धाश्रमः पारिव्रज्यम्। उपदस्येद्द्रव्याभावे न क्षीणो भवेत्। अत्रापि स्वल्पं वेत्यादि पक्षान्तरमुक्तम्। तस्मात्तदेक मूलकतानुरोधेन योगीश्वरवचनेऽपि तत्संग्रहायेच्छयेति पृथक्पक्षएव युक्त इति। तदसत्। वा शब्दस्तावद्देधापि व्युत्पत्तेर्न्नासमञ्जसः या चोपपत्तिरुक्ता साप्ययुक्ता। यदि वचनान्तरोपात्त पक्षान्तर संग्रहार्थमिच्छयेत्यस्य

भवेदुत्तरार्द्धं व्यर्थमेव स्यादुक्तपक्षद्वयस्यापि वचनान्तरोपात्तत्वादिच्छयेत्यनेन तयोरपि संग्रहसम्भवात्। तदितरपक्षसंग्रहार्थत्वे मन्दप्रयोजनता स्यादेव। इच्छाया निरङ्कुशत्वेना नियमवारणाय वचनान्तरालोचनं विना तदर्थानिर्वाहात्। स्वोपात्तपक्षद्वये व्यवस्थानिरासार्थतयेच्छयेति व्याख्यायमाने वचनान्तरालोचनावश्यकत्वात्। न च विकल्पोक्त्यैवेच्छालाभे इच्छयेति निरर्थकमिति वाच्यम्। उत्तरार्द्धवैयर्थ्यापेक्षया व्यवस्थितविकल्पनिरासाय स्ववाक्योपात्तपक्षद्वयविषयतया तदनुसारस्यैवोपपन्नतरत्वात् नारदाद्युक्तमूलकता तु विज्ञानेश्वरव्याख्यानेऽपि नापैति। तदुक्तपक्षद्वयस्य वचनान्तरेष्वप्युपादानात्। न च निरर्मलेच्छामात्रमेव पक्षान्तरं योगीश्वरवचनार्थोऽस्त्विति वाच्यम्।

अयथा शास्त्रकारी च न विभागे पिता प्रभुरित्यस्य। निर्विषयतापत्तेः। इच्छामात्रस्य शास्त्रीयत्वेऽयथा शास्त्रकारित्वाप्रसक्तेः।

जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत्।
निर्भाजयेन्नचैवैकमकस्मात्कारणं विनेति।

कात्यायनवचसोऽपि निर्विषयता स्यात् इच्छाया एककारणत्वात्। न विशेषेच्छास्त्रीयज्येष्ठभागाद्यतिरिक्तैच्छकविशेषमन्तन्न कुर्य्यात् कारणञ्च शास्त्रोक्तं पातित्यादिकं विनाऽकस्मात् क्रोधात् सुभगा पुत्र स्नेहादिना वा न निर्भाजयेद्भागरहितं न कुर्य्यादित्यर्थः। यत्तु

न्यूनाधिकविभक्तानान्धर्म्यः पितृकृतः स्मृतः।
इति योगीश्वरवचनन्तदपि धर्म्योधर्मादनपेतस्चेत्पित्राकृतः

स्तत एव स्मृतौ न निवर्त्तते। अधर्मस्तु यथा शास्त्रस्ततो निवर्त्तत एवेत्यभिप्राय इति विज्ञानयोगिभिरेव व्याख्यातं। व्याधितः कुपितश्चैवेत्यादि वचनानुरोधात्। एवम्।

समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः।
तथैव ते पालनीया विनेयास्ते स्युरन्यथा।
पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः।
तेषां स एव धर्म्यः स्यात्सर्वस्य हि पिता प्रभुरिति।

बृहस्पति नारद वचने अपि व्याख्येये। ज्येष्ठादि विभागेऽपि पित्रा ज्येष्ठादिभ्योदत्तेऽन्यैरनुशयो न कार्य्यः। समांश विभागे वा ज्येष्ठादिभिरिति तात्पर्य्यार्थः अतएव नारदस्तेषां स एव धर्म्यः स्यादित्याह। ज्येष्ठादि भागश्च मनुनोक्तः।

ज्येष्ठस्य विंश उद्धारः सर्व द्रव्याच्च यद्वरम्।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयस इति॥

समांश पक्षं बौधायन आह। पुत्रेभ्यो दायं व्यभजदिति सोंऽशः सर्वेषामविशेषादिति मनुः। पुत्रेभ्यो दायं व्यभजदिति श्रुतौ विशेषाश्रवणात् सर्वेषाम्पुत्राणां समोऽंश इत्यर्थः यदि पिता स्वेच्छया समांशेन पुत्रान्विभजते तदा स्वपत्नीभ्यः पुत्र समभागं दद्यादित्याह याज्ञवल्क्यः।

यदि कुर्य्यात् समानंशान् पत्न्यः कार्य्याः समांशिकाः।
न दत्तं स्त्रीधनं यासाम्भर्त्रा वा श्वशुरेण वा॥

यासां भर्त्रा श्वशुरेण वा स्त्रीधनं प्रीत्यादिना न दत्तम् भर्त्रादि ग्रहणमुपलक्षणञ्च वक्ष्यमाण स्त्रीधनशून्या इत्यर्थः। तासाम्पत्नीनां पुत्र समांश भागमात्रं नियम्यते। तथा च यदा ज्येष्ठभागादिनापि पिता पुत्रान् विभजति तदापि ज्येष्ठभा-

गाद्युद्धृत्योद्धृतोद्धाराद्व्यसमुदायात् पुत्रसमानं शांशान् पत्नयो लभन्ते न ज्येष्ठभागादिकमित्यर्थः पर्यवस्यति। यत्तु पत्न्याः स्त्रीधनं परीभाण्डादिकमपि पत्नी लभते। तथा चापस्तम्बः। परीभाण्डञ्च गृहेऽलङ्कारो भार्यया इति। परीभाण्डम्भोजनपात्रादि यदसाधारणं यस्या अलङ्कारोऽप्यसाधारणस्तद्विवेचयिष्यते। न च पक्षद्वयेऽप्येतावता पुत्रसमांशित्वं पत्नीनां विज्ञानेश्वरेणोक्तन्तर्हि यदि कुर्यात् समानंशानिति समांशानुवादो व्यर्थः पत्न्यो ज्येष्ठांशादि न लभन्ते इत्येतावन्मात्रमेव वाच्यमिति युक्तम्। यतः।

एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत्।
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना॥
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धन्ततोऽनुजः।
अंशमंशं यवीयांस इति धर्म्मो व्यवस्थित इति॥

मनुना द्व्यंशी वा पूर्वजः स्यादेकैकमितरेषामिति। गौतमेन अथ भ्रातॄणां दायभागो द्व्यंशं हरेज्ज्येष्ठो गवाश्वस्य चानुदशमजावयो गृहञ्च कनिष्ठस्य कार्ष्णायसं गृहोपकरणानि च मध्यमस्येति। वसिष्ठेन।

ज्येष्ठस्यांशोऽधिको देयः कनिष्ठस्य वरः स्मृतः।
समांशभाजः शेषाः स्युः प्रत्ता भगिनी तथेति॥

नारदेन चोद्धारस्यैव विषमभागमात्र मुक्तन्तद्यदाद्रियते तदा पत्नीनामंशाभाव प्रतिपादनार्थं यदि कुर्यात्समानं शानित्युक्तमिति न दोषः। अतएव

भ्रातॄणाम विभक्तानां यद्युत्थानम्भवेत्सह।
न तत्र विषमम्भागम्पिता दद्यात्कथञ्चनेति।

मनु ना सर्वेषां भ्रातृणान्द्रव्यार्जने यदि सह समानमेवोत्था-नमुद्योगो भवेत्तदा पितुर्विषमविभागदानप्रतिषेधकमनुवचनव्याख्याने जीमूतवाहनेनोक्तमुद्धारस्तु पित्रा दातव्य एव। तस्य विभागरूपत्वाभावात्। न्यूनाधिकविभागस्यैव निषेधा-दिति। तस्माज्ज्येष्ठं वा श्रेष्ठभागेनेति याज्ञवल्क्याद्युक्त उद्धा-रेऽपि समांश भागिता पुत्त्राणामस्त्वेवेति तत्रापीदं वचनं प्रवर्त्तत एव। द्व्यंशादि पक्षे परं न प्रवर्त्तत इति विज्ञान योगिनामाशयः दत्ते तु स्त्रीधने दत्त्वार्द्धं प्रकल्पयेदित्य-त्रार्द्धदानं वक्ष्यते। यद्यपि तदाधिवेदनिके भर्त्रा दीयमाने-वक्ष्यते तथाप्याकाङ्क्षायां समानन्यायत्वादत्रापि योज्यम्। बौधायनः॥

वहूनामेकधर्म्माणामेकस्यापि यदुच्यते।
सर्वेषामेव तत् कुर्य्यादेकरूपाहि ते स्मृता इति॥

भ्रातृणाम विभक्तानामित्यादि मनुवाक्यं सहोत्थानं सर्वेषां विभाग प्रार्थना यदि भवतीति जीमूतवाहनेन तदनुया-यिना दायतत्व कृता च व्याख्यातम्। यदि पुनः पितरि जीवति पुत्त्रा एव विभागमर्थयन्ते तदा विषमविभागः पित्रा न दातव्य इति वदता तत्र सहशब्दवैयर्थ्यं उत्थान शब्दस्य चोद्योगवाचि-नोऽपि भाग प्रार्थनापरत्वमन्याय मित्यसद्व्याख्यान मेवादर्त्त-व्यम्। तथा च।

सामान्यार्थे समुत्थाने विभागस्तु समः स्मृतः।

इति योगीश्वरवचः स्वारसोऽपि लभ्यते। तस्मादस्मदभिमतार्थ तथैवोपपत्तेः। दत्त्वार्द्ध मित्यत्राप्यर्द्ध शब्दः समप्रविभा-गवचनो न भवति अतश्च यावता पूर्वदत्तमिदानीन्दीयमानञ्च

सम्भवति तावद्देयमिति मिताक्षरायामुक्तं तत्रायमाशय: यद्यपि नपुंसकस्यार्द्धशब्दस्य पुंस्यर्द्धोऽर्द्धं समेंऽशक इति कोषात्समांश वाचित्वमस्ति। तथापि कदाचित्तासां पुत्त्राधिक धनत्वङ्कदाचित्तदूनधनत्वमव्यवस्थित मर्द्धं नियमस्य चादृष्टार्थत्वं मा प्रमाङ्क्षीदिति पुत्त्र समांशितायामेव तात्पर्य्यमिति। अत्र मदन रत्नाकर आह। पत्न्य इति बहुवचनात्प्रतिपत्नि समानंशान् पिता गृह्णीयान्नतु ताभ्य: पृथक् कृत्यांशो दातव्य:। जायापत्योर्विभागो न विद्यत इति हारीतवचन विरोधापत्ते रिति। तन्न। नात्र जायापत्योर्विभाग उच्यते येन हारीतवचन विरोध: स्यात्किन्तु पत्न्यैव पुत्रविभाग समये ताभ्यस्तत्समांशदानमीति दानवत्। अतएव स्त्रीधने दत्ते त्वर्द्धमित्युक्तमिति न कोऽपि दोष:। यस्तु जीवति पितरि पुत्रेच्छया विभाग: स वैषम्याश्रवणान्मातुर्निवृत्ते रजसीति मनुवचने समशब्दानुषङ्गाच्च समएवोऽपि पितुरूर्द्धं विभाग: सोऽपि समएव। पूर्वोदाहृत मनुवचने सममित्यभिधानात्। हारीतोऽपि। समानोद्धते पितरि रिक्थविभाग:। पैठीनसिरपि। पैतृके विभज्यमाने दायाद्यैर्भ्रातॄणां समोविभाग:। याज्ञवल्क्योऽपि

विभजेरन् सुता: पित्रोरूर्ध्वं रिक्थमृणं समम्।

पित्रोरूर्द्धमिति काल: सुता इति कर्त्तार: सममिति प्रकारनियम इति मिताक्षरा। ननु मनुनैव पितुरूर्द्धं विभागमुपक्रम्य।

ज्येष्ठएव तु गृह्णीयात्पित्र्यं धनमशेषत:।
शेषास्तमुपजीवेयुर्यथैव पितरन्तथेति॥

सहवासपक्षं मुख्यमुक्त्वा ज्येष्ठस्य विंश उद्धार इत्यादिना

विषमविभागोऽप्युक्तस्तत्कथं समनियम इति चेत्। उच्यते। यद्यप्ययं विषमभागो जीवत्यजीवति च पितरि शास्त्र दृष्टस्तथापि वचनान्तरानुरोधात्कलौ सम एवेति नियमः।

अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नत्विति।

योगीश्वर वचनात्। अत्र लोकपदेन युगमुच्यते। युगान्तरे धर्म्यमपि युगान्तरे यद्विद्विष्टं प्रतिषिद्धन्तन्नाचरेदित्यर्थः। अन्यथा धर्म्यत्वास्वर्ग्यत्वयोर्व्याघातः। शास्त्र विहिते तदभिन्न विद्वेषोवाधित एव। तदन भिन्नया सरजनविद्वेषस्तु ना स्वर्ग्यत्वापादकोऽग्नीसोमादि हिंसादावर्तिप्रसङ्गादित्यादि दूषणं स्यात्। अतएव मिताक्षरायाम्मधुपर्कपशुवधगवालम्भादिकलिवर्ज्यमिव लोक विद्विष्टत्वेनोदाहृतम्। कलिवर्ज्येषु च पुनरुद्वाहादि कमण्डलादीनां यत्रोक्तन्तत्र ज्येष्ठांशाद्युद्धारादिकमपि। यथा चादिपुराणे।

ऊढायाः पुनरुद्वाहो ज्येष्ठांशो गोवधस्तथा।
कलौ पञ्च न कुर्वीत भ्रातृजाया कमण्डलुः।

स्मृति संग्रहेऽपि।

यथा नियोगधर्म्मो नो नानुबन्ध्या वधोपि वा।
तथोद्धार विभागोऽपि नैव संप्रतिवर्त्तते।

नियोगधर्मोभ्रातृभार्यायां वाग्दत्तायां मृतपतिकायां गुर्वादिनियोगेन विधिनागमनम्। मैत्रावरुणीङ्गामनु वन्ध्यां वशामालभेतेति विहितोगोवधः। सम्प्रति कलौ अतएवापस्तम्बो जीवन् पुत्रेभ्योदायं विभजेत्सममिति स्वमतमुक्त्वा ज्येष्ठोदायाद इत्येक इति कृत्स्नधनग्रहणं ज्येष्ठस्येत्येकीयमतमुपन्यस्य देशविशेषे सुवर्णङ्गावः कृष्णाभौमं ज्येष्ठस्य रथः पराभाण्डम्पितु-

गृहेऽलङ्कारोभार्य्याया ज्ञाति धनञ्चेत्येक मतत्वेनैवोद्धार विभागं दर्शयित्वा तच्छास्त्रविप्रतिपिद्धमिति निराकृतवान्। शास्त्रवि प्रतिषेधञ्च स्वयमेव विवृतवान्। मनुः।

पुत्त्रेभ्योदायं व्यभजदित्य विशेषेण श्रूयत इति।

तस्मान्न विषमविभागः शास्त्र दृष्टोऽपि कलावनुष्ठे यः। यत्तु मिताक्षराकृता श्रुतिविरोधित्युक्तं तद्विचार्यम्। श्रुतिविरोधेहि सति युगान्तरेऽपि तस्यानुष्ठाने तद्बोधक वचनानां सर्वथाऽप्रामाण्यमेव स्यादिति कलिवर्ज्य तयोपन्यासो विरुद्धः। नवात्यन्तं श्रुतिविरोधोऽपि। अविशेष श्रवणे सति समंस्याद श्रुतित्वादितिन्यायलभ्यत्वात्समत्वस्य। स्मृति चन्द्रिकायान्तु बौधायनोदाहृतं विषमविभाग प्रतिपादकमपि श्रुत्यन्तरं लिखितम्। ज्येष्ठत्वादाधिक्येऽपि श्रुत्यन्तरमित्याह स एव। धनमेक मेकमुद्धरेत्ज्येष्ठः तस्मात्ज्येऽष्ठं पुत्त्रं धनेन निरवसाययतीति श्रुतेरिति। धनमेक मेकमिति वदन् श्रुतिवाक्यगतं धनेनेत्येकवचनं विवक्षितमिति सूचयति निरवसाययतीति श्रुतेरिति। धनमेक मेकमिति वदन् श्रुतिवाक्यगतं धनेनेत्येकवचनं विवक्षितमिति सूचयति। निरवसाययति तोषयतीत्यर्थ इति ग्रन्थेन। जीमूतवाहनादयस्तु यदा भक्त्यतिशयादिना भ्रातॄणामनुमति स्यदोद्धारादि विषमभागोऽतएवाद्यतनानाम्भक्त्याद्यभावादुद्धाराद्यर्ह ज्येष्ठाभावाच्च समभागएव लोके दृश्यते इत्यादिना ग्रन्थेनानुमत्यनलुमतिभ्यां विषम समभागयोर्व्यवस्थामाहुः तत्तु तथा सति पुत्रेच्छाया एव प्रयोजकत्वापत्तेः पूर्वोद्ध विरोधादनादेयम्।

पित्रिच्छायाः स्वतन्त्रपचान्तर परत्वन्तु प्रागेव निरासि।

पिता पुत्रेभ्यः स्वार्जितधनविभागन्ददता स्वयमंशद्वयं ग्राह्यमित्याह नारदः ।

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पितेति ।

बृहस्पतिरपि। जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयमिति।

पितुरंशद्वय ग्रहणमेकपुत्र विषयमित्याहतुः शङ्ख लिखितौ ।

स यद्येकपुत्रः स्याद्द्वौभागावात्मनः कुर्य्यात्।

व्यवहार पारिजातकारइदं वचन मेवं व्याचष्ट । एक-शब्दोऽत्र श्रेष्ठवाची। तथा च यदि पुत्रो गुणवत्तया धनार्ज्जन शक्तस्तदा तेन सह विभागे पित्रांशद्वयं ग्राह्यमिति। जीमुत-वाहनस्तु एकस्य पुत्रः एकपुत्र एकपितृक औरस इति यावत् । न पुनः एकः पुत्रो यस्येति बहुव्रीहि स्तस्यान्यपदार्थ प्राधान्येन षष्ठीतत्पुरुषाद्दुर्बलत्वात् । तथा च क्षेत्रजस्य व्यावृ-त्तिस्तस्य द्विपितृकत्वात् ।

तथाचौरसपुत्ररूपः पिता स्व पितृधने भागद्वयं गृह्णी-यान्न तु क्षेत्रजा इति व्याचख्यौ । तदसत् । तथा सति पिता-महधनगोचरतास्य स्यात्तत्र च सदृशं स्वाम्यम्पिता पुत्रयोरित्यौ रसस्यापि पितुः पुत्र समांशतया व्यवस्थापयिष्यमाणत्वात् । तथा चागत्या बहुव्रीहि रेवास्थेयः । मिताक्षराकृता त्विदंव-चन मनादृतमेव ।

कात्यायनः । द्व्यंशहरोऽर्द्धहरो वा पुत्र वित्तार्ज्जनात्पिता ।

मातापि पितरि प्रेते पुत्रतुल्यांश भागिनीति ॥

अत्र जीमूतवाहनः । पुत्रस्य वित्तार्ज्जनात् पुत्रार्जितेऽपि वित्ते स्वार्जित इव पितुरंश द्वयमित्यस्यार्थो न तु पुत्रश्च वित्तस्य तयोरर्जनादिति। अनर्जित पुत्रस्यापि भ्रातृभिर्विभागे

वित्तार्जकतयांशद्वयस्येष्टत्वात्। अतो विभागार्हसम्बन्धिनि विद्यमानेऽर्जकस्य द्व्यंशादि हरत्वमसति तु सर्व्वं हरत्वमिति वाच्यन्तथा सति पितृपुत्रपदयोः प्रसक्तगौणता स्यात्। किञ्चार्ज्जनं स्वत्वहेतुभूतो व्यापारः। अर्ज्जनं स्वत्वमापादयतीति प्रतिपिद्ध मित्यभिधानात्। नच पुत्रेषु स्वत्वमस्तीति सर्व्वस्वदाने दर्शितमतस्तत्र गौणमर्ज्जनपदं वित्ते च मुख्यमिति सकृदुच्चरिते वैरूप्यमयुक्तम्। न च पुत्रस्यार्ज्जकत्वादेवांशद्वयप्राप्तेः पितुर्यास्माद्वचनादृतेऽपि वचनान्तरादेव भागद्वयसिद्धेर्वचनमिद मनर्थकमिति वाच्यम्। एतद्वचनमन्तरेणापि पुत्रधने पितुर्भागद्वयाप्राप्तेरस्य सार्थक्यात् इत्याह। तन्न। द्वन्द्वापेक्षया षष्ठ्यर्थं लक्षणावतो भवदुक्तसमासस्यायुक्तत्वात्। यच्चानर्जित पुत्रस्येत्यादि द्वन्द्व दूषणन्तदत्यसम्बन्धम्। भ्रातृभागाद्य विषयकत्वादस्य। पितृधन प्रस्तावात्। न चैवम्पुत्रपदं व्यर्थं वित्तार्जनस्येव द्व्यंश हरत्वे हेतुत्वोपपत्तेरिति वाच्यम् अस्वातन्त्र्यार्थत्वात्। यतः पुत्रोऽपि वित्तवत्त्वेनैवार्जितस्तेन परतन्त्रः स्वार्जितधने पितुरंशद्वय ग्रहणावग्रहो न भवतीत्यत्र तात्पर्य्यम्। यच्चार्जनपद वैरूप्यन्तदप्यसत्। पुत्रेऽपि पितृस्वस्येष्टत्वात्। न च सर्वस्वदाननय विरोधः। पित्राद्यस्वत्वे तस्य तात्पर्य्यात्। पुत्राद्यदानस्य तन्नय सिद्धान्तस्य भाष्य प्रदर्शित चोदकविरोध युक्ति सिद्धत्वात्। अतएव पुत्र कन्यादानादि विधयो मुख्यार्था एव न पुत्रादिपरतन्त्रीकरणरूप गौणदानाद्यर्थः। इदञ्च पितुरंशद्वयोपादानं स्वार्जितविषयन्न पित्रार्जितविषयम्।

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा।

तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोरिति ।

याज्ञवल्क्येन तत्र पितापुत्रयोः समस्वाम्याभिधानात्समांश-भागित्वमेव । तस्य ह्ययमर्थः । भूः शालिक्षेत्रादिका । निबन्धो राज्ञामनुज्ञस्यैकस्मिन् पर्णभरकक्रमुक भरकादावियन्ति पर्णादीनि देयानीति शासनारूढतया यद्दृत्तित्वे न दीयते तदुच्यते । तथा द्रव्यं सुवर्णादि तत्र पितुः पुत्रस्य च स्वाम्यं हि शब्देन प्रसिद्धमित्युच्यते । जन्मनैव स्वत्वात् । तदपि सदृशन्तु-ल्यमतोऽत्र पुत्राणां न पित्रर्जित इव पितृ पारतन्त्र्यमिति तदनिच्छयापि विभागांशद्वय नियमश्च पितुर्नास्तीति ।

वृहस्पतिः । द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा ।

सममंशित्व माख्यातं पितुः पुत्रस्य चैव हि ॥

पित्रा सम एवांशो ग्राह्यो न तु स्वार्जितवदंशद्वयं विषम-विभाग पक्षाश्रयणं चेत्यर्थ इति मदनरत्नकारः । जीमूतवाह-नस्तु यत्र द्वयो र्भ्रात्रोर्जीवत्येव पितर्य्येकः पुत्रमुत्पाद्य नष्टो-ऽन्यश्च जीवति । पश्चात्पितापि मृतस्तत्र पितृधनं प्रत्यासत्तेः पुत्रस्यैव प्राप्नोति न तु प्राङ्मृतपितृक पौत्रस्य विप्रकर्षात्तद्वा-धार्थं सदृशं साम्यमिति वचनम् । यथा पैतामहधने पितुः साम्यं तत्पुत्रस्य साम्यन्तथा तत्पौत्रस्यापि । न तु सन्निकर्ष विप्रकर्षकृतो विशेषः । पार्वणविधिना पिण्डदातृत्वेन द्वयो-रविशेषादित्यभिप्रायः । अतएव मृतपितृकः प्रपौत्रोऽपि प्रपितामहधने पुत्रपौत्राभ्यां सह तुल्यवदेव स्वामी । पिण्ड-दानाद्यविशेषात् । जीवति तु पितरि पुत्राणान्तद्धन स्वाम्ये सपुत्र भ्रातृद्वय विभागे तत्पुत्राणामपि विभागः स्यात् स्वा-मित्व साम्यात् । तस्मान्मृतपितृक पौत्रविषयकमिदं न पौत्र-

विषयकन्न चाप्रक्रान्तत्वादनर्थकत्वं प्रागनेकपितृकाणामेव प्रक्रमात्। साङ्ख्यवचनन्तु स्वार्जितवत्पितृच्छया विभागा भावार्थम्। यथाह विष्णुः। पिता चेत्पुत्रान् विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे।

पैतामहे तु पिता पुत्रयोस्तुल्यं स्वाम्यमिति॥

अतः स्वोपात्ते पिता न्यूनाधिकभागैः पुत्रानिच्छया विभजतु पैतामहे तु तुल्य स्वच्छन्दवृत्तिता। एतावतैवैतद्वचनोपपत्तौ सामान्य प्राप्तम्पितृच्छाया विभागकालत्वं पितुश्च भागद्वयं न निषिध्यते। जीवत्पितृक पौत्रविषयतापिवाधारेश्वरानुमतस्यास्तान्तथापीच्छाकृत न्यूनाधिकभागनिरासार्थतैव। न तु पुत्रेच्छया विभागोऽंशद्वयाभावश्च पितुरनेन बोध्यते।

किञ्च जन्मविद्यागुण ज्येष्ठोद्धं यन्दायादवाप्नुयात्।

समांशभागिनस्त्वन्ये तेषां पितृसमस्तु स इति।

इहस्पतिवचनात्पितापि स्वपितृकृत नरकनिवर्त्तको गुणज्येष्ठः स्वभ्रातृभिः सह विभागे पितृसमत्वेन यत्रांशद्वयभाक् तत्र पुत्रैः सह विभागे पितैवांशद्वयं पैतामहधनेनाप्नोति स्वद्वारकएव पुत्राणान्तद्धन सम्बन्धस्तेव्वतीति भवतो सुनीनाञ्च वचनमनुचितम्। तस्मादिच्छया विभजेत्सुतानिति पितृच्छाया विभागकालत्वं द्वावंशौ प्रतिपद्येतेत्यादि वचनोक्तं पितुर्भागद्वयञ्चाविशिष्टं पितामहधनेऽपि।' न्यूनाधिक भागमात्रन्तु पुत्रेषु स्वाच्छन्द्येम भवति।

द्रव्ये पैतामहोपात्ते स्थावरे जङ्गमे तथा॥

सममंशित्वमाख्यातम्पितुः पुत्रस्य चैवहीति।

बृहस्पतिना पितापुत्रयोरंश साम्यस्यैवाहृत्य विधानात्कथम्पितुरंशाद्वयमिति चेन्न। अंशिवमंश कर्तृत्वं स तन्न तु स्वेच्छया स्वार्जितवस्तुनाधिकांशकर्तृत्वमिति तदर्थात्। नत्वंशवत्त्वं समधिति। स यद्येकपुत्रः स्यादित्येकपुत्र पदस्यौरस परत्वस्योक्तत्वाद्दि पितृकर्तृत्वजादिरूप पितृभिप्रायं वा समांशित्वाभिधानमित्याह। तदनादेयम्। सन्दर्भ विरोधात्। तथाहि। अनेकपितृकाणाम्पितृद्वारकभागकल्पना अभिधानानन्तरं भूर्या पितामहोपात्तेत्युक्तन्त्वात्स्वाम्यमेव पौत्राणाम्पैतामहे धने पितरि जीवति विभागाभावो वा। तदिच्छयैव वा स्वार्जितवद्विभाग इति शङ्कात्वयमेवोक्तिष्ठति। यन्मिताक्षरा यासुक्तं तन्निराकरणार्थमेवेदवचनन्तद्व्याख्यानरीत्या सङ्गच्छते। प्रतीतपितृक पौत्रविषयकत्वेन सङ्कोचोऽस्य कुतः। न च धारेश्वरावतारितरीत्या पौत्रमात्र विषयकतायामपि न्यूनाधिकभागमात्रस्य पितृच्छाकृत निरासायेदं न पितृच्छाकाचतृतीयभागद्वयस्याविशेष प्रवृत्तस्येति विवाच्यम् विनिगमनाविरहात्। किञ्च। पितृच्छाया हेतुत्वमिच्छया विभजेदिति तृतीया निर्देशाच्छाब्दमार्थिकन्तु तस्याविभागकालोपलक्षणत्वम्। तत्र शाब्दं हेतुत्वाधनानेनानेनार्थिकं कालोपलक्षणत्वन्न बाध्यन्त इति वितम्। सति च स्वाम्यसाम्ये पुत्रेच्छाया निमित्तत्वन्तकृत्वा तस्याः कालोपलक्षणत्वकल्पे पातिकपाय तद्वरीरम्। ननु पितुरंशद्वयमित्युक्त्व प्रयुक्तत्र स्वाम्याधिक्य युक्तं नाप्यर्जकत्वायुक्तं तस्य येन चैषां स्वयमुपार्जितं स्यात्सद्यंशमेव लभेतेति वाशिष्ठ साधारणवचनादेव सिद्धे द्वावंशौ प्रतिपद्येते इति विशेषवचनानर्थक्य प्रसङ्गात्। तस्मात्पितृर्जि-

तेऽपि ज्येष्ठपुत्रत्वप्रयुक्तं यथा तस्यांशद्वयं विशेषवचनात्तथा पैतामहे पितुरपि । अतएवास्मन्मते पुत्रार्जितेऽपि पितुरंशद्वयमिति चेत् । सत्यम् ।

परन्तु निःसङ्कोचप्रवृत्तस्यास्य साम्यवचने न तद्बाध्यते ॥

पुत्रार्जिते तु पितुरंशद्वयाभावो भवदुदाहृत पुत्रवित्तार्जनादिति वचनस्य भवदुक्तार्थे दूषणात्प्रागेव व्यवस्थापितः । न च तद्वचनादंशद्वयाभावेऽपि सामान्यवचनादेव पुत्रार्जितेऽपि पितुरंशद्वयमायात्विति वाच्यम् । वित्तार्जनस्य तत्र हेतुत्वोपन्यासवैयर्थ्यप्रसङ्गात् । न च तदर्थवादमात्रमन्यथार्जकत्वप्रयुक्तभागद्वयस्य वसिष्ठवचनादेव सिद्धेर्विशेषवचनानर्थक्यापत्तिरिति वाच्यम् । यतस्तथार्जकत्वप्रयुक्तपुत्रांशद्वयस्यापवारणात् पितृत्वप्रयुक्तपित्रंशद्वयेऽपि भागसाम्यएव पर्य्यवसानम्भवेन्न तु भवद्भिस्तु पुत्रापेक्षया पितुरंशाधिक्यन्तथाविधवचनाभावात् ॥ यच्च किञ्चेत्यादिनानौचित्यमुक्तन्तन्न किञ्चित् ।

वाचनिकसाम्येऽनौचित्याप्रसक्तेः । ज्येष्ठस्य ज्येष्ठत्वप्रयुक्तमंशद्वयं पितृत्वप्रयुक्तञ्च पितुरिति ज्येष्ठपुत्रसाम्यापत्तेस्त्वयाप्यनौचित्यस्य दुर्वारत्वात् । मदनरत्नधृतकात्यायनवचनानान्तु सर्वेषां भ्रातृणाम्पिता पुत्राणाञ्च समांशग्रहणमेव मुख्यमिति प्रतीयते ।

सकलं द्रव्यजातं यद्भागैस्तद्धन्ति तत्समैः ।
पितरौ भ्रातरश्चैव विभागी धर्म्य उच्यत इति ॥

अतएव योगीश्वरोऽपि सर्वेवा स्युः समांशिन इति सर्वपदं प्राहुक्त अन्यथा समांशिनो वा कुर्वीत सुतानिति वदेत् ।

यस्तु विभागिनां मध्ये स्वव्यवसायेन जीवन समर्थः पितृधनादि विभागन्न जिघृक्षति तम्प्रत्याह मनुः ।

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ।

स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्त्वोप जीवनम् ॥

याज्ञवल्क्योऽपि । शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक् क्रिया ।

निर्भाज्यो निःसम्बन्धीकरणीयः । पृथक् क्रियेत्यस्याप्ययमेवार्थः । किञ्चिद्दत्त्वेति विभागचिह्नत्वेन किञ्चिदसारमपि दत्त्वेत्यर्थः । तत् पुत्राणां दायजिघृक्षानिवृत्त्यर्थञ्चेदम् । हलायुधस्तु ।

कुटुम्बार्थेषु चोद्युक्तस्तत्कार्य्यं कुरुते तु यः ।

स भ्रातृभिर्बृंहणीयो ग्रासाच्छादन वाहनैरिति ।

नारद वचनैकवाक्यतालाभेन मनु वचने स निर्भाज्य इति पाठं प्रकल्प्य स भ्रातृभिर्गृहीतभागैः स स्वभागाद्धनमाकृष्य पूरणीय इत्यर्थ इति व्याख्यातवान् । तत्तु नेहेतेत्यादि पदवैयर्थ्यापत्तेरुपेक्ष्यम् । मेधातिथि प्रमुखाचार्यानादृततया पाठकल्पनानौचित्याच्च । पृथक् क्रियेति स्पष्टवचन सम्वादाच्च । प्रकाशकारस्तु, यो भागिषु धनार्थं व्यापृतेषु प्रमादालस्यादिना नेहेत न व्याप्रियेत साहाय्यन्नकुर्य्यात् । स्वकर्मणा स्वव्यापारेण शक्तः साहायकक्षमोऽपि सन्स स्वकादंशात् स्वव्यापारजनिताद्धनाद्बहिः कार्य्यः किञ्चिदुपजीवनं दत्त्वा मूलधनमात्र भागीकरणीय इतीदम्मनु वचनन्निर्भाज्येत्याकरपाठमङ्गीकृत्यैव व्याचष्टे । तदपिन युक्तम् । अपिशब्दाद्यध्याहार प्रसङ्गात् । योगीश्वर वचनं सम्वादिनोऽर्थस्य स्पष्टतर प्रतीतिकत्वाच्च । भवदुक्तार्थस्य वचनान्तरवशत्वाच्च । कात्यायनः ।

अविभक्ते निजे प्रेते तत् सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धन्नैव पितामहात् ॥
लभेतांशं सपित्र्यन्तु पितृव्यात्तस्य वापि तत् सुतात् ।
स एवांशस्तु सर्वेषां भ्रातृणां न्यायतोभवेत् ॥
लभते तत् सुतो वापि निवृत्तिः परतो भवेत् ।

निजे भ्रातरि तत् सुतं भ्रातृ पुत्रम् । जीवनम्भागः । स कीदृशम्भागं लभत इत्यपेक्षिते आह पित्र्यमंशमिति । तत् सुतो यस्य धनं विभज्यते तस्य प्रपौत्रः । पौत्रस्य प्रसुतत्वात् । परतस्तत् सुतान्निवृत्तिर्भाग निवृत्तिर्भवेत्प्रपौत्त्र पुत्त्रो भागन्न लभेतेत्यर्थः । अतएव देवलोऽपि ।

अविभक्त विभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिरिति ॥

वीजि चतुर्थमभिव्याप्य दायभाग इत्यर्थः । विभक्तानामपि संसर्गादिना सहवासे सतीयं व्यवस्था । वसतां सहेति वचनात् । पित्र्यमंशमिति कात्यायनोक्तः । पितृद्वारकोभाग इति सूचितम् । अतएवाह याज्ञवल्क्यः ।

प्रमीत पितृकाणान्तु पितृतो भाग कल्पनेति ।

पैतामहे धने जन्मना स्वत्वम्पौत्राणां पुत्रैः सहाविशिष्टमेव यद्यपि तेन पुत्त्रवत्पौत्राणामपि पुत्रसम एव भाग उचितः । तथापि तेषाम्पितृद्वारेण भागं प्रकल्प्य स्वस्वपितृभागाधिकारो न तु पैतामहे धने स्वतो भागित्व मित्यर्थः । एतदुक्तं भवति अविभक्ता भ्रातरो यदा पुत्त्रानुत्पाद्य दिष्टङ्गतास्तत्रैकस्य द्वौ पुत्त्रा वन्येषान्त्रि चतुराद्या इति पौत्त्राणां वैषम्यन्तदा द्वावेकं स्वपितृभागं द्वेधा विभज्य गृह्णीत स्त्रिचतुराद्या अपि स्वस्वपितृ-

भागमेकैकत्वेनादि रूपेण विभज्य गृह्णन्ति न तु पौत्त्रसंख्यया पैतामह धनभागाः। अनयैव रीत्या केषुचिज्जातेषु जीवत्सु केषु चिच्च पुत्रानुत्पाद्य विनष्टेषु म्रियमाणाः स्वस्वांशभागिनोऽन्येषां पुत्त्राः स्वस्वपित्रंशभागिन इति वाचनिकोऽयम्भेदः। अतएव वचनमिदमन्यत्रत्तानुवादकम् उद्धारादि विषमविभागोऽपि वाचनिकः समांशत्वं तु स्वाम्यात्प्राप्तमेवानूद्यते। यच्च पैतामहमपहारादिना नष्टम्पित्रोद्ध्रियते तत्र पितुरिच्छयैव पित्रर्जित इव पौत्रा विभागभाज इत्याह मनुः

पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्।
न तत्पुत्त्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम्॥

स्वयमर्जितमिवेतीव शब्दाध्याहारेण योज्यम्। यद्वा तत्पितामहाद्गत मनेनैवोद्धृतमतः स्वार्जितमेव जातं यत इति हेतुतया योज्यम्। अकाम इति वचनात्पितुरिच्छयैव तादृशे पैतामहेऽपि विभागो न पुत्रेच्छयेति गम्यते। तथा स्मृत्यन्तरमपि।

पैतामहं हृतम्पित्रा स्वशक्त्या यदुपार्जितम्।
विद्याशौर्यादिना प्राप्तन्तत्र स्वाम्यम्पितुः स्मृतम्॥
प्रदानं स्वेच्छया कुर्याद्भागञ्चैव ततो धनात्।
तदभावे तु तनयाः समांशाः परिकीर्त्तिता इति॥

हृतमपरैरपहृतं पितामहेन न प्रत्याहृतम्पित्रा तु प्रत्याहृतमित्यर्थः। स्वशक्त्येत्युक्तेः पितामह द्रव्यानुपक्षेपेणेत्यर्थः। तदुपक्षेपेण तूद्धृतेऽर्जकत्वनिमित्तमंशद्वयं येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव लभेतेति वशिष्ठ वचनात्पिता भजते। इदञ्च विद्यादिष्वपि योज्यन्तच्चविस्तरेण विवे-

च्यते। अयमत्र निर्गलितोऽर्थः। यद्यपि जन्मनैव पैतृके पैतामहे च धने पुत्र पौत्राणां स्वाम्यन्तथापि पूर्वोक्तवचनैः पैतृके पुत्राणाम्पितृ परतन्त्रतया पितु श्चार्जकतया प्राधान्यात्पित्रा स्वार्जिते विनियुज्यमाने। स्थावरं द्विपदश्चैवेत्यादि प्राक्प्रदर्शित वचनात्तद्यतिरिक्ते पुत्रैरनुमतिरवश्यं कार्य्या। पैतामहे तु निषेधाधिकारोऽप्यस्ति। तदनुद्धृते पित्रोद्धृते तु तदिच्छानुवर्त्तितैव पैतामहेऽपीति। मणिमुक्तादौ तु पैतामहेऽपि पितुरेव स्वातन्त्र्यं मणिमुक्ताप्रवालानामित्यादि प्राग्लिखित वचनेभ्यः। अतःपितृपरमानन्तरं यो भ्रातृणां विभागः स पित्रोरिति द्विवचनादुभयोपरम एव पितृधनेऽपि न तु मातुरुपरमोमातृधनगोचर इति संग्रहकाराद्युक्त मादर्त्तव्यम्। पैतृकमित्यत्र पित्रोरिदमित्येकशेष कल्पनायां प्रमाणाभावात्।

जनन्यां संस्थितायान्तु समं सर्वे सहोदरा इत्यादिना मातृधन विभागस्याग्रेवक्ष्यमाणत्वाच्चात्र मातृधन विभागविधौ पौनरुक्त्यापत्तेश्च। याज्ञवल्क्येनापि मातुर्दुहितर इत्यादिना मातृधन विभागस्य विभजेरन्सुताः पित्रोरिक्थमिति सम्बन्धो नाभिमतः किन्तु पित्रोरूर्द्धमित्येव। पितुर्ऋक्थमृणमिति तु सम्बन्धोऽर्थान् मातृऋक्थ ऋणविभागस्योत्तरार्द्धेनोक्तेः। अतएव प्रागुक्तशङ्खलिखितवचने रिक्थमूलं हि कुटुम्बमित्यादौ मातुरप्येवमवस्थिताया इत्यनेन मातुरपेक्षयाप्यस्वातन्त्र्यं विभागानधिकारः सोदराणां तस्यामपि जीवन्त्यामित्येतदर्थमेवोक्तम्॥

अनया भ्रातृणाञ्जीवतोः पित्रोः सहवासो विधीयते।
तदभावे विभक्तानां धर्मस्तेषां विवर्द्धतइति॥

व्यासवचने सहवासविधानमुखेन पृथग्भाव निषेधात् पितृ मातृजीवनवतश्च विभाग निषेधाज्जीवतोरिति साहित्यमविवक्षितम्। अतएव एकस्मिन्नपि जीवति विभागो न धर्म्यः किन्तूभयोपरमे। पित्रोरभाव इत्यादि बृहस्पतिवचनेऽपि निवृत्तरजस्कायां मातरि जीवन्त्यां विभागस्य मातृधनगोचरत्वानुपपत्तेरुभयाभावोक्त विभागस्यैव जीवतोरपीत्यपि शब्देन निर्दिष्टस्य शस्तत्व कीर्त्तनादुभयोरभावे भ्रातृविभागः पितृधनगोचरएवेत्यवधार्य्यते। अतएव व्यासो मातरि जीवन्त्यां यो विभागस्तस्य मातृप्रधानकत्वं दर्शयति।

यथाह। समानजातिसङ्ख्याये जातास्त्वेकेन सूनवः।

विभिन्न मातृकास्तेषां मातृभागः प्रशस्यते॥

बृहस्पतिरपि। यद्येकजाता बहवः समाना जातिसङ्ख्यया।

सापत्नास्तैर्विभक्तव्यं मातृभागेन धर्मत इति॥

अत्र जातिसङ्ख्यया साम्ये सापत्नानामपि भागविशेषः स्वरूपकृतो नास्तीति मातृभागत्वविधानं मातृप्राधान्यपरमेवेति नायं पुत्राणां विभागः किन्तु तन्मातृणामित्युद्दिश्य विभागः कर्त्तव्य इत्यत्र तात्पर्य्यम्। तेनैतन्मातृधन इवात्रापि मातृजीवने पुत्राणान्न परस्परं विभागो धर्म्यः। यतो गौतमाद्युक्ताविभागे धर्मवृद्धिरपि मातृपरमएव वेदितव्येति जीमूतवाहन आह। तत्पितृधने मातृभावापेक्षया अदृष्टार्थत्वापत्तेः प्रागेव निरस्तम्। यच्च पैतृकमित्येकशेषस्याप्रमाणकत्वात् पौनरुक्त्यापत्तेश्च नास्य मातृधनपरत्वमित्युक्तन्तदप्यदृष्टार्थतापत्ति भयादेकशेषस्य स्वीकर्त्तव्यत्वादयुक्तम्। पौनरुक्त्यन्त्वयुक्तम्। पूर्व्वोक्तस्यापि मातृधनविभागस्य विशेषविधानायानु-

षादोपपत्तेः। याज्ञवल्क्यवाक्ये तु मिताक्षराकृता च माता-पित्रोर्द्धनं सुता विभजेरन्नित्युक्तम्। तत्र मातृधनेऽपवादमाहेत्युत्तरार्द्धमवतारयता न पौनरुक्त्यम्परिहृतम्। ताभ्यऋतेऽन्वय इति च दुहितृभावेऽन्वयः पुत्रादिर्मातृधनस्य यावशिष्टं गृह्णीयादिति व्याख्याय इदञ्च।

विभजेरन् सुताः पित्रोरूर्द्ध्वं ऋक्थमृणं सममिति।

अनेनैव सिद्धमपि स्पष्टार्थमुक्तमित्युक्तम्। न चात्र पित्रोरूर्द्ध्वमित्येवास्तु सम्बन्धः मातृधनविभागस्योत्तरार्द्धेऽभिधानात्पितुर्ऋक्थमृणमिति पर्य्यवस्यति। तथा च ताभ्य इत्यादेर्निरर्थकानुवादत्वमपि न प्रसज्यतीति वाच्यम्। ऋक्थर्णपदयोः सम्बन्धिकार्य्यत्वात्तदाकाङ्क्षायां स्ववाक्योपात्तपित्रोरिति पदानुषङ्गस्यैव परिशेषावगतार्थिकपितुः पदान्वयापेक्षयाभ्यर्हितत्वात्। तदंशे न तु ताभ्य इत्यस्यानुवादत्वस्याप्यभ्युपगमौचित्यात्। ये त्वन्वयपदं दुहित्रन्वय दौहित्रादिपरत्वेन व्याचक्षते तन्मते तु वैयर्थ्य शङ्कैव नास्ति। तदेतद्विस्तरेण स्त्रीधनविभाग प्रस्तावे प्रपञ्चयिष्यामः।

शङ्खलिखितोक्तं मातरि जीवन्त्यामस्वातन्त्र्यन्तु मानवर्द्धनं तद्धनगोचरमपि सङ्गच्छतएव। भ्रातृणामित्यादि व्यासवचनमपि सहवास प्राशस्त्यमात्रमुभयजीवन आहेति जीवतोरिति साहित्य विवक्षायामपि न दोषः। वस्तुतस्तु पित्रोरूर्द्ध्वमपि ज्येष्ठएव तु गृह्णीयादिति सहवासस्य मुख्यत्वाद्विभागस्य च धर्मवृद्ध्यर्थत्वान्मातरि जीवन्त्यामपि धर्मस्य पञ्चमहायज्ञादेरावश्यकत्वात्तद्वृद्ध्यर्थं विभाग उचितएव। यत्तु पित्रोरभाव इति बृहस्पतिवचने निवृत्ते रजस्कायां मातरि जीवन्त्यामित्याद्युक्तन्तु

चोच्यते। उभयजीवने सहवासः प्रशस्तस्तदभावे विभाग इति पूर्व्वार्द्धेनाभिहिते। मातर्य्यनिवृत्तरजस्कायां सन्तानसम्भवात् तद्वृत्तिलोपस्य च ये जाताये ऽप्यजाताश्चेत्यादि वचनेन गर्हितत्वान्निवृत्तरजस्कायान्तु तस्यान्तदप्रसक्तेरुपरतस्पृहे पितरीव विभागः प्रशस्त इति तस्यार्थः। तथा सति निवृत्तरजस्कायां तस्यान्तदीयऋक्थाधिकारि कन्या सन्तानस्यासम्भवात्सुतरान्तदिच्छया तद्धनविभागोऽपि पुत्राणामुचित इति मातृधनगोचरताप्यस्य वचसः सम्भवतीति न किञ्चिदेतत्। यदपि व्यासबृहस्पतिवचसो मातृप्राधान्यं सापत्नविभागस्येकान्तन्तदप्य विरुद्धम्। यथा हि॥

जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वितः।

इत्यादि वचनवशाद्विभागोत्तर पितृ मातृपारतन्त्र्यं तथैतद्वचनवशान्मातृभाग एवायमिति बुद्धा तदाज्ञावशम्वदतया तज्जीवनावधि स्थेयमित्येतावता पितृधनविभागेऽपि तस्याज्जीवन्त्यामनधिकारः कुतस्त्य इत्यलमधिकेन। जीवत्पितृकविभागे पिता यथा स्वपुत्त्रांशसमांशभागिन्यः स्वपत्न्यः कार्य्यास्तथा तदुपरमविभागेऽपि पुत्रैस्ताः स्वसमांशभागिन्यः कार्य्या इत्याह याज्ञवल्क्यः।

पितुरूर्द्धं विभजतां माताप्यंशं समं हरेत्।

यदि स्त्रीधनन्दत्तन्न भवति। दत्ते त्वंशार्द्धहारिणी कार्य्येति वचनादप्यत्रार्द्धशब्दो न समविभागवचनः। किन्तु यावता पुत्त्रसमांशिता भवति तावदेव विवक्षितम्। अत्र मातृपदस्य जननीवाचकत्वान्नापुत्त्र सपत्न मातृपरत्वमपि। सकृच्छ्रुतस्य मातृपदस्य मुख्यगौणोभयार्थत्वानुपपत्तेः।

यत्तु, असुतास्तु पितुः पत्न्यः समानांशाः प्रकल्पिताः।
पितामह्यश्च सर्व्वास्ता मातृतुल्याः प्रकीर्त्तिता इति॥

व्यासवचनात् योगीश्वरवचने पत्नीग्रहणाच्च जीवत्पितृक-विभागे पत्नीमात्रस्य पुत्त्र समांशत्वम्। पुत्त्र पत्नीपदयोः पितृ-प्रतियोगिकसम्बन्धार्थकतया गौणमुख्यार्थकत्वानापत्तेः। पित्रो-रूर्द्ध्वं विभागे तु पुत्त्रकर्तृकतया तत्सम्बन्ध मातृप्रतीते र्वैरूप्या-दुभयपरत्वासम्भवात् पुत्रवतीनामेव स्वपुत्त्रसमांशित्वं अपु-त्त्राणान्तु ग्रासाच्छादनमात्रभाक्त्वमविभक्तसंसृष्टपत्नीनामिव। युक्तञ्चै तज्जीवद्विभागे पितुः स्वातन्त्र्यात्। अजीवद्विभागे पु-त्त्राणां स्वातन्त्र्यात्। मातृपद पत्नीपद स्वरसाच्च। युक्तञ्चा-पुत्त्राणां ग्रासाच्छादनमात्रभाजनत्वमिति बहुतर निबन्ध स्व-रसः। मिताक्षराकृतस्तु जीवद्विभागे पुत्त्रसमांशित्वं पत्नीना-मुक्तमिदानीं पितुरूर्द्ध्वं विभजतामपि पुत्त्र समभागित्वं पत्नी-नामाहेत्यवतारणिकं पितुरूर्द्ध्वं विभजतामित्यस्य योगीश्वर-वचसः प्रयच्छतोऽत्रापि सपुत्रापुत्त्रसकल पितृपत्नीनां पुत्त्रस-मांशित्वमभिप्रेतमिति प्रतीयते। मदनरत्नकृताप्यत एवोक्तम्। जननी ग्रहणमपुत्त्राणामपि मातृ सपत्नीनामुपलक्षणं पिता-महीनाञ्च। असुताश्च पितुः पन्त्य इत्यादि व्यासवचनादिति। युक्तञ्चैतत्पितुः पत्न्यइति पुत्त्र प्रतियोगिक पितृग्रहणस्यान्यथा वैयर्थ्यात्। पुत्त्र समांशित्वस्य पितृकृत विभागविषये पत्न्यः कार्य्याः समांशिका इति वदन्नपि मातर इत्येव वदेत्। तस्मा-त्पितृपत्नीत्वप्रयुक्तमेव जीवद्विभाग साधारणं पुत्त्र समांशभा-क्त्वमिति मिताक्षरा मदनरत्नकारकृतोरभिप्रायः। पितुरिति कर्त्तरि षष्ठी। तेन पितृकर्त्तृके विभागे पत्न्यः समानांशा इत्यु-

क्तोऽर्थात्तत्प्रतियोगिकस्यैव पत्नीत्वस्य लाभाज्जीवद्विभाग विषयतैवास्योचिता। तत्र मातृपदे मुख्यामुख्य मातृपरत्वानौचित्यात्प्रतिसम्बन्धितया च पुत्राणामेव स्ववचनोपात्तानामुपस्थितेर्जननी परत्वमेव मातृपदस्य मुख्यार्थ लाभायोचितम्। शिष्टाचारोऽप्येवम्। यदत्र युक्तन्तद्ग्राह्यमित्यलमधिकेन।

बृहस्पतिः। तदभावे तु जननी तनया वा समांशिनी।

अत्र प्रक्रमात्तच्छब्देन पिता गृह्यते। पितरि प्रेते यदि केऽपि भ्रातरोऽसंस्कृताः सन्ति तदा तत्संस्कारं समुदायद्रव्येण विधायावशिष्टं यथांशेन विभजनीयमित्याह याज्ञवल्क्यः।

असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्वसंस्कृतैः।

भ्रातृभिरित्यभिधानाद संस्कृता भ्रातर इति प्रतीयते॥

संस्कार्य्यत्वमात्रविधानस्य दायभाग प्रस्तावासम्बन्धात्समुदाय द्रव्यादिति विवक्षितम्। तथाच व्यासः

असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात्।
संस्कार्य्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि॥

अविद्यमाने पितृधनेऽसंस्कृतः संस्कारावश्यकतामाह नारद.।

अविद्यमाने पित्र्यर्थे स्वांशादुद्धृत्य वा पुनः।
अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः॥

असंस्कृत भगिनी संस्कारोऽप्यावश्यकः। सति पितृद्रव्ये ताभ्योंऽश दानमपीत्याह याज्ञवल्क्यः।

भगिन्यश्च निजादंशाद्दत्त्वांशन्तु तुरीयकमिति।

असंस्कृताः संस्कार्य्या इत्यनुषङ्गः।

मनुः। स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।

स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥

अत्रोभयत्र प्रत्येकं परिकल्पितान्निजादंशादुद्धृत्य सर्वैर्भ्रातृभिर्भगिनीभ्यः प्रत्येकं चतुर्थोऽंशो देय इत्यर्थो न भवति। तथा सति बहुभ्रातृकाया बहुधनत्वं बहुभगिनीकस्य भ्रातुर्निर्धनतापत्तेः। तस्मात्संस्कारोपयुक्तद्रव्यदानमात्रं विवक्षितमिति रत्नाकरचिन्तामण्यादौ व्याख्यातम्। अनूढानान्तु कन्यानामवित्तानुरूपेण संस्कारं कुर्य्यादिति विष्णुवचनञ्च तत्रोपोद्बलकमुपन्यस्तम्। तदयुक्तम्। अंशदानाविवक्षायाः स्मृतिद्वयेऽप्यन्याय्यत्वात्।

संस्काराकरण प्रत्यवायात्पृथगदान प्रत्यवायश्रवणाच्च अन्यथा पतिताः स्युरदित्सव इत्यदान प्रत्यवाय वचनमप्यसंस्कार प्रत्यवाय परं स्यात्। अतो मेधातिथि मिताक्षराकारादिभिर्व्याख्यातमेवम्। निजादंशात् स्वात्स्वादंशादिति नापादाने पञ्चम्यपि तु ल्यब्लोपे। तथा च तमपेक्ष्येति यावत्। एवञ्च यज्जातीया कन्या तज्जातीय पुत्त्र भाग चतुर्थांशभागिनी सा कार्य्या। तथा चायमर्थो ब्राह्मणजातीया या कन्या वक्ष्यमाणो ब्राह्मणीपुत्त्रभागो यावांस्तच्चतुर्थांशस्तस्याः। एवं क्षत्रियादि जातीय कन्यापि। तच्च यथा। यदि कस्यचिद्ब्राह्मण्येवैका पत्नी तस्याश्चैकः पुत्त्रः कन्यकाचैका। तत्र पित्र्यन्द्रव्यं सर्वमेव द्विधाविभज्य तत्रैकम्भागञ्चतुर्द्धा कृत्वैको भागो भगिन्यै तेन देयोऽवशिष्टं स स्वयङ्गृह्णीयात्। एवं पुत्त्र द्वये कन्यैक्ये च त्रेधा विभागं सर्व द्रव्यस्य विधायैकस्य चतुर्द्धाकृतस्य भागस्य चतुर्थभागम्भगिन्यै दत्त्वा शेषं द्वाभ्यां यथांशम्विभज्य ग्राह्यम्। पुत्रैक्ये कन्याद्वित्वे त्रेधाकृतस्य द्रव्यस्यैकम्भागञ्चतुर्द्धा कृत्वा द्वावं-

शौ द्वाभ्यां कन्याभ्यां दत्त्वाऽवशिष्टन्तेन ग्राह्यम्। एवं समान जातीयेषु साम्येऽपि सर्वथा भगिनीनां भ्रातृजात्युचितभाग तुरीयांशभागिता यथा भवति तथोह्यम्। यदा तु ब्राह्मणी-पुत्र एकः क्षत्रियकन्या चैका। तत्र पितृधनं सप्तधा विभज्य क्षत्रिया पुत्त्रभागांस्त्रींश्चतुर्द्धा विभज्य तुरीयमंशं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणी पुत्त्रो गृह्णीयात्। यदातु द्वौ ब्राह्मणपुत्रौ क्षत्रियाकन्या चैका तदा पितृधन मेकादशधा कृत्वा क्षत्रि-या पुत्रभागांस्त्रींश्चतुर्द्धा विभज्यैकमंशं क्षत्रियकन्यायै दत्त्वा ब्राह्मणी पुत्रावन्यत्सर्वं विभज्य गृह्णीयाताम्। एवं सर्वत्र जा-तिवैषम्ये भ्रातृभगिनी संख्यासाम्यवैषम्यं योज्यम्। विष्णु-रपि। मातरः पुत्रभागानुसारभाग हारिण्योऽनूढाश्च दुहितरः पुत्रभागानुसारेण यथावर्णक्रमेण पुत्राणाञ्चतुस्त्रिद्व्येक-भागभागिता तथा तत्तज्जातीय पत्नीनामपि। अनूढाश्च दुहितरः पुत्रभागानुसारभागहारिण्य इत्यनेन यद्यपि चतुरा-द्यंशानां सर्वेषां दुहितृभ्योदानं प्रतीयते तथापि स्वेभ्योंऽशेभ्यः स्वात्स्वादंशादिति मनुयोगीश्वराभ्याञ्चतुर्थांशदानस्योक्तेस्तथैव पुत्रभागानुसारो न सजातीय भ्रातृसमभागहारित्वमित्य-विरोधः। स्पष्टमाह बृहस्पतिः।

समांशा मातरस्तेषाञ्चतुर्थांशाश्च कन्यका इति।

कन्यकानान्त्वदत्तानाञ्चतुर्थो भाग इष्यते।

पुत्राणाञ्च त्रयोभागाः साम्यंत्वल्पधने स्मृतमिति।

वदतःकात्यायनस्याप्येतदेवाभिमतम्। साम्यमित्यादेस्त्वयमर्थः। यदि संस्कारपर्याप्तमपि पितृधनं नास्ति तदा पुत्रसमभागि-तैव दुहितॄणामिति। अनूढानां त्वित्यादि विष्णुवचनमपि

मेधातिथ्यादीनाञ्च प्रतिकूलम् । पित्रानुसारेण संस्कारमनूढानाम्पितुः कन्यानां स्वभगिनीनां कुर्य्यादित्यनेन संस्कारावश्यकतामात्रमवोच्यते न तु भागदानादाने । स्मृतिचन्द्रिकाकारस्तु । कन्याभ्यश्च पितृद्रव्यन्देयं वैवाहिकञ्च वसुवति देवलवचनानुसारेण संस्कारमात्रोपयोगिद्रव्यदानमेव मन्यते । वैवाहिकं वसुदेयमिति वैवाहिक विशेषणस्यान्यथा वैयर्थ्यापत्तेरिति तदाशयः । अत्र वदामः । कन्याभ्यः पितृ द्रव्यन्देयमिति पृथग्विधिः । तच्चमन्वाद्यनुरोधाच्चतुर्थांशरूपमेव । वैवाहिकम्वसु चदेय मित्यपि पृथगेव विधिः विभज्यमाने दायाद्ये कन्याऽलङ्कारं वैवाहिकञ्च स्त्रीधनं लभेतेति शङ्खवचन समानार्थतया व्याख्यातञ्चेदं शङ्खवचनं विद्यारण्य श्रीचरणैः पराशरस्मृति टीकायाम् । पैतृक द्रव्य विभागकाले स्वधृतालङ्कारादिकमपि कन्या प्राप्नोतीत्याह शङ्ख इति । यदि तु वैवाहिकं विवाहोपयोगिपितृ द्रव्यं कन्याभ्योदेयमित्यर्थः स्यात्वसुपदम्पुनरुक्तं स्यादिति पृथग्विधिद्वयमेवात्र युक्तम् । दायतत्वकृता तु कन्याभ्यश्च पितृ द्रव्याद्देयं वैवाहिकं वसुवति पठितन्तत्रापि शङ्खेन समानार्थकतालाभायास्मदुक्तमेव व्याख्यान मादर्त्तुमर्हं न तु विवाहोपयुक्त द्रव्यपरतेत्यवसेयम् । अत्र च मन्वादिवचनेषु भगिनीपदं क्वचित् क्वचिच्चकन्यादि पदं यद्यपि श्रूयते तथापि भ्रातृ कर्त्तृक विभागाधिकारात्पितृप्रतियोगिकं कन्यात्वन्दुहितृत्वं भ्रातृप्रतियोगिकञ्च भगिनीत्वमादायैकार्थकतावसेया । तस्मादजीवत्पितृकविभागे भगिनीनामपि पितृ द्रव्यांशभागित्वन्न तु संस्कार्य्यतामात्रम् । पूर्वन्तु यत्किञ्चित्पिता ददाति तदेव लभते विशेष वचनाभावादिति । जीमूत वाहनेन दत्तम् ।

प्रदद्युर्भ्रातरः दत्त्वा यन्त्विति मनु योगीश्वराभ्यामभिधानाच्च भगिनीभिरधिकार बुद्ध्या चतुर्थोऽंशोग्राह्यः। न ह्यधिकारिण एकस्मै भ्रात्रेऽन्योभ्राता स्वां याद्दद्यादित्युच्यते तथा चतुर्थांशादानमपीति तददाने भ्रातृणामेव दोषो न तु तासामनध्यकारितेति। तदप्ययुक्तम्। उक्तिवैचित्र्य मात्रस्यास्याप्रयोजकत्वात्। इच्छयाविभजेत्सुतान् उद्धारं ज्यायसे दत्त्वेत्यादिवत्। यदपि तेनैवोक्तम्।

येषान्तु न कृताः पित्रा संस्कार विधयः क्रमात्।

कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनादिति। नारदवाक्ये-येषामिति पुंलिङ्गनिर्देशात्तदनन्तरमेव चाविद्यमान इति वचनारम्भाद्भ्रातृसंस्कारार्थमेवेदं वचनमिति सति पितृद्रव्ये मन्वादि वचनेभ्योभगिनी संस्कारावश्यकत्व प्रतीतेः संस्कारोपयोगि द्रव्यदानमेव विवक्षितमिति तद्धेयम्। वचनान्तरेषु भगिनी संस्कारस्यावश्यकत्व प्रतीतेः।

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥
अप्रयच्छन् समाप्नोति भ्रूणहत्या मृतावृताविति।

भ्रातुरपि योगीश्वरेण भगिनीविवाह संस्काराकरणे भ्रूणहत्या दोषश्रुते स्तदेकमूलकतया येषान्तेषामित्यस्य सामान्यलिङ्गन्नपुंसकमिति वचनात्सामान्य विवक्षान्यायाच्च नपुंसक षष्ठ्यन्तत्वं विरूपैकशेषोऽपि वाभ्युपगन्तुमुचित एवेति। यवीयस इति तुस् दीर्घयोरभावश्छान्दसमभिप्रेत्य॥

असंस्कृता भ्रातरस्तु ये स्युस्तत्र यवीयसः।
संस्कार्याः पूर्वजैस्ते वै पैतृकान्मध्यकाद्धनादिति।

हस्पतिवचनं पठित्वा भ्रातृग्रहणं भगिनीनामप्युपलक्षणमिति मदनरत्नकृता व्याख्यातम्। अत्र च संस्कारसाहचर्यादनूढानां दुहितृणाम्। कन्यकानान्त्वदत्तानामित्यनूढत्व विशेषणोपादानाच्चापरिणीता एव चतुर्थांशभागिन्यो भगिन्योऽन्यास्तु यत्किञ्चिदौचित्याल्लभन्त इति बोध्यम्। मातृधने चेदमपञ्चनीयम्। स्थावरस्य स्वार्जितस्य पैतामहस्य वा पुत्त्रानुमत्यैव पिता दानादि कुर्य्यात्। स्थावरं द्विपदश्चैवेति प्रागुदाहृत वचनात्। यद्यपि स्वयमर्जितमित्यनेन पैतामहे कैमुतिकन्यायेन पुत्रानुमत्यावश्यकता प्रदर्शिता। कुटुम्बव्यापिन्यामापदि तु यः कश्चिदन्यानुमतावपि कुटुम्बभरणस्यावश्यकत्वात् स्थावरदानविक्रयादावधिकारी।

एकोऽपि स्थावरे कुर्य्याद्दानाधमन विक्रयम्।

आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः इति।

वचनात् धर्मार्थे इत्यनेनावश्यकः पितृश्राद्धादिरूपो धर्मो गृह्यते। यत्तु स्मरणम्। विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः।

एको ह्यनीशः सर्वत्र दानाधमन विक्रय इति॥

तत्राविभक्तानां मध्यकद्रव्ये स्वाम्यसाम्यादनीशत्वमन्यानुमतिं विना सिद्धमपि स्थावरे विशेषतस्तदादरार्थमुच्यते। अविभक्तानान्तु व्यवहारसौकर्य्यार्थम्। कालान्तरे हि विभक्ताविभक्तसंशये विभाग भावनावश्यं साक्ष्यादि प्रमाणेन तया सति कार्य्यं स्यादन्यथा साधारणद्रव्य दानाद्यसंभवात्। अनुमतौ तु सत्यां तदनपेक्षएव व्यवहारः सिद्धति। ननु यथा श्रुतं स्थावरे विभक्तानामपि समं स्वाम्यम्। विभागस्यादृष्टार्थता प्रस-

ज्ञात् । अतस्थान्यानुमति मन्तरेणापि दानादि स्वरूपं सिद्ध्यत्येव । विभागभावनायां व्यवहारोऽपि ।

यथा, स्वग्राम ज्ञातिसामन्तदायादानुमतेन वा ।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनीति ।

वचने ग्रामानुमतिः सामन्तानुमतिश्च । सामन्तानुमतिस्तु सीमाविप्रतिपत्ति निरासायापि । ज्ञाति दायादानुमतेस्तु पूर्ववदेव व्यवस्था ।

अतएव स्मृत्यन्तरम् ।

प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषत इति ॥

अन्यथात्रापि ग्रामसामन्तानुमति मन्तरेण दानाद्यसिद्धिः प्रसज्येत हिरण्योदकदानेनेति स्थावरे विक्रयो नास्ति कुर्य्यादाधिमनुज्ञयेति स्थावरस्य विक्रय प्रतिषेधात्तु ।

भूमिं यत्प्रतिगृह्णाति भूमिं यश्च प्रयच्छति ।
तावुभौ पुण्यकर्माणौ नियतं स्वर्गगामिनाविति ।

दानप्रशंसनाच्च कुटुम्बभरणाद्यर्थमवश्य कर्त्तव्येऽपि विक्रये स हिरण्यमुदकं क्रेत्रे दत्त्वा दानांशोऽपि कश्चिद्यया तत्र भवति तथा दानरूपेण स्थावरविक्रयं कुर्य्यादिति सूचितम् । जीमूतवाहनस्तु ॥

स्थावरस्य समस्तस्य गोत्र साधारणस्य च ।
नैकः कुर्य्यात्क्रयन्दानं परस्परमतं विना ॥

विभक्ता वा ऽविभक्ता वेत्यादि व्यासीय वचनद्वयमुपन्यस्य नेदमेकस्य क्रयदानाद्यनधिकार प्रतिपादनार्थम् । यथेष्ट विनियोगार्हत्व लक्षणस्य स्वत्वस्य द्रव्यान्तरइव स्थावरेऽप्यविशेषात् स्वत्वत्यागाद्यनिष्पत्तेर्वचनशतेनापि वस्तुनोऽन्यथाकरणा-

शक्तो बोधयितु मशक्यत्वात् । किन्तु दुर्वृत्तपुरुषम्प्रति कुटुम्बा-
र्त्त्यादि निमित्ताभावे कुटुम्बविरोधादधर्मभागिता ज्ञापनार्थं
निषेधरूपम् । अतएव नारदः ।

यद्येकजाता बहवः पृथग्धर्माः पृथक् क्रियाः ।
पृथक्कर्म गुणोपेता नचेत्कार्य्येषु संयुताः ॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्य्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य हीति ।

सामान्यत एव विक्रयाद्यनुमन्यते । ईशास्ते स्वधनस्य हीति हेत्वभिधानात् स्थावरगोचरमपीदं वचनम् । अपरथा तदा नर्थक्यापत्तेरित्याह । तत्सर्व्वथैव परं त्वधर्मभागिता ज्ञापनार्थमित्युक्तम् । पृथा स्थावरविक्रयस्य बहून् प्रत्यपि निषेधादेक ग्रहणापार्थक्यापत्तेः । व्यवहारशास्त्रस्य व्यवहारसौकर्य्यादि दृष्ट प्रयोजनसम्भवेऽदृष्ट कल्पनानुपपत्तेः । अन्यथाऽनुमतावपि तदापत्तेः । कुटुम्बविरोधजन्य वचनान्तर प्रतिपादिता धर्म-प्रयोजकतापरमस्तु । अत्र च पुत्रेच्छया यो जीवद्विभागो यश्चाजीवद्विभागः स एकेच्छयापि भवत्यविशेषात् । अतएव विभागं प्रक्रम्य यत्कात्यायनेनोक्तम् ।

अप्राप्त व्यवहाराणां चधनं व्य यविवर्जितम् ।
न्यसेयुर्बन्धु मित्रेषु प्रोषितानां तथैव चेति ॥

तदपि सम्मतम् । अन्यथा तदनुमतिमन्तरेण विभागाभावे तद्धनस्य बन्धु मित्रेषु न्यासविधानमनुपपन्नं स्यात् । तथा विष्णुरपि । तथा रक्ष्यं बालधनमाव्यवहार प्राप्तेरिति । अयञ्च पुत्राणां विभागः पुत्र पौत्रप्रपौत्र पर्य्यन्तः समो-नात्रोत्पत्तितः प्रत्यासत्ति क्रमेणाधिकारक्रमः । पुत्रादीनान्त-

याणामेव पार्वणे पिण्डदानाधिकारात्। अतएव देवलः।

पिता पितामहश्चैव तथैव प्रपितामहः।
उपासते सुतं जातं शकुन्ता इव पिप्पलम्।
मधु मांसैश्च शाकैश्च पयसा पायसेन च।
एष नोदास्यति श्राद्धं वर्षासु च मघासु चेति॥

तथा च श्लोकाः शङ्ख लिखित गौतमानां।

पिता पितामहश्चैव तथैव प्रपितामहः।
जातमुत्त्रं प्रशंसन्ति पिप्पले शकुनाइव॥
मधुमांसेन खड्गेन पयसा पायसेन वा।
एष दास्यति नस्तृप्तिं वर्षासु च मघासु चेति॥

एवं तुल्याधिकारात् जन्मना स्वत्वस्यापि तुल्यत्वात्तुल्यभाग भागिता प्रसक्ताप्यनेक पितृकाणान्त्विति वचनेन निवर्त्तते। जीवत्पितृकयोः पौत्त्र प्रपौत्त्रयोः पार्वणानधिकारेण पिण्डदातृत्वाभावात्पितामह प्रपितामहधनेऽधिकारः। यदा चैकस्य पुत्त्राः सन्त्येकस्य पुत्त्र एवास्ति। तदा पुत्त्रस्यैकोभागोऽपरश्चैकः सर्वेषां पौत्त्राणाम्। स्वपितृधीन जन्ममूलकत्वात् पितामहधनसम्बन्धस्य यावत्येव धने तस्य स्वामित्वार्हत्वन्तावत्येव तेषामपीति जीमूतवाहनोक्तन्त्वनादेयम्। जन्मना पौत्त्राणामपि पितामहधने स्वत्व व्यवस्थापनात्। तस्मात् पौत्त्राणां पितामहधने वाचनिकमेव भागवैषम्यं नत्वौपपत्तिकम्। यत्तु तेनैवोक्तम्। यत्रैकस्य भ्रातुरनेकसङ्ख्याः पुत्त्रा अन्यस्य च ततोऽल्पसङ्ख्यास्तत्रेदमनेकपितृकाणामिति वचनं पौत्त्रत्वे न सर्वेषां समभागनिवृत्त्यर्थञ्जीवति तु पितरि पौत्त्राणाम्पितामह धनस्वाम्ये सपुत्त्रापुत्त्र भ्रातृद्वयविभागे

तत्पुत्राणामपि विभागः स्यात् स्वाम्याविशेषादिति तत्प्रागेव निरस्तम्। उक्तोऽति प्रसङ्गोऽप्यनेनैव परास्तः। अतएव पितृभ्रातृपुत्त्रसमवाये पितृव्य पितृधनन्तदिति भ्रातृपुत्राणान्तत्र स्वाम्याभावाद्विभागएव न स्यादित्यप्यपास्तम्। यत्र जीवत्पितृकयोरित्यादि तदपि मन्दम्। न हि पिण्डदानाधिकारएव दायग्रहणे प्रयोजकः ज्येष्ठे सति कनीयसामनधिकारोऽपि दायग्रहणात्। तद्दत्ताया(?)श्वात्राप्यनपायात्। गोत्रजादीनां दायहराणामनेकेषां समवाये पिण्डदानाद्युपकारित्वं धनस्वामिनो यत्तदनुपकारि व्यावर्त्तकम्परन्नतु तदत्र प्रयोजकम्। जीवद्विभागेऽजीवद्विभागे वा कस्याञ्चित्पितृपत्न्यां भ्रातृपत्न्यां वा स्पष्टगर्भायामाप्रसवम्प्रतीक्ष्य विभागः कार्य्यः।

अथ भ्रातृणान्दायविभागो याश्चानपत्याः स्त्रियस्तासा मापुत्रलाभादिति वशिष्ठस्मरणात्। आपुत्रलाभादिति वचनात् स्पष्टगर्भासु प्रतीक्षाऽस्पष्टगर्भासु तु नेत्यवगम्यते। अतएव तत्र पश्चादुत्पन्नस्य विभागप्रकारमाह योगीश्वरः।

विभक्तेषु सुतोजातः सवर्णायां विभागभाक्।

पित्रिच्छया पुत्त्रेच्छया वा जीवतोः पित्रोर्विभक्तेषु पश्चात्सवर्णायां भार्य्यायामुत्पन्नो विभागभाक्। विभज्यत इति विभागः पित्रोर्भागस्तम्भजत इति विभागभाग्भवति। पित्रोरूर्द्धं स एव तयोरंशं लभत इत्यर्थः। असत्यां दुहितरि मातृभागमिति विशेषः। सवर्णायामिति विशेषणादसवर्णायां जातस्तु पित्र्याद्धनात्स्वांशमेव लभते दुहित्रभावे मातृभागं सर्व्वमेव। अनेनैव न्यायेन जीवद्विभागेऽपि विभक्तजोऽ सव-

यापुत्त: स्वजात्युचितभागेव । न सकलपित्यभागित्वमवसे-
यम् । एतदेवाभिप्रेत्य मनु: ।

ऊर्द्धं विभागाज्जातस्तु पित्र्यमेव हरेद्धनमिति ।

पित्रोरिदम्पित्र्यन्धनं यथोक्त व्यवस्थया हरेत् एवकारेण भ्रातृभि: स्वांशादाकृष्य स्वभागसमभागभाक् स न कार्य्य: । गौतमोऽपि । विभक्तज: पित्र्यमेवेति । जीवति तु पितरि मातरि तत्सपत्न्याञ्चाऽविस्पष्टगर्भायां विभक्तैर्विभागानन्तरोत्पन्नोऽयं स्वभागादाकृष्य स्वभाग समभागभाक्स कार्य्य: । तथा च विष्णु: । पितृविभक्ताविभागानन्तरोत्पन्नाय विभागन्दद्युरिति । तच्च भ्रातृदत्तं तद्विभागं पितैव गृहीत्वा तत्परिपालयेत् । तस्यैव तत्राधिकारात् । अप्राप्तव्यवहाराणामित्यादि प्रागुक्तवचनाच्च । यच्च वचनम् ।

अनीश: पूर्वज: पित्रोर्भ्रातुर्भागे विभक्तज इति ।

तस्याप्ययमेव विषय: । पूर्वजो विभागात्पूर्व्वमुत्पन्न: प्राप्त पितृधनविभाग: पित्रोर्विभागेऽनीशो न स्वामी । विभक्तजश्च पूर्वविभक्तस्य भ्रातुर्भागेऽनीश इत्यर्थ: । विभागोत्तरञ्च यत्पित्रर्जितं तदपि विभक्तजस्यैव ।

पुत्रै: सह विभक्तेन पित्रा यत्स्वय मर्जितम् ।
विभक्तजस्य तत्सर्वमनीशास्तत्र पूर्वजा: ॥
यथा धने तथर्णे च दानाधानक्रयेषु च ।
परस्पर मनीशास्ते मुक्त्वा शौचोदक क्रियामिति बृहस्पति

स्मरणात् । स एव ।

पित्रा सह विभक्ता ये सापत्ना वा सहोदरा: ।
जघन्यजास्तु ये तेषाम्पितृभाग हरास्तु ते ॥

अत्र हेतु रनीशपूर्वजः इत्यादितद्वचनोक्त एव। ये तु विभक्ताः पित्रा संसृष्टाः पुत्रास्तैः सह तु तस्य विभागो न सकल पित्र्यधन ग्रहणमित्याह मनुः।

संसृष्टास्तेन वा ये स्यु विभजेत स तैः सह।

तेन पित्रा पितुरूर्ध्वम्पितृधने भ्रातृभिर्विभज्य गृहीते विभागसमयेऽस्पष्टगर्भायाः पितृपत्न्याः पश्चात्पुत्रे जाते स्वस्व-भागादायव्यय विशोधितात्तैः स्वस्वभागसमभागभाक् कर-णीय इत्याह याज्ञवल्क्यः।

दृश्याद्वा तद्विभागः स्यादायव्यय विशोधितात्।

दृश्याद्भ्रातृभिर्गृहीतात्। आयः प्रतिमासं प्रतिदिनं प्रत्यब्दं यत्तदुपरिष्टद्धम्। व्ययः पितृकृतर्णापाकरणं भ्रातृ भगिनीसंस्कारकरणञ्च। तस्य सर्वसाधारण्येन कर्त्तव्यत्वात्। न तु भ्रातृ कर्त्तव्यव्ययस्तस्यैतत् सम्बन्धाभावात्। ताभ्या-मायव्ययाभ्यां विशोधितात्पितृ धनात्तस्य विभागोत्तरोत्पन्नस्य विभागः पूर्वविभक्तसमः स्यादित्यर्थः। एतदुक्तम्भवति। प्राति-स्विकेषु स्वस्वभागेषु तद्गुल्यमायम्प्रवेश्यावश्यकञ्च साधारणं व्ययन्निष्काश्याविशिष्टं स्वस्वभागेभ्यः किञ्चित्किञ्चिदुद्धृत्य विभ-क्तजः स्वभागसमभाक्कार्य्य इति। वा शब्दस्तु विभक्तेषु सुतोजात इति पूर्वार्द्धेन सह व्यवस्थित विकल्पार्थः व्यवस्था-चोक्तैव। हलायुधस्तु। दृश्यात् प्रत्यक्षान्न तु गुप्तात्पितृधना-दित्यर्थ मुक्ता। विभक्त भ्रातृपेक्षया योऽल्पगुणो विभक्तजस्त-द्विषयोऽयम्पक्ष इत्याह। तन्निर्वीजत्वात् गुप्तस्यापि विभागान-न्तरे ज्ञातस्य समभागेन विभजनीयत्वादत्र तदप्रवृत्तौ प्रमा-

णाभावान्नियमकल्पनेऽदृष्टार्थतापत्तेर्विज्ञानेश्वरीकार्थकतयाच वचनतामञ्जस्यादुपेक्ष्यम् ।

असवर्णानां भ्रातृणां विभाग प्रकारमाह योगीश्वरः ।

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिन इति ॥
तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथा क्रमम् ।
ब्राह्मणक्षत्रियविशां भार्य्या स्वा शूद्रजन्मन इति ॥

योगीश्वरेण ब्राह्मणस्यासवर्णास्तिस्रः क्षत्रियस्य द्वे । विश एका भार्य्या इति । सवर्णामादाय तेषां मध्ये ब्राह्मणस्य चतस्रः क्षत्रियस्य तिस्रो वैश्यस्य द्वे इत्युक्तम् । सवर्णासवर्णसर्वभार्य्याभिप्रायेण त्वादि संख्याने वैश्यस्यापि द्वे शूद्रापरिहारे च स्वैवेति स्वा शूद्रजन्मन इति वैश्याद्वैलक्षण्यासङ्गतेरेव सवर्णाभिप्रायैवेयं संख्येति विज्ञानयोगिभिर्व्याख्यातम् । तथा च ब्राह्मणाद्ब्राह्मण्यादिषु स्त्रीषु जाताः पुत्रा यथाक्रमं वर्णशो मातृवर्णानुसारेण । संख्यैकवचनाच्छस्वीप्सायामित्यधिकरणकारके शस् प्रत्ययः वर्णे वर्णे इत्यर्थः । ब्राह्मणादिभ्यः क्षत्रियादिषु जातानां मूर्द्धाभिषिक्तादिजातिसंज्ञत्वेन तद्वर्णशब्देन ग्रहणासम्भवान्मातृवर्णश इत्यर्थः । चतुस्त्रिद्व्येकभागाः स्युः । एतदुक्तम्भवति ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागान् लभन्ते । तेनैव क्षत्रियायामुत्पन्नास्त्रींस्त्रीन् । तेनैव वैश्यायामुत्पन्ना द्वौ द्वौ । तेनैव शूद्रायामुत्पन्ना एकमेकमिति । वर्णश इति सर्वत्रोत्तरत्र सम्बध्यते । तथा च क्षत्रात् क्षत्रियादिषु जाता यथाक्रमन्त्रींस्त्रीन् द्वौ द्वावेकैकञ्च लभन्ते । विट्वैश्यादिषु जाता यथाक्रमं द्वौ द्वावेकमेकञ्च

लभन्त इति। शूद्रस्यासवर्णाभार्य्याभावात्तत्पुत्राणां सजातीय पुत्रभागः पूर्वोक्त एव। यद्यपि शूद्रापरिणयने द्विजातेर्भूयानाक्षेपः पुत्रार्थं विवाहस्तु सर्वथा शूद्रायां निषिद्ध एव। तथा च मनुविष्णू।

हीनजातिं स्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्॥
शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः॥

तदपत्यतया शूद्रामात्र जनितापत्यवत्तया ब्राह्मणस्य तु चत्रविड्पेक्षयाप्यधिक दोषतामाहतुस्तत्परिणये तावेव।

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।
जनयित्वा सुतन्तस्यां ब्राह्मण्यादेव हीयत इति॥

योगीश्वरोऽपि। यदुच्यते द्विजातीनां शूद्रादारोपसंग्रहः।
नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयमिति॥

तेन विप्रादि जातशूद्रापुत्राभावात्कथन्तस्यांशाभिधानमिति प्रतिभाति। तथापि रतिधर्मार्थविवाहयोरनुकल्पत्वेन परिणीतायां शूद्रायामनुषङ्गाज्जातस्य विभागाभिधान मुपपन्नमेव। शूद्रा ज्ञातो निषादो यः पारशवेति जातिकथनमिव। आचारः मिताक्षरायामेव व्यवस्थापितः। अत एव मनुना।

कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराइति। कामत इत्यवरा इति च वदता सवर्णापरिणयनमेव मुख्यमित्युक्तम्। शङ्खलिखिताभ्यामपि। भार्य्याः कार्य्याः सजातीयाः सर्वेषां श्रेयस्यः स्युरिति पूर्वः कल्पस्ततोऽनु कल्प-

स्र तिस्रो ब्राह्मणस्यानुपूर्व्येण तिस्रो राजन्यस्य। द्वे वैश्यस्य। एका शूद्रस्येति। आनुपूर्व्येणेत्युक्तेरुत्तरोत्तरज्ञघन्यता सूचिता। यत्तु मनुना चातुर्वर्ण्य पुत्रविभागे प्रकारद्वय मुक्तम्।

अंशन्दायाद्धरेद्विप्रो द्वा वंशौ क्षत्रियासुतः।
वैश्याजोऽध्यर्द्धमेकांशमंशं शूद्रासुतो हरेत्॥
सर्वं वा रिक्थजातन्तु दशधा परिकल्प्य तत्।
धर्म्यं विभागं कुर्वीत विधिनानेन धर्मवित्॥
चतुरोंऽशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः।
वैश्यापुत्रो हरेद्‌द्व्यंशमंशं शूद्रासुतो हरेदिति॥

तत्रोक्तप्रकारो योगीश्वरसंवादी। तद्गुणवद्गुणवत्क्षत्रियादिपुत्रविषयतया व्यवस्थापनीयम्। अतएव ब्राह्मणजातो राजन्यापुत्र एव यदि जन्मज्येष्ठो गुणवांश्च तदा ब्राह्मणी पुत्रः समांशभाक्। ब्राह्मणेन क्षत्रियेण च वैश्यायाञ्जनितस्तादृक् क्षत्रिया पुत्र समांश भागित्याह वृहस्पतिः।

विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः।
भवेत् समांशो विप्रेण वैश्याजातस्तथैवच॥

तथा बौधायनः। सवर्णा पुत्रानन्तरापुत्रयोरनन्तरा पुत्रश्चेद्गुणवान् स ज्येष्ठांशं हरेत्। गुणवान् हि शेषाणाम्भर्त्ता भवतीति। एतद्वचनेऽनन्तरोत्पन्नमात्रस्य गुणवत्त्वज्येष्ठता प्रयुक्तोत्कृष्ट पुत्र समांशभाक्त्वोक्तेः वैश्यजशूद्रा पुत्रस्याप्येवं विधस्य वैश्यापुत्र समांशिता द्रष्टव्या वृहस्पत्यनुक्तापि। ज्येष्ठांशं हरेदित्यस्योत्कृष्ट समांश हरणमेवार्थो वृहस्पति संवादादुत्तमजातीयादेन्यूनाधिकांशानौचित्याच्च। यदा तु शूद्रा एवैकः पुत्रो ब्राह्मणस्य। तदा स तद्धन तृतीयांशहारी भाग-

हयं सपिण्डानां तदभावे सकुल्यानान्तेषामप्यभावे श्राद्ध-कर्त्तुः। यदाह देवलः।

निषाद एकः पुत्त्रस्तु विप्रस्य स तृतीयभाक्।

द्वौ सपिण्डः सकुल्यो वा स्वधादाताथवा हरेत्।

ब्राह्मणाच्छूद्रायां जातो निषादः स एकश्चासौ पुत्त्रश्चेति-त्यर्थः। क्षत्रिय वैश्ययोस्तु शूद्र एवैकः पुत्त्रः सधनार्द्ध हरोऽ-परमर्द्धमपुत्त्रधन ग्रहणाधिकारिणस्तद्दक्रमेण गृह्णीयुः। तथा च विष्णुः। द्विजातीनां शूद्रस्त्वेकपुत्त्रोऽर्द्ध हरोऽपुत्त्र क्थस्य या गतिः साऽर्द्धस्य द्वितीयस्येति। द्विजाति पदेनात्र क्षत्रियवैश्यमात्र ग्रहणम्। देवलेन ब्राह्मणे विशेषाभिधा-नात्। एक पुत्त्र इति कर्मधारयः इदमपि सच्छूत्तातिगुण-वच्छूद्रापुत्त्रविषयम्। अन्यथा। यद्यपि स्यात्तु सत्पुत्र इत्या-दिना। ब्राह्मण क्षत्रिय विशामित्यादिनाच वक्ष्यमाणमनु वचनेन विरोधापत्तेः। यद्यपि सामान्यत इयम्भागक्लृप्ति-रुक्ता। तथापि प्रतिग्रह प्राप्त भूमिव्यतिरिक्त विषयाक्षत्रि-यादि सुतानान्तत्र भाग प्रतिषेधात्। तथा च वृहस्पतिः।

न प्रतिग्रहभूर्देया क्षत्रियादि सुताय वै।

यद्यप्येषां पिता दद्यान्मृते विप्रासुतोहरेत्॥

अत्र प्रतिग्रहोपादानात्क्रयादि प्राप्तायाम्भवत्येव तेषा-मपि भागः स्वजात्यर्हे इति सूचितम्। अतएव भूमिमात्र विषये शूद्रा पुत्त्रस्य पृथङ्निषेधो देवलेनोक्तः।

शूद्रायां द्विजातिभि र्जातो न भूमेर्भाग मर्हति।

सजाता वाप्नुयात्सर्वमिति धर्म्मो व्यवस्थित इति। यत्तु।

ब्राह्मण क्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।

यदेवास्य पिता दद्यात्त देवास्य धनं स्मृतमिति मनु वचनम्। तन्मिह्र प्रीतिदत्तधन सद्भावविषयमिति दाक्षिणात्याः। निर्गुणापरिणीतशूद्रा पुत्र विषयमिति तु पौरस्त्यास्तन्मन्दम्। यदेवास्येत्यादि वाक्यशेषोपात्तव्यवस्थामपहायानुपात्तसगुणनिर्गुण व्यवस्थायाः कल्पयितुमनर्हत्वात्। अपरिणीतशूद्रापुत्र भागस्य च दासप्रस्तावेऽभिधास्यमानत्वात्प्राच्येव व्यवस्था सुस्था। मुख्यामुख्य पुत्राणां विभाग व्यवस्थां वक्तुं तत्स्वरूपं निरूप्यते तत्र याज्ञवल्क्यः।

> औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः।
> क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥
> गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः।
> कानीनः कन्यकाजातो मातामहसुतो मतः॥
> अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः।
> दद्यान्माता पिता वा यं स पुत्रो दत्तकः स्मृतः॥
> क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः।
> दत्तात्मा तु स्वयन्दत्तो गर्भे विन्नः सहोढजः॥
> उत्सृष्टो गृह्यते यस्तु सोऽपविद्धोभवेत् सुतः।

सवर्णा धर्म विवाहोढा धर्म पत्नी तस्यां जात औरसः पुत्र इति मिताक्षरा। वस्तु तस्तु नेदमेव बोद्धव्यम्। अनुलोमजानाम्मूर्द्धाभिषिक्तादीनामौरसेष्वन्तर्भावादिति स्ववचन विरोधात्। न हि ते सवर्णायामुत्पन्ना ब्राह्मणादिषु येषां येन धर्म विवाहास्तदूढोत्पन्नानामनौरसत्व प्रसङ्गे तेषु सत्स्वप्यन्येषान्दायग्रहण प्रसङ्गाच्च। तस्मादुत्कर्षाभिप्रायं सवर्णाग्रहणं धर्मपत्नीजत्वमात्रं वाक्योपात्तं क्षेत्रजादि व्यावर्त्तकं लक्षणम्।

अतएव मनुः। संस्कृतायां स्वभार्य्यायां स्वयमुत्पादयेत्तु यम्।
औरसन्तं विजानीयात्पुत्रं प्रथमकल्पिकम्॥
वशिष्ठोऽपि। द्वादशैव पुत्राः पुराणदृष्टाः स्वयमुत्पादिताः स्वक्षेत्रे संस्कृतायामौरसः प्रथम इति। विष्णुरपि। अथ द्वादश पुत्रा भवन्ति स्वक्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथम इति। अत्र वचनद्वयेऽपि स्वक्षेत्रे संस्कृतायामिति व्याख्यानं व्याख्येयभावोऽन्यथा पौनरुक्त्यापत्तेः। देवलः।
संस्कृतायां स्वभार्य्यायां स्वयमुत्पादितो हि यः।
औरसो नाम पुत्रः स प्रधानः पितृवंशधृक्।
आपस्तम्बः। सवर्णां शास्त्रविहितां यथर्त्तु गच्छतः पुत्रास्तेषां धर्माभिसम्बन्धः दायेनाव्यतिक्रमश्चोभयोर्मातापित्रोः। बौधायनः। सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात्। अथाप्युदाहरन्ति॥
अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे।
आत्मा वै पुत्रनामासि स जीवेत् शरदः शतम्॥
आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्।
यथेह पुरुषस्यात्मा तथा त्वमिह जायसे॥
आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात्।
पुन्नाम्नस्त्रायसे यस्मात्पुत्रस्तेनासि संज्ञित इति॥
आपस्तम्बीयबौधायनीययोः सवर्णाग्रहणमुत्कर्षाभिप्रायकमेव। अतएवासवर्णास्तूत्पन्नानामप्यौरसपुत्रप्रस्तावएव विभागप्रकार उक्तः सङ्गच्छते। आपस्तम्बवचने सवर्णामपूर्व्वामिति रत्नाकरे धृतः पाठोऽपूर्व्वाऽनपूर्व्वः पतिर्य्यस्याः सा वाग्दत्तापि या न भवतीत्यर्थ इति प्रकाशकारइति व्याख्यातञ्च।

पारिजातेऽप्युक्तम्। सवर्णाच द्विजस्य द्विजा। शूद्रस्य शूद्रा। न तु ब्राह्मणस्य ब्राह्मणी चत्रियस्य चत्रिया वैश्यस्य वैश्या। अन्यथा ब्राह्मणादि परिणीत चत्रियादि पुत्राणां द्वादशपुत्रा-न्तर्भावो न स्यादिति। पुत्रिकायाः सुतः पुत्रिकासुतः स तत्समः।

यथाह श्लोकं वशिष्ठः। अभ्रातृकां प्रदास्यामि तुभ्यङ्कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति॥

मनुरपि। अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यात्तन्मम स्यात् स्वधाकरम्॥
अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाम्।
विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः॥
ददौ स दशधर्माय कश्यपाय त्रयोदश।
सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम्॥

अत्र परिभाष्य दत्तायामुत्पन्नः पुत्रिकापुत्रो मातामह-स्येत्युक्तम्। अपरिभाषितदत्तायामपि सम्भवतीति भ्रातृ-मतीमिति विशेषणम्पुत्रिकाकरणशङ्कानिवृत्त्यर्थम्। अनेन चापरिभाषिताधि पुत्रिका भवतीत्याचारमिताक्षरायां निरू-पितम्। अतएव गौतमोऽपि।

पितोत्सृजेत्पुत्रिकामनपत्यो मदर्थमपत्यमिति संवाद्य।
अभिसन्धिमात्रात्पुत्रिकेत्येकेषामिति। ब्रह्मपुराणेऽपि॥
अपुत्रेण तु या कन्या मनसा पुत्रवत्कृता।
राजाग्नि बान्धवेभ्यश्च समक्षं वाथ कुत्रचित्॥
प्राग्गर्भं मथवा शुल्कयुक्ता पित्रा वराय वा।
मृते पितरि वा दत्ता सा विज्ञेया तु पुत्रिका॥

पित्र्याद्दक्थात्समम्भागं लभेत तादृशी सुतेति।

मनुः। मातुः प्रथमतः पिण्डं निर्वपेत्पुत्त्रिकासुतः।

द्वितीयन्तु पितुस्तस्यास्तृतीयन्तु पितुः पितुरिति॥

अथवा पुत्त्रिका चासौ सुतश्च पुत्त्रिका सुत इति पुत्त्रिकैव पुत्त्रस्थानीयेत्यर्थः। तस्याश्चौरसो जातत्वेऽपि कन्यात्वात्पुत्त्रसमत्वमिति वयम्। पितृवयवानामल्पत्वान्मातृवयवानां बाहुल्याच्चौरससमत्वमिति मिताक्षरा। यथाह वशिष्ठः। द्वितीयः पुत्त्रः पुत्त्रिकैवेति। द्व्यामुष्यायणस्तु।

अपुत्त्रेण परक्षेत्रे नियोगोत्पादितः सुतः।

उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मत इति॥

याज्ञवल्क्योऽपि। स वीजिनो यद्यप्यौरसस्तथाप्यन्यक्षेत्रोत्पन्नत्वादौरसादपकृष्टएव। अतएवौरसो धर्म्मपत्नीज इत्यौरसलक्षणं तेनैवाभिहितम्। अस्माभिरपि क्षेत्रजत्वानपायात्क्षेत्रजपुत्त्र मध्यएव व्याख्यास्यते। मनुरपि॥

क्रियाभ्युपगमात् क्षेत्रं वीजार्थं यत्प्रदीयते।

तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिकएव च॥

यथा लोके क्रियाकर्षणाख्यातादभ्युपगमात्। एकस्य वा पार्थं वीजं व्रीह्यादिनास्ति क्षेत्रमस्ति अपरस्य क्षेत्रं नास्ति वीजमस्ति। तत्र तौ मदीयं वीजन्त्वदीयं क्षेत्रं तत्र तदा वापेन कृषिं कुर्वंस्तत्रोत्पन्नं फलमावयोरस्त्वित्यभ्युपगमं सम्विदं यदि कुरुतस्तया सति द्वावपि तत् फलभागिनौ दृष्टौ। तथा द्व्यामुष्यायण स्थलेऽप्यत्रोत्पन्न मावयोरस्त्विति संविदा यद्येकस्य क्षेत्रेऽपरः स्ववीजमावपति तदुत्पन्नमप्यपत्यमुभयोर्भवतीति तस्य क्षेत्रजस्य द्विपितृकत्वेन द्व्यामुष्यायण संज्ञा। अत याज्ञ-

वल्क्येन नियोगोत्पादित इत्युक्तेर्गुरु नियुक्तस्यैव देवर सपिण्डादेर्भ्रात्रादि भार्य्यायां घृताभ्यङ्गादिविधितः पुत्रोत्पादनमितरथा प्रत्यवाय उभयो रित्युक्तं भवति। तथा च मनुः।

अपुत्राङ्कुर्वनुज्ञातो देवरः पुत्रकाम्यया।

सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥

अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः।

यदा त्वनभिसन्धाय द्वयोरपत्यं परक्षेत्रे देवरादिना वीजमुप्यते तदा क्षेत्रिणएव तदपत्यम्। तदप्याह मनुः॥

फलन्त्वनभिसन्धाय वीजिनां क्षेत्रिणान्तथा।

प्रत्यक्षं क्षेत्रिणामर्थो वीजाद्योनिर्बलीयसीति॥

फलमपत्यरूपमनभिसन्धाय यत्र परक्षेत्रे यदपत्यमुत्पाद्यते तत्क्षेत्रस्वामिनएव भवति। यथा लोके परक्षेत्रे व्रीह्यादि वीजं क्षेत्रस्वामिना सह सम्विदमकृत्वैव यद्यादौ परकार्येऽन्यदीयो न दुदद्यादि वीर्य्यमावपति यत्रोभयत्रापि क्षेत्रस्वामिनएव तदुत्पन्ने फलं स्वाम्यं दृश्यत इति प्रत्यक्षमित्यस्यार्थः। तत्र हेतुर्वीजाद्यो निर्बलीयसीति। गवाश्वादौ तथा दर्शनादिति भावः। तथा चाभिसन्धौ सत्येव क्षेत्रजस्य वीजिस्वाम्येन ह्यामुष्यायणत्वं क्षेत्रस्वामि स्वाम्यन्तु क्षेत्रज उभयत्रापीति फलितोऽर्थः। अतएव यद्यपि याज्ञवल्क्येनापुत्रेणेत्यादिवचने वीज्यभिसन्धिर्नोपात्तस्तथापि मन्वाद्येकमूलकतयानुसन्धेयः। अतएव। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा। इत्यनभिसन्धि साधारणं क्षेत्रजलक्षणमुक्तमन्यथा पौनरुक्त्यापत्तेः। सगोत्रेण देवरसपिण्डादिना। इतरेणा सगोत्रेणेत्यनुकल्पः मनुना सपिण्डो वा सगोत्रो वा इत्यभिधानात्

नियोगश्च वाग्दत्ता विषय एवेत्याचार्य्याः।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।

तामनेन विधानेन निजो विन्देत देवर इति॥

मनुना तत्रैव नियोगविधिना पुत्त्रोत्पादनस्य नियमितत्वात्। विधवानियोगस्य प्रत्युत प्रतिषिद्धत्वाच्च। तथाहि॥

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।

प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये॥

विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि।

एकमुत्पादयेत् पुत्त्रं न द्वितीयं कथञ्चनेति।

इत्यादि विधवानियोगमुपन्यस्य निषेधयति स्वयमेव मनुः।

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।

अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्॥

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित्।

न विवाहविधावुक्तं विधवावेदनं पुनः॥

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः।

मनुष्याणामपि प्रोक्तो वेणे राज्यं प्रशासति॥

स महीमखिलाम्भुञ्जन् राजर्षिप्रवरः पुरा।

वर्णानां सङ्करञ्चक्रे कामोपहतचेतनः॥

ततः प्रभृतयो मोहात्प्रमीतपतिकां स्त्रियम्।

नियोजयत्यपत्यार्थन्तं विगर्हन्ति साधव इति॥

अत्र वाग्दत्ताशब्देन तुभ्यमहं सम्प्रददे इत्यादि सङ्कल्पवाक्येन कन्या दात्रा दत्ता गृह्यते। विधवाशब्देन तु सप्तपदीपर्य्यन्त विवाहोढा पश्चान्मृतपतिका। न तु विवाहात्प्रागनियतकाल प्रतिश्रवणरूप वाग्दानदत्तायाः।

अव्यङ्गेऽपतितेऽक्लीवे दशदोषविवर्जिते ।
इमां कन्यां प्रदास्यामि देवाग्नि गुरुसन्निधाविति ॥

वाक्येन प्रतिज्ञायते । अतएव पतिरिति मनुनोक्तम् । प्राग्भाविप्रतिश्रवणस्य विवाहप्रयोग वहिर्भावेन प्रतिश्राव्यस्य पतित्वाग्नि गुरुसन्निधाविति वाक्येन प्रतिज्ञायते । यद्यपि सङ्कल्पिताया अपि न स पतिर्ज्ञातः ।

भार्य्यात्ववत्पतित्वस्याप्यलौकिकसंस्कारात्मकत्वेन विवाहभावनाभाव्यस्य सततं प्रागनुत्पत्तेः । तथापि प्रयोगोपक्रमे तत्फलीभूतव्यवहारसम्भवः । यजमानेष्टितः प्रागप्याहवनीय व्यवहारवत् । प्रतिश्रवणमात्रे तु न तदुपक्रमोऽपीति सर्व्वथा पतित्व व्यपदेशोऽनुपपन्नः । अतएव प्रतीच्योदीच्यादीनां विवाहाद्दवीयःप्राक्काले वाग्दत्तायास्तदुद्देश्ये मृतेऽपि पुनरविगीत शिष्टैरन्येन सह विवाहः क्रियते । अन्यथा कलौ नियोगविधेरपि निषिद्धतया पुनरुत्ताविवाहस्य दूरापास्ततया स दूराचारएव स्यात् । तथा चायमर्थः । वाचा सत्ये कृते सङ्कल्पवाक्येन दाने कृते सति यस्याः पतिः पतित्वभाव्यकविवाहभावनाविषयीभूतः पुरुषो म्रियेतेति । न च विहितप्रतिषिद्धत्वाद्विकल्पएव विधवानियोगस्यास्त्विति वाच्यम् । वस्तुनि विकल्पासम्भवात् । नहि विधवायां नियोगात्प्रवृत्तस्य प्रत्यवायो भवति न भवति वेति सम्भवति । नियोगविधेर्य्यस्या म्रियेतेत्यादि वचनेन वाग्दत्ताविषयत्वे नियन्त्रिते विधवाविषये प्रवृत्त्यभावाच्च नियोजयितृणान्निन्दाश्रवणात् स्त्रीधर्मेषु व्यभिचारस्य बहुदोषजनकत्व श्रवणात् संयमस्यातिप्रशंसनाच्च तुल्यबलत्वस्यापि विधि प्रतिषेधयोरभावात् । तथा च मनुरेव ।

कामन्तु चपयेद्देहं पुष्पमूलफलैः शुभैः।

न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्यत्विति ॥

जीवनार्थं पुरुषान्तराश्रयणे निषिद्धे: ।

आसीतामरणात् चान्ता नियता ब्रह्मचारिणी ।

यो धर्म एकपत्नीनां काङ्चन्ति तमनुत्तमम् ॥

अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ।

दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ।

मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ॥

स्वर्गं गच्छत्यपुत्त्रापि यथा ते ब्रह्मचारिणः ।

अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते ॥

सेह निन्दामवाप्नोति पतिलोकाच्च हीयत इति ॥

पुत्त्रार्थेऽपि पुरुषान्तराश्रयणं निन्दातिशयपुरःसरम्प्रतिषिद्धवान् । पश्चात् स्वयमेव यस्या म्रियेतेत्यनेन वाग्दत्ताविषयनियोगस्य च धर्मत्वमुक्तवान् । अनेन विधानेनेत्युक्ताऽन्यथा ।

यथा विध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।

मिथो भजेताप्रसवात्सकृत्सकृद्दृतावृताविति ॥

विधानमपि दर्शितवान् । घृताभ्यङ्ग गुर्वनुज्ञादिः पूर्व्वोक्तः स्मृत्यन्तरोक्तश्च यो विधिः सोऽप्यनेनेति सर्वनाम्ना परामृश्यते । देवरग्रहणं सपिण्डादेरुपलक्षणम् । वचनान्तरानुसारात् । पतिपदं वाचा सत्य इति च व्याख्यातमेव ।

यस्मै वाग्दत्ता सम्प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेवावगम्यत इति मिताक्षरा ग्रन्थोऽप्यस्मदुक्तार्थाभिप्रायकतयैव नेयः । यथा श्रुते दोषस्योक्तत्वात् । अतएवाग्रे तनो-

र्ग्रन्थः। अयञ्च विवाहो यन्नष्टताभ्यङ्गादि नियमवान्नियुक्तागमनाङ्गमेवेति न देवरस्य तस्याम्भार्य्यात्वमापादयति। अतस्तदुत्पन्नमपत्यं चेत्रस्वामिन एवासत्यां सम्विदि। सम्विदि। सम्विदैव तूभयोरपीति। नारदः॥

चेत्रिकानुमते वीजं यस्य चेत्रे प्रसिच्यते।
तदपत्यं द्वयोरेव वीजिचेत्रिकयोर्मतम्॥

शङ्खलिखितौ। मन्त्र संस्कारकर्त्तुरपत्यमित्याङ्गिरसो वीजिचेत्रिकयोरनुमते यद्वीजमवकीर्य्यते तत् द्विधा स्यादित्युशनाः। कात्यायनः। चेत्रिकस्य मतेनापि फलमुत्पादयेत्तु यः।

तस्येह भागिनौ तौ तु न फलं हि विनैकतः॥

हारीतः। जीवति चेत्रजमाहुरस्वातन्त्र्यान्मृते द्व्यामुष्यायणमनुप्तवीजत्वात्। नावीजं चेत्रं फलति। नाचेत्रं वीजं रोहत्युभयदर्शनादुभयोरपत्यमित्यपरे। तेषामुत्पादयितुः प्रथमः प्रवरो भवति। द्वौ पिण्डौ निर्वापे दद्युरेकपिण्डो वा द्वावनुकीर्त्तयेत्। द्वितीये पुत्त्रस्तृतीये पौत्रो लेपिनश्च त्रीन्वाचचाण आसप्तमादित्येके। जीवति चेत्रपतौ तस्यैव चेत्रजं पुत्त्रमाहुः। अत्र हेतुरस्वातन्त्र्यात् स्त्रिया इत्यर्थः। मृते तु चेत्रपतौ। अपुत्त्रायनं भर्त्तुरित्यादि वक्ष्यमाण मनुवचनाद स्वातन्त्र्यप्रविशिष्टं यद्यपि तथापि न चेत्रिणएव तत्र हेतुरनुप्तवीजत्वात् चेत्रिणो वीजिनश्चात्यनुमत्यवश्यं भावादित्यर्थः। तत्रोपपादकता वीजमित्यादि निर्वापे निरूप्यतेऽस्मिन्निति निर्वापः पिण्डपितृयज्ञस्तत्र द्व्यामुष्यायणाः पितृद्वयाय द्वौपिण्डौ पृथग्दद्युः। एकपिण्डे वा द्वौ पितरावनुकीर्त्तयेत्। एकैकस्मिन् द्वौ द्वाविति वीप्सा बोध्या। यदि द्विपिता स्यादेकैकस्मिन्

पिण्डे द्वौ द्वावुपलक्षयेदित्यापस्तम्बस्मरणात्। तयाणामपि द्वित्वादिति भावः। द्वितीय इत्यादि। द्वितीयं तृतीयं चारभ्येत्यर्थः। लेपिनश्च त्रीणित्यादि। तत्कीर्त्तनेऽपि द्वौ द्वावनुकीर्त्तयेदित्यर्थः। नारदोऽपि।

ह्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक्।
ऋक्थादर्द्धांशमादद्युर्बीजिक्षेत्रिकयो स्तथा॥

अर्द्धांशमिति यथोचितभागोपलक्षणम्। बौधायनः। अथाप्युदाहरन्ति।

द्विपितुः पिण्डदानं स्यात् पिण्डे पिण्डे च नामनी।
त्रयश्च पिण्डाः षसां स्युरेवं कुर्वन्न दुष्यतीति॥

षसां पितृ पितामह प्रपितामहानाम्। स एव।

मृतस्य प्रसूतो यश्च क्लीवस्य व्याधितस्य वा॥

तेनानुमतस्य चेत्रे स चेत्रजः स च द्विपिता द्विगोत्रश्च द्वयोरपि स्वधारिक्थभाग्भवति। मनुः।

यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा।
स्वधर्मेण नियुक्तायां स पुत्त्रः चेत्रजः स्मृतः॥

अत्र सर्वत्र जीवति चेत्रिणि व्याध्यादिप्रतिरुद्ध पुत्रोत्पादने यथा योगं गुरूणाम्भर्त्तुरपि नियोगः सम्बिन्न। मृते तु गुरूणामेव। तथा च चेत्रजो द्विविधो द्विपितृकः चेत्रिकपितृकश्च।

गृहे प्रच्छन्न उत्पन्नो जारात्पश्चात्सवर्णजातित्वेन निर्णीतः चेत्रस्वामिनो गूढजो नाम पुत्रः। मनुः।

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः॥

नचेत्यादि। पुरुषविशेष जन्यत्वेनाज्ञातोऽपि सवर्णजा-
रजन्यत्वेन ज्ञातः।

सजातीयेष्वयम्प्रोक्तस्तनयेषु मया विधिरिति।

योगीश्वरोक्तिस्तच्च व्याख्यास्यते। कानीनः कन्यकायामपरि-
णीतायां सवर्णाज्जातः स मातामहसुतो यस्य सा कन्या तस्यैव
पुत्र इत्यर्थः।

परिणीतायान्तु जातो वोढुरेव तु गूढजः।

यथाह मनुः। पितृवेश्मनि कन्या तु यम्पुत्रञ्जनयेद्रहः।

तं कानीनं वदेन्नाम्ना वोढुः कन्या समुद्भवमिति॥

एतैर्वाक्यैरपरिणीतायां पितृगृहावस्थितायां सवर्णजा-
रजः कानीनः स च मातामहसुत इत्युक्तं तद्विरुद्धं ब्रह्मपुरा-
णीयं कल्पतरुलिखितं वाक्यम्।

अदत्तायान्तु यो जातः सवर्णेन पितुर्गृहे।

स कानीनः सुतस्तस्य यस्मै सा दीयते पुनः॥

नारदवाक्यमपि तत्रैव।

कानीनश्च सहोढश्च गूढायां यश्च जायते।

तेषां वोढा पिता ज्ञेयस्ते च भागहराः स्मृता इति॥

अत्रादत्तायां सवर्णात् पितुर्गृहे जातस्य कानीनत्वम-
विरुद्धम्। यस्मै सा पुन दीयते तस्यासौ सुत इति विरुद्धं
नारदवचनेऽपि गूढोत्पन्न सहोढकानीनस्यापि वोढैव पितेति
प्रतिपादितम्। मनुनापि वोढुरित्युक्तं न मातामहस्येति।
या तु मिताक्षराकृता यद्यनूढायामुत्पन्नस्तर्हि मातामहसुतो-
ऽप्यूढायान्तदा वोढुरेवेति व्यवस्था कृता। सापि मनसि न
चमत्कारमादधाति। तथा सति हि कन्याशब्दवाच्यायाम-

परिणीतायामजातत्वात् तस्य कानीनत्वन्दुर्वचम्। नच कन्याशब्दः अपत्यमात्रपरोविशेषणवैयर्थ्यात्। गूढजादीनामपि तत्रोत्पन्नत्वेनाव्यावर्त्तकत्वात्। सर्वाहि कस्यचित्कन्यैव। ब्रह्मपुराणवचनविरोधश्च दुष्परिहरस्तत्रादत्तायामित्युक्तत्वात्। अतएव मानवविरोधोऽपि दुःसमाध एव। कल्पतरुकारेणापि परस्परविरुद्धवचनानि लिखितवता हृदयशून्यवद्यवस्थानभिधानाद्विरोध एव न प्रतिसंहितः। तेनहि मातामह सुतत्वङ्कानीनस्य बोधयन्ति बहूनि वचनान्युपन्यस्य तद्विरुद्धे ब्रह्मपुराणनारदवचने तदनुपदमेव लिखिते। तत्र वशिष्ठस्य वचः। कानीनः पञ्चमः या पितृगृहेऽसंस्कृता कामादुत्पादयेत्स कानीनो मातामहस्य पुत्रो भवतीत्याह। अथाप्युदाहरन्ति।

अपुत्रा दुहिता यस्य पुत्रं विन्देत तत्यजः।
पौत्रो मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति॥

नारदस्यैवम्। अज्ञात पितृको यस्तु कानीनोमूढमातृकः।
मातामहस्य दद्यात्स पिण्डं रिक्थं हरेत्ततः॥

बौधायनस्यापि। असंस्कृतामननिसृष्टां यामुपगच्छेत्तस्यां यो जातः स कानीन इति। अत्र प्रतिविदध्मः। मातामह सुतत्वं कानीनस्य प्रतिपादयतां वचनानां सर्वथा या न दत्तातस्याः सवर्णजातविषयत्वम् वोढुः सुतत्वं प्रतिपादयतान्तु सङ्कल्पितायां सप्तपदीपर्य्यन्तं विवाहभावनाभाव्यभार्य्यात्वमप्राप्तायां यः सवर्णादुत्पन्नस्तद्विषयत्वम्। अदत्तायामिति नारदवचने बौधायनवचने चानतिसृष्टामिति यदाभ्यामसमाप्त विवाहभावनोच्यते न तु सर्वथा दत्ता युक्तञ्चैतत्। सङ्क-

त्येन पितृस्वत्वापगमपरिणेतृस्वत्वोत्पत्त्युपक्रमात्। पितुः सर्वथा स्वत्वापगमाभावाच्च कानीनत्वव्यपदेशस्य परिणेतृस्वत्वोपक्रमेण तदीयत्वस्य च सम्भवात्। पूर्णपितृस्वत्वे तु तदुत्पन्नस्य मातामहसुतत्वोपपत्तेः। मनुवचनस्याप्ययमर्थः। या सङ्कल्पिताऽसमाप्तविवाहभावना अतएव कन्यापरिणेतृभार्यात्वस्यानिष्पत्तेः। तादृश कन्यासमुद्भवं कानीननामानं वोढुर्येन विवाह्यते तस्य वदेदिति। अतएव पितृवेश्मनीत्यपि सङ्गत मनुवादतया। विवाहानन्तरमेव भर्तृगृहप्रवेशात्। मिताक्षरा ग्रन्थस्याप्ययमर्थः। अनूढायां वोढु मनुपक्रान्तायाम्। ऊढायां वोढुमुपक्रान्तायामिति। आदिकर्मणि क्तः। न तु भूते। समाप्त विवाह भावनायान्तु सवर्णजारजातो गूढजः। अतएव गृहे प्रच्छन्न उत्पन्नो भर्तृगृहे तेनाज्ञातो जात इत्युक्तम् पुनर्भूर्द्विविधा। विवाहमात्रेणाक्षताप्यन्येन परिणीयमानैका। अन्या तु विवाहात्प्रागेव पुरुषसम्भोगदूषिता। तस्याञ्जातः पौनर्भवः। अतएवाक्षतायां क्षतायां वा जात इत्युक्तम्।

मनुः। या तु पत्या परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते॥

कात्यायनः। क्लीवं विहाय पतितं या पुनर्लभते पतिम्।
तस्यां पौनर्भवो जातो व्यक्त मुत्पादकस्य सः॥

वशिष्ठविष्णू। पौनर्भवश्चतुर्थ इति। चतुर्थत्वन्तदनुक्रमापेक्षया। माता भर्त्राज्ञया पिता वा यमन्यस्मै दद्यात्स तस्य दत्तकः पुत्रः। तथा च मनुः।

माता पिता वा दद्यातां यमद्भिः पुत्त्रमापदि।

सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥

आपदीत्युक्ते रनापदि दातुः प्रत्यवायः। मातापितरौ प्रत्येकं मिलितौ वा। अद्भिरिति दान प्रतिग्रह प्रकारोपलक्षणम्। सदृशं सवर्णं प्रीति संयुक्तमिति क्रियाविशेषणम्। एकः पुत्त्रश्च न देयो न प्रतिग्राह्यः। तथा च वशिष्ठः। शुक्रशोणितसम्भवः पुरुषो माता पितृनिमित्तकस्तस्य प्रदान विक्रय परित्यागेषु मातापितरौ प्रभवतः। नत्वेकं पुत्त्रन्दद्यात्प्रतिगृह्लीयाद्वा। स हि सन्तानाय पूर्वेषान्न तु स्त्रीपुत्त्रं दद्यात्प्रतिगृह्लीयाद्वा-न्यत्रानुज्ञानाद्भर्त्तुरिति। अत्र भर्त्रनुज्ञां विना स्त्रियाः पुत्त्र-प्रतिग्रह निषेधाददत्तानुज्ञे भर्त्तरि मृते विधवया कृतः पुत्रो-दत्तको नभवतीत्याहुस्तन्न अपुत्रस्य गत्यभावात्पुत्र करणस्या वश्यकत्वश्रवणाच्छास्त्रमूलक तदनु ज्ञात्यास्तत्राप्यवतेः। नचैव मनुज्ञानादन्यत्रेति व्यर्थम्। व्यावर्त्त्याभावाच्छास्त्रीयानुमतेः सर्वत्रावश्यकत्वादिति वाच्यम्। मुमुक्षोः पत्न्यन्तरे पुत्त्रवतो वानुज्ञाया असम्भवाद्भार्य्या यदि स्वपुत्रार्थमेव तं प्रतिषेधस्य।

सर्वासां एकपत्नीनामेका चेत्पुत्त्रिणी भवेत्।
सर्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवतीर्मनुरिति ॥

पुत्त्र कार्य्यश्राद्धादेः सपत्नीपुत्रेण सिद्धेर्भर्त्रनुज्ञां विना तादृश्याः पुत्त्रो न कार्य्यः। उभयोरपि तत्र कार्य्यस्य तेन निष्पत्तेः। भर्त्तुर्हि स औरस एव मुख्यः तस्या अपि दत्त-वद्गौण इति तादृश्या भर्त्रनुमति मन्तरेणेतरो न प्रतिग्राह्य इति तात्पर्य्यार्थः वस्तुतस्तु।

भ्रातॄणामेकजातानामेकश्चेत् पुत्त्रवान् भवेत्।
सर्वास्तास्तेन पुत्त्रेण पुत्त्रिणो मनुरब्रवीदिति।

वचनवदेतस्यापि भ्रातृ पुत्रस्य गौणदत्तक पुत्रत्वादि सम्भवेऽन्यः पुत्रप्रतिनिधिर्न्न कार्य्य इत्यर्थकतया मिताक्षरास्मृति चन्द्रिकादौ व्याख्यातत्वाद्भर्त्तरि जीवति भार्य्यया स्वातन्त्र्येण तदननुमतो न पुत्रीकरणीय इति भर्त्तुरनुज्ञानादन्यत्रेत्यस्यार्थः। मृते तु तस्मिन् यत्पारन्त्र्यन्तदनु मृते तु तस्मिन् पारतन्त्र्यन्तदनुमतिरेवापेक्षिता। एवं सति दृष्टार्थता भवतिप्रतिषेधस्य।

तस्माददत्तानुज्ञे मृतेऽपि भर्त्तरि भार्य्यया दत्तकादि करणमविरुद्धम्। मनुवचनद्वयस्य पूर्व्वोक्तार्थकत्वे उपपत्तिरपि मिताक्षरादावेवोक्ता। यदपुत्ररिक्थग्रहणाधिकारिक्रमपरे पत्नी दुहितर इत्यत्रापरः स्त्रीधनमित्यत्र च भ्रातृपुत्र सपत्नीपुत्रयोः पत्न्यादि भर्त्राद्यभावेऽधिकार प्रतिपादनविरोधापत्तेरिति। तच्च तत्रैव प्रपञ्चयिष्यते। अनेकपुत्र सद्भावेऽपि ज्येष्ठः पुत्रो न देयः। ज्येष्ठेन जातमात्रेण पुत्री भवति मानव इति। पुत्रकार्य्यकरणे तस्यैव मुख्यत्वाभिधानात्।

क्रीतस्वयंदत्त कृत्रिमेष्वपि समानन्यायत्वादेकपुत्र ज्येष्ठपुत्रयोर्न्निषेधः। अतएव बह्वृच ब्राह्मणे हरिश्चन्द्रोपाख्याने क्रीतेऽपि ज्येष्ठपुत्र प्रतिषेध लिङ्गदर्शनं सज्येष्ठपुत्रं निगृह्णीत उवाचेति।

पुत्र प्रतिग्रहप्रकारश्च। पुत्रम्प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनस्य व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धु सन्निकृष्टएव प्रतिगृह्णीयादिति वशिष्ठोक्तः।

अदूरबान्धवमित्यत्र देशभाषाविप्रकृष्टस्य प्रतिषेधः।

एवं क्रीतादिष्वपि। समानन्यायत्वात्। कल्पतरौ त्वदूर-

बान्धवमसन्निकृष्टमेवेति पाठं लिखित्वाऽदूरबान्धवं सन्निहित-मातुलादिकम्। असन्निकृष्टमेव। अविज्ञात गुण दोषमपि। अप्यर्थएव रत्नाकार इति व्याख्यातम्। सन्देहे चोत्पन्ने दूरे-बान्धवे शूद्रमिव स्थापयेद्विज्ञायते ह्येकेन च बहूंस्त्रायतामि-तीति च वशिष्ठ वचनमधिकं लिखित्वैवं विवृतम्। सन्देहे बान्ध-वानामसन्निधानाज्ज्ञाति सन्देह उत्पन्ने शूद्रमिव संस्कारहीन-मेव स्थापयेत्। शूद्रोऽपि हि कृतपुत्रो भवतीत्यभिप्राय इति।

क्रीतस्तु पुत्रस्ताभ्यां विक्रीत इति। ताभ्यां मातापितृभ्यां माता भर्त्तनुज्ञया पिता वा मूल्यग्रहपरस्य दत्त:। एकपुत्र: ज्येष्ठपुत्रं वर्ज्जयित्वा आपदीत्येव। सजातीयेष्वित्युपसंहा-रात्सवर्णएव। यत्तु मनुनोक्तम्।

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्।
स क्रीतक: सुतस्तस्य सदृशोऽसदृशोऽपिवेति॥

तद्गुणै: सदृशोऽसदृशो वेति व्याख्येयन्न तु जात्याऽसदृश इति सजातीयेष्वित्यनेन विरोधापत्ते:। बौधायनोऽपि। मातापित्रोर्हस्तात्क्रीतोऽन्यतरस्य वा योऽपत्यार्थे गृह्यते स क्रीतक इति। कृत्रिमस्तु पुत्रार्थिना स्वयं धनक्षेत्रादि प्रदर्शनादि-ना प्रलोभ्य त्वं मे पुत्रो भवेति य: सवर्ण: पुत्रीकृत: स उच्यते। मातापितृविहीनश्चेत्।

तत्सद्भावे तत्परत्व तया तेन पुत्री भवितुमशक्यत्वात्। मनु विष्णू अपि। सदृशं तम्प्रकुर्य्यातां गुणदोष विचक्षणम्।

पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिम इति॥

सदृशं सवर्णम्। प्रकुर्य्यातां मातापितरौ मिलितौ प्रत्येकं वा।

दत्तात्मा तु स्वयन्दत्त: स्वयमेव स्वात्मानमन्यस्मै दत्तवांस्तथा-

इत्युक्तो भवामीति स्वयमुपगतो मातापितृविहीनस्ताभ्यां त्यक्तो वा सवर्णो पतितः स उच्यते। तथा च मनुः।

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्।
आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृत इति।

अकारणात् पातित्यादि कारणमन्तरेणैव दुर्भिक्षादौ पोषणाद्यसामर्थ्यादिना मातापितृभ्यान्त्यक्तः स्वतन्त्र इत्यर्थः। यस्तु गर्भस्थितोऽपरिणीतावस्थायां सवर्णाज्जाराज्जातो गर्भिण्यान्तस्यां परिणीयमानायां विन्नः प्राप्तः विद्लृलाभ इत्यस्य निष्ठान्तं रूपम्। नुदविदेत्यादि सूत्रेण निष्ठासम्बन्धितकारस्य नकारः। स सहोढज उच्यते। स वोढुः पुत्रः। तथा च मनुः। या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती।

वोढुः स गर्भो भवति सहोढ इति चोच्यते॥

विष्णुरपि। सहोढः सप्तमः। गर्भिणी या संस्क्रियते तस्याः पुत्रः स तु पाणिग्रहस्येति। सप्तम इति तदीयपाठक्रमापेक्षया। उत्सृष्टो माता पितृभ्यान्त्यक्तो योऽह्यते पुत्रार्थिना सोऽपविद्धो नाम ग्रहीतुः पुत्रः। एतावपि सवर्णावेव। तथा विष्णुरपि। अपविद्धस्त्वेकादशः पित्रा मात्रा च परित्यक्तः स येन गृहीतः। वशिष्ठः। अपविद्धः पञ्चमोऽयं माता पितृभ्यामपास्तं गृह्णीयात्। एकादशत्वं पञ्चमत्वं तत्तत्पाठक्रमापेक्षया।

यस्तु मनुना गौणपुत्रमध्ये पारशवाख्यः शूद्रापुत्रः परिगणितः स योगीश्वरेण सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरित्युक्तोपसंहारव्याजेन नियमकारणात्तस्य च कथञ्चिदपि सजातीयत्वासम्भवान्नोक्तः। अतएव जातोऽपीत्यादिना

ग्रन्थेन स उक्तः। द्विजातस्य शूद्रापुत्रस्यान्याभावेऽपि पितृ-ऋक्थहरत्वाभावाच्च। तच्च वक्ष्यते। तथा च मनुः।

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम्।

स पारयन्नेव शवस्तस्मात् पारशवः स्मृत इति॥

बौधायनोऽपि। द्विजाति प्रवराच्छूद्रायां जातः कामात्पारशव इति। तत्रौरसादयो गौणाः पुत्रा मुख्यस्त्वौरसएव।

तथा च मनुः। क्षेत्रजादीन् सुतानेता नेकादश यथोदितान्।

पुत्त्र प्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥

क्रियालोपात्परिणयादि क्रियालोपादि क्रियालोपादिति प्रतिनिधित्वे हेतुः। स्मृति चन्द्रिकायान्तु। औरसाभावे तत्कर्तृकश्राद्धादि क्रियालोपाद्बिभ्यतो मनीषिण ऋषय एकादश पुत्र प्रतिनिधीन् कर्त्तव्यत्वेनाहुरिति व्याख्यातम्। बृहस्पतिः। पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः।

सन्तानकारणन्तेषामौरसः पुत्रिका द्वय॥

पुत्र प्रतिनिधी कर्त्तव्येनाहुरिति व्याख्यातम्।

बृहस्पतिः। आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः।

तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना॥

ब्रह्मपुराणे। दत्तकश्च स्वयन्दत्तः कृत्रिमः क्रृतएव च।

अपविद्धाश्चये पुत्रा भरणीयाः सदैव हि॥

भिन्नगोत्राः पृथक् पिण्डाः पृथग्व शकरास्तथा।

सूतके मृतके वा पित्र्यहाशौचस्य भागिनः।

अपि वस्त्रान्नदातृणां क्षेत्रबीजवतान्तथा।

शूद्रो दासः पारशवो विप्राणां विद्यते क्वचित्॥

राज्ञात्तु ग्रामदग्धानां नित्यं क्षयवतान्तथा।

अथ संग्रामशीलानां कदाचिद्वा भवन्ति ते ॥
औरसो यदि वा पुत्रस्त्वथवा पुत्रिका सुतः ।
न विद्यते तत्र तेषां विज्ञेयाः क्षेत्रजादयः ॥
एकादश पृथग्भावा वंशमात्रकरास्तु ते ।
श्राद्धादि दासवत्सर्वं तेषां कुर्वन्ति नित्यशः ॥
गूढोत्पन्नश्च कानीनः सहोढः क्षेत्रजस्तथा ।
पौनर्भवश्च वैश्यानां राजदण्डभयादपि ॥
वर्जिताः पञ्च धनिनां शेषाः सर्वे भवन्त्यपि ।
शूद्राणां दासवृत्तीनां परपिण्डोपजीविनाम् ॥
परायत्तशरीराणान्न क्वचित् पुत्र इत्यपि ।
तस्माद्दासस्य दास्याश्च जायते दास एव हीति ॥

एवमेतेषां पुत्राणां स्वरूपन्निरूप्य तेषान्दायग्रहणं निरूप्यते । तत्र योगीश्वरः ।

पिण्डदोऽंशहरश्चैषां पूर्वाभावे परःपरः ।

परःपर इति वीप्सादर्शनात् पूर्वपूर्वभाव इत्यपि वीप्सावसेया ।

औरसपौत्रिकेय समवायेऽप्येवमौरसे सति पुत्रिकासुतस्य दायग्रहणाभावे प्रसक्ते मनुरपवदति ।

पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रिया इति ॥

बृहस्पतिरपि । एक एवौरसः पित्र्ये धने स्वामी प्रकीर्त्तितः ।

तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्या स्त्वपरे सुताः ॥

नच पुत्रिकाया एव प्रथमपुत्रे जाते पश्चादौरसोत्पत्तौ पुत्रिका पुत्रस्य ज्येष्ठत्वादस्त्रीत्वाच्च ज्येष्ठांशभागिता भवेदिति युक्तम् । तस्य पौत्रत्वात् । तदाह मनुः ।

अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्।
पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति।

पुत्त्रिका हि पुत्त्रस्तत्पुत्त्रो दौहित्रोऽपि पौत्त्रस्तद्वान् पौत्त्री भवति। पौत्त्रस्य च ज्येष्ठत्वेनांशातिरेको नैव श्रुतः। न च अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति पुत्रिका-पुत्रस्यापि पुत्रत्वाभिधानात्तद्विरोध इति वाच्यम्। मनु विरोधेन तस्य गौण्य पिण्डदातृत्वनिमित्त पुत्रत्वाभिप्रायकत्वात्। पुत्रिकायाः पुमपत्यत्वाभावाद्यथा गौणं पुत्रपदप्रतिपाद्यत्वं तथा स्वजन्य पुत्रिकाजन्य पुत्रस्यापि। पुंस्त्वे सत्यपि जन्यत्वाभावात्। जन्यपुंस्त्वस्यैव पुत्रपदशक्यत्वात्। तथान्येषामपि पुत्राणां पूर्वपूर्वसत्वे सर्वभागानर्हत्वमनेन प्रसक्तमपवदति। वशिष्ठः। तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभाग-भागी स्याद्दत्तक इति। दत्तकग्रहणं क्रीतादीनामुपलक्षणं पुत्रीकरणाविशेषात्।

उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः।
सवर्णा असवर्णास्तु ग्रासाच्छादनभाजना इति॥

कात्यायनवचनाच्च। सवर्णाः क्षेत्रजदत्तकादयस्ते सत्यौरसे चतुर्थांशहराः। असवर्णाः कानीनगूढोत्पन्न सहोढ-पौनर्भवास्ते तु सत्यौरसे न चतुर्थांशहरा अपि। किन्तु ग्रासाच्छादनमात्रभागिन इत्यर्थः कात्यायनवचनस्य।

अतएव विष्णुः। अप्रशस्तास्तु कानीन गूढोत्पन्न सहोढजाः।
पौनर्भवश्च नैवैते पिण्डरिक्थांशभागिन इति॥

औरसे सति कानीनादीनां चतुर्थांशभागित्वं प्रतिषेधति।

कानीनादीनामप्यौरसाद्यभावेऽस्येव पित्र्य सकल धनग्रहणम्।
पूर्व्वाभावे परःपर इति वचनात्। यच्च मनुवचनम् ॥

एक एवौरसः पुत्रः पित्र्यस्यवसुनः प्रभुः।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनमिति।

तदपि दत्तकादीनामौरस प्रतिकूलत्वोत्पन्न निर्गुणत्वे च चतुर्थांशादि निषेधपरङ्कानीनादिपरञ्च। तेषां सत्यौरसे ग्रासाच्छादनमात्रभागित्वस्योक्तत्वात् तदेकमूलकत्व कल्पनात्। क्षेत्रजस्य तु सत्यौरसे पञ्चम षष्ठांशौ मनुनैवोक्तौ।

षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात् पैतृकाद्धनात्।
औरसो विभजन् दायं पित्र्यं पञ्चममेववेति ॥

प्रतिकूलत्व निर्गुणत्व समवाये षष्ठमेकतर सद्भावे पञ्चममिति व्यवस्था।

यत्तु, समग्र धनभोक्ता स्यादौरसोऽपि जघन्यजः।
त्रिभागं क्षेत्रजं भुङ्क्ते चतुर्थं पुत्रिका सुतः ॥

इत्यादि ब्रह्मपुराणादि वचनैः समभागार्हतया मन्वादिभिरुक्तस्य पुत्रिकापुत्रस्य चतुर्थांश उक्तः पञ्चम षष्ठांशार्हतयोक्तस्य क्षेत्रजस्य तृतीयांशश्चोक्तः सपुत्रिका पुत्रस्यात्यन्तनिर्गुणत्वे सवर्णत्वे च। क्षेत्र जस्य चात्यन्तसगुणत्वानुकूल्ययोर्व्यवस्थापनीयः औरसाभावे दत्तकस्याखिलधन गृहणार्थं पृथगारब्धं मनुना

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः।
सह तैरेव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥

स्वगोत्र सं प्राप्तः किमुतेति किमुतत्यर्थोऽपि शब्दः। जनक धनग्रहणञ्च तस्य प्रतिषिद्धन्तेनैव।

गोत्ररिक्थे जनयितुर्न्न भजेद्दत्रिमः सुतः।

गोत्र रिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति॥

ददतः सम्बन्धी पिण्डस्ततो व्यपैति। स्वधा पितृतृप्तिहेतुरिति पिण्डविशेषणम्। गोत्र रिक्थानुग इति हेतुगर्भम्। दत्तकमात्र विषयकमपि सत्यौरसे चतुर्थांशहरत्व प्रतिपादकं पृथगारब्धं वशिष्ठेन। तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थं भागभागी स्याद्दत्तक इति। क्रीतादि साधारणन्तु कात्यायनीयं प्रागेव पठितम्। तत्र तृतीयांशहरा इति कल्पतरुलिखितः पाठो यदि साकरस्तर्हि दत्तकादीनामौरसापेक्षया सगुणत्वे तृतीयांशहरत्वमिति व्याख्येयः। मनुनैव क्षेत्रजस्यौरससमभागभागित्वमप्युक्तम्।

यवीयान् ज्येष्ठभार्य्यायां पुत्र मुत्पादयेद्यदि।
समस्तत्र विभागः स्यादितिधर्म्मो व्यवस्थितः॥
उपसर्ज्जनं प्रधानस्य धर्मतो नोपपद्यते।
पिता प्रधानं प्रजने तस्माद्धर्मेण तम्भजेत्॥
धनं यो विभृयाद्भ्रातुर्म्मृतस्य स्त्रियमेव वा।
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम्॥
यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः॥

यद्यप्यौरस प्रक्रमात्समभागभागित्वं क्षेत्रजस्य तन्निरूपित मेवोक्तमित्याभाति। तथापि वाक्यविरोधे प्रक्रमस्य वाध्यत्वाद्वीजिसमभागित्वपरन्तदिति वोध्यम्। अतएवोत्तर वचने पितुर्वीजिनः प्राधान्य मुपन्यस्यति। सोऽपत्यं भ्रातुरुत्पाद्येत्यनेनापि यस्य क्षेत्रजस्तदीयन्धनन्तस्मै दद्यादिति भ्रातृ स्थानीयत्वात्तस्य स्वसमभागितां प्रतिपादयति। एवमन्यान्य-

प्युच्चावचभागान् क्षेत्रजादीनां प्रतिपादयन्ति बृहस्पत्यादि वचनानि कथञ्चिद्व्याख्यापनीयानि । तत्र बृहस्पतिः ।

क्षेत्रजाद्याः सुतास्त्वन्ये पञ्च षट् समभागिनः ।

हारीतः । विभजिष्यमाण एकविंशत्कानीनाय दद्यात् ॥

विंशम्पौनर्भवाय । एकोनविंशं द्व्यामुष्यायणाय । अष्टादशं क्षेत्रजाय । सप्तदशं पुत्रिकापुत्राय । इतरानौरसाय पुत्राय दद्युः । ब्रह्मपुराणे ।

समग्रधनभोक्ता स्यादौरसेऽपि जघन्यजः ।
त्रिभागं क्षेत्रजं भुङ्क्ते चतुर्थं पुत्रिकासुतः ॥
कृत्रिमः पञ्चमम्भागं षड्भागङ्गूढसम्भवः ।
सप्तांशश्चापविद्धस्तु कानीनश्चाष्टमांशकः ॥
नवभागं सहोढश्च क्रीतो दशममश्नुते ।
पौनर्भवस्तु परतो द्वादशं स्वयमागतः ॥
त्रयोदशमभागन्तु शौद्रो भुङ्क्ते पितुर्द्धनात् ।
तज्जोऽन्यजो वा धर्म्मिष्ठो ब्रह्मचार्य्यथवा पुनः ॥

अत्रौरसे सतीति सर्वत्र ज्ञेयः । पूर्वाभावे परः पर इति वचनात् । ब्रह्मपुराणीयस्य समग्रेत्यादि प्रथमश्लोकस्य पूर्वमेव विषयव्यवस्थोक्ता । अन्येषामपि गुणतारतम्येन देशाचारानुसारेण वा यथायथं व्यवस्था द्रष्टव्या षड्भागं षष्ठम्भागम् । नवभागं नवमं भागमित्यर्थः । अन्यथार्थासङ्गतेः प्रक्रमभङ्गप्रसङ्गाच्च ।

परतोदशमात्परमेकादशम् । त्रयोदशमेत्यार्षम् । शौद्रः शूद्रापुत्रः । यदपि मनुना पुत्राणां षट्कद्वयमुक्त्वा पूर्वषट्कस्य दायादस्य चादायादबान्धवत्वमुक्तम् ।

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।
स्वयं दत्तश्च शौद्रश्च षड़दायादबान्धवा इति॥

तदपि स्वपितृ सपिण्ड समानोदकानां सन्निहित रिक्थहरान्तराभावे पूर्वषट्कस्य तद्रिक्थहरत्व मुत्तरषट्कस्य तु तन्नास्ति। पितृरिक्थहरत्वन्तु सर्वेषामपि पूर्वपूर्वाभावे समानमेवेति तद्दायादादायादत्वविभागो नोपपद्यते। पूर्वाभावे परः पर इति वचनात्।

एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरित्युक्त्वा।
न भ्रातरो न पितरः पुत्रारिक्थहराः पितुरिति।

वचनस्य गौण पुत्राणामेव सर्वेषाम्पितृरिक्थहारित्व प्रतिपादन परत्वाच्च। दायाद शब्दश्च दायादानपि दापयेदित्यादौ पुत्रव्यतिरिक्तरिक्थहारिष्वेव प्रचुरप्रयोगाच्च। बान्धवत्वं सपिण्डसमानगोत्रत्वाभ्यामुदकदानादिकार्य्यकरत्वं षट्कद्वयस्यापि समानमेवेत्येतदर्थकम्। यत्तु हारीत वचनं। षड्बन्धुदायादाः साध्व्यां स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः। पुत्रिकापुत्रो गूढोत्पन्नो गृह इति। बन्धु दायादाः दत्तः क्रीतोऽपविद्धः सहोढः स्वयमुपगतः सहसाहृष्टश्चेत्यबन्धुदायादा इति। साध्व्यां स्वयमुत्पादित औरस इत्यर्थः। सहसा हृष्टो यो मातापित्रादिविहीनोऽकस्माद्दृष्टः केनचित् परितोष्य मम त्वं पुत्रोभवेत्युक्तस्तथाति प्रतिपद्यते। कृत्रिम इति यावत्। तत्र मनु विरोधः स्पष्टः। तेन कानीन पौनर्भवयोरबन्धु दायादमध्ये परिगणनात्। हारीतेन बन्धु-

जातीयेषु तत्र कानीनगूढोत्पन्नसहोढपौनर्भवानां सवर्णत्वज्ञा-नकद्वारेण न स्वरूपेण तेषु वर्णजातिलक्षणात् वर्णजातिवि-वेकमभिधाय विन्नास्वेवविधिः स्मृत इति योगीश्वरेणैवाभि-धानात्। अनुलोमजानां मूर्द्धाभिषिक्तादीनामौरसेष्वेवा-न्तर्भावाच्चतुस्त्रिद्व्येकभागा इत्यादिना भागक्लृप्तिरुक्ता। तेन तेषामप्यभावे क्षेत्रजादयः पित्र्य ऋक्थहारिणः। शूद्रापुत्रस्य-त्वौरसत्वेऽपि न कृत्स्नपित्र्यधनभागित्वमन्याभावेऽप्यस्ति। यथाह मनुः।

यद्यपि स्यात्तु सत्पुत्त्रो यद्यपुत्त्रोऽपि वा भवेत्।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः॥

यदि सत्पुत्त्रो विद्यमानः सवर्णापुत्रो यदि वाऽपुत्रोऽविद्यमानः सवर्णापुत्रो भवेत्तस्मिन्मृते क्षेत्रजादिः पुत्रोऽन्यो-वा रिक्थहारी शूद्रापुत्राय तद्धनाद्दशमांशादधिकं न दद्यात् अस्मादेव वचनात्सवर्णापुत्राभावे क्षत्रियावैश्यापुत्रयोः सकल विप्रपितृधनग्रहणं गम्यते। यत्तु प्राक् चतुस्त्रिद्व्येकभागा इत्यादि वा शूद्रापुत्रस्यैकभागभागित्वं योगीश्व-रादिभिरुक्तन्तदपि सद्वृत्त शूद्रापुत्रविषयं वेदितव्यमन्यथा-मानवविरोधात्। ब्राह्मणक्षत्रियविशामिति मनु वचनन्तु प्रागेव व्याख्यातम्। शूद्रधनविभागे विशेषमाह। याज्ञवल्क्यः।
जातोऽपि दास्यां शूद्रेण कामतोंऽश हरो भवेत्।

मृते पितरि कुर्युस्तं भ्रातरस्त्वर्द्धभागिकम्॥
अभ्रातृको हरेत्सर्वं दुहितॄणां सुताद्दतेति।

शूद्रेण दास्या मुत्पन्नः पुत्रः कामतः पितुरिच्छया भागं लभते। पितुरूर्ध्वन्तु भ्रातरः परिणीताः शूद्रापुत्रा स्तन्दासी-

पुत्रं स्वभागार्द्धभागिनं कुर्युः। अत्र बहुवचनात्सर्वे स्वस्वभागादर्द्धन्दद्युरिति न भ्रमितव्यम्। तथा सति बहुभ्रातृकस्य ततोऽप्यतिबहुधनत्वापत्तेरव्यवस्था स्यात्। किन्त्वेक पुत्रस्य यावान् भागस्तत्तदर्द्ध भागं शूद्रापुत्रा लभन्ते व्यक्त्यभिप्रायेण जात्यभिप्रायेण च बहुवचनैकवचने। परिणीत शूद्रा पुत्रस्तत् पुत्राद्यभावेतु दासीपुत्रोऽपि कृत्स्नं शूद्रस्य पितुर्द्धनं लभत इत्यर्थादवगम्यते। शूद्रग्रहणाद् द्विजातिभ्यो दास्यामुत्पन्नः पितुरिच्छयाप्यंशमर्द्ध भागं वा तदूर्द्धं न लभते कृत्स्नन्तद्धनग्रहणं दूरापास्तमेव किन्त्वनतिकुलश्चेज्जीवन मात्रमिति प्रतीयते। मुख्यगौणपुत्राभावे मृतपतितपरिव्राजकादि धनग्रहणाधिकारिण उच्यन्ते। तत्र योगीश्वरः।

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुतो गोत्रजो बन्धुः शिष्यः स ब्रह्मचारिणः॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिरिति॥

अपुत्रस्य पूर्वोक्तद्वादशविध पुत्ररहितस्य स्वर्यातस्य मृतस्य पत्न्यादयः पूर्वपूर्वाभावे पाठक्रमेणोत्तरोत्तरन्धनं गृह्णीयुरित्यर्थः। अयं विधिः सर्वेषु मूर्द्धाभिषिक्तावसिक्ताद्यनुलोमज प्रतिलोमजादिषु वर्णेषु च ब्राह्मणादिषु वेदितव्यमित्यर्थः। तत्र प्रथमं पत्नी धनहारिणी। पत्नीशब्देनैव विवाहसंस्कृता। पत्युर्नो यज्ञसंयोगे इति पाणिनि सूत्रात्। जात्यभि प्रायेण चैकवचनं तेन बह्व्यश्चेत्पत्न्य एकस्य तदा सर्वाः सजातीयाविजातीया क्रमेण यथायथं भर्त्तृधनं विभज्य गृह्णीयुः। पत्नी शब्दादासुरादि विवाहोढाया धन ग्रहणं धर्म्यविवाहो-

ढपत्यन्तर सद्भावे नास्तीति गम्यते। तथा च स्मृतिः।

क्रयक्रीता तु या नारी न सा पत्नी विधीयते।

न सा दैवे न सा पित्र्ये दासीन्ताङ्कवयो विदुरिति॥

अत्र च दासीत्वकथनमदृष्टार्थकर्मसु सहाधिकाराभावाभिप्रायेण न तु दासीवद्गम्यत्वाभिप्रायेण। विवाहिता- त्वेन परदारत्वाबाधात् अतएव मनुर्धर्म्याधर्म्ये विवाहानन्तुक्रम्य सन्तानगतावेव गुणदोषावाह।

अनिन्दितैः स्त्रीविवाहै रनिन्द्या भवति प्रजा।

निन्दितै र्निन्दितान्नृणान्तस्मान्निन्द्यान्विवर्जयेदिति॥

प्रजाया निन्दितत्वमपि सद्वृत्त स्वभावत्वाभावो न तु वर्णजात्यभावः। परिणेतुः परिणीताया मुत्पन्नत्वमात्रस्य वर्णजाति व्यञ्जकत्वात्। विन्नास्वेष विधिः स्मृत इत्युक्तेः। अतएव न सा दैवे न सा पित्र्य इति सहाधिकारण एव प्रतिषिद्धः। तथा च पित्र्यादि कर्मार्हतापि पतिदायहरत्वप्रयोजिकेति पत्नीपदेन ज्ञापितम्। अतएव श्रौतस्मार्त्त सहाधिकारिणीपतिव्रतैव भर्तृधनभागिनीत्याह प्रजापतिः।

पूर्वं मृता त्वग्निहोत्रं मृते भर्त्तरि तद्धनम्।

लभेत् पति व्रता नारी धर्मएष सनातनः॥

इह मनुरपि। अपुत्राशयनम्भर्त्तुः पालयन्ती व्रते स्थिता।

पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत चेति॥

अत्रोत्त रार्द्धोक्तिपाठक्रमस्यार्थ क्रमेण बाधात् प्रथमं कृत्स्नमंशं लभते। पश्चात्पिण्डं दद्यादिति स्मृतिचन्द्रिकाकारेणोक्तं तद्धेयम्। क्रमे तात्पर्य्याभावात्। उभयाधिकार प्रतिपादनमात्र परत्वाद्वचनस्य। अन्यथा यावदंशलाभं भर्त्तन्ये

ष्टिविलम्बोऽपि प्रसज्येत। सचानेकस्मृतिनिषिद्धः। अदृष्ट कल्पनापत्तिश्च। पत्न्यैवेत्येवकारेणापुत्रस्यान्त्यकर्मण्यप्य पत्र पुत्रवत् पत्नीत्यादि वचनाद्भ्रात्रादि सत्वेऽपि सैवाधिकारिणीति दर्शितम्। अयमेवार्थः प्रपञ्चितः प्रजापतिना।

जङ्गमं स्थावरं हेमं कुप्यन्धान्यं रसाम्बरम्।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम्॥
पितृव्यगुरु दौहित्रान् भर्तुः स्वस्रीयमातुलान्।
पूजयेत्कव्य पूर्त्ताभ्यां वृद्धांश्चाप्यतिथीन् स्त्रियः॥

कुप्यन्त्रपुसीसादि। कव्यम्पितृर्थं सङ्कल्पित मन्नादि। पूर्त्तङ्खातादि कर्माङ्गदक्षिणादि। एतदुक्तम्भवति। स्थावरेणापि सहितं सर्वं भर्त्तृधन मधिगत्य धनसाध्यं स्वाधिकाकारिकं पत्युरात्मनश्च श्रेयः साधन कर्म पतिपक्षीय पुरस्कारेण पत्न्या कार्य्यमिति। एवं वर्त्तमानाया ये पीड़ाकारिणस्तेराज्ञा चौरवद्दण्ड्या इत्याह। स एव।

सपिण्डा बान्धवा ये तु तस्याः स्युः परिपन्थिनः।
हिंस्युर्धनानि तान् राजा चौरदण्डेन शासयेत्॥

स्मृति चन्द्रिकायां वार्हस्पत्यत्वेन पत्न्याः स्थावरग्रहण निषेधकम्।

यद्विभक्ते धनङ्किञ्चिदाध्यादि विविधं स्मृतम्।
तज्जाया स्थावरं मुक्त्वा लभते मृतभर्त्तृकेति॥

वचनं लिखितम्। जङ्गमं स्थावरमित्यादि प्रजापति वचन विरोधपरिहाराय दत्तविहीन पत्नीपरत्वमविभक्तपत्यंशविषयत्वं वान्योक्तम्।

दत्तस्यापि कृतेऽप्यंशे न स्त्री स्थावरमर्हतीति।

तच्छेपविरोधेनापास्य दुहितृरहितपत्नीविषयत्वेन व्यवस्थापितश्च। तत्र मदनरत्नकारेण मिताक्षराकल्पतरुहलायुधादिसर्वग्रन्थान्तरेष्वलिखनान्निर्मूलत्वमस्य। जङ्गमं स्थावरमिति प्रजापत्यस्य च सर्वत्र लिखनात्समूलत्वमिति दूषणमुक्त्वा तदुक्तव्यवस्थायाश्च स्वोत्प्रेक्षामात्रकल्पितत्वेनायुक्तत्वमभिधाय समूलत्वेऽपि स्थावरादिसमग्रधनग्रहणं ब्राह्मादिविवाहोढाविषयत्तद्वचनेषु पत्नीशब्दप्रयोगात्। स्थावरग्रहणप्रतिषेधकबृहस्पतिवचनन्तु जाया स्त्री शब्दमात्रप्रयोगादासुरादिविवाहोढाविषयमिति स्वयं व्यवस्था कृता। आसुरादिविवाहोढायाः पत्नीशब्देनाग्रहणाज्जायादिशब्दोपेतवचनानामपि तदेकमूलकतया तत्परत्वात् स्मृतिचन्द्रिकायामेव निरस्ता। यत्तु तदुक्तव्यवस्थायामौत्प्रेक्षिकत्वमुक्तं तदपि न दुहितृसत्वे तत् सन्तानद्वारेण स्थावरस्योपभोगधनस्वाम्युपकारयोः सम्भवाद्दुहितरमपि ग्राह्यं तद्रहितायास्तु तदभावान्न तद्ग्रहणमिति तत्रापि बीजसम्भवात्। अतएव पितुरपि स्थावरे स्वार्जितेऽपि पुत्रानुमतिमन्तरेणानधिकारः प्रागुक्तः। यत्तु गृहीतधनायाः पत्न्यास्तद्दानेन जीवनमात्रन्दानाधीकरणविक्रयेषु तु नाधिकार इति।

मृते भर्त्तरि भर्त्तंशं लभेत कुलपालिका।

यावज्जीवन्न हि स्वाम्यन्दानाधमनविक्रय इति।

कात्यायनवचनात्प्रतीयते। तदपि दृष्टार्थनटनर्त्तकादिदानास्वातन्त्र्यपरम्। अदृष्टार्थदाने तदुपयोगिनोराधीकरणविक्रयोश्च तेनैवाधिकाराभिधानात्।

व्रतोपवासनिरता ब्रह्मचर्य्ये व्यवस्थिता।

दमदानरता नित्यमपुत्त्रापि दिवं व्रजेदिति ॥

दिवं व्रजेदित्यनेन काम्येऽपि दानादौ तस्या अधिकारः प्रतीयते किमुत नित्ये नैमित्तिके च। जङ्गमं स्थावरं हेमेत्यादिपूर्व्वोदाहृत प्रजापतिवचनाच्च। तत्रापि पूर्व्वग्रहणात्काम्येष्वप्यधिकार आयातीति स्मृति चन्द्रिकाकारादयः। यच्चापरमपि कात्यायनवचनमेव।

अपुत्त्राशयनम्भर्त्तुः पालयन्ती गुरौ स्थिता।

भुञ्जीतामरणात्क्षान्ता दायादा ऊर्द्धमाप्नुयुरिति ॥

तत्र स्मृतिचन्द्रिकाकार आह। क्षान्ता। दायादकारित धन विनियोग प्रतिबन्धं सहमाना सत्यामरणाद्भुञ्जीतेत्यर्थः। इदञ्च रक्षणाभरणाद्यसमर्थेषु कार्य्यान्तरव्यग्रेषु श्वशुरादिषु पत्न्या यत् स्वयमेव स्वजीवनार्थमुपात्तमविभक्तं तद्विषयम्। विभक्त द्रव्यविषयत्वे मन्वादिपरिनिष्ठितार्थवाधापत्तेरिति। पौरस्त्यास्तु गुरौ श्वशुरादि समीपे स्थिता भर्त्तृधनं भुञ्जीतेव। न तु स्त्रीधनवद्यथेच्छन्दानाधानविक्रयादि कुर्व्वीत तस्या ऊर्द्धं दायादा दुहित्रादयस्तद्धनाधिकारिणो गृह्णीयुर्न्न तु ज्ञातयः। तेषां दुहित्रादिभ्यो जघन्यत्वात् तद्बाधकत्वानुपपत्तेः। पत्नी हि तेषां वाधिका। तदधिकार प्रागभाव प्रध्वंसयोरविशेषाद्बाधकाभावस्य तद्बाधानुपपत्तेः। नापि स्त्रीधनाधिकारिणो गृह्णीयुः। कात्यायनवचनेनैव स्त्रीधनाधिकारिणां वचनान्तरैरुक्तत्वात्पौनरुक्त्यापत्तेः। अतः पत्नी दुहितरश्चेत्यादिना ये पूर्वस्याभावे परभूताश्च अपुत्त्रा संसृष्टिविभक्त मृतधनाधिकारिणो निर्द्दिष्टास्ते यथा पत्न्यधिकार प्रागभावं गृह्णीयुस्तथा पत्न्या जाताधिकारायाः प्रध्वंसेऽपि

भोगावशिष्टं गृह्णीयुः। तदानीं दुहित्रादीनामेवान्यापेक्षया स्वतोपकारकत्वात्। दानधर्मेषु महाभारतवचनमप्येतदुपोद्बलकम्।

स्त्रीणां स्वपतिदायस्तु उपभोगफलः स्मृतः।
नापहारं स्त्रियः कुर्य्युः पतिवित्तात्कथञ्चनेति॥

उपभोगोऽपि न सूक्ष्मवस्त्रादिना। किन्तु पत्युरुपकाराय देहधारणमात्रोपयोग्युपभोगानुज्ञातम्। एवञ्च बृहस्पतिना पितृव्यगुरु दौहित्रानित्यादिना पितृव्यपदेन भर्तृसपिण्डोपलक्षणाद्दौहित्रपदेन तद्दुहितृ सन्तानोपलक्षणान्मातुल स्वस्रीयपदाभ्यान्तन्मातृकुलोपलक्षणात्तेभ्य एवार्थानुरूपं भर्तुः श्राद्धाद्यौर्द्ध्वदेहिकोपकारकं दद्यात्। न तु स्वपितृकुलसम्बन्धिभ्यस्तदनुमत्या तु तेभ्योऽपि। तथा च नारदः।

मृते भर्त्तर्य्यपुत्त्रायाः पतिपक्षः प्रभुः स्त्रियाः।
विनियोगेषु रक्षासु भरणेषु स ईश्वरः॥
परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रिया इति॥

सम्मुखमेव वचनार्थमादाय नास्त्येव स्त्रिया भर्तृरिक्थे दानविक्रयाद्यधिकार इत्याहुः। तत्रेदं वाच्यम्। किन्तस्य तया कृतेऽपि दानादौ तत्स्वरूपानिष्पत्तिरेव। न तावदेकं युक्तम्। मन्वादिवचनैः सकलभर्तृधनग्रहणे तस्या उक्ते सति तस्यास्तत्र स्वत्वे दानादिस्वरूपानिष्पत्तेर्बाधितत्वात्। अतएव जीमूतवाहनेनैव स्थावरस्य समस्तस्य। विभक्ता वाऽविभक्ता वा स्थावरं द्विपदञ्चैवेत्यादीनि स्थावरविषयाणि दानादिनिषेधवचनान्युपन्यस्याधर्मभागितज्ञापनार्थमेतानि दुर्वृत्तं

पुरुषं प्रति कुटुम्बदुःखदानार्थमेव दानक्रियादि प्रवृत्तं प्रतिषेधकानि न तु दानादिस्वरूपानिष्पत्तिप्रतिपादकानि। यथेष्ट विनियोगार्हत्व लक्षणस्वत्वस्य द्रव्यान्तरइव स्थिरेऽप्यविशेषाद्वचन शतेनापि वस्तुनोऽन्यथाकरणाशक्त्या तत्प्रतिपादनानुपपत्तेरिति निरूपितम्। तदुक्तरीत्यात्रापि दुर्वृत्ततया दायादःदुःखदानार्थमेव भर्तृरिक्थदानादि प्रवृत्ताया अस्तु प्रतिषेधातिक्रमादधर्मः। धर्मार्थन्दान प्रवृत्तायाः स्वजीवनाद्यर्थं विक्रयाधाने कुर्वन्त्याश्च नास्त्येवाधर्मोऽपि। नच भुञ्जीतैवेति नियमाद्दायादा ऊर्द्ध्वमाप्नुयुरित्यभिधानाच्च दानाद्यनधिकारएव तस्या अविभक्तधनइव तत्रेति वाच्यम्। साधारणस्वत्वाश्रया विभक्तधनेनासाधारण स्वत्वाश्रयस्यास्य वैषम्यात्। नच स्वभोगस्य प्राप्तत्वेनाविधेयत्वाद्दानादि परिसङ्ख्यार्थएव विधिस्तथा चानधिकारस्तत्रागत एवेति वाच्यम्। वस्त्वन्यथाकरणाशक्तेर्नियमस्य वृथा दानादिना द्रव्यनाशनिवृत्त्यर्थतयैवोपपत्तेरवश्यवाच्यत्वात्। अन्यथाऽनधिकारे दमदानरता पूजयेत्कव्यपूर्त्ताभ्यामित्यनेन दानविधिना विरोधोऽपरिहार्य्यः। यच्च दायादाः पत्न्यनन्तराधिकारिणः पत्नी दुहितर इत्यत्र निर्दिष्टास्ते गृह्णीयुः प्रागभाव प्रध्वंसयोः प्रतिबन्धक पत्न्यभावत्वस्याविशेषात्तदधिकारोद्भवादित्युक्तन्तदति स्थवीयः। दायादपदेन स्त्रीधनाधिकारिग्रहणे यथावचनान्तरोक्तत्वात् पौनरुक्त्यः तथा तेषामपि कात्यायनेन वचनान्तरोक्तत्वात्पौनरुक्त्याऽविशेषात्। वस्तुतस्तु जातस्वत्वे स्वामिनि मृते तत्प्रत्यासन्नानामेव तद्धनग्रहणमुचितम्। पत्न्यादिशब्दानां सम्बन्धशब्दत्वेन द्रव्यस्वामित्वे पत्न्या उपजाते पूर्वस्वामिदुहित्रादीनाङ्ग

प्रसङ्गः। तेन यद्यपि पूर्वाभावः प्रागभावः प्रध्वंसश्चात्यन्ताभावश्च प्रतिबन्धकसंसर्गाभाव उभयाभावश्च तुल्यस्तथापि यो द्रव्यस्वामी तस्मिन् मृते तत्सम्बन्धि पत्न्यादिकमपुत्त्रस्य तस्य धनं लभेतेत्येव वाक्यार्थः। अन्यथा दुहित्रादिभिरपुत्त्र पितृधने लब्धे तन्मरणे तत्सन्तत्यतिलङ्घनेन तद्धनं पूर्वस्वामिनः पितुर्ये पित्रादयस्तएव लभेरन्निति महत्यव्यवस्था प्रसज्येत। तस्माद्भर्त्तृरिक्थं पत्न्या लब्धन्तस्यां मृतायां तद्भोगावशिष्ट मातुर्दुहितर इत्यादि वचनाद्दुहित्रादि ग्राह्यत्वेन प्रसक्ता दायादा ऊर्द्ध्वमाप्नुयुरित्यनेनापोद्यते। अयञ्च वचनार्थः। दायादा इत्यत्र कस्येत्यपेक्षायां शयनान्वितभर्त्तुरित्येवोपस्थितत्वादनुपज्यते। तथा चैवं वचनव्यक्तिः तस्या ऊर्द्ध्वम्भर्त्तुर्दायादा अविभक्तातद्धनाधिकारिणो विभक्तभ्रातृधनमपि तत्पत्नी भोग्यावशिष्टं गृह्णीयुर्न पत्नीरिक्थहरा दुहित्रादय इति एवञ्चापूर्वार्थत्वाच्चतुर्थचरणस्यार्थवत्त्वं भवति अन्यमते वचनान्तरोक्तार्थानुवादमात्रमनर्थकं स्यात्तस्माददृष्टार्थे दाने दृष्टादृष्टावश्यककार्य्यार्थमाधौ विक्रये चास्येव पत्न्याः सकलभर्त्तृधनविषयोऽधिकारः नियमस्तु नटनर्त्तकादि दानानावश्यकाधिविक्रयनिवृत्त्यर्थ इति सिद्धम्। अतएव चान्तेत्युक्तम्। द्रव्यं प्राप्नुसित्का वृथा द्रव्यव्ययकारिणी न भवेदित्यर्थः। दानधर्मस्थं महाभारतवचनन्तु सुतरामस्मदुक्तमेवार्थमुपोद्बलयति।

तथा हि स्त्रीणां स्मृतिदायः स्वभर्त्तृरिक्थमुपभोग फलः।

उपभोगो धर्मप्रत्यासन्नो भोगो नत्वसद्भोगः फलम्प्रयोजनं यस्य तादृशः स्मृत उक्तो मन्वादिभिः। उत्तरार्द्धं तदेव व्यनक्ति। स्त्रियः पतिवित्तादपहारं वृथा व्ययं न कुर्य्युः।

कथञ्चनेत्यनेनावहारस्य सर्वथैवास्पैरस्वरतामाह । अपहारो हि चौर्य्यम् । नट नर्त्तकादौ ह्रयादानम् । स्वस्थावस्थादि परिधित्सामिष्टभक्ष्यादि बुभुक्षेत्येवमाद्यपि संयताया अनौचित्याच्चौर्य्यतुल्यमित्यपहारशब्दो गौणः । धर्मार्थ्यर्थदानादिकन्तु न तथेति नापहारशब्देन बोधयितुं शक्यते । तस्मात्सर्वं सुस्थम् । पत्या अपुत्त्रविभक्ता संसृष्टि पतिस्वापतेय ग्रहणे प्रथमाधिकार प्रतिपादकान्यपराण्यपि भूयांसि स्मृतिवचनानि तत्र बृहस्पतिः ।

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा ॥
यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति ।
जीवत्यर्द्ध शरीरेऽर्थं कथमन्यः समाप्नुयात् ॥
सकुल्यैर्विद्यमानैस्तु पितृ मातृ सनाभिभिः ।
अपुत्त्रस्य प्रमीतस्य पत्नी तद्भागहारिणीति ॥

योगीश्वरोऽपि पूर्वाभावेऽपराधिकारं वदन् सर्वप्राथम्येन पत्न्या एवाधिकारमभिधत्ते । विष्णुरपि । अपुत्त्रस्य धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे भ्रातृगामि तदभावे भ्रातृपुत्त्रगामि तदभावे बन्धुगामि तदभावे सकुल्यगामि तदभावे शिष्यगामि तदभावे सहाध्यायिगामि तदभावे ब्राह्मणधनवर्ज्जं राजगामीति । बन्धुरत्र सपिण्डः सकुल्यः सगोत्रः । बन्धुपदेन वक्ष्यमाण पितृबन्ध्वादि ग्रहणे योगीश्वरोक्त क्रमविरोधापत्तेः । कात्यायनोऽपि । पत्नी पत्युर्द्धनहरी या स्यादव्यभिचारिणी ।

तदभावे तु दुहिता यद्यनूढा भवेत्तदा ॥

स्मृत्यन्तरमपि। अपुत्त्रस्याथ कुलजा पत्नी दुहितरोऽपि वा।
तदभावे पिता माता भ्राता पुत्त्राश्च कीर्त्तिता इति॥

एतैर्वचनैः सर्वतः पूर्व्वम्पत्नी पतिधनभागिनीति प्रतिपादितम्। एतद्विरुद्धान्यपि वचनानि लक्ष्यन्ते। तथा च नारदः।

भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा।
विभजेरन्धनन्तस्य शेषास्ते स्त्रीधनं विना॥
भरणञ्चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात्।
रक्षन्ति शय्याम्भर्त्तुश्चेदाच्छिन्द्युरितरासु त्विति॥

पत्नीसद्भावेऽपि भ्रातॄणान्धनग्रहणम्भरणञ्च तत्पत्नीनामाह। मनुरपि। पिताहरेदपुत्त्रस्य रिक्थं भ्रातर एव चेति।

पितृभ्रात्रोर्विकल्पेनापुत्त्रधनग्रहणाधिकारं वदति न तु पत्न्याः।

अनपत्यस्य पुत्त्रस्य माता दायमवाप्नुयात्।
भ्रातर्य्यपि च वृत्तायां पितुर्म्माताहरेद्धनमिति च॥

स्मृतिर्मातृ पितामह्योरपुत्त्रधनाधिकारमभिदधाति। शङ्खलिखितपैठीनसियमोऽपि। अपुत्त्रस्य स्वर्य्यातस्य भ्रातृगामिद्रव्यन्तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नीति भ्रातुः पित्रोश्चाभावे पत्न्यधिकारं कथयन्ति। देवलोऽपि।

ततो दायमपुत्त्रस्य विभजेयुः सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा॥
सवर्णा भ्रातरो माता भार्य्या चेति यथा क्रममिति।

सर्व्वपूर्व्वाभावेन योगीश्वरेणाभिहितायाः पत्न्या भ्रात्राद्यभावेऽधिकारमाचष्टे भ्रातृशब्देनात्र भिन्नोदराः। सहोदराणां पृथगुपादानात्। कात्यायनोऽपि।

विभक्ते संस्थिते द्रव्यं पुत्त्राभावे पिता हरेत्।
भ्राता वा जननी वाथ माता वा तत्पितु: क्रमादिति॥

पित्रादिषु ग्राहकेषु पत्न्या निर्द्देशमपि न करोति। एतेषामन्योन्यविरुद्धानां वचनानान्धारेश्वर इत्थं व्यवस्थामाह। विभक्ता संसृष्ट भ्रातुरपुत्त्रस्य पत्नी यदि नियोगमङ्गीकुरुते तदैव पतिधनं लभते। अनियोगार्थिन्यान्तु तस्यामविरक्त संसृष्ट पत्नीवद्भरणमात्रमेव नियोगद्वारैवा पुत्त्रपत्न्या: पतिस्वापतेय स्वामित्वञ्च च वीजमनेक स्मृतिष्वपत्यद्वारैव तस्या धनसम्बन्ध बोधनम्। तथा च गौतम:। पिण्डगोत्रर्षिसम्बन्धा रिक्थम्भजेरन् स्त्री वानपत्यस्य वीजं वा लिप्सेतेति। अनपत्यस्य रिक्थम्पिण्डगोत्रर्षि सम्बन्धा भजेरन्तस्य स्त्री वा रिक्थम्भजेत्। यदि वीजं लिप्सेत। वा शब्दो यदिशब्दार्थोऽन्यथा रिक्थग्रहणवीज लिप्सयोस्तुल्यत्वेन विकल्पार्हत्वानुपपत्ते:। तथा मनुरपि।

धनं यो विभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा।
सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनमिति॥

विभक्त धनसम्बन्धमप्यपत्यद्वारेणैव पत्न्या दर्शयति। तथा विभागाभावेऽपि।

कनीयान् ज्येष्ठभार्य्यायां पुत्त्रमुत्पादयेद्यदि।
समस्तत्र विभाग: स्यादिति धर्मो व्यवस्थित इति॥

वदन्नपत्यद्वारा धनसम्बन्धोऽस्तीत्याह। तेनान्वय व्यतिरेकाभ्यामपत्य द्वारकएव पत्न्या धनसम्बन्धो नान्यथेति सिद्धम्। वशिष्ठोऽपि। रिक्थलोभान्नास्ति नियोग इति रिक्थलोभप्रयुक्तं नियोगं प्रतिषेधन्नङ्गीकृत नियोगाया एव धनसम्बन्धो

नेतरस्या इति स्पष्टमेवाचष्टे। तथा च भ्रातृणामप्रजा इत्यादीनि नारदादिवचनान्यनियोगार्थिनी विषयाणि पर्य्यवस्यन्ति।

अपुत्त्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव चेति॥

योगीश्वरोऽप्य पुत्त्राणामन्धादि योषिताम्भरणं भाषमाणः पुत्त्रस्यैव धनसम्बन्ध प्राधान्यात्तत्कृतएव तत् स्त्रीणां धनसम्बन्ध इति सूचयन्न्याय साम्यात् तत्सर्वत्रापत्यमूलकमेव स्त्रीणां रिक्थग्रहणं ज्ञापयति।

यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये।
अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजना इति स्मृतिः॥

पुरुषाणामपि पुत्त्रादीनां यज्ञानधिकृतानां रिक्थानधिकारं वदन्तो दण्डापूपन्यायेन सुतरामभर्तृकाणान्तदनधिकारिणीनां धनसम्बन्धं निरस्यति। तथा स्मृत्यन्तरमपि।

यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्।
स्थानेषु धर्मयुक्तेषु न स्त्रीमूर्खविधर्मिष्विति॥

स्त्र्यादिषु धनविनियोगमपि प्रतिषेधत्साद्याच्चस्याएव क्रत्स्नधनग्रहणं सुदूरं दूषयतीति। तदिदं विज्ञानेश्वरादयो नानुमन्यन्ते पत्नी दुहितर इत्यादिषु साक्षान्नियोगानुपादानात्। प्रस्तावाभावाच्च। किञ्च नियोगएवपत्न्या रिक्थसम्बन्ध प्रयोजकस्तदुत्पन्नमपत्यं वा। प्रथमेऽनुत्पादितपुत्राया अपि स्वीकृत नियोगाया धनाधिकारः स्यान्नियोगोत्पन्न पुत्त्रस्य च न स्यान्नियोगमात्रेणैव भर्त्तृधनस्वाम्यात्। द्वितीये वचनान्तरैरेवापत्यस्य धनसम्बन्धसिद्धेः पत्नीवचनमनर्थकम्।

अथ स्त्रीणां पतिमात्रद्वारको धनसम्बन्धो न प्रकारान्तरेणा-जीवति पत्यौ तद्द्वारको मृते त्वपत्य द्वारक इति बोधनार्थं नियोगार्थिनी पत्नीपरम्पत्नी वचनमितिमतम्। तदंसत्। अध्यग्न्यध्यावहनिकमित्यादि वक्ष्यमाणवचनैरन्यथा पितास्वान्धनसम्बन्ध बोधनात्। भर्त्तृधने हेधैव सम्बन्धो नियम्यत इति चेत्। तर्हि जीवति पत्यौ तद्धनसम्बन्धस्य पाणिग्रहणाद्धि सहत्वमित्यादि गौतमवचनेनैव सिद्धेर्मृते तु तस्मिन्नियोग-निमित्ततद्धनसम्बन्ध उच्यमानः क्षेत्रजपुत्रस्यैवोक्तो भवति सोऽपि प्रायुक्त इत्यपुत्रप्रकरणे पत्नीत्यनारभ्यमेव। यच्च गौतम-वचनं वीजं वा लिप्सेतेति यदि वीजं लिप्सेतेत्यर्थकतया नियोगद्वारकएव धनसम्बन्धोऽपुत्रपत्न्या इत्यत्र प्रमाणमित्युक्तं तदप्ययुक्तम्। वा शब्दस्य पक्षान्तर वाचित्वेन यद्यर्थाप्रतीतेः। धनग्रहणवीज लिप्सयोरतुल्यार्थतया विकल्पार्थकत्वासम्भवे निपातानामनेकार्थत्वात्प्रकृतान्वयोपयोगी यद्यर्थएव कल्प्यत इति चेत्। न वीजं वा लिप्सेत संयता वा भवेदिति प्रास-ङ्गिक धर्मान्तरो यद्देशरूपतया विकल्पार्थकताया एव सम्भ-वात्। तथा च गौतमवचसापि नियोग निरपेक्षमेव भर्त्तृरि-क्थग्रहणमुक्तम्भवति। किञ्च विधवानियोगस्य निषिद्धत्वाद-पुत्रायशयनं भर्त्तुः पालयन्तीत्यादि मन्वादिवचनैः संयताया एव धनाधिकार प्रतिपादनान्निर्वासया व्यभिचारिण्य इत्यादिना भरणमात्रस्याप्यसंयतानामभावात्कृत्स्न भर्तृरिक्थग्रहणं दूरा-पास्तमेव। यच्चाभिहितं धनं यो विभृयाद्भ्रातुः कनीयान् ज्येष्ठ-भार्यायां रिक्थलोभान्नास्ति नियोग इति मन्वादिवचनैर्वि-भक्ताविभक्त धनसम्बन्धोऽन्वय व्यतिरेकाभ्यामपत्य द्वारकएव

पत्या आयातीति। तदपिवार्त्तम्। अविभक्ते संसृष्टिनि वा-भर्त्तरि प्रेते पुत्रद्वारकएव तस्यास्तद्धनसम्बन्धेति। धनलोभेन नियोगो नाभ्युपेय इति। तत्तात्पर्य्यात्। अतएव।

संसृष्टानान्तु यो भागः स तस्या नेष्यते बुधैरिति। अभिधाय तत् स्त्रीणामनपत्यानाम्भरणमात्रं नारदेन प्रतिपादितम्। न चैवं भ्रातॄणामप्रजाः प्रेयादित्यस्यापि संसृष्टाविभक्तविषयत्वे संसृष्टानान्तु भागइत्यनेन पौनरुक्त्यं स्यादिति वाच्यम्। तदंश-विवरणपूर्वकंस्त्री धनाविभाज्यत्व तद्भरणयोरपूर्वयोर्विधानात्। यत्त्व पुत्रा योषितश्चैषामिति योगीश्वरवचनं तत्तु क्लीवादीनां प्रक्रान्तानामेषामिति सर्वनाम्ना परामर्षात्तत् स्त्रीविषयमिति विभागानधिकारि निरूपणप्रस्तावे वच्यते। यदपि द्विजाति-धनस्य यज्ञार्थत्वात्तदनधिकारिण्या प्रमीतपतिकया तद्ग्रहणम-नर्हमित्युक्तन्तदप्ययुक्तं यज्ञशब्दस्य दानाद्युपलक्षकत्वात्तत्र च तस्या अप्यधिकारात्। यथा श्रुते यज्ञभिन्नदानहोमादिष्व-प्यविनियोगप्रसङ्गः। वस्तुतस्तु केवलधर्मार्थत्वमपि धनस्य नास्ति।

धर्ममर्थञ्च कामञ्च यथाशक्ति न हापयेत्।

तथा पूर्व्वाह्ण मध्यन्दिनापराह्णानफलान्नकुर्य्याद्धर्मार्थ कामेभ्य इत्यादिभिरर्थ कामयोरपि तत्साध्ययोरावश्यकत्वात्। यज्ञार्थत्वञ्च द्रव्यस्य यदि स्याद्धिरण्यधारणस्य क्रत्वव्यभिचारि हिरण्यसम्बन्धेन क्रत्वर्थतैव स्यादिति पुरुषार्थत्वं यत्तस्य स्यापि-तन्तत्रैव विरुध्येत। न स्त्री स्वातन्त्र्यमर्हतीत्यादि वचनात्-पारतन्त्र्यमात्रमस्तु स्त्रियाः न तु धनग्रहणे कोऽपि विरोधः। यज्ञार्थन्द्रव्यमुत्पन्नमिति तु धर्मविनियोगप्रशंसार्थम्। अतएव

स्थानेषु धर्मयुक्तेषु न स्त्रीमूर्खविधर्मिष्विति।

वाक्यशेषः। मिताक्षराकृतस्तु।

यत्नार्थं लब्धमददन्नासः काकोऽपि वा भवेदिति।

दोषश्रवणस्य पुत्रादिष्वप्यविशेषेण पिता यद्यत्नार्थमर्जितं तत्पुत्रादिभिरपि तत्रैव विनियोज्यं नान्यत्रेत्येवं परमेतदित्याह। श्रीकरादयस्तु। भार्य्या भरणमात्रपर्य्याप्तं यदि भर्तृधनन्तदा सर्वमेव गृह्णाति। अतिरिक्तश्चेद्भ्रात्रादय इति विषय व्यवस्थामाह। कृत्स्नमंशं लभेत चेत्येतदपि तत्परमेव। वर्त्तनदानस्यावश्यकत्वात्॥ तेन सर्ववाक्यानामविरोध इति च तत्रोपपत्तिङ्कल्पयन्ति। वार्त्तमेतत्। सकृच्छ्रुतधनपदस्य पत्न्यपेक्षजीवनपर्य्याप्तधनपरत्वं भ्रात्राद्यपेक्षञ्च धनमात्र परत्वमिति तात्पर्य्यभेदस्य सति साहूप्यसम्भवेऽन्याय्यत्वात्। मनुवचने कृत्स्नपदवैयर्थ्यापातात्किञ्च। सत्स्वप्यौरसेषु पुत्रेषु तत्समांशग्रहणं जीवदजीवद्विभागयोरुक्तं।

यदि कुर्य्यात्समानंशान् पत्न्यः कार्य्याः समांशिकाः।

पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेत्॥

इत्याभ्यां वचनाभ्याम्। असत्सु पुत्रेषु पत्नीभरणमात्रं लभत इति महान् व्यामोहः। तत्रापि जीवनपर्य्याप्तमेवांशशब्दो न विवक्षितमिति चेन्न। अंशशब्द समशब्दयोरानर्थक्य प्रसङ्गात्। दत्ते त्वर्द्धं प्रकल्पयेदित्यत्रापि जीवनोपयुक्त परत्वावश्यम्भावे सर्वथार्द्ध पदार्थत्यागापत्तेश्च। अल्पधने पुत्र समांशं बहुधने जीवनोपयुक्तमात्रं विवक्षितमिति तु विधिवैषम्यापत्तेरत्ययुक्तम्। तथाहि। तावेव समांशशब्दौ वाक्यान्तरमपेक्ष्य बहुधने जीवनमात्र पर्य्याप्त धनपरौ कदाचित्। अल्पधने तु

यथा श्रुतार्थकाविव्येकस्मिन्विधौ वाक्यार्थभेदेन वाक्यभेदापत्ते रयुक्तम्। युगपच्छक्तिलक्षणावृत्तिद्वयापातश्च।

यथा चातुर्मास्य प्रकरणे द्वयोः प्रणयन्तीति वाक्येन पूर्वपक्षिणा सौमिक प्रणयनातिदेश उत्तरवेदि मुपकिरन्ति न सुनासीरीय इत्युत्तरवेदि प्रतिषेधेऽप्राप्तस्य प्रतिषेधायोगाद्धेतुत्वेनोक्तेराद्धान्तैकदेशिना नातिदेश प्राप्तायाः सौमिकोत्तर वेदेरयं प्रतिषेधः किन्तू पात्र वपन्तीति प्राकरणिकवचन प्राप्ताया इत्युपन्यस्ते प्राकरणिकं वचनं प्रथमोत्तमयोः पर्वणोः प्रतिषेधमपेक्ष्य पाक्षिकीं प्रापयति मध्यमयोस्तु निष्प्रतिपक्ष मेव पाक्षिकामुत्तरवेदेः प्राप्तिं करोतीति विधिवैषम्यप्रसङ्गेन पूर्वपक्षिणा तन्मते दूषिते परमसिद्धान्तिना पूर्वपक्ष्युक्त विधिवैषम्य भयादेव प्रथमोत्तमयोः पर्वणोरप्राप्त प्रतिषेधायोगान्न वैश्वदेव इत्ययं नित्यानुवादः उपात्र वपन्तीति तु द्वयोः प्रणयन्तीत्याद्यर्थवादसहकृतं मध्यमयोरेव वरुण प्रघाससाकमेधपर्वणोरुत्तरवेदिं विधत्ते न तु वचनातिदेशोऽयमिति प्रतिपादितम्। अत्र कश्चिदाह। भ्रातृणामपुत्रधन ग्राहित्वन्भरणं वास्य कुर्वीरन् स्त्रीणामाजीवनक्षयादिति भरणोपयुक्तधनदानञ्च तत् स्त्रीणामुक्तं यदा भरणमात्रोपयुक्तमेवापुत्त्रधनं ततोऽपिन्यूनं वा। तदापिकिं भ्रातर एव गृह्णन्ति पत्नी वेतिविरोधे पत्न्या एवधनग्रहणं पत्नी दुहितर इत्यादिना पूर्व पत्नी स्वत्वज्ञापनयोच्यत इति। तदपि मन्दम्। पूर्वोक्तविधि वैषम्यस्यात्रापि तादवस्थ्यात्। धनभागिति पदं वाक्यान्तरमपेक्ष्याल्पधने जीवनमात्रपर्य्याप्तधन भाक्त्वं पत्नी विषये वदति पित्रादिषु तु सकलधन भाक्त्वमिति। कथन्तर्हि विरोध

परिहार इति चेत्। शृणु। पिता हरेदित्यादिषु क्रमाप्रतीतेरपुत्रधनग्रहणाधिकार मात्र प्रदर्शकानि तानि। योगीश्वर वचसि त्वेषामभावे पूर्वस्य धनभागुत्तरोत्तर इति क्रमपरत्वात्पत्न्यादिगणस्य निबद्ध क्रमस्याभावेऽपि तेषामर्थाविरोधात्पत्न्याद्यभावे पित्रादयोऽपुत्त्रधनग्राहिण इति। शङ्कित व्यभिचारायास्तु पत्न्याः हारीतेन धनग्रहणं निषिद्धम्।

विधवा यौवनस्था चेन्नारी भवति कर्कशा।
आयुषः क्षयणार्थं तु दातव्यञ्जीवनन्तदेति॥

अस्मादेव वचनादनाशङ्कितव्यभिचारायाः सकलभर्त्तृधन ग्रहणङ्गम्यते। अत एव शङ्खवचने ज्येष्ठा वा पत्नीत्युक्तं ज्येष्ठा गुणैः प्रशस्या। न तु वयोज्येष्ठा। मनुनापि वर्णक्रमेण ज्यैष्ठ्यं कथितम्। यदाह।

यदि स्वाश्च पराश्चैव विन्देरन्योषितो द्विजाः।
तासां वर्णक्रमेणैव ज्यैष्ठ्यं पूजा च वेश्म चेति॥

अतः परिणयनवयोभ्यां कनिष्ठापि सवर्णा वा सवर्णातो-ज्येष्ठा सवर्णास्वपि गुणवती। तथा च मनुः।

भर्त्तुः शरीरशुश्रूषां धर्मकार्यञ्च नैत्यकम्।
स्वा चैव कुर्यात्सर्वेषान्नास्वजातिः कथञ्चन॥
यस्तु तत्कारयेन्मोहात् सजात्या स्थितयाऽन्यया।
यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः॥

योगीश्वरोऽपि। सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा।

तथा च यज्ञसंयोगात्पत्नी शब्देनापि सैवोच्यते॥ सवर्णाया अभावेतु याऽनन्तरवर्णा सैव।

तथा च विष्णुः। सवर्णाभावे त्वनन्तरैवापदि नत्वेव द्विजः

शूद्राया धर्मकार्यमिति। अत्र कुर्य्यादित्यनुवर्त्तते। तथा च ब्राह्मणस्य ब्राह्मण्यभावे क्षत्रियैवापदि न तु वैश्या शूद्रे परिणीते अपि। क्षत्रियस्य क्षत्रियाया अभावे वैश्यैव। वैश्यस्यानन्तरापि शूद्रा न किन्तु स्वैव। शूद्रायाः सर्वथा निषेधात्। तथा चानाशङ्कितव्यभिचारावर्णक्रमेण भर्त्तृधनङ्गृहीत्वान्याः सपत्नीः परिपालयेत्। वपुःसादृश्यस्तु यथा स्वं विभज्य गृह्णीयुः। अतः पत्नीत्येकवचनं ज्यात्यभिप्रायेण॥

तस्मादपुत्रस्यासंसृष्टिनो विभक्तस्य प्रमीतस्य साध्वीभार्य्या कृत्स्नधनाधिकारिणी विभक्तसंसृष्टिनोरपुत्रयोः साध्वापि भरणमात्रं भ्रातॄणामप्रजा इत्यादि नारदादिवचनाल्लभते व्यभिचारिणी तु भरणमपि न। आच्छिन्द्युरितरास्त्वित्यभिधानात्। यत्तु व्यभिचारिणीनामप्यशनवसनदानमुक्तम्।

एवमेव विधं कुर्य्याद्योषित्सु पतितास्वपि।

वस्त्रान्नमासां देयन्तु वसेयुश्च गृहान्तिके इति॥

तत्तु। हृताधिकारां मलिनाम्पिण्डमात्रोपजीविनीम्।

परिभूतामधःशय्यां वासयेद्व्यभिचारिणीमिति।

भर्त्तारं प्रस्तुत्य योगीश्वरेणाभिधानात्तदविसंवादेन भर्त्तृविषयकम्। तदपि प्रायश्चित्तावधि। अत्यौद्धत्यात्तद कुर्वन्तीनां त्वनेनापि निष्कासनमित्यादि प्रायश्चित्तप्रकारो विवेक्ष्यामः। पत्नी दुहितर इत्यस्य विभक्तासंसृष्टिविषयत्वं विभागस्य पूर्वमुक्तत्वात् संसृष्टिविभागस्य च सर्वापवादेनाग्रे वक्ष्यमाणत्वादर्थाद्व्यवतिष्ठत इति विज्ञानेश्वर लक्ष्मीधरस्मृतिचन्द्रिकाकार विश्वरूप मेधातिथि मदनरत्न कारादीनां भूयसां संमतम्।

अपुत्त्रतरं पत्नीत्यादिषु श्रूयमाणं पौत्त्रप्रपौत्त्राभावो-पलक्षणम्। प्रपौत्त्रपर्यन्ताभाव एव पत्न्या धनग्रहणौचि-त्यात् पुत्त्र पौत्त्रै ऋणं देयमिति वचने पौत्त्रस्यापि ऋण-दानेऽधिकाराभिधानाद्रिक्थग्राहकान्तरसत्वे ऋक्थग्राह ऋणा-न्दाप्य इति वचनात् तस्यैवर्णदानाधिकारे सत्यपि पौत्त्रे तं प्रति तद्विधानासम्भवाद्गोत्रजत्वादिना ऋक्थग्रहणे रिक्थ-ग्राह इत्येतेनैव तस्यापि तत्सिद्धे वैयर्थ्यं पौत्त्रविधेरतः पौत्त्रेण पितामह ऋक्थाग्रहणेऽपि पुत्र वद्दयान्देयमित्युक्ते दण्डापूपि-कया सति तद्रिक्थेऽन्यस्य तद्ग्रहणाधिकारो दूरनिरस्तः। एव एव प्रपौत्रेऽपि न्यायः। अतएव प्रपौत्र संग्रहार्थं पुत्त्र पौत्रयो रिति बहुवचन मितरथा द्वि वचनं व्यक्त्यभिप्रायकं बहुवचन-मिति वा कल्प्यं स्यात्। एवञ्चायमर्थः। पुत्त्रश्च पौत्रश्च पुत्रस्य पौत्रः पुत्रपौत्रः सचेति षष्ठीतत्पुरुषोत्तरमाह कपुत्त्रपौत्र-पदे पुत्रश्च पौत्त्रश्च ताविति द्वन्द्वे पुत्त्रपौत्त्रौ च पुत्र पौत्त्रश्चेति द्वन्द्व तत् पुरुषरूप पुत्र पौत्त्रपदे सरूपैकशेषे बहुवचनो-पपत्तिः। पुत्र पौत्त्र प्रपौत्रैरिति। यावत्। पौत्त्रपदं प्रपौ-त्त्रोपलक्षणं वा। पुत्रापेक्षया पौत्रस्य तदपेक्षया प्रपौत्रस्य ऋणदाने विशेष प्रकारविधिरप्यत एव सङ्गच्छते। अन्यथा प्रपौत्त्रे विशिष्टविधि कल्पनापत्तिः। त्रयाणान्तु त्वोपकारि-त्वञ्च पार्वणविधिना पिण्डदानेनास्पष्टम्। तथा च मनुः।

त्रयाणामुदकङ्कार्य्यन्त्रिषु पिण्डः प्रवर्त्तते।
चतुर्थः सं प्रदातैषां पञ्चमो नोपपद्यते॥

बौधायनोऽपि। पुत्त्र पौत्र प्रपौत्रा नत्तु कस्याह प्रपितामहः पितामहः पिता स्वयं सोदर्य्या भ्रातरः सवर्णायाः पुत्त्रः प्रपौत्र

एतानविभक्तदायादान् सपिण्डानाचक्षते। विभक्तदायादांश्च सकुल्यानाचक्षते। सुतस्वङ्गजेषु तन्नामी ह्यर्थो भवतीति अस्यार्थः। पित्रादि पिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात्पुत्रादिनिस्तत्पिण्डस्यैव दानात्। यो हि जीवन् पिण्डदाता स मृतः सन् सपिण्डनेन तत्पिण्डभोक्ता। एवं मध्यस्थितः पुरुषो जीवन् पूर्वेषां पिण्डदाता मृतश्च तत्पिण्डभोक्ता परेषाञ्जीवतां पिण्ड संप्रदाननं मृतैश्च तैः सह दौहित्रादिदेय पिण्डभोक्ता अतो येषामयं पिण्डदाता ये वा तद्दत्त पिण्डभोक्तारस्तेऽविभक्तं पिण्डरूपं दायमश्नन्तीत्यविभक्त दायादाः सपिण्डा एकपिण्डसम्बन्धात्पञ्चमस्य तु पूर्वस्य मध्यमः पञ्चमो न पिण्डदाता न च तत्पिण्डभोक्ता एवमवस्तनोऽपि पञ्चमो नमध्यमस्य न पिण्डदाता नापि तद्भोक्ता। एतेन वृद्ध प्रपितामहात् प्रभृति पूर्व पुरुषास्त्रयः प्रति प्रणप्तृप्रभृत्यधस्तन पुरुषास्त्रय एकपिण्डभोक्तृत्वाभावाद्विभक्ता दायादाः पञ्चम प्रभृतय उभयतः सकुल्या इत्याचक्षते मुनिः कुलमात्र सम्बन्धात्। इदं सपिण्डत्वं सकुल्यत्वं दायग्रहणोपयोगित्वेनोक्तं तत्प्रकरण पाठात्।

अशौच विवाहाद्यर्थन्तु पिण्डलेपभुजामपि।
लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः॥

पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्त पौरुषमिति॥ स्मरणात्।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तत इति च।

पञ्चमात् सप्तमादूर्ध्वं मातृतः पितृतस्तथेति। योगीश्वर वाक्यैक वाक्यता।

सप्तमे पुरुषे स्त्रियाऽष्टमे विनिवर्त्तत वा इति व्याख्येयम्। तेन यथा प्रत्तानान्तु स्त्रीणान्त्रिपुरुषं विज्ञाय तद्वत्या शौच

प्रकरणपठितं तन्मात्रोपयोगित्रिपुरुषं सापिण्ड्यं तथेदं विभागमात्रोपयोगीति ध्येयम्। कात्यायनस्तु स्पष्टमेव। पुत्र पौत्र प्रपौत्राणां धनग्रहणमाह।

अविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनम्।
कुर्वीत जीवनं येन लब्धं नैव पितामहात्॥
लभेतांशं स पित्र्यन्तु पितृव्यात्तस्य वा सुतात्।
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत्॥
लभेत तत् सुतो वापि निवृत्तिः परतो भवेत्।

इति प्रपौत्रानन्तरमुक्तो यः प्रणप्तृ प्रभृत्यनधिकारः स सपिण्डत्वेन ध्येयः। सकुल्यत्वेन त्वस्त्येव यथा प्रत्यासत्तिः। भ्रातॄणामेक जातानामित्यादि तु दायातिरिक्त श्राद्धादिपुत्रकार्य्यकारित्वपरं भ्रातृपुत्रस्य पुत्रीकरण सम्भवेनान्यः पुत्रीकरणीय इति नियमार्थम् अन्यथा भ्रातृ पुत्रस्य भ्रात्रनन्तरमभिधानमपुत्र रिक्थहार्य्यभिधायके वाक्ये क्रमपरे न सङ्गच्छेत। पुत्रादीनान्त्वयाणाम्पित्रादि त्रिकमहोपकार कारित्वात् पुत्रादिभिर्गृहीतं धनं स्वामिन एवोपकारक मुपकार प्रत्यासत्त्या तदीयमेव। उपकारप्रत्यासत्तिश्चाभ्यर्हिता। यथाह।

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।
पितॄणा मनृणश्चैव स तस्माल्लब्धुमर्हति॥

तस्मादिति हेतुत्वेनोपकारकत्वस्योपन्यासाद्दायभाग प्रकरणे धन स्वाम्युपकारकत्वातिशयो यत्र स्थितस्य तद्धनस्य भवति स एव तद्धनग्राहीति प्रत्यासत्तिरौत्सर्गिक्यभ्यर्हिता चेति सूचितम्। पुत्रादीनां महोपकारकत्वञ्चानेकश्रुतिस्मृति पुरा-

त्यादि प्रसिद्धम्। तत्र श्रुतिर्हरिश्चन्द्रोपाख्याने बह्वृचब्राह्मणे

यं त्विमं पुत्र मिच्छन्ति ये विजानन्ति येच न।

किंस्वित्पुत्रेण विन्देत तन्ममाचक्ष्व नारदेति। गाथया हरिश्चन्द्रेण पृष्टो नारदो दशभिर्गाथाभिः पुत्त्र माहात्म्यपराभिः प्रबोधितवानित्युक्तम् स एकया पृष्टो दशभिः प्रत्युवाच

ऋणमस्मिन् सन्नयत्यमृतत्वञ्च गच्छति।

पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतोमुखमित्यादिना स्मृतयश्च। मनु विष्णू।

पुन्नाम्नो नरकाद्यस्मात्पितरन्त्रायते सुतः।

तस्मात्पुत्त्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥

शङ्खलिखितौ। पितॄणामनृणो जीवन्दृष्ट्वा पुत्त्र मुखम्पिता।

स्वर्गी सुतेन जातेन तस्मिन् संन्यस्य तदृणम्॥

अग्निहोत्रन्त्रयो वेदा यज्ञाश्चैव सदक्षिणाः।

ज्येष्ठ पुत्र प्रसूतस्य कलां नार्हन्ति षोड़शीम्॥

मनु लिखित वशिष्ठहारीताः।

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते।

अथ पुत्रस्य पौत्त्रेण व्रध्नस्याप्नोति पिष्टपम्॥

याज्ञवल्क्यः। लोकानन्त्यन्दिवः प्राप्तिः पुत्र पौत्र प्रपौत्रकैः।

यस्मात्तस्मात् स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिता इति।

पुराणादिषु तूपाख्यानानि पुत्त्रादि प्रशंसाशंसीनि बहूनि। तस्मात् प्रपौत्र पर्यन्ताभावे विभक्तासंसृष्टपति रिक्थहारिणी पत्नीति सिद्धम्। अतःजीमूतवाहनः बृहस्पति विरोधान्नेयं व्यवस्था यदाह।

विभक्ता भ्रातरो ये च संप्रीत्यैकत्र संस्थिताः।

पुन र्विभाग करणे तेषां ज्यैष्ठ्यं न विद्यते॥
यदा कश्चित्प्रमीयेत प्रव्रजेद्वा कथञ्चन।
न लुप्यते तस्य भागः सोदर्य्यस्य विधीयते॥
या तस्य भगिनी सा तु ततोऽंशं लब्धुमर्हति।
अनपत्यस्य धर्म्मोऽयमभार्य्यपितृकस्य च॥
संसृष्टानान्तु यः कश्चिद्विद्या शौर्य्यादिना धनम्।
प्राप्नोति तस्य दातव्यो ह्यंशः शेषाः समांशिन इति॥

अत्रोपक्रमोपसंहारयोः संसृष्टत्व कीर्त्तनात्तत्मन्दंश पतितन्न लुप्यते तस्य भागः सोदर्य्यस्य विधीयत इति वचनं संसृष्टि विषयमवश्यं वाच्यन्तत्र चानपत्यस्य धर्मोऽ यमभार्य्य पितृकस्य चेत्यभिधानात्पुत्त्र दुहितृपत्नी पितॄणामभावे संसृष्ट सोदराधिकारः प्रतीयत इति कथमस्य पत्नीबाधकत्वम्। किञ्च न लुप्यत इति संसृष्टाविभक्तभ्रातन्तरीय द्रव्यस्य मिश्रीभूतस्य लोपाशङ्कायामुपपद्यते। अविभक्तासंसृष्टधने तु विभक्ते का लोपशङ्का तस्मात्संसृष्टविषयत्वमेवामीषां लिङ्गादपि। किञ्च। पत्नीतः पूर्वं भ्रातृधिकारबोधक शङ्खादि वचनानां संसृष्टाविभक्तविषयत्वं विस्पष्टवचनान्तरान्न्यायाद्वा प्रबलादुच्यते। नाद्यः विस्पष्टविशेषवचनाभावात्। संसृष्टिनस्तु संसृष्टीत्यादि वचनमात्रवचनन्तु भ्रातृधिकारान्तरे विशेषवचनं नासुमर्थमवगमयति। वृहस्पतिवचनन्तु पुत्त्रादि पितृपर्य्यन्ताभावे संसृष्ट सोदराधिकारबोधकं प्रत्युतासंसृष्टविषयकत्वमेवावगमयति। न द्वितीयः। न्यायोह्ययं वाच्यः। अविभाग संसर्गयोर्य्यदेकस्य धनं तदेवापरस्यापीति मृतस्य तत्र स्वत्वेऽपगतेऽपि जीवतस्तत्स्वत्वात्तद्गामिता युक्ता न स्वाम्यन्तर कल्पनेति। न चासौ युक्तः।

अविभाग संसर्गवतामप्यविज्ञातैकदेश व्यवस्थिति प्रतिनियता अयमेव स्वत्वं नत्वेकैकत्र सर्वेषां नापि समग्रे अनेकस्वत्वोत्पाद विनाशकल्पनाप्रसङ्गात्। किञ्च। परिग्रहणाद्धि सहत्वमित्यादि प्राग्लिखित गौतमादि वचनेभ्यः पत्याः परिणयादुत्पन्नम्पतिधने सत्यमविभक्तसंसृष्ट भर्तृमरणे नश्यत्यन्यत्र च न नश्यतीति कल्पनायाम्प्रमाणाभावः। पुत्रादिषु सत्सु तदधिकार शास्त्रबलादेव पत्नी स्वत्वनाशः कल्प्यते। अत्रापि संसृष्टाविभक्त भ्रात्रधिकार शास्त्रात्तन्नाशः कल्प्यत इति चेत्। अन्यस्य तादृशशास्त्रस्यादर्शनात्। अस्य चेतरथा अन्योन्याश्रय प्रसङ्गादसिद्धेः। सिद्धे हि संसृष्टाविभक्त भर्तृमरणे पत्नी स्वामित्वनाशे भ्रात्रधिकारशास्त्रस्य तद्विषयकत्वम्। सिद्धे च तस्मिन्पत्नी स्वत्वनाश कल्पनेति।

अतएव योगीश्वर वचनादि वचने पुत्रराहित्यमेवोपात्तं न तु विभक्तत्व.संसृष्टत्वे। विभागस्योक्तत्वात्संसृष्टिनाञ्च वक्ष्यमाणत्वादर्थादुपात्ते एवेति चेत्। तर्हि मुख्यगौण पुत्रेषु रिक्थग्राहितयोक्तेषु तदितरविषयत्वमप्यर्थात्सिद्ध्यतीत्यपुत्रत्वमपि नोपादेयम्। अपुत्रस्यैत एवानेनैव क्रमेणेति नियमार्थतया तत्सार्थक्यमन्ययोरपि तुल्यम्। विभागोक्त पर्य्यवसानन्तु न जातमेव। संसृष्टिवचनं भ्रात्रधिकारावसरे विधानार्थन्न पत्न्याद्यपवादार्थमित्युक्तमेव। किञ्च। शङ्खलिखितादि वचनानामविभक्त संसृष्टभ्रातृपरत्वे तादृशस्यापुत्रस्य धनन्तद्विध भ्रातृगामि तदभावे पितरौ हरेतामित्यस्य कोऽर्थः तदा च विकल्पनीयम्।

किं विभक्तासंसृष्टौ पितरौ गृह्णीयातामिति।उत विभक्तसंसृष्टाविति

तत्र न प्रथमः कल्पः। तादृशयोः पित्रोः पत्नीबाध्यत्वात्कथं भ्रातृभावे पत्नीतः पूर्वन्तयोरधिकारबोधः। नापि द्वितीयः। अविभक्त संसृष्ट पितृग्राह्यत्वे सर्वेषामविवादाद्वचनवैयर्थ्यात्। अपि च। यथा पित्रा भ्रात्रा च विभक्तासंसृष्टधने शरीर दातृतया आत्मा वै जायते पुत्त्रः यथैवात्मा तथा सुत इत्येकत्व स्मृतेर्द्दनदेहयोश्च पौत्त्रयोः पितुः प्रभुत्वात्तत्पितृदेय पितामह प्रपितामह पिण्डयोर्द्दये सपिण्डनेन मृतस्य पुत्त्रस्य भोक्तृत्वाज्जीवति च पितरि पुत्त्राणां पार्वण पिण्डदानाभावाद्भ्रातृभ्यः पूर्वम्पित्रोरधिकारस्तथेतरत्रापि युक्तः। अविभागसंसर्गयोरविशेषाद्वा तुल्याधिकारौ युक्तौ न तु मातृभावे पितुरिति। किञ्च। पित्रोरविभक्त संसृष्टत्वविशेषणमनुपपन्नं मात्रा सह विभागाभावेनाविभक्त विशेषणानर्थक्यात्। अतएव संसर्गाभावोऽपि। विभागपूर्वकत्वात्तस्य। यथाह बृहस्पतिः।

विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः।
पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यत इति॥

एतेन येषामेव हि पितृभ्रातृ पितृव्याणां पितृपितामहार्जित द्रव्येणाविभक्तत्वमुत्पत्तितः सम्भवति तएव विभक्ताः सन्तः परस्परप्रीत्या पूर्वविभागध्वंसेन यत्तव धनन्तन्मम यच्च मम तत्तवेत्यभिन्नतयैकपाकेन पूर्ववदेकस्थितया स्थिताः संसृज्यन्ते। न पुनरनेवम्भूता द्रव्यसंसर्गमात्रेणावणिजामपि सम्भूय समुत्थाने संसृष्टत्व व्यवहारापत्तेः। प्रीतिपूर्वोक्ताभिसन्धिरहितानां सौकर्य्यादिवशाद् द्रव्यमिश्रणेन व्यवहारादि कुर्वतां भ्रात्रादीनामप्यतएव न संसृष्टि व्यवहारः। तस्मान्मातृगतो भ्रातृ सद्भावाधिकारविरोधो दुःसमाधः। अतः प्र-

पौत्र पर्य्यन्ताभाव एवाविशेषेणापुत्र प्रमीत भर्त्तृधने समस्तेऽधिकारिणी पत्नीत्येव रमणीयम् । नत्वश्रुतासंसृष्टविभक्त गोचरत्व कल्पना । जितेन्द्रियादयोऽप्येवमाहुः । प्रपौत्र पर्य्यन्ताभावे तस्या अपि भर्त्तुः श्राद्धादिनोपकारकत्वातिशयात् । पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं हरेत चेति मनुवचनादिभ्यः । व्यासोऽपि । मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ।

स्नाता प्रतिदिनम्भक्त्या भर्त्रे दद्याज्जलाञ्जलीन् ॥
कुर्य्याच्चानुदिनम्भक्त्या देवतातिथिपूजनम् ।
विष्णोराराधनञ्चैव कुर्य्यान्नित्य मनुव्रता ॥
दानानि विप्रमुख्येभ्यो दद्यात्पुण्यविवृद्धये ।
उपवासांश्च विविधान् कुर्य्याच्छास्त्रोदितान् शुभे ॥
लोकान्तरस्थम्भर्त्तार मात्मानञ्च वरानने ! ।
तारयत्युभयं नारी नित्यं धर्मपरायणेत्यादि ॥

तस्मात्पत्न्या अपि पतिनरकनिस्तारकत्वाद्वन्द्वहीनतयाऽकार्य्यं कुर्वन्ती स्वीया पुण्येनार्द्धशरीरसंस्तवात्पत्यर्द्धं शरीरस्य यस्य भार्य्या सुराम्पिबेदित्यादि लिङ्गदर्शनात्पतिमपि पातयेदिति तया गृहीतं स्वाम्यर्थमेव तद्धनं भवतीति सर्वेभ्योऽन्येभ्यः पूर्वं पत्न्या एव पतिधन ग्रहणं युक्तम् । शङ्खादि वचने तु व्यवहित योजना कार्य्या ।

अपुत्रस्य पुत्रपौत्रप्रपौत्ररहितस्य स्वर्य्यातस्य धनं ज्येष्ठा प्रशस्यतमा पत्नी लभते । तदभावे दुहितृदौहित्रयो श्चाभावे पितरौ लभेयातान्तदभावे भ्रातृगामीति । तदभाव इति मध्यपठितं पूर्वोत्तराभ्यामविरोधान्न्यायस्य पूर्वमुक्तत्वाच्च सम्बध्यते । भ्रातृणामप्रजाः प्रेयादित्यादीनि नारदादि

वचनाच्च पत्नी रूपपरिणीत स्त्रीविषयाणि। स्त्रीशब्दमात्रो-पादानाच्च। अत्र च पत्नीशब्दोपादानात्। परिणीताना-मपिचापत्नीत्वं प्राक् प्रपञ्चितम्। अतएव नारदस्यैव वचना-न्तरे।

अन्यत्र ब्राह्मणात्किन्तु राजा धर्मपरायणः।
तत् स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृत इति॥

स्त्रीशब्दश्रवणादपत्नीनामब्राह्मण स्त्रीणां वर्त्तनदान-माह। पत्नीनाञ्च ब्राह्मण स्त्रीणामपि कृत्स्नभर्तृधनाधिकार माह। वृहस्पतिः।

येऽपुत्राः क्षत्रविट्शूद्राः पत्नी भ्रातृविवर्जिताः। तेषां धनं हरेद्राजा सर्वस्याधिपतिर्हि सः। पत्नी भ्रातृविवर्जिता इति स ब्रह्मचारिपर्यन्ताभावोपलक्षकम्। तेषां बहुक्रमत्वान्म-ध्ये राज्ञोऽननु प्रवेशात्। प्रदर्शित विष्णु वचने सहाध्यायिप-र्य्यन्तानभिधाय तदभावे ब्राह्मणधन वर्जं राजगामीति कथ-नाच्चेति तत्त्वं विविनक्तिस्म तत्रेदमालोचनीयं। नारदश-ङ्खादि वचनानामविभक्तसंसृष्टि विषयत्वेन या व्यवस्था तत्र न्याय विरोधो वा दूषणं वचनविरोधो वा। न तावन्न्याय वि-रोधः। वाधकन्यायस्याभावात्। प्रत्युत साधको न्यायोऽस्ति। तथाहि अविभक्तप्रमीते तावत्तस्यांशएव नाभूत्किमियं शङ्कातु संसृष्टे जातोऽप्यंशः पुनः साधारण स्वत्वात्तस्यापगतः। न च साधारण स्वत्वाश्रयोऽप्यविविक्तस्वङ्गागोऽस्त्येवेति वाच्यम्। अस्तु तावतापि यत्प्रतियोगिकं साधारणं स्वत्वन्तदपगमे विद्य-मानस्वत्वकः संक्रम एवोचितोमत्वन्य स्वत्वोत्पत्तिकल्पना। पाणिगृहणादि सहत्वङ्कर्मसु तत्फलेषु द्रव्य परिगृहेषु चेति-

गौतमवचनात्पत्न्या अपितद्भागेऽविविक्तेऽपि स्वत्वमुत्पन्नं तन्नाद्यः किमिति तत् स्वत्वेकल्प्यत इति चेन्न औपपत्तिकोऽस्ति न तु तात्त्विकः। पत्न्याः पतिद्रव्ये स्वत्वं क्षीरनीरवदेकलोलीभावापन्नं सहाधिकारि कर्मोपयोगि न तु भ्रातृणामिव परस्परम्। तत एव तेषां विभागो न तु जायापत्योः। एतन्न्यायमूलकमेव जायापत्योर्नविभागोविद्यत इति वचनम्। तथा च पत्युः स्वत्वापगमे तस्याः स्वत्वापगमस्तत्रावश्यकः एवञ्चाविभक्तसंसृष्टपति स्वापतेये पत्न्याः। स्वत्वोत्पत्तिः कल्प्यतामविभक्त संसृष्टि स्वत्वस्य सतोऽसाधारण्यं वेति वीचायामुत्तरपक्षकक्षीकरणमेवोचितं लाघवात्। नच पत्न्येव विभाग प्रतियोगिनी। ग्रापक प्रमाणाभावात् नचैतान्येव वचनानि प्रापकानि। तेषां विषय विवादाद्विभक्ता संसृष्टि विषयत्वेनाप्युपपत्तेः। अतएवान्योन्याश्रयोऽपि दवीयान्। विमर्शदशायान्तदप्रसङ्गात्। सति विमर्शे तद्विषयत्वनिश्चयादेव। अविभाग संसर्गवतामपीत्यादि च यदुक्तन्तन्नास्मत्पक्ष क्षतिक्षमम्। प्रतिनियताविविक्त स्वत्वस्वीकारेऽपि संसृष्टाविषयताया न्यायान्तर सिद्धत्वात्। नचाश्रुतविभक्तासंसृष्टविषयत्वं पत्नीत्यादि वाक्यानामप्रमाणकम् विरुद्धनारदादि वचनानां व्यवस्थान्तरासम्भवे पूर्वोपपादित न्यायोपष्टम्भार्थापत्तेरेव प्रमाणत्वात्। व्यवस्थान्तरासम्भवश्च वक्ष्यामः। न च यथाविभागस्योक्तत्वात्संसृष्टिनाञ्च वक्ष्यमाणत्वादर्थाद्विभक्ता संसृष्टिधनपरत्वंपत्नीत्यादेरायातीति तदनुपादानन्तथा मुख्यगौण पुत्रविभाग मुक्त्वा पत्नीत्यादि वचनारम्भाद पुत्रधनविषयत्वमपि सिद्ध्यति तेषामित्यपुत्रस्येत्यपि

न वाच्यमिति वाच्यम् । एक एवौरसः पुत्रः नभ्रातरो न पितरौ पुत्रा रिक्थहराः पितुरित्यस्यार्थस्य स्मृत्यन्तरोक्तस्य योगीश्वरेण वचनान्तरेणाहृक्तेस्तदवबोधनार्थत्वात् । अन्यथा जीवदजीवद्विभागयोः सत्स्वपि पुत्रेषु पितृ पत्नीनां यथांशभाक्त्व तथात्रापीति शङ्का स्यात् । पुत्र विभागपर्यवसान एक्तत्वान्न तच्छङ्कावसर इति यदि तर्हि स्मृत्यन्तरेष्वेक एवौरसो न भ्रातरो न पितर इति स्वतन्त्रस्य मुख्यगौण पुत्र सत्त्वे पत्न्या धनाधिकार प्रतिपादक शास्त्रस्य सुतरामानर्थक्यं स्यात् स्पष्टीकरणार्थं यद्दन्याय सिद्धमपि निबध्यते व्यवहार शास्त्र इति समाधिः पक्षात्ते सुतरां सुवदः । स्पष्टार्थं विभक्तासंसृष्टत्वे अपि कुतो नोपात्तरेति चेत् । स्वतन्त्रेच्छत्वान्मुनीनाम् । आरोपे सति निमित्तानु सरणमिति न्याये च यत्र न्यायार्थसिद्ध निबन्धनमस्ति । तत्र सिद्धस्य गतिश्चिन्तनीयेति रीत्या स्पष्टी करणार्थं तया वैयर्थ्यं परिह्रियते न तु तदभिधानापादनं सर्वत्रोचितम् । यच्च संसृष्टिनस्तु संसृष्टीत्यस्य भ्रातृधिकारावसरे विशेष विधानमात्रार्थत्वन्न पत्न्याद्यपवादकत्वमित्युक्तन्तदतिवार्त्तम् । तु शब्दविरोधात् । उत्तरोत्तर पूर्वापवाद सन्दर्भाच्च । अतएव इतिवाक्यं तु शब्दोपादानम् । क्लीबादि वाक्यं पुत्रादि सकलदाय ग्रहणाधिकारिणां क्लीवत्वादिनाधिकारापवादकमिति । अतएव मिताक्षरायां विज्ञानेश्वरेणाचार्य्येकृता तथैव तानि वचनान्यवतारितानि व्याख्यातानि च । यत्तु किञ्चेत्यादिना शङ्खलिखित वचने भ्रातृभावे पित्रोरधिकारो विकल्पश्च खण्डितस्तदप्यतिफल्गु । भवद्भिमतेपि व्युत्क्रमेण विभक्तासंसृष्ट पितृपरत्वे तस्य व्याख्या-

तु शक्यत्वे नैकार्थ्यानुयोगात्। यच्चापि चेत्यादि। तदपि तुल्ययोगक्षेममित्युपेक्ष्यम्। यदपि किञ्चेत्यादि। तदपि मात्रंशे विशेषणासम्बन्धेऽपि योग्यतया पित्रंशे सम्बन्धादचोद्यम्। वस्तुतस्तु साक्षान्मात्रा विभागाभावे जीवद्विभागे पितृिच्छया तस्या अपि भागसम्भवादजीवद्विभागे तु साक्षादेव विभागोक्तेः प्रीत्याऽभिसन्धिविशेषपूर्वकं पुत्रैः सह संसर्गासम्भवात्। नचैवं विभक्तो य इत्यादि बृहस्पतिवचनविरोधः। अत एव मिताक्षरा कृताप्युक्तम्। संसर्गश्च न येन केनापि। किन्तु पित्रा पितृव्येण वेत्यत्र सम्मतित्वेन तद्वचनमुपन्यस्यतेति वाच्यम्। यतस्तथा सति सकललोकव्यवहारसिद्धो दौहित्रादिसंसर्गोऽप्यन्याय्यः स्यात्। तस्माद्येषां परस्परविभागस्तेषामेव तत्पूर्वकः परस्परसंसर्गोऽप्यभिसन्धिविशेषपूर्वको न परस्परद्रव्यमिश्रीकरणमात्रेण वणिगादीनामिवेत्यत्र बृहस्पतिवचनतात्पर्य्यं न मात्रादिनिवृत्तौ। त्रिदोषपरिसंख्यापत्तेः। अत एव भ्रात्रा वा पितृव्येणाथवेत्यनास्थायां वादिशब्दस्तत्रोपात्तः। रत्नाकरे चण्डेश्वरेणाप्युक्तम्। अनास्थायां वाकारः। तेन पितृव्यजेनांशिना कृतविभाग एकत्र स्थितः संसृष्टः सर्वलोकगृहीतो लभ्यत इति। वाचस्पतिरप्येवमेवाह। यत्तु तेनोक्तं पृथग्धनानामेकत्र मेलनमेव संसर्गोलाघवात्। ननु विभागपूर्वकत्वं तत्र विशेषणं परस्परानुमतिश्च तत्र हेतुरिति। तन्न। पुनः शब्दविरोधात् विभागेऽपि संसर्गशब्दप्रयोगापत्तेः जन्मना स्वत्वानङ्गीकारेण तदापि धनसम्बन्धाभावेन पुत्रद्वारैव तत्सम्बन्धात्प्रसक्तोरिक्थलोभेन नियोगस्वीकारः प्रतिषिध्यते। नचात्रापि पत्नीभिन्नाया भार्य्याया भर्त्तृधनानधिकारा-

त्त ग्राएव रिक्थलोभेन प्रसक्तो निषिध्यते नियोगस्वीकार इति न भवदुक्त प्रसक्ति प्रतीचेति वाच्यम् पत्न्या एव तत्र प्रस्तुतत्वात्तद्भिन्न भार्य्यापरत्वानुपपत्तेः। अतएव धारेश्वरादिभिर्नियोगार्थि पत्नीपरत्वे पत्नीत्यादिवाक्यस्येदमेव वशिष्ठवचनं प्रमाणतयोपन्यस्तम्। तस्मान्नारद वशिष्ठ वाक्य बलात् संसृष्टिभर्तृधन ग्रहणप्रतिषेध: पत्न्या बृहस्पतिवचने चानपत्यस्य धर्म्मोऽयमभार्य्या पितृकस्य चेति कथनात्पत्न्यां सत्यां सोदरस्यापि संसृष्टि भ्रातृधन ग्रहणप्रतिषेध इति विरोध आवश्यकः कथञ्चिद्विषय व्यवस्थया परिहर्त्तव्योपरिहृतौन्यैः परिह्रियते। सन्दंशोत्थित प्रकरणबलात्प्रसक्त मप्यभार्य्या पितृकस्य संसृष्टि विशेषणत्वमन्यथासिद्ध नारदादि वाक्यानुरोधाद संसृष्टि परत्वावश्यकतया बाध्यते। वाक्यविरोधे प्रकरणस्याप्रयोजकत्वात्।

नचायमिति सर्वनाम्ना संसृष्टिधन ग्रहणरूपधर्म्मस्य प्रक्रान्तस्यानेन विशेषाभिधानादनपत्यस्येतिवदभार्य्यापितृकस्येत्यस्यापि संसृष्टि प्रमीतविशेषणत्वमिति वाक्ययोरेवायं विरोध: न वाक्यप्रकरणयोरिति वाच्यम्। सर्वनाम्न: संसृष्टि धन गृहणपरामर्शकत्वेऽपि सोऽयमनपत्यसंसृष्टि स्वामिधन गृहणरूपोधर्म्मो भार्य्यापितृरहितस्यासंसृष्टिनोऽप्यनपत्यस्य प्रमीतस्य। असंसृष्टिविभक्त प्रमीतस्य धनन्तु भार्य्यापितृ सहितस्यैवानपत्यस्य सोदरो गृह्णीयान्नभार्य्यापित्रन्यतरवदिति वाक्यार्थोपपत्तेः। चकारोऽप्येव मनुक्तासंसृष्ट समुच्चयार्थो-व्याख्येय: अतश्चासंसृष्टविषयेणानेन प्रकरणविच्छेदे जाते संसृष्टानान्तु य: कश्चिदित्यग्रिमवाक्ये संसृष्ट पदोपादानमपि

सार्थकम्भवति अन्यथा प्रक्रमादेवात्रापि तल्लाभे तन्मन्त्र प्रयोजनं स्यात्। अतएव तार्त्तीये निविदधिकरणेऽसम्बद्धनिविद्विच्छिन्नसामिधेन्यवान्तर प्रकरणाग्राह्य मुपवीतं नसामिधेन्यङ्गमपि तु महाप्रकरणाद्दर्शपूर्णमासाङ्गम्। ये तु पश्चात्तना गुणास्ते पुनर्वचनादेव दूरस्थानुवादेनैव द्वादशोपसान्तवत्सामिधेन्यनुवादेन विधीयत इति भट्टमतेन सिद्धान्तितम्। वस्तुतस्तु यातस्य भगिनीत्यनेन सोदराभावे यो भगिन्यधिकारः संहृष्टिधने प्रतीयते। तस्यैवाव्यवहितस्यानपत्यस्येति वाक्यशेषस्थेनायमिति सर्वनाम्ना परामर्शस्तत्र च न कोऽपि विरोधः। चन्द्रिकायामप्येवमेवोक्तम्। अविभक्तापुत्त्रपति स्वामिकस्तत्स्वधन ग्रहणन्तु-पत्न्या कात्यायन वचन विरुद्धम्। यदाह।

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी।
अविभक्तेधनांशे तु प्राप्नोत्यामरणान्तिकम्॥

तु शब्दोवाशब्दार्थे तथा चायमर्थः। ग्रासाच्छादनमेव साक्षाल्लभते आमरणान्तिकं यांवज्जीवं यावता धनेन जीवनं स्वाधिकारिकमावश्यकञ्च कर्म सिद्ध्यति तावत्तं धनांशं वा प्राप्नोति। धनांशमामरणान्तिक मित्युक्तेः कृत्स्नधनमविभक्तस्य पत्युर्लभत इति निरस्तम्। न च स्त्रीशब्द श्रवणात्पत्नीव्यतिरिक्त स्त्रीपरमिदमपीति वाच्यम्। अविभक्त इति विशेषणानर्थक्यापत्तेः। विभक्तेऽपि भर्त्तरि पत्नीभिन्नाया अपुत्राया भरणमात्रोक्तेः। अतएव कृतेऽप्यंश इत्यनुवृत्तौ। बृहस्पतिः।

प्रदद्यात्स्वेव पिण्डञ्च क्षेत्रांशं वा यदीच्छति।

अस्य व्याख्यानं स्मृतिचन्द्रिकायाम्। पिण्डग्रहण मशना-

च्छादनोपलक्षणार्थन्तत्पर्य्याप्तं धनन्तत्साम्यादेकं चेतांशं वा स्वच्छा भर्तं शार्हपत्नी व्यतिरिक्तविधवायै भ्रात्रादिस्तद्धनग्राही प्रदद्यात्। एवकारः प्रदानस्यावश्यकत्वार्थ इति। एतद्विषयक-मेव नारदवचनम्।

यावत्यो विधवाः साध्व्यो ज्येष्ठेन श्वशुरेण वा।
गोत्रजेनापि वान्येन भर्त्तव्याच्छादनाशनैरिति॥

भर्तृधन ग्राहिणीति सर्वत्रशेषः। धनग्रहण निमित्तत्वा-द्भरणं स्यात्। साध्व्य इत्यनेन सर्वत्र साध्वीनामेव भरणमसा-ध्वीनान्तु पत्नीनाञ्च न तदपि। श्रच्छिन्द्युरितरासुत्विति प्रागुक्त नारदवचन वाक्यशेषादिभ्यः। अतएव साध्वीनां जीव-नार्थं श्वशुरादिभिर्द्दत्तमन्यैरपि दायादैर्नापहरणीयमित्य-प्याह वृहस्पतिः। स्थावरादि धनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु।

न तच्छक्यमपाहर्त्तुन्दायादैरिह कर्हिचिदिति॥

अन्याहशीनान्तु दत्तमप्यपहर्त्तव्यमित्याह कात्यायनः।

भोक्तुमर्हति कृप्तांशं गुरुशुश्रूषणे रता।
न कुर्य्याद्यदि शुश्रूषाञ्चैल पिण्डे नियोजयेत्॥
अपकार क्रियायुक्ता निर्लज्जा चार्थनाशिका।
व्यभिचार रता याच स्त्रीधनन्न च सार्हति॥

नार्हतीत्यनेन नदेयञ्जीवनपर्य्याप्तमपि। दत्तमपिच ता-हश्याः सकाशादपहरणीयमिति दयमप्युक्तम्भवति। यत्तु त-स्मात्स्त्रियोऽनिन्द्रिया अदाया इति श्रुतिवचनन्तन्मूलकञ्च अनिन्द्रिया ह्य दायादाः स्त्रियोनित्यमिति स्मिर्तिरिति मनु वचनन्तद्दयमपि यासां श्टङ्गग्राहिकया धनग्रहणं नोक्तन्तद्वि-षय मवसेयम्। गौतममिताक्षरायां हरदत्तोऽप्येवमेवाह।

केचित्तु निरिन्द्रीयपद समभिव्याहारान्निन्दामात्र परन्तदित्याहुस्तत्र। दायादत्वांशे निन्दायानिषेध कल्पनावश्यम्भावात्। रागाद्याय गृहस्य प्राप्तेर्न्नित्यानुवादासम्भवात्। अनिन्द्रियत्वन्तु पुम्पारतन्त्र्यात्कथञ्चिदनुवादः। वस्तुस्वभाव विपरीत निषेधकल्पनस्य वाधात् तस्मात्पूर्व्वोक्त एव समाधिः। पराशरस्मृतिटीकायां विद्याशौर्य्यादिना यद्धनं प्राप्तन्तद्विभाज्यमिति व्याचख्युः पत्नीव तगृहे पत्न्या अंशोनास्तीत्यदायादपदस्यार्थः। तत्र हेतुरनिन्द्रिया इति इन्द्रियं वै सोमपीथ इत सोमेऽपीन्द्रियशब्द प्रयोगात्ततोनिर्गाता इति सोमपानानधिकृता इति पत्नीवतगृह प्रशंसेति। इति पत्न्यधिकार विचारः।

पत्न्यभावे दुहितरोऽपुत्त्र विभक्तासंसृष्टिधनभाजः।

तथा च मनुः। यथैवात्मा तथा पुत्त्रः पुत्त्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥

वृहस्पतिरपि। अङ्गादङ्गात्सम्भवति पुत्त्रवद् दुहिता नृणाम्।
तस्मात् पितृधनन्त्वन्यः कथं गृह्णीत मानव इति॥

अत्र पुत्त्रेण समा पुत्त्रवदिति च साक्षाज्जन्यत्वेऽपि पुत्त्रे पितृवयवानां बाहुल्येन संक्रान्तेर्दुहितरि च पत्नीनां। पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः। इत्यादिवचनैः स्मृतिष्वायु र्वेदे च प्रतिपादनात्पुत्त्रतुल्यत्वं दुहितृत्वक्तमिति द्रष्टव्यम्। आत्मनि। आत्मा वै जायते पुत्त्र इत्यात्मभूतपुत्त्रतुल्यायामित्यर्थः। तिष्ठन्त्यामित्यनादरे सप्तमी तामनादृत्येत्यर्थः।

यद्यप्यनेनौरसपुत्त्राभावे दुहितुर्द्धनग्रहणमित्यत्र न्याय उक्तस्तथापि गौणपुत्त्र पत्न्योरभावे दुहितुर्द्धनग्रहणमिति को-

न्याय:। उच्यते। नारदेन मन्दानुग्रहाय सोऽपि स्पष्टीकृत:। यदाह। पुत्त्राभावे तु दुहिता तुल्य सन्तानदर्शनादिति।

विवृतञ्चेदन्तेनैव।

पुत्त्रश्च दुहिता चोभौ पितृसन्तानकारकाविति।

अयमाशय:। पुत्त्र दुहितरावुभौ पितु: पौत्त्र दौहित्राख्य सन्तानकारकावत: सन्तान प्रवर्त्तकत्वस्य तुल्यत्वात् दुहितुरपि पुत्त्रवदधिकार:। पौत्त्र दौहित्राख्य सन्तानयोश्च स्वरूपतस्तुल्यत्वाभावात्कार्य्यतस्तुल्यत्वमभिप्रेतम्। कार्य्यमपि नर्णापकरण रिक्थग्रहण लक्षणम्पुत्त्र पौत्त्रै ऋणं देयम्। पितामहद्रव्यमधिकृत्य च।

तत्र स्यात्सदृशं साम्यम्पितु: पुत्त्रस्य चोभयोरिति। वचनाभ्यां पौत्त्रे सति दौहित्रस्य तदनधिकारात्। तेनादृष्टमत्र कार्य्यं श्राद्धकर्त्तृत्वम्।

पूर्वेषान्तु स्वधाकारे पौत्त्रा दौहित्रका मता इति।

विष्णूक्ते:। एवञ्च दृष्टादृष्टोपकारक स्वसन्तान मुखेनोपकारकपुत्त्रात्केवलादृष्टोपकारक स्वसन्तानमुखेनोपकारिका दुहिता न्यूना। न चैवम्पत्यपेक्षया प्रत्यासन्ना जन्या दुहितेति पत्नीत: पूर्वं सैव धनमर्हतीति वाच्यम्। यत: सहाधिकारेणाग्निहोत्रादिवैदिक कर्मोपकारिका कामाख्य पुरुषार्थसाधनतया सन्तानसाधनतया च दृष्टादृष्टोपकारकर्त्री देहार्द्धसंस्तुता पत्न्येव ततोऽधिका ततश्च पुत्त्राभाव इति पौत्त्रभावस्याप्युपलक्षकं प्राग्लिखित विष्णुवचनादस्माच्च योगीश्वरवचनात्। यद्यपि पुत्त्रकर्तृक श्राद्धे सम्प्रदानतया स्वयमेवादृष्टोपकारक: पिता दुहित्रपेक्षया प्रत्यासन्न इति पिता हरेदपुत्त्रस्य रिक्थमिति

वचनस्यावसर उचितो दुहितुः प्राक्। तथापि तस्यामात्मनि तिष्ठन्त्यामित्यनेन शरीर प्रत्यासत्त्या सैवाग्रे सरीति तदभावे तद्वचनस्यावसरः। वा शब्दोपादानेन तस्य क्रमपरत्वाभावात्। जीमूतवाहनस्तु दुहितुरधिकारे सन्तानकारकत्वस्य हेतोर्निर्देशात्सन्तानस्य च पिण्डदस्यैवोपकारकत्वादपिण्डदस्यानुपकारकत्वेनान्य सन्तानादसन्तानाच्चाविशेषात् पुत्त्रवती सम्भावितपुत्त्रा वा दुहिता धनाधिकारिणी। विधवा त्ववन्ध्यात्व दुहितृ प्रसूत्वादिना विपर्य्यस्तपुत्त्रा पुनर्नाधिकारिण्येवेति दीक्षितरूतमादरणीयमित्याह। तदपि चिन्त्यम्। प्राथमिककन्याधिकारस्य। अपुत्त्र मृतस्य कुमारी ऋक्थं गृह्णीयात्तदभावे चोढा। हेतुनिर्देशस्य प्रत्यासत्त्यतिशयामात्र प्रदर्शकतयाप्युपपत्तेः। किञ्च। स्वयमेव कन्याया असम्भवे सम्भावितपुत्त्रायाः पुत्त्रवत्याश्चाधिकार इति वदन्हेतोर्व्यभिचारितां दर्शयति। तस्मादस्मदुक्तरीत्यैव प्रत्यासत्त्यर्थतया हेतुर्व्याख्येयः। धारेश्वर देवस्वामि देवरात प्रभृतयस्तु। पिता हरेदपुत्त्रस्येत्यादि वचनविरोधपरिहाराय दुहित्रधिकार प्रतिपादक वचसां पुत्रिकाविषयत्वं तदभावे तु पित्रादयएव यथोक्त क्रमेणाधिकारिण इत्याहुस्तदतिपेशलम्। पुत्रिकाया श्चौरसो धर्मपत्नीजस्तत्समः पुत्त्रिका सुतः। तृतीयः पुत्रिका पुत्त्रः विज्ञायत इति योगीश्वर वशिष्ठादिवचनै र्गौणपुत्त्र कोटि निविष्टायाः क्षेत्रजादि पुत्रवन्न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुरिति गौणपुत्त्रविषयेण मानवेन वचनेन पत्न्यां सत्यामपि रिक्थग्राहिण्यास्तदभावे रिक्थग्राहित्वं दण्डापूपिकयैव सिद्धमिति वचनारम्भानर्थक्यापत्तेः। दुहितृमात्र

बाचकानां वचनानां विना कारणं विशेषपरत्व कल्पनानुपपत्तेश्च। किञ्च। भवन्मते अङ्गादङ्गात्सम्भवतीत्यादिना पुत्रिका विषयेण वचसा पुत्रिकाया धनग्रहणे उक्ते पुनः।

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता।
कृताऽकृता वा पुत्त्रस्य पितुर्द्धनहरी तु सा॥

इत्यनेन पुनर्द्धनहरत्व प्रतिपादनन्तेनैव मुनिना क्रियमाणं विवरणमात्रतयाऽपुनरुक्तङ्कर्त्तव्यं स्यात्। सामान्य विशेष विषया तु स्पष्टमेवा पौनरुक्त्यम्। सदृशी पितृ सवर्णा। सदृशेन सवर्णेनोढेति प्रकृष्टापकृष्ट वर्णसम्बन्ध निरासाय। तज्जातस्योत्तमवर्णं मातामह श्राद्धादि निषेधादिति जीमूतवाहनोक्तमनादेयम्। ऊढापदेनैवाधमवर्णं सम्बन्ध निरासात्। नह्यधमवर्णोढत्वमुत्तमवर्णायाः सम्भवति। तस्मादुत्तमवर्णं निरासार्थमेव सदृशग्रहणम्। ननु नारदेन कन्यारूपाणां पितृ भ्रातृरहितानां सर्वासामेव दुहितृणां पितृधनाप्राप्ति संसर्गतोऽभिहिता। यथाह।

स्याच्चेत् दुहिता तस्याः पित्र्योंशोऽभरणे मतः।
असंस्काराद्भरेद्भागम्परतो बिभृयात्पतिरिति॥

तस्या इति पतिपुत्रविहीन पत्नीमधिकृत्याह।

तेन तादृश्या यदि दुहिता विद्यते तस्याभरणनिमित्तमात्र पित्र्योंऽशस्तस्मात् विवाह संस्काराद्भरणार्थमेव सा पितृधनभागं हरेत्परतो विवाहादूर्द्ध्वं पतिस्तां बिभृयात्। तेन तावत्कालभरणावशिष्टमपि ततो गृह्णीयात्। यथेष्ट विनियोगार्थन्तु कन्यायाः पितृधनग्रहणं दूरापास्तमेव। ततश्चाप्यपवादकानि दुहितुः पितृधनप्राप्ति प्रतिपादकानि वचनानि सर्वाणि पु-

त्रिका विषयाण्येव वाच्यानि। अन्यथा द्वयोरपि दुहितृ सामान्य विषयतयोत्सर्गापवादत्वानुपपत्तेः। तस्माद्धारेश्वरादिमत मनुमन्तव्यमिति चेन्न। स्यादेवं यदि नारदवचनं विभक्तविषयं स्यात्। पौर्वापर्य्यपर्य्यालोचनया संसृष्टाविभक्तविषयन्तत् स्फुटमवगम्यते। ततश्च विभक्तविषये दुहितृमात्रस्य पत्यभावे पितृधने ग्रहण प्रतिपादकानि प्रापकाण्येव नापवादकानीति पुत्रिकामात्र विषयत्वे तेषां किमपि वीजम्पश्यामः। यत्तु सकल पितृधनग्रहणाधिकार प्रतिपादकतया कन्याभ्य इत्यादि देवलवचनं जीमूतवाहनेनोपन्यस्तं तत्पूर्वापरविरुद्धम्। जीवद्विभागे कन्याभ्यः विवाहमात्रोपयुक्त धने तस्य प्रमाणतयोपन्यासात्। तदपि चास्माभिः प्राङ्गिरस्तम्। दुहितृष्वपि प्रथममप्रत्ताः पितृधनं गृह्णीयुस्तदभावे प्रत्ताः तासामपि मध्ये प्रागभाव प्रतिष्ठिता स्तदभावे प्रतिष्ठिता सर्वा समान रूपास्तु समं विभज्य गृह्णीयुरित्यर्थः सिद्धम्। तथा च कात्यायनः।

पत्नी पत्युर्द्धनहरी या स्या दव्यभिचारिणी।

तदभावे तदेति। गौतमः स्त्रीधनं दुहितृणामप्रत्तानामप्रतिष्ठितानाञ्चेति। अप्रतिष्ठिता निर्धनाः। यद्यपि स्त्रीधनमित्युक्तं तथापि तुल्यन्यायतया पितृधन विषयम्प्येतत्। बन्ध्यत्वादिना सन्तानरहिता प्रतिष्ठितेति तु न युक्तम्। तस्याः सन्तानमुखेनादृष्टोपकाराभावे न धनहारित्वायोगात्। सदृशी सदृशेनोढेति प्राक्पठितं वृहस्पतिवचनं स्मृतिचन्द्रिकाकार इत्थं व्याचख्यौ अत्राद्यानि चत्वारि विशेषणानि पत्न्या ऊर्द्ध्वमर्थग्राहिणी दुहितृविषयाणि। ततः प्रागधनग्राहिणी दुहितृ विशेषणे द्वे अवशिष्टे। क्षताऽक्षता वेत्यत्र पुत्रिकेति

विशेष्याध्याहारः । इतरत्र दुहितेति विशेष्याध्याहारः । वा शब्दस्य व्यवस्थित विकल्पार्थः । एवञ्चायमर्थः । औरसपुत्रविहीनस्य पितुर्धनं द्विविधापि पुत्त्रिका पत्न्याः पूर्वं गृह्णीयात् । सवर्णादि विशेषणोपेता तु दुहिता तत ऊर्द्ध्वमिति । एवञ्च पत्न्या ऊर्द्ध्वं सवर्णादि विशेषणोपेत प्रतिष्ठिताऽप्रतिष्ठितोढाऽनूढानां दुहितॄणां समवाये प्रागनूढैव गृह्णाति पित्रा भर्त्तव्यत्वात् । तदभावे ऊढाऽप्रतिष्ठिता । भर्त्रा भर्त्तव्यत्वेऽपि भर्त्तुर्भरणासामर्थ्येना प्रतिष्ठितत्वात् । तदभावे प्रागुक्तया पत्न्या सवर्णादि विशेषणोपेता प्रतिष्ठितापि धनं गृह्णाति । अन्यैस्तु क्रतेति पुत्त्रिका परमक्रतेति दुहितृमात्र परमभ्युपेत्य वाशब्दस्य नास्थापरमास्थायाखिलं दुहितृमात्र विषयं विशेष्याध्याहारमन्तरेणैव व्याख्यातम् । सेत्यनेन दुहितृमात्र परामर्शात् । दुहितर इति बहुवचनं सजातीयानां समांशोऽसमानजातीयानां वर्णक्रमेण विशेषांश इति प्रतिपादनाय ।

इति दुहितुरधिकारः ।

दुहितुरभावे दौहित्रः ।

च शब्दादनुक्त समुच्चयार्थात् । तथा च विष्णुः ।

अपुत्त्र पौत्र सन्ताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषान्तु स्वधाकारे पौत्र दौहित्रकाःसमाः ॥

अपुत्र पौत्रेति दुहितृ पर्य्यन्ताभावोपलक्षणम् । मनुरपि ।

असंस्कृता वा कृता वापि यं विन्देत्सदृशात्सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति ॥

पौत्रीत्यनेन यथा पुत्राभावे पौत्रः पितामहधनाधिकारी या दुहित्रभावे दौहित्र इत्युक्तम् । वृहस्पतिरपि ।

यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु ।
तथैव तत्सुतोऽपीष्टे मातृमातामहे धने ॥

यथा येन दौहित्रदेयपिण्डेन दुहिता पितृधनाधिकारिणी तथैव तेनैव पिण्डदानेन दुहितृसुतोऽपि मातामहधने स्वामी सत्स्वपि बन्धुषु पित्रादिष्वित्यर्थः । न च पुत्रिकापुत्रविषयमिदं वचनम् । तस्या इति तत्सुत इति च सर्वनामभ्यामप्रकृत दुहितृमात्र परामर्शात् । अतएव मनुरपि दौहित्रमात्रस्यैव मातामहधनाधिकारं दर्शयति ।

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥
पौत्र दौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ।
तयोर्हि माता पितरौ सम्भूतौ तस्य देहत इति ॥

पितुरिति मातुः पितुरिति व्याख्येयम् । अतएवाग्रे मातामहाय चेत्याह । अथवा यथा स स्वपितुरखिलं रिक्थं गृह्णाति तथाऽपुत्रस्य मातामहस्यापि । स्वयमेव तत्पुत्रकार्य्यकारित्वात् । तदेवाह स एवेति । स्वपित्रे मातामहाय चेत्यर्थः । माता पितराविति च न यथाक्रममन्वयः । किन्तु । पौत्रस्य पिता दौहित्रस्य माता धनस्वामिनो देहतः सम्भूताविति यथा योग्यम् । केचिदपुत्रपौत्रेति यथाश्रुत विष्णुवचनात् पत्नी दुहितृतः प्राग्दौहित्रस्य धनाधिकारमाहुः तद्योगीश्वर विरोधात्तथैव तत्सुतोऽपीति बृहस्पतिवचनेऽपि दुहितृतस्तस्य जघन्यभावावगमो हेयम् ।

इति दौहित्राधिकारः ।

दौहित्राभावे पितरौ धनभाजौ।

अत्र मिताक्षरा। यद्यपि युगपदधिकरणवचनतायां द्वन्द्व स्मरणादितरेतरयोगद्वन्द्वस्य अपवादत्वाच्चैकशेषस्य माता पित्रोर्धनग्रहणे क्रमो न प्रतीयते। तथापि विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादेकशेषाभावपक्षे च माता पितरावित्यत्र मातृशब्दस्य पूर्वश्रवणात्पाठक्रमादेवार्थे क्रमोऽवगम्यमानः क्रमाकांक्षायां सत्यं न परित्यक्तुमर्हं इति प्रथमं माताऽपुत्र पुत्त्रधन भाक् तदभावे पिता। किञ्च पिता पुत्त्रान्तरेष्वपि साधारणो मातात्वस्य वा साधारणीति प्रत्यासत्त्यति शयादनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेदिति मनुना प्रत्यासत्त्यति शयेन धनग्रहणाधिकारस्य विनिगमितत्वात्सपिण्डसमानोदकादिष्वेव विनिगमनाकाङ्क्षायामेतद्वचन प्रवृत्तेरत्राप्यदण्ड वारितत्वादिति अत्र स्मृतिचन्द्रिका कारः प्रगल्भते। साऽस्वतोभवत इत्यत्रोत्पत्तिवाक्ये ऽत्रभाव गत्यभावेन याज्यक्रमेण प्रधानानुष्ठान क्रमः पञ्चमे निरूपितो नत्वेकशेषत एव काचित्क्रमात् गतिरुपपादिता। तद्वदत्रापि क्रमार्थमन्यत्प्रमाण मन्वेषणीयन्तदभाव इत रेतरयोगस्य द्वन्द्ववदेकशेषेऽप्यवगते र्विभज्यैव पित्रोस्तुल्य तया धन ग्रहणं युक्तम्। यत्तु पिता सपत्नी पुत्रेष्वपि साधारणो मातात्व साधारणेति प्रत्यासत्त्यति शयात्तस्या एव पितृतः प्राग्धन ग्रहणन्याय्यमित्युक्तन्तदप्यन्याय्यम्। नहि जननीजनकयोर्जन्यं प्रति प्रत्यासत्तितारतम्यमस्ति। पुत्रान्तरजनकस्याप्यतज्जनकताया मातृतुल्यत्वात्। नहि जनकतापि व्यासज्यवर्त्तिनी। न च पितृगृहीतन्धनं भिन्नोदरेष्वपि संक्रामति। मातृ गृहीतत्वे तत् सहोदरेष्वेवेति मातुरेव धन ग्रहणमिति वाच्यम्। तस्याः

प्रत्यासत्ते र्भ्रातृभगिनी धनाधिकार विनिगमकतया जनकाज्ज-
नन्या धनग्रहणविनिगमकत्वा सम्भवात् । द्वन्द्वस्थानीयैकशेषा-
त्तु ल्यतावगतौ प्रत्यासत्तेर प्रयोजकत्वाच्च । सत्यां हि क्रमाका-
ङ्क्षायां सा क्रमनियामिका नत्व सत्यामपि । तस्मात्पित्रोस्तुल्य
स्वाम्याद्विभज्यैवानप विद्धुर पुत्त्रधन ग्रहणमिति । श्रीकरस्तद
युक्तम् । पिता हरेद पुत्त्रस्य रिक्थं स्त्र्यीतस्य ह्यपुत्त्रस्य माता
दाय मवाप्नु यादित्यादि वचनेषु पितुर्मातुश्च निरपेक्षस्वाम्य
प्रतीतेर्युगपद्ग्रहणायोगात् । ब्रीहियवयोर्निरपेक्ष साधनत्व प्र-
तीतौ मिश्रत्वांयोगवत् । केचित्तु मातुर्गर्भधारणपोषणादिना-
त्यन्तोपकारित्वात्सहस्रन्तु पितृर्माता गौरवेणातिरिच्यते इत्यादि
स्मरणाच्च प्रथमं मातुर्द्धनाधिकार माहुस्तदपि तुच्छम् । पितु-
रपि संस्कार वृत्तिसम्पादनादिना बहुधा संविधातृत्वात्तयोरपि
पिता श्रेयान् वीज प्राधान्यदर्शनादित्यादि स्मरणेन सत्प्रति-
पक्षत्वाच्च गौरवमात्रस्य धनग्रहण प्रयोजकत्वे । उत्पादक ब्रह्म-
दात्रोर्गरीयान् ब्रह्मदः पितेत्यादि स्मरणाच्च पितृतोऽपि पूर्व-
माचार्य्यस्याधिकारापत्ते र्भ्रातृ भ्रातृपुत्त्रयोश्च सतोः पितामह-
पितृव्यादीनामेव प्रागधिकारापत्तेः । जीमूतवाहनस्तु ।

पितरावित्यस्मात्पितृक्रम एव वा गम्यते ।

तथाहि पितृ प्रातिपदिकात्प्रथमम्पितुरवगतौ द्विवचनाच्च
तेनैकशेष कल्पनायां सरूपैकशेषः सम्भवे विष्णुमन्वादि वच-
नसम्वादाच्च विरूपैकशेषत्वनिश्चये मातुरवगमात् । अतः क्रम-
ज्ञानं क्रमाभिधान व्याप्तं क्रमाभिधाने व्यापकेति वर्त्तमाने
निवर्त्तत इति श्रीकरोक्तिर्विपरीत क्रमोक्तिश्च विज्ञानेश्वरा-
द्या न युक्तेत्याह । तस्मान्नैयायिक क्रमस्यात्राव्यवस्थितत्वाद्द्व

द्विष्णुवचनोक्तः क्रम आदरणीयः। तत्र च दुहितृगामीत्युक्त्वा तदभावे पितृगामि तदभावे मातृगामीत्युक्तम्। मिताक्षराकारस्य तु प्रथमत एव तादृश पाठेनैव वृद्धविष्णुवचनं लिखतस्तद्विरुद्धन्यायमात्रावलम्बनेन पितराविव्यत्र पितृतः प्राङ्मातुः पुत्रधनाधिकारं सिद्धान्तयतो महत्येव हृदयशून्यता प्रतिभाति। दौहित्रस्यापि दुहितृकोटिनिविष्टत्वाद्वृद्ध विष्णुना पृथगनभिधानात्तेन दौहित्राभावोऽपि दुहित्रभावेनोपलक्ष्यत इति मन्तव्यम्। तस्मात् स्मृतिचन्द्रिकामदन रत्न कारकल्पतरु रत्नाकर पारिजातकार प्रभृतीनाम्बहूनाम्पितुरभावे मातुः पुत्रधनाधिकारइत्येव सिद्धान्तः। वाचस्पतिना तु तदभावे मातृगामि तदभावे पितृगामीति वृद्धविष्णुवचनं पठित्वा यथा मिताक्षरायामेव सिद्धान्तितं तत्तु कुत्रापि तदतिरिक्त ग्रन्थे तथा पाठस्यालिखनाद्भ्रान्तिविलसितमेव। विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादित्यपि मिताक्षराग्रन्थोदुष्टः विग्रहवाक्ये पूर्वनिपात नियमाभावात् समासे हि तन्नियमः शाब्दिकैः स्मर्य्यते न तु विग्रह वाक्य इत्यादि विज्ञानेश्वरोक्तन्याये यद्दूषणमन्यैरुक्तं तत्परिहाराय पराक्रम्यते। युगपदधिकरण वचनता तावत् द्वन्द्वस्य वचनाधिकरणे वार्त्तिके तन्त्र रत्ने च महता प्रबन्धेन निरस्ता। इतरेतरयोगोऽपि पदान्तरान्वये द्वन्द्वाच्छाब्दरीत्या प्रतीयते तेन पितरौ धन भाजावित्यनेन युगपदन्वयोऽपि वस्तु गत्या तयोः क्रमेऽपिन वाक्यदोषः। सर्वैश्च चीकरमिश्रैस्तदभ्युपगमात्सर्व समाधेयमिदम्। एकशेषाभावपक्षे च मातापितरौ मातरपितराविव्यत्र मातृशब्दस्य पूर्व श्रवणात्स्वरासे तयोपयोश्च तुल्य प्रतीतिजनकत्वाभावे

विकल्पायोगादत्रापि तथा प्रतीतेरभ्यर्पया विगृह्य वाक्ये ष्वपि पूर्वनिपातनियमो नानुनाशन सिद्धस्तथापि व्याख्यातृ सम्प्रदाय सिद्धोऽस्त्येव। न हि क्वापि पिता च माता च पितराविति विग्रहं दृश्यते किन्तु माता पिता स्वपितराविल्येवेत्यणुरपि विशेषोऽध्यवसायकर इति न्यायेन तस्यापि विनिगमकता सम्भवतीत्यन्ते नाशयेन तयोक्तेः सम्भवः। पितुः पुत्रान्तरसाधारण्यं मातुस्त्वसाधारण्यमिति प्रत्यासत्तिरपि जनकतया अव्यासज्यवृत्तित्वेऽपि तदभिप्रायेणैवोक्ता। साधारण्यासाधारण्ये हि सम्बन्धकृते व्यपदेशप्रतीतिविलम्बाविलम्बने भवत एव तथानुभवात्। वाक्यार्थबोधे क्रमाभावे किमिति वस्तु क्रम आश्रीयत इति श्रीकरोक्तिस्तु वचनान्तरे निरपेक्ष स्वाभ्यावगत्या क्रमापेक्षया स्मृतिचन्द्रिकाकारादिभिरप्यवश्यं निरस्यैव। इत्थं दिशा वचनविरोधः परन्तूत्तरोऽवशिष्यते तत्रापि यथाशक्ति प्रतिविधीयते। गौरव प्रतिपादकानि वचनानि तावन्माता पितृविषयाणि विरुद्धानि दृश्यन्ते। तानि विषयव्यवस्थयावश्यमविरोधन्नेयानि। तथाहि।

उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतम्पिता।
सहस्रन्तु पितुर्माता गौरवेणातिरिच्यते॥

गर्भधारणपोषाभ्यान्ते न माता गरीयसीत्यादीनि मातुरभ्यर्हितत्व प्रतिपादकानि। तयोरपि पिता श्रेयान्वीजप्राधान्यदर्शनादित्यादि स्मृतिवचनानि पित्राज्ञया परशुरामेण मातुः शिरश्छिन्नम्। रघुनाथेन कौशल्यया निवारितेनापि पित्राज्ञया राज्यं विहाय वनवास आदृत इत्यादि पौराणिकान्यार्थ दर्शनानि च पितृपूज्यता प्रत्यायकानि। तेषाञ्चायमविरोधः

प्रकारो यः पिता महागुरु लक्षणोपेतः स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छतीत्यादि योगीश्वरादि वचोभिः प्रतिपादितो माता च तदाज्ञा वशवर्त्तित्वादि पतिव्रतात्व प्रयोजक समस्त-लक्षणरहिता। तयोर्मध्ये मातुरपेक्षया पितै वाधिकाभ्यर्हितः। यत्र तु माताऽरुन्धत्यादिवत्समस्त पतिव्रता गुणोपेता पिता तु जन्ममात्रप्रदः सतत्र मातैव पितुरपेक्षयाभ्यधिकमान्या। चिरकारि कोपाख्यानादौ महाभारतादष्येवमुपाख्यान स्वर-सादयमर्थ उन्नीयते तदत्रापि मन्वादिवचनेष्वपुत्त्र पुत्त्रधन-ग्रहणाधिकारः क्वचित् मातुः प्रथमं क्वचित्पितुः प्रतीयमान एवमेव व्यवस्थापयितुमर्हः। तथाहि।

अनपत्यस्य पुत्त्रस्य माता दायमवाप्नुयात्।
मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति मनुः।
भार्य्या सुत विहीनस्य तनयस्य मृतस्य च।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञयेति वृहस्पतिः।

पुनर्मातुरेव। पिता हरेदपुत्रस्य रिक्थं भ्रातरएव वेति॥

तदभावे पिता तदभावे मातेति प्रागदर्शितं वृहद्विष्णु-वचनानि। योगीश्वरवचने तु पितरावित्यत्र विज्ञानेश्वरोक्त रीत्या प्राङ्माता तदनु पिता। अन्यमते सम्भूयविभागः पितु र्वा प्राथम्यमिति विप्रतिपत्तौ पितुरधिकमान्याया माता सा पितुरपेक्षया प्रथमाधिकारिणी। या तु पितुरपेक्षया न्यून-मानभाक् सा पितुः पश्चात्। युक्तञ्चैतत्। वृत्यादि सन्नि-धानमकुर्वतः पितुरपेक्षया मातुरेवाधिकोपकारकत्वाद्धनग्रह-णम्। वृत्यादि सन्निधानकर्त्तुस्तु तस्य यावज्जीवम्भरण पो-षणादिनातिशयितोपकारकस्य धनग्रहणमिति सर्व स्मृतीनां

सर्वं निवन्धानाञ्चादुस्थाता भवतीत्यादि सुधीभिर्विभाव्यम् ।

पित्रोरभावे भ्रातरो धन भाजः ।

यद्यप्य पुत्त्रधनं भ्रातृगामि अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यन्तदभावे पितराविल्यादि शङ्खपैठीन सिवचनयोः भ्रातर एवेति । मनुश्च । पितृतः प्राक् भ्रातृणान्धन गृहणं प्रतीयते । मातर्य्यपि च वृत्तायां पितुर्माताहरेद्धनमिति च मनु वचने भ्रातृतः प्राक् पितामह्याःस्तथापि क्रमपरयोगीश्वर वृहद्विष्णु वचनाविरोधाय तेषान्धनाधिकारमात्र परत्वमेतत्क्रमाविरोध सूचनार्थमेव मनुना भ्रातर एववेति पैठीनसिनापि ज्येष्ठा वा पत्नीति वा शब्दः प्रयुक्तोऽन्यथातुल्यकक्षाधिकारिषु तत् प्रयोगोऽत्यन्तमयुक्तः स्यादिति मिताक्षराकारादयो वहव.। कल्पतरुकारस्तु पत्नी भ्रातृस्थले श्राद्धाद्यधिकारिणी साध्वी पत्नी प्रथमाधिकारिणी तदन्या तु भ्रातृ पितृतोऽनन्तरम्। पितृभ्रातृस्थले तु पितृपितामहाद्युपार्ज्जितं यद्विभागेन पुत्रे संक्रान्तधनन्तस्मिन्न पुत्रैप्रमीतेपित्रोः पितृद्रव्याविरोधेन वृत्तेनोपार्ज्जितन्तत्पित्रोः सतोरपि भ्रातॄणामेवेत्याह मम तु प्रतिभाति मातर्य्यपि च वृत्तायामिति मनु वाक्ये । तदभावे मातापितराविति शङ्खपैठीनसिवचनयोः ।

ततो दायम पुत्त्रस्य विभजेरन् सहोदराः ।
तुल्या दुहितरो वापि म्रियमाणः पितापि वा ।
सवर्णा भ्रातरोमाता भार्य्याचेति यथा क्रमम् ॥

तेषामभावे स्युल्लीयुः कुल्यानां सहवासिन इति देवलवचने । सर्वत्रापि वृत्तायान्तदभावे । यथा क्रममित्यादिपदैः क्रमप्रतीतेर्योगीश्वर वृहद्विष्णु वचनयोरेव क्रमपरत्वमितरेषा-

न्त्वविकारमात्र परत्वेन तदविरोधेन तत्तत् स्थाननिवेशोऽप्यत्त-तिरिति समाधिर्नैव साधुः किन्तु चेत्रजादि पुत्र स्थले यथा स्मृति वचन क्रमविपर्य्यास औरसानु कूल्यप्रातिकूल्य गुण-वत्त्वागुणवत्त्वादिभिर्व्यवस्थापित स्तथात्रापि दायभाग प्रकरणे पुत्रादीनाम्पित्राद्युपकारकत्वकीर्त्तनस्य गुणवत्त्वादि कीर्त्त-नस्य वा नन्य प्रयोजनत्वात्प्रत्यासत्तितारतम्यवत्। धन स्वाम्यु-पकाराति शयानतिशय गुणवत्त्वागुण वत्वादिभिर्यथा वचनं स सर्वोऽपि क्रमविपर्य्यासः समाधयोऽन्ये तु समाधयः कुशका-शावलम्बन मात्रतुल्या अनु पादेया इति। एव मग्रेऽपीति सर्वं सुस्थम्। भ्रातृष्वपि प्रथमं सहोदराः।

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेदिति मनुना।
बहवोज्ञातयो यस्य सकुल्या बान्धवास्तथा।
यस्वासन्न तरस्तेषां सोऽनपत्यधनं हरेदिति ॥

वृहस्पतिना च।

प्रत्यासत्त्यतिशयस्यैवा सति विशेष वचने विनिगमक-त्वेनोक्तेः। भिन्नोदराणां मातृकृत विप्रकर्षात्। भ्रातर इति सामान्य ग्रहणात्सोदराभावे भिन्नोदराः। इदमेव व्यक्त मुक्तं संग्रहकारेण।

सोदर्याः सन्त्यसोदर्य्या भ्रातरो द्विविधा यदि।
विद्यमानेऽप्य सोदर्य्ये सोदर्य्या धनभागिन इति।

इति भ्रात्रधिकारः।

भ्रात्रभावे तत्सुताः भ्रातृ सुता धनभाजः।

न च तथा तत्सुता इति तथा शब्देन भ्रातृ पुत्त्रयोः सा-दृश्य प्रतिपादनात्। अनेकपितृकाणान्तु पितृतो भाग कल्प-

नेति वचनाद्धानयोः पितृभावे विभज्यधन ग्रहणमस्त्विति वाच्यं विष्णु वचनाविरोधन्न तथा शब्दस्य च शब्दार्थत्वात्। अन्यथा तथा पदस्य पूर्वत्राप्यन्वयसम्भवेन पितॄभ्रातृणाञ्च विभज्य-ग्रहणमित्यपि कुतो न स्यात्। तन्नेद्विष्णु वचन विरोधान्नेत्यु-च्यते सोऽत्रापि तुल्यः। अनेक पितृकाणान्त्विति वचने भ्रातृ-भावे तेषामधिकारे सम्पन्ने कस्मिंश्चिदप्य पुत्रे भ्रातरि प्रमीते-विद्यमानानां भ्रातॄणां सर्वेषान्तद्धन सम्बन्धे जाते तद्विभागात् प्रागेव तन्मध्येऽपि यदि कश्चिन्मृतस्तदा तत्पुत्राणाम्पितृव्यैः सह स-मविभागे प्राप्ते स्वपितृविभागमेव ते विभज्य गृह्णीयुर्न सर्वे पि-तृव्यसममित्येतदर्थम् भ्रातृमत्वे तत् पुत्राणाम्पितृव्यधनेऽन-धिकारात्। पूर्वाभावे परः पर इति योगीश्वर वचनात्तद-भावे भ्रातृ पुत्रगामीति विष्णुवचने भ्रातृपरामर्षकतत्पदेन भ्रातृभावाभिधानाच्च। भ्रातृ पुत्रेष्वपि प्रत्यासत्त्यतिशयात्पूर्वं सोदरभ्रातृजास्तदभावे भिन्नोदरजाः युक्तश्चैतत्। असोदर-भ्रातृ पुत्रो हि धनिनो मातरं विहाय स्वपितामही विशिष्टस्य धनिपितुः पिण्डन्ददातीति सोदरभ्रातृ पुत्राज्जघन्यस्तदनन्त-रमेवाधिकारीति। न च सपत्नीकत्वे त्रयाणां श्राद्धदेवतात्वा-त्सपत्न मात्रादीनामप्यस्ति तत्रानु प्रवेश इति वाच्यम्। मात्रादि शब्दानां स्वजननी पितृ जननी पितामह जननीष्वेव मुख्य-त्वात्तेनैव च रूपेण श्राद्धानुप्रवेशस्मरणात्। यथा स्मरन्ति।

स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधाकरम्।
पितामही च स्वेनैव स्वेनैव प्रपितामहीति॥

सपत्नमात्रादीना मनु प्रवेशः प्रत्युतः।

अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा।

तेषामपि च देयंस्यादेकोद्दिष्टन्न पार्वणमिति स्मरणादा-यांति। किञ्च। सपत्नीकदेवताक श्राद्धविधेः पुत्रादि सर्व्व ज-नाधिकारिकत्वात्सपत्न मात्रादीनाञ्चानित्यत्वान्नित्यानित्य सं-योगाविरोधान्मात्रादि सापेक्षमेव सपत्नीकत्वविधायकत्वं युक्तं।

इति भ्रातृ पुत्त्राधिकारः।

भ्रातृ पुत्त्राभावे गोत्रजाः।

पूर्वोक्त पितृभ्रातृतत्सुत भिन्ना गृह्यन्ते गोवलीवर्द्दन्यायात् तेच पितामही। सपिण्डाः समानोदकाश्च। तत्र प्रथमम्पिता-मही धनभाक्। मातर्य्यपि च वृत्तायां पितुर्म्माताहरेद्धन-मिति मानवान्मातृनन्तरम्पितामह्याधन ग्रहणे प्रसक्ते पित्रा-दीनां भ्रातृ सुतपर्य्यन्तानाम्बहु क्रमाणामन्तरा तु प्रवेशास-म्भवादुत्कर्षे ऽप्यग्रे तदुत्कालनकारणाभावात्तदनन्तर म्पि-तामह्याद्योऽन्ये गोत्रजा इति विज्ञानेश्वरः। अत्र स्मृति चन्द्रिकायाङ्गोत्रजा इत्यत्र सरूपैकशेषेण पुमांस एव गोत्रजा न तु स्त्रीरूपाः। विरूपैकशेषोहि कुक्कुटावा-नय मिथुनङ्कुर्व्वाम इत्यादि वाक्यशेषादि समभि-व्याहारादि प्रमाणान्तरावगत तात्पर्य्य ग्रहनिवन्धनी न चात्रप्रमाणमस्ति। प्रत्युत भ्रातृ सुतादि साहचर्य्यं पुङ्गोत्रज ग्रहण एव साधकमस्ति। किञ्च पत्नी दुहित्रादीनां स्वङ्ग्राही-कधन ग्रहणाधिकारोक्तेस्तस्मात् स्त्रियो निरिन्द्रिया अदायादा इति श्रुतेरस्तु तद्व्यतिरिक्त विषयतागोत्रजादि स्थले तद्विरोधादि रूपैकशेषकल्पनैव ह्यातु मह्या। अतएव जीवत्युत्रेभ्यः पिता-दायं विभजेदित्यापस्तम्बसूत्रव्याचक्षाणेन तद्भाष्य कारेण पु-त्रेभ्य एव दायं विभजेत न स्त्रीभ्योदुहितृभ्य इत्युक्तौ तं यद्यपि

भ्रातृ पुत्रौ स्वसृदुहितृभ्यामिति पाणिनिस्मरणात् त्रेभ्य इत्यत्र पुत्राश्च दुहितरश्चेति विग्रह्य विरूपैकशेषेण दुहितृणामप्यत्र पुत्रेऽनु प्रवेशः शक्यते कर्त्तुन्तथापि पुमांसोदायादान स्त्रियः। तस्मात्स्त्रियोनिरिन्द्रिया अदायादा इति श्रुतेरिति। श्रुतिविरोधात्तात्पर्यग्राहकमानाभावाच्च विरूपैकशेषोऽनुशिष्टोऽप्यत्र न ग्राह्य इति भाष्यकाराभिप्रायः। जीमूतवाहनोऽपि याज्ञवल्क्येन च पित्रादिदौहित्रस्यापि तद्गोत्र जातस्य पिण्डदानानन्तर्य्यक्रमेणाधिकार प्रतिपत्त्यर्थं गोत्रजपद ग्रहणं कृतम्। सपिण्डस्त्रीणाञ्च व्युदासार्थञ्च तासामतद्गोत्रजातत्वात्। अतएव अर्हन्ति स्त्रीत्यनुवृत्तौ बोधायनः। न दायन्निरिन्द्रिया अदायादाश्च स्त्रियोमता इति श्रुतेरिति। नायमर्ह स्त्रीत्यन्वयः। पत्न्यादीनान्त्वधिकारोविशेष वचनाद्विरुद्ध इति। तत्र साधुः मन्वादि वचनेषु प्राग्लिखितेषु पितामह्या धनाधिकारस्य स्पृङ्ग्राहिकयैव विधानात्तदेकवाक्यतया योगीश्वर वचनस्यापि विरूपैकशेषेण तत् संग्रहेऽपि श्रुतेस्तदन्यपरत्वेनाविरोधात्। जीमूतवाहनस्य तु मात्रधिकार विचार प्रस्तावे पितामह सन्तानात्पूर्वम्पितामहाच्च परतः पितामह्या धनाधिकारः। पितृतः परतोमात्रधिकारवत्। याज्ञवल्क्येन मात्रधिकार प्रदर्शनेनैव पितृव्यादिभ्यः पूर्वम्पितामह्योरधिकारस्य सूचितत्वात्पृथङ्नोक्त इति वदतोऽत्र च सपिण्डस्त्रीव्युदासार्थङ्गोत्रज ग्रहणं वदतः पूर्वापर विरोधानु सन्धानमपि नास्ति। स्पृङ्ग्राहिकया योगीश्वर वचने पितामह्याः पितृव्यादि पत्नीवदनभिधानस्य तुल्यत्वात्तद्देवादायाद श्रुतिप्रवृत्तेर विरोधात्। विद्यारण्य श्री चरणोक्त प्राग्लिखितं तस्मान्निरिन्द्रिया इत्यादि

श्रुतिव्याख्याने तु स्त्रीणान्दायग्रहणप्रतिषेधकत्वमेवास्याः श्रुते र्नास्तीति न वा शङ्का नचोत्तरम्। परन्तु बौधायनमुनिवचन-विरोधे तद्व्याख्यानद्वयमुपपद्यताम्। अस्तु वा इन्द्रिय पदस्य वा-क्यशेषात्सामान्य परता तथापि दायादत्वाभावाभिधानावलम्ब-नस्यान्यस्य सत्वान्निरालम्बन श्रुतेर्वा ऽभ्यनाम्निइवत्कीर्त्त नानु-पपत्ति प्रसूत प्रतिषेध कल्पनावश्यम्भावात्। तस्माद्गर्भेणावि-ज्ञातेन हतेन ब्रह्महेत्यत्रैवेति ध्येयम्। पितामह्या अभावे पिता-महादयः। सगोत्राः सपिण्डा धन भाजः। भिन्नगोत्राणां सपि-ण्डानां बन्धुशब्देन ग्रहणात्। तत्रापि पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धन भाजः। पितामह सन्तानाभावे प्रपितामही प्रपितामहस्तद्भ्राता तत्सून-वश्चेत्येव मासप्तमात्समानगोत्राणां सपिण्डानामपुत्त्रधन भाक्त्वम्। सपिण्डाभावे समानोदकानाम्। ते च सपिण्डाना-मुपरि सप्त। जन्मनामज्ञानावधिका वा। यथाह मनुः।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।

समानोदकभावस्तु निवर्त्तेता चतुर्द्दशात्।

जन्मनाम्नोः स्मृतेरेके तत्परं गोत्र मुच्यत इति॥

विष्णु वचने बन्धुसकुल्यपदाभ्यां सपिण्ड सगोत्रौ गृह्येते इति प्रागेव प्रतिपादितम्। समानोदका अपि प्रत्यासत्ति क्रमे-ण धन भाजः। समानोदकाभावे बन्धवो धन भाजः। बन्ध-वश्च त्रिविधा आत्मबन्धवः पितृबन्धवो मातृ बन्धवश्च। तथा च स्मृतिः। आत्मपितृष्वसुः पुत्त्रा आत्ममातृष्वसुः सुताः।

आत्ममातुल पुत्त्राश्च विज्ञेया ह्यात्मबान्धवाः॥

पितुः पितृष्वसुः पुत्त्राः पितुर्म्मातृष्वसुः सुताः।

पितुर्म्मातुल पुत्त्राश्च विज्ञेयाः पितृ बान्धवा ॥
मातुः पितृष्वसुः पुत्त्रा मातुर्म्मातृष्वसुः सुताः ।
मातुर्मातुल पुत्त्राश्च विज्ञेया मातृ बान्धवा इति ॥

तत्रापि प्रत्यासन्नत्वात्प्रथम मात्मबन्धवस्तदनन्तरम्पितृ बन्धवस्तदनु मातृबन्धव इति क्रमः । मनु स्मृतौ तदभावे सकुल्यः स्यादाचार्य्यः शिष्यएव वेत्यत्र सकुल्यशब्देन सगोत्र समानोदकानां मातुलादीनां बन्धुत्रयस्य च ग्रहणं योगीश्वर वचनेऽपि बन्धुपदेन मातुललक्षणमन्यथा मातुलादीनामग्रहणमेव प्रसज्येतेति तत् पुत्त्राणान्धनाधिकारस्ततः प्रत्यासन्नानान्तेषामेव स नेति महदनौचित्यमापद्येत । बन्धूनामभावे आचार्य्योधन भाग्यद्यपि योगीश्वर वचनस्याचार्य्यो नोपात्तस्तथापि शिष्य उपात्तस्ततः प्रधान तमः प्रत्यासन्नतमश्चाचार्य्य औचित्यादुपलक्षणीयः । आचार्य्यः शिष्य एववेति मनुना । पुत्त्राभावे प्रत्यासन्नः सपिण्डस्तदभावे आचार्य्यस्तदभावेऽन्तेवासीत्यापस्तम्बेन च स्पष्टमेवाचार्य्याभावे शिष्यस्याधिकार बोधनाच्च । शिष्याभावे स ब्रह्मचारी सहाध्यायी धन भाक् । यस्यैकस्मादाचार्य्यादुपनयनाध्ययने । स ब्रह्मचारिणोऽभावे ब्राह्मण द्रव्यव्यतिरिक्तं राजा गृह्णीयात् । सहाध्यायिपर्य्यन्तमधिकार मुक्त्वा तदभावे ब्राह्मणधनवर्जं राजगामीति प्रागुदाहृत वशिष्ठ वचनात् । सर्वेषामप्यभावे तु ब्राह्मणा रिक्थ भागिनः ।

त्रैविद्याः शुचयो दान्तास्तथा धर्म्मो न हीयते ॥
अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः ।

इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृप इति मनु वचनाच्च । ब्राह्मण द्रव्यं स ब्रह्मचारिपर्य्यन्ताभावे श्रोत्रियो ब्रा-

ह्मणः प्रथमं गृह्णाति। तदभावे ब्राह्मणमात्रम्। यथाह गौतमः। श्रोत्रिया ब्राह्मणस्यान पत्यस्य रिक्थम्भजेरन्निति।

ब्राह्मणमात्रन्तु मनु वचने ब्राह्मणमात्र ग्रहणात्॥

नारदोऽपि। ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन।

ब्राह्मणस्यैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति॥

पुत्रादीनां पत्नीपर्य्यन्तानान्दायहराणां वानप्रस्थादि विषयेऽपवादमाह योगीश्वरः।

वान प्रस्थयति ब्रह्मचारिणां रिक्थभागिनः।

क्रमेणाचार्य्य सच्छिष्यधर्म भ्रात्रेकतीर्थिन इति।

ब्रह्मचार्य्यत्र नैष्ठिको यति साहचर्य्यात्। तेनोप कुर्वाणस्य धनं पुत्रादिदौहित्रान्तानाम सम्भवात्पित्रादय उक्त क्रमेण गृह्णीयुः। क्रमश्चात्र प्रतिलोमो ज्ञेयः। तथा च नैष्ठिकस्य वृत्तस्य धनमाचार्य्यस्य यतेः सच्छिष्यस्य वानप्रस्थस्य धर्मभ्रात्रेकतीर्थिनः। धर्मभ्राता प्रतिपन्नो भ्राता। तीर्थशब्दस्त्वाश्रमवाचित्वादेकतीर्थ्येकाश्रमी। धर्म भ्राताचासावेकतीर्थीचेत्यर्थः। शिष्यस्य स्वत्वन्तु न सद्वृत्तत्वम्। दुर्वृत्त पुत्रादीनामपि धनानधिकारस्य प्रमाणान्तरेणैव प्राप्तत्वात्। तच्च वक्ष्यते। किन्त्वध्यात्मशास्त्र श्रवणधारणतदर्थानुष्ठानक्षमत्वं ग्राह्यम्। मदन रत्नकारस्तु। वानप्रस्थधन माचार्य्यो गृह्णीयाच्छिष्यो वेति विष्णु वचनं लिखित्वानु लोममेव क्रमं मत्वा वानप्रस्थधनमाचार्य्याभावे शिष्योगृह्णीयादित्याह। नत्वनंशास्त्वाश्रमान्तरगता इति वशिष्ठादि वचनैर्नैष्ठिकादीनान्धन सम्बन्धाभावस्य वक्ष्यमाणत्वात्तद्धन ग्रहणाधिकारिकथनमनानुप पन्नं च रिक्थग्रहणस्य तेषां वसिष्ठादिभिर्निषेधेऽपि प्रकारान्तराज्जिं ततदीयधनावि-

कार प्रतिपादकमिदम्भविष्यतीति वाच्यम्। ब्रह्मचारी यति-स्यैव पक्वान्नस्वामिनावुभावितिस्मृते ब्रह्मचारिणश्च प्रतिग्रहा-दिनिषेधात्। अनिषेधाद्वाधनमिति चेत्। न वानप्रस्थस्य तावत्

अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा।

अर्थस्य निचयं कुर्य्यात्कृत माश्वयुजेत्यजे दिति॥

वचनाद्भोजनादि पर्याप्त यत्किञ्चिद्धन संग्रहोऽस्त्येव यतेरपि। कौपीनाच्छादनार्थं हि वासो वै बिभृयाद्यतिः।

योगसम्भारभेदांश्च गृह्णीयात्पादुके तथेति॥

वचनादस्त्र पुस्तकादिकिञ्चिदस्त्येव। नैष्ठिकस्यापि शरीरया-त्रार्थं वस्त्रादि सम्बन्ध आवश्यकः। तेन स्वतानान्तेषान्तात्केन ग्राह्यमित्यपेक्षा न्यायादान्तरापवादेनैतेऽधिकारिण उच्यन्त इति

अथ संसृष्टिधन विभागः।

तत्र मनुः। विभक्ताः सहजीवन्तो विभजेरन् पुनर्यदि।

समस्तत्र विभागः स्यात् ज्यैष्ठ्यं तत्र न विद्यत इति॥

अत्र समविभाग नियमादेव विषमविभाग प्रकारनिरा-से सिद्धे ज्यैष्ठ्यन्तत्र न विद्यत इति पुनर्वचनं ज्यैष्ठ्यादि कृत एव विषमविभागो न भवति। बह्वल्पधन संसर्गानुरोधीतु विषम विभागो भवत्येवेति सूचनार्थम्। केचित्तु संसृष्ट द्रव्यापचयां श-ज्यैष्ठ्यादि कृतोविषमविभागो भवत्येव। संसृष्ट द्रव्यविभागस्तु सम एवेत्येतज्ज्ञापनाय ज्यैष्ठ्यमिति वाक्यशेष इत्याहुः।

तत्र एतादृशव्यवस्थाया श्रस्मात् प्रतीतेः।

समस्तत्र विभागः स्यादित्युक्त्या द्रव्योपचयेऽपि साम्यनियम प्रतीतेः। संसृष्टि विभागेऽप्य विभक्त विभाग वत्संसृष्ट द्रव्यावि-रोधेन विद्यादि लब्धस्याविभाज्यत्वन्तुल्यमेव प्राप्तमपददति।

बृहस्पति:। संसृष्टिनान्तु य: कश्चिद्विद्या शौर्य्यादिनाधिकम्।
प्राप्नोति तस्य दातव्यो द्यंश: शेषा: समांशिन:॥

संसृष्टिता च पित्रादिनैव कर्त्तव्या नान्येन विभक्तो य: पुन: पित्रेत्यादि प्राक्लिखित बृहस्पति वचनादिति बहव: वयन्तूपलक्षणम्पित्रादि गृहणमित्यादि प्रायश्चित्तम्। अविभक्त विभागात्संसृष्टिष्वपि मिथो विभाग करणात्प्राग्यो मृतस्तस्य पुत्रा: प्रमीत पितृकाणान्तु पितृतोभाग कल्पनेति वचनात् स्वस्वपित्रंशं विभज्य गृह्णीयु:। यस्य तु संसृष्टिनो मृतस्य पुत्रादयो न सन्तित त्वन गृहणेपत्नीत्यादि वचनात्पत्न्यादीनां प्राप्ते तदपवादत्वेन स्वस्यातस्य ह्य पुत्रस्यैवेत्यनु वृत्तावाह योगीश्वर: संसृष्टिनस्तु संसृष्टीति। तु शब्दात्पूर्वापवाद:। अपुत्रस्य संसृष्टिनो मृतस्यधनं संसृष्ट्येव गृह्णीयान्न पत्न्यादिरित्यर्थ:। एतेन-पत्न्याद्य पुत्रधन गृहणाधिकारिगणे भ्रा-धिकारावसरे वचनमिदं प्रवर्त्तत इति व्याचक्षाणो जीमूतवाहनो भ्रान्तएवेत्यव सेयम्। अस्याप्य पवाद:। सोदरस्य तु सोदर:।

दद्याच्चापहरेच्चांशं जातस्य च मृतस्यचेति।

संसृष्टिन: संसृष्टीत्यस्यात्रापि सम्बन्ध:। तयाचायमर्थ:। सोदर: संसृष्टी संसृष्टिन: सोदरस्य जातस्य पुत्ररूपेणोत्पन्नस्यांशन्दद्यात्तत्पुत्राय दद्यादिति यावत्। मृतस्य पुत्रादिद्वयरूपेणाप्य जीवतोरंशमपहरे दात्मसात्कुर्य्यात् स्वयमेव गृह्णीयादित्यर्थ:। पदद्वयानु षङ्गं विनैव व्याख्याने तु शब्दबलायातमस्य पूर्वापवादत्वं भज्येत। एवञ्च सोदरासोदर संसृष्टिसद्भावे सोदर एव संसृष्टीसोदर संसृष्टिधन गृहणाधिकारी न भिन्नोदर इति पूर्वोक्तापवाद:।

यत्र तु भिन्नोदर एव संसृष्टीसोदरास्व।
तत्र द्वयोर्विभज्य पुत्रादिरहित भ्रातृधन ग्रहणमित्याह:।

अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत्।
असंसृष्ट्यपि चादद्यात्संसृष्टो नान्य मातृज इति॥

अत्रासंसृष्टिपदङ्काकाक्षि वत्पूर्व्वोत्तरार्द्धयोरपि संबध्यते। तथा संसृष्ट इत्यपि। तच्च पूर्वार्द्धे एकोदर संसृष्ट: सोदर इत्यर्थक:। उत्तरार्द्धे तु संसृष्टित्वार्थकं अन्य मातृज इत्यनन्तरश्चैवकारोऽध्याहार्य्य:। ततश्चायमर्थ:।

अन्योदर्य्यो सोदरोऽपि संसृष्टी चेद्धनं हरेत्।

असंसृष्टी चेद्धनं हरेत्। असंसृष्टी चेदन्योदर्य्यो न हरेत्। तथा चान्वय व्यतिरेक प्रदर्शनेन भिन्नोदरस्य संसृष्टित्वमेवैकं धनग्रहणकारणं न भ्रातृत्व मात्रमित्युक्तं भवति। तथा संसृष्ट: सोदरो संसृष्ट्यपि चेद्धनं हरेत्किमुत संसृष्टी। संसृष्ट संसृष्ट्यप्यन्य मातृज एवैको धनन्न हरेत्। किन्तु सोदरेण संसृष्टिनापि सह विभज्य गृह्णीयात्। अत्रायं पर्य्यवसितोऽर्थ:। असंसृष्टिसोदरे संसृष्टि भिन्नोदरे च सत्यपुत्त्रभ्रातुर्द्धनं सोदरत्व संसृष्टित्व रूपैकैक धनग्रहणकारणयोगात्समं विभज्य गृह्णीयाताम्। सोदरोऽपि चेत्संसृष्टी कारणद्वययोगेन बलवत्त्वात्सर्वं स एव गृह्णीयादिति। अत्र चैकैकनियमेनार्थदपरकारण निरास सिद्धावपि दृढीकरणाय पुनस्तन्निरास:। उभयथापि वाक्यव्युत्पत्ते:। पुंलिङ्गश्च संसृष्टीत्यादावविवक्षितमतएव मनुना सोदर भगिनीनामपि तद्धनग्रहणमुक्तम्। यथाह।

विभक्ता: सहजीवन्तो विभजेरन् पुनर्य्यदीति
संसृष्टिविभागमभिधाय। येषां ज्येष्ठ: कनिष्ठो वा हीयेतांशप्रदानत:।

म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥
सोदर्या विभजेयुस्तं समेत्य सहिताः समम्।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभय इति॥

येषां संसृष्टिनां मध्येऽन्यतरः संसृष्टी ज्येष्ठः कनिष्ठोऽपि मध्यमोवांश प्रदानतो हीयेतानधिकार्य्यंश प्रदाने स्यात्। सार्व विभक्तिकत्वात्सप्तम्यर्थे तसिः। विभागकाले पातित्येनाश्रमान्तर परिग्रहेण वा म्रियेत वाऽगृहीतभागएव। तर्हि तस्य भागो न लुप्यते पृथगुद्धरणीयः। स च प्रथमं तत्पुत्रादिभ्यो देयः।

तदभावे सोदर्या भ्रातरो संसृष्टा अपि।

समेत्य देशान्तरगतास्तत्र आगत्य सहिता मिलिताः। ये च भ्रातरो भिन्नोदरा अपि संसृष्टाः संसृष्टिनः स नाभयो स्वस्य सहोदरा भगिन्यश्च सममवैषम्येण विभजेयुर्विभज्य गृह्णीयुरित्यर्थः। अत्र सोदर भ्रातर भगिनीनामसंसर्गेऽपि संसर्गे च भिन्नोदराणामपि धनाधिकारमभिदधता मनुना योगीश्वरोक्त एवार्थः स्पष्टमुक्तो भवति। अत्र श्रीकरः। संसृष्टिनस्तु संसृष्टीत्यस्यासोदर संसृष्टिमात्र विषयत्वेऽन्यानपेक्षत्वात् सोदरस्य तु सोदर इत्यस्याप्य संसृष्ट सोदरमात्र विषयत्वे तथात्वाद सोदरे संसृष्टिनि सोदरे चासंसृष्टिन्युभयोः प्राप्तौ वदि द्वयमेव प्रवर्त्तते तदान्योऽन्य सापेक्षयोरुभयो र्विधायकत्वं स्यात्। नचैकस्य सापेक्ष निरपेक्षोभयरूपतया विधायकत्वं विधिवैषम्यादापादकमुचितम्। पर्वद्वये विकल्प सापेक्षं विधानम्। पर्वद्वये च निरपेक्षमिति उत्तरवेदिविधि वैषम्यापत्तेः यथा द्वयोः प्रणयन्तीत्यस्य न वैश्वदेव उत्तरवेदिमि-

त्यादि निषेधकृत विकल्प सापेक्षं पर्वद्वयं विधानमन्य पर्वद्वये तु निरपेक्षमिति सप्तमाधिकरणे विधि वैषम्यभयादन्यथा सिद्धान्तितम्। तथा सिद्धान्तितम्। तथा चासोदरे संसृष्टिन्य संसृष्टिनि च सोदरे उभयोरप्रवृत्तौ न कोऽपि तद्धनं गृह्णीयादित्यापतेत्। अतः संसृष्टिनस्त्वित्यनेन संसृष्टिधने संसृष्टिनोऽधिकार उक्ते तदपवादोऽयं सोदरस्यत्विति। तथा च संसृष्टिनोऽप्य सोदरस्य सोदरे संसृष्टित्वरहितेऽपि सति नाधिकार इत्याह। तन्मीमांसानयतत्वालोचन निबन्धमभिधाने हि द्वयोः क्वचिन्निरपेक्षयोः प्रवृत्तयोः शास्त्रयोः क्वचिदुभयविषयसमावेशवशादेकत्र प्रवृत्तिमात्रेण वैरूप्यम्भवति तथा सति केवलोद्गात्र प्रतिहर्त्रोरपच्छेदे निरपेक्षयोः सर्वस्व दाक्षिण्यशास्त्रयोर्युगपदुभयापच्छेदे प्रवृत्त्यभावाद्विरोधाभावेन किङ्केन बाध्यत इति विचारो निर्मूलः स्यादपच्छेदनये। तस्मात् क्वचिद्विध्यन्त बाध निरपेक्ष विधानं क्वचित्तद्बाध सापेक्षं चेत्तदा वैरूप्यं यथोपात्तवपन्तीत्यत्र प्राङ्निरूपितम्। अन्यथा चतुर्होत्रा पौर्णमासीमभिमृशेत् सप्तहोत्रामावास्यामित्यनयो रुपांशु यागाग्नीषोमीय विषय ऐन्द्रदध्यैन्द्रपयो विषये चैकैकशः प्रवृत्तयोरुभयो साधारणयो र्हविषि विषय समावेशेऽप्येकमपि न प्रवर्त्तेत। यदपि स्वयमुपवर्णितं संसृष्टिनस्त्वित्यस्यापवादः। सोदरस्यत्वित्यादिरिति। तदत्यसम्बद्धं।

विनिगमकाभावेन वैपरीत्यस्यापि सम्भवात्।

पौर्वापर्यमात्रस्याप्रयोजकत्वात्। तस्मान्योदर्यवचनं संसृष्टिनस्त्वित्यस्यैव विवरणार्थमित्युक्तं तेन वचोभङ्ग्यानर्थक्यमेव तस्योक्तम्। किञ्च सोदरेऽसंसृष्टिनि संसृष्टासोदरापवादार्थं सोदर

वचनस्य वर्णनात्सोदरा सोदरयोरुभयोरप्यसंसृष्टित्वे प्रवृत्त्य-भावात् तुल्याधिकारो वा द्वयोरपि स्यात् । अथात्रापि सोदर वचनमेव प्रवर्त्तते तर्ह्येकत्र संसृष्टिवचनबाध सापेक्षमन्यत्र तु स्थिरपक्षमिति प्रत्युत तवैवविधि वैरूप्यम् । यथा सौमिकी-वेदिपादि दीक्षणीयादिष्वति देशप्राप्तदर्श पौर्णमासिकवेदि बाधेन विधीयेत तर्हि तत्रातिदेशबाध सापेक्षस्तद्विधिरन्यत्र तन्निरपेक्ष इति वैरूप्यादवेदिमद्विषयकत्वमेव तस्य व्यपस्था-पितं तन्त्रे । अस्मन्मते तु व्याख्यातरीत्या द्वयोर्भिन्नविषयत्वे-नानर्थक्य वैरूप्ययोर्न प्रसक्तिरिति कृतं विस्तरेण । स्मृति-चन्द्रिकाकारस्त्वाह येषां ज्येष्ठः कनिष्ठो वेत्यादि मनुवचने च शब्देन सोदर भ्रातृ भगिन्य सोदर संसृष्ट भ्रातृणामितरेतर-युक्तानां विभागकर्त्तृतायाः समेत्य सहित शब्दाभ्यामवगतेर्योगी-श्वरवचः संसृष्टि सोदर सद्भावे भिन्नोदरस्यानधिकारावगते-रस्ति तावदनयोर्विरोधे तद्विरोधपरिहारार्थं केचिदेवं मानवं व्याचक्षते । तमनुप्तभागं सोदरा यदि संसृष्टास्तदात एव गृह्णीयुर्नो संसृष्टिनः सोदरा अपि । संसृष्टसोदराभावे सर्वे सोदराः समेत्य मिलित्य सहिताः समप्रधानभावेन समन्यूनाधिकं विभजेरन् सोदराणामभावे सनाभयो भगिन्यस्तासामप्यभा-वेऽन्योदर्या इति । तदेतदनेकाध्याहार दोषादति क्लिष्टत्वा-च्चोपेक्षणीयम् । विज्ञानेश्वरेणापि मानव संवादायान्योदर्यस्तु संसृष्टि नान्योदर्यो धनं हरेदिति पठं न योगीश्वरवचनस्य यत्तदप्याहृत्त्यध्याहारादिना क्लिष्टमत्यन्ताप्रतीयमानार्थकं स्वमनीषाविजृम्भितमात्रम् । तस्माद्यथा प्रतीयमानार्थकयोरेव मनु योगीश्वरवाक्ययोर्विषय व्यवस्थये वा विरोधो वाच्यो नाति-

क्लिष्टैकार्थ्यैवेति सैवोच्यते स्थावर जङ्गमात्मकोभयविध धनसद्भावे मनुवचनं संसृष्टासंसृष्टानां भ्रातॄणां भगिनीनाञ्च विभज्यग्रहणं बोधयति। योगीश्वरवचस्तु केवलस्थावरसद्भावे केवल तदि तरद्रव्यसद्भावे वा तद्विषयम्।

अन्तर्द्धनन्तु यद्द्रव्यं संसृष्टानान्तु तद्भवेत्।

भूमिं गृह्णन्त्वसंसृष्टाः प्रगृह्णीयुर्यथांशत इति प्रजापतिस्मृतेः।

द्रव्यमिति गो वलिवर्द्दन्यायेन प्रकटस्य द्विपद चतुष्पदादि रूपस्य जङ्गम द्रव्यस्य ग्रहणम्। संसृष्टानां भिन्नोदराणामिति शेषः। योगीश्वरवचसि नान्योदर्य्यादिति पाठः। तस्मात् केवल स्थावर सद्भावे केवल जङ्गम सद्भावे च योगीश्वरवचनादसंसृष्टोऽपि सोदरस्तद्गृह्णीयान्न तु संसृष्टोऽपि भिन्नोदरः। उभयविध धनसद्भावे तु प्रजापतिवचनोक्त व्यवस्थाया। संसृष्टाः सोदरा भ्रातृ भगिन्यः संसृष्टा भिन्नोदराश्च विभज्य गृह्णीयुः। मनुवचनञ्चाप्येतदर्थमेवेति। तदसत्। अध्याहार क्लिष्टतादि दोषस्य तत्राप्यन पायात्। प्रजापति वचनोक्त व्यवस्थाया विज्ञानेश्वरीय व्याख्यानेऽप्यविरोधात्। अतएव मदनरत्नकृता तद्व्याख्यानमभ्युपेत्यैव प्रजापतिवचनमपि व्यवस्थापकतया पठितमत्युत भवद्व्याख्याने योगीश्वरवचने पौनरुक्त्यं दुष्परिहरमापद्यते। अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेदित्यनेनोक्तस्यैवार्थस्य संसृष्टो नान्य मातृज इत्यनेनान्यूनानतिरिक्तस्य प्रतिपादनात्। मानव संवादिनो पुनरुक्तस्यार्थस्य क्लेशेनापि वक्तुं शक्यत्वे मूलभूत श्रुत्यन्तर कल्पना गौरवापादकस्यार्थान्तरस्य कल्पयितु मनुचितत्वाच्च। याज्ञवल्क्य स्मृतिटीकायां शूलपाणिः।

अन्योदर्य्यः संसृष्टीनान्योदर्य्यं धनं गृह्णीयात् ।

असंसृष्ट्यपि सोदरएव गृह्णीयात् । न तु संसृष्टः सा पत्न भ्राता । नान्योदर्य्यो धनं हरेदिति पाठे अन्योदर्य्यः ससंसृष्ट्यपि धनं न गृह्णीयादिति व्याख्या । असंसृष्टि सोदराधिकारार्थमिदं वचनमतो न पुनरुक्ततेत्याह तन्तु श्रीकरमत समानयोग क्षेमम् । रत्नाकरकृत्त्वाह यस्तु कल्पतरौ नान्योदर्य्यं धनं हरेदिति पाठो दृश्यते समूलभूत याज्ञवल्क्य मिताक्षरा पारिजात हलायुध ग्रन्थेषु नान्योदर्य्यो धनं हरेदिति पाठदर्शनात्त दनुसारि व्याख्यानदर्शनाच्च लिपिप्रमाद एवेति। दायतत्वकारस्तु सोदरे संसृष्टिनिसंसृष्टिन्य सोदरे च कतरस्तावद्गृह्णीयात् । एवं सोदरा सोरयोः संसृष्टिनोः सद्भावेकतर इत्यत्र प्रथम आह अन्योदर्य्यस्त्विति । अन्योदर्य्यः पुनः संसृष्टी स नगृह्णीयान्नान्योदर्य्यमात्रः । किन्त्व संसृष्ट्यपि पूर्ववचनस्य सोदरपदानुषङ्गात्सोदरो गृह्णीयात् । तेनैकत्र विषये पूर्ववचनोक्त सोदरत्व संसृष्टित्वयोरेकशः सम्बन्धेन तुल्यत्वाद्विभज्य ग्रहण मेतदुभय सत्त्वेवासोदरस्या संसृष्टिनोतुल्य रूपत्वान्नेति द्वितीय आह संसृष्टोनान्यमातृज इति । सोदरे संसृष्टे सत्यन्यमातृजः संसृष्टोपिन गृह्णीयात् । अर्थात्तत्र संसृष्टी सोदर एव गृह्णीयात् । संसृष्टत्वाविशेषेऽपि सोदरत्वेन तस्यैव बलवत्त्वादित्याह तदपिमिताक्षरादि सम्वाद्येव व्याख्याना कौशलन्त्वधिकम् । यदा तु संसृष्टः पिता पितृव्यो वा नास्तितदाऽसंसृष्टभिन्नोदरो गृह्णीयात् । तदभावे त्वसंसृष्टः पिता । तदभावे तत् पत्नी । तथा च शङ्खः । स्वर्य्यातस्य ह्य पुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा

पत्नीति। स्वर्यातस्या पुत्रस्य संसृष्टस्य संसृष्ट्यभावे भिन्नोदरा संसृष्ट भ्रातृगामि द्रव्यमित्यर्थः। तेन संसृष्टधन विषये यथा स्थितमेवेदं वा चनमिति स्मृतिचन्द्रिकामदनरत्नकारावाहतुः। संसृष्ट भ्रातृ विषयमेवैतत्तेन पितृ पत्न्योस्तदभाव इति न विरुद्धमिति मिताचराकारादयः। स्मृति चन्द्रिकायां शङ्खवचने ज्येष्ठग्रहणं सुसंयतत्वादि गुणवत्वकथनार्थं न तु मध्यमादिनिवृत्त्यर्थम्। पुनरपि तदभाव इति वक्तव्ये वाशब्दः प्रयुक्त फलसाम्यात्। तथाहि। वा शब्दाद्विकल्पः प्रतीयते। न चात्र स्वाम्यरूपे वस्तुनि तुल्यावगतेः फलसाम्यमस्त्येव। एवं चायं क्रमः भ्रातृभावे पिता। तदभावे माता तदभावे ज्येष्ठा पत्नीति मदनरत्ने तु मातापित्रोर्विपरीतक्रमः। मिताचरोक्तन्यायाद्विभक्ता संसृष्टविषय विष्णुवचन वदत्र न्यायवाधक वचनाभावादिति तदाशयः। अतएव पत्नीदुहितर इति वचने विष्णु वचनानुरोधेन स्मृतिचन्द्रिकावत्पितरावित्यत्र प्राक् पिता तदभावे मातेत्येव तत्रोक्तम्। प्रपञ्चित श्चैतद्विस्तरेणास्माभिः प्रागेव। ततश्च मदनरत्नो दुहित्रादि क्रमविरोधाद विरोधाय तत् संसृष्टभाग विषयमिति कल्प्यते विभक्तोक्तनैयायिक पत्नीदुहित्रादि क्रमोऽत्र वाचनिक क्रमेण वाध्यते। अस्मिन् क्रमे कस्य चिन्न्यायस्याभवाद्वाचनिक एवायं क्रमः। नारदोऽपि।

मृतेपत्यौ तु भार्य्यास्तु अभ्रातृपितृ मातृकाः।
सर्वे सपिण्डास्तु धनं विभजेयुर्यथांशत इति॥

अस्यार्थः। भार्य्याः पत्न्यः। अभ्रातृ पितृमातृकाः याः पत्युर्भ्रातृ पितृमातरस्तदभाव विशिष्टा इत्यर्थः। अत द्वन्द समासे

भ्रात्रपेक्षयाभ्यर्हितपित्रादिपद पूर्वनिपातं परित्यज्य वैपरीत्येन समासरचनां कुर्वता नारदेन संसृष्टापुत्र द्रव्यं प्रथमं भ्रातृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे वृत्तस्यपत्न्यभिगामीति दर्शितम्। एवञ्च संसृष्टपत्नीनां मुख्यगौण पुत्त्राभावेन प्रथमन्दायहरत्वं किन्तु संसृष्टि सोदरभिन्नोदर भ्रातृ पितृमातृणामप्यभावे इति। द्रष्टव्यम्। सर्वे सपिण्डास्त्वित्यादेस्त्वयमर्थः। संसृष्टा पुत्त्रस्य ये भ्रातृ पितृ मातृ व्यतिरिक्ताः सपिण्डाभ्रातृ पुत्त्रादयस्ते स्वधनम्पूर्वम पुत्रधनेन सह स्वपित्रादिना संसृष्टन्तदूर्ध्वन्तत्पत्नीभिः सह यथांशतो भ्रातृ पुत्राणां भ्रात्रंशो भार्य्याणाम्भर्त्रंश इत्येवमंशानतिक्रमेण विभजेयुरिति। पत्न्यभावे संसृष्टा पुत्रांशन्तद्भगिनी लभते। तथा च वृहस्पतिः।

या तस्य भगिनी सातु ततोऽंशंलब्धुमर्हति।
अनपत्यस्य धर्म्मोऽयमभार्य्या पितृकस्य च॥

अमातृकस्य चेति च शब्दार्थः। भगिन्यभावे केवलाः सपिण्डा अनन्तराः सपिण्डास्तद्दायं विभजेरन् यथांशतः। तदाप्तस्य तस्य धनम्भवेदिति मनूक्त प्रत्यासत्तिक्रमेण लभेरन्। प्रतिपदोक्तानाम भावात्। तथा च स एव।

मृतोऽनपत्योऽभार्य्यश्चेद भ्रातृ पितृ मातृकः।
सर्वे सपिण्डास्तद्दायं विभजेरन् यथांशतः॥

तद्दायं संसृष्टिदायम्। मृतोऽनपत्य इत्यादेः प्रतिपदोक्त संसृष्टधन ग्राहिरहितश्चेदित्यर्थः। सपिण्डाभावे तु विभक्त मृतधन वदेव संसृष्टः स्त्र्यर्थीत द्रव्यमपि प्रागुक्तक्रमेण प्रत्यासत्तितारतम्येन समानोदकादिगामीति द्रष्टव्यम्। संसृष्टे द्र-

व्यमधिकृत सपिण्डेभ्य ऊर्ध्वं विशेषास्मृतिरिति। ननु सत्यपि पत्न्यादौ वचनान्मृत संसृष्टिधनस्य संसृष्टि भ्रात्रादिग्राह्यत्ववत् संसृष्टासंसृष्ट पुत्त्रसद्भावेऽपि पितृधनस्याप्येतद्वचन बलात् संसृष्टि पुत्त्रमात्र ग्राह्यत्वमस्त्विति चेत्। न अपुत्रस्येति पूर्ववचनस्यस्यानुषङ्गाद पुत्त्र संसृष्टिमरणस्य धनग्रहणकारणत्वात् संसृष्टिनस्य पुत्रेणापुत्त्रत्वाभावात्संसृष्टिनस्त्वित्यस्या प्रवृत्तेर्विभजेरन् सुताः पित्त्रोरिति वचनात्पित्रंशे पुत्रयोर्द्वयोरत्त्रापि समभागभागित्वम्। आत्मनः स्वांशः परं संसृष्ट पुत्रेण भुक्तावशिष्टः पृथगुद्धरणीयः। पितुर्य्यांस्तदानीं विद्यमानोंऽशः ससंसृष्टा संसृष्टाभ्यां विभज्य ग्राह्यः। न च संसृष्टिनस्त्वित्यत्रा पुत्त्रपदानुषङ्गोऽस्त्विति वाच्यम्। सपुत्र संसृष्टि भ्रात्रादिधनेऽपि पुत्रादिबाधेन तदंशस्य भ्रात्रादि ग्राह्यतापत्तौ सकलदेशीयानादिव्यवहार विरोधाय। अन्यथा पुत्रवद पुत्त्रसाधारणस्या पुत्रमात्रविषय पत्नीत्यादि वाक्यापादकत्वानुपपत्तेस्तद्बोधकतु शब्दविरोधापत्तेश्च। न च भ्रात्रादि संसृष्टिन एवायं विशेषणं व्यावर्त्तकत्वात्पुत्र संसृष्टिनस्तु न व्यावर्त्याभावात्। असम्भवाच्च सम्भवे व्यभिचारे च स्याद्विशेषणमर्थवदित्यभियुक्तोक्तेरिति वाच्यम्। पृथग्वाक्यद्वयाभावादेकत्र च वाक्ये क्वचिद्विशेषण पुरस्कारेण क्वचिच्च तद पुरस्कारेण विधिप्रवृत्तौ विशेषण घटिताघटित वाक्यार्थद्वयनिबन्धन विधिवैषम्यरूप वाक्यभेदापत्तेः। किञ्च पित्रादि द्रव्यसाम्ये पुत्त्रत्वादिकमेवा पतितत्वादि विशिष्टं प्रयोजकन्नतु संसृष्टत्वविशिष्टमपि गौरवात् तच्च सर्वेषां संसृष्टानाम संसृष्टानाञ्च तुल्यमिति सर्वेषामेव पुत्रादीनां विशेषेण तद्धनग्रहण सुचितम्।

न च विभागेन पितादि द्रव्यार्हत्वापगमः।

सर्वेषु पुत्त्रेषु विभक्ता संसृष्टिष्व पुत्रवद्भार्य्यादीनामेव तत्र धनाधिकारापत्तेः। प्रत्युतापस्तम्बेन हारीतेन च विभागोत्तरमपि पिता पुत्त्रयोः परस्परधनाधिकार प्रतिपादनाच्च। यथाहतुस्तौ। जीवन्नेव वा विभज्य वनमाश्रयेत्। वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत् यद्युपहस्येत्। पुनस्तेभ्यो गृह्णीयात् क्षीणाञ्च विभजेदिति। वृद्धाश्रमं पारिव्राज्यम्। उपहस्येद्द्रव्याभावे न क्षीयेत्। विभक्तजे तु सति-पूर्वविभक्तानां पुत्त्राणां प्राप्नोति पितृधनाधिकारो वृहस्पति-वचनेनापोद्यते। यथाह सः।

अनीशाः पूर्वजाः पित्रो भ्रातुर्भागे विभक्ततः।
पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम्॥
विभक्तजस्य तत् सर्वमनीशाः पूर्वजाः स्मृताः।
यथा धने तथार्णे च दानाधान क्रयेषु च॥
परस्पर मनीशास्ते मुक्ता शौचोदक क्रियामिति।

संसृष्टी धनहारकेण तत्स्त्रियः परिपालनीयास्तत्कन्याश्च विवाहपर्य्यन्तं पोषणीया संस्कर्त्तव्याश्चेत्याहतुः शङ्खनारदौ। संसृष्टिनं प्रक्रम्य भ्रातॄणाम प्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा।

विभजेरन् धनन्तस्य शेषास्ते स्त्रीधनं विना।
भरणञ्चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्॥
रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्दुरितरासु च।
या तस्य दुहिता तस्याः पित्र्योंऽशो भरणे मतः॥
आसंस्काराद्धरेद्भागं परतो विभृयात्पतिरिति।

इतरासु भर्त्तृश्वश्वामरच्छ्लीषु दुर्वृत्तास्विति यावत्। इत्थं स्कारादि त्वभिविधावाङ् तेन विवाह करणमपि लभ्यते।

इति संसृष्ट विभागः।

अथ स्त्रीधनविभागं वक्तुन्तत्स्वरूपन्तावन्निरूप्यते तत्र मनुः। अध्यग्न्यध्यावहनिकन्दत्तञ्च प्रीतिकर्मणि।

भ्रातृ मातृ पितृ प्राप्तं षड्विधं स्त्रीधनं स्मृतमिति॥

षड्विधमितिन्यून संख्याव्यवच्छेदपरन्नाधिक्यनिरासाय।

अतएव योगीश्वरेण।

पितृ मातृ पति भ्रातृदत्तमध्यग्न्युपागतम्।

आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितम्। इत्याद्यशब्द उपात्तः। विष्णुनापिषडधिकानि स्त्रीधनान्युक्तानि स यथाह।

पितृ मातृसुत भ्रातृदत्तमध्यग्न्युपागतम्।

आधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयमिति स्त्रीधन मिति। नारदः। अध्यग्न्यध्यावहनिकम्भर्त्तृदायस्तथैव च।

भ्रातृ दत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतमिति॥

षड्विधत्वं मानववद्व्याख्येयम्। स्त्रीधनशब्दश्चायं यौगिकः। स्त्रीस्वामिकन्धनमिति न तु पारिभाषिकः। योगसम्भवे परिभाषाया अन्याय्यत्वात्। अतएव योगीश्वरेण रिक्थ क्रयादि साधारण स्वत्वोपाय संग्रहायाद्यपदं प्रयुक्तम्। ननु च क्वचित् स्त्रीधनत्वनिषेधोऽनुपपन्न एवं सति स्यात्। नहि स्त्रीस्वामिकत्वं तत्र निषेद्धुं शक्यते। बाधात्। यथाह कात्यायनः। तत्र सोपधि यद्दत्तं यच्च योग वशेन वा।

पित्रा भ्रात्राथवापत्या न तत् स्त्रीधन मुच्यत इति॥

उपधिरुत्सवादावेवेदमस्य दत्तं त्वया धार्य्यमलङ्कारादि-

नान्यदेति नियमस्तत्पूर्वकदत्तं सोपधि योगोवगश्चनन्दाया-
दानं कन्यायै दत्तमिदन्तद्धनङ्कथं विभाज्यमिति । शिल्प प्राप्तं
सख्यादिभ्यः प्रीत्याप्राप्तन्तदपि न स्त्रीधनमित्यप्याह । स एव ।

प्राप्तं शिल्पैस्तु यत्किञ्चित्प्रीत्या चैव यदन्यतः ।
भर्त्तुः स्वाम्यन्तदा तत्र शेषन्तु स्त्रीधनं स्मृतमिति ॥

पारिभाषिकत्वे भ्रात्रादिदत्वेन प्राप्तं स्त्रीधनं प्रतिपि-
ध्यते । तेनैतस्माद्भिन्नमेव पित्रादिदत्तं शिल्पादि प्राप्तभिन्नं वा
स्त्रीधनमिति परिभाष्यत इति चेत् । उच्यते । नात्र स्त्रीधनत्व-
निषेधः । किन्तु तत्कार्य्य विभागादि निषेधः । अतएवोत्तरश्लोके
तत्रभर्त्तुः स्वाम्यमित्युक्तम् । भर्त्तुस्तद्विनियोगे स्वातन्त्र्यन्न स्त्रिया
इत्यर्थः । प्रथमश्लोकेतु स्त्रीस्वत्वनिषेधोऽपि सम्भवति उप-
धियोग पदयोरुपादानात् । तादृशदाने च स्वत्वाभावस्य प्रसि-
द्धत्वात् । योगाधमन विक्रीतयोगदान प्रतिग्रहम् । यत्र चाप्यु
पधिम्पश्येत्तत्सर्वं विनिवर्त्तयेदिति मनु वचनात् भार्य्या पुत्त्रश्च
दासश्च त्रय एवाधनाः स्मृताः । यत्ते समधिगच्छन्ति यस्य ते-
तस्य तद्धनमित्यपि वचनम्भार्य्याविषये शिल्पादि प्राप्तपरमेव ।
एकमूल कल्पनालाघवात् । अध्यग्न्यादि स्वरूपन्निरूपितं
कात्यायनेन । विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्नि सन्निधौ ।

तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम् ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।
अध्यावहनिकन्नाम स्त्रीधनन्तदुदाहृतम् ।
प्रीत्यादत्तं तु यत्किञ्चिच्छ्वश्र्वा श्वशुरेण वा ॥
पादवन्दनिकञ्चैव प्रीतिदत्तन्तदुच्यते ।
विवाहात्परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया ॥

अन्वाधेयन्तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा।
गृहोपस्कारवाह्यानां दोह्याभरणकर्मणाम्॥
मूल्यं लब्धन्तु यत्किञ्चित्तच्छुल्कं परिकीर्त्तितम्।
ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा॥
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम्।

भर्त्तुः सकाशादिति कल्पतरौ पाठः। अध्यग्न्यादिशब्दास्तु योगरूढास्ताद्दश स्त्रीधनादावप्रयोगात्। गृहोपस्करणादीनाथ्यँन्मूल्यं कन्यार्पणोपाधित्वेन वरादिभ्यः कन्याभरणरूपेण गृह्यते तच्छुल्कमिति मदनरत्ने व्याख्यातम्। मिताक्षरायान्तु यद्गृहीत्वा कन्या दीयते तच्छुल्कमित्युक्तम्। उभयत्रापि पित्रादीनां कन्याया इदमित्युद्देशो विवक्षितः। अन्यथा तत्स्वत्वाभावेन स्त्रीधनत्व व्यपदेशत्वानुपपत्तेः जीमूतवाहनेन तु कर्मिणामिति पठित्वा गृहादिकर्मिभिः शिल्पिभिस्तत्कर्मकरणे भर्त्रादि प्रेरणार्थं स्त्रियै यदुत्कोचदानं तच्छुल्कं तदेव मूल्यमप्रकृत्यर्थत्वादिति व्याख्यातम्। पुनश्चोक्तम्।

यदा नेतुम्भर्त्तृगृहे शुल्कन्तत्परिकीर्त्तितमिति व्यासोक्तं वा।

भर्त्तृगृहगमनार्थमुत्कोचादि दद्दत्तं तच्छुल्कमित्यर्थ इति। तदुभयमपि स्त्री स्वामिकं भवत्येव तस्या एव दत्तत्वादिति तत्र स्त्रीधनत्व व्यपदेशोऽन्य स्त्रीधनवत् सुगमएव। आधिवेदनिकं स्व्यन्तर विवाहकाले पूर्वभार्य्यायै यद्दीयते। यदाह याज्ञवल्क्यः। अधिविन्नं स्त्रियै दद्यादाधिवेदनिकं समम्।

न दत्तं स्त्रीधनं यासान्दत्तेत्वर्द्धं प्रकल्पयेदिति॥

पित्रादिभिर्ज्जीवनाद्यर्थं स्त्रीभ्यो धनदाने विशेषमाह कात्यायनः। पितृमातृपति भ्रातृ ज्ञातिभिः स्त्रीधनं स्त्रियै।

यथा शक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥

स्थावरेतरद्धनं यथाशक्ति कार्षापण सहस्रद्वयपर्य्यन्तं देयमित्यर्थः। व्यासोऽपि।

द्विसहस्रः परो दायः स्त्रियै देयो धनस्य तु।

आद्विसहस्रादिति कात्यायनेन पर इति च व्यासेनोक्ते रितोऽधिकमिति धनिनापि न स्त्रीभ्यो देयमिति दर्शितम्। अयञ्च नियमः प्रतिवत्सरमसकृदर्पणे ज्ञेयस्तेनानेक वत्सरेषु जीवनार्थं दीयमानमितोऽधिकमपि भवति चेन्न दोषः। जीवनार्थत्वाद्दानस्य यावज्जीवञ्च द्विसाहस्रमात्रेण तन्निर्वाहा सम्भवात्। स्त्रीधनेऽपि भर्त्रनुमतिमन्तरेण स्त्रीणान्न स्वातन्त्र्यमित्याह मनुः।

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यकात्।

स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञयेति ॥

निर्हारो व्ययः। क्वचित्तु स्त्रीधने तासां स्वातन्त्र्यमस्ति। यदाह सौदायिक स्वरूपमुक्ता कात्यायनः।

सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते।

यस्मात्तदा नृशंस्यार्थं तैर्द्दत्तमुपजीवनम् ॥

सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम्।

विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

भर्त्तृदत्ते तु स्थावरेतर एव स्वातन्त्र्यमित्याह नारदः।

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत्।

सा यथा काममश्नीयाद्दद्याद्वा स्थावरादृते ॥

स्थावरे भर्त्तृदत्ते स्त्रिया निवासाद्युपभोगमात्रं न दान विक्रयादिकमित्यर्थः। अपुत्रा शयनं भर्त्तुरित्यादि कात्यायन-

वचोऽपि भर्तृदत्तस्थावरविषयमेव नारदैकवाक्यतयेति केचित्। अस्माभिस्तु पत्नी दुहितर इति व्याख्यानावसरेऽस्य विषयं प्रपञ्चितम्। पुरुषाणामपि कस्मिन्नपि स्त्रीधने न स्वातन्त्र्यं स्वाम्याभावादित्याह कात्यायनः।

न भर्त्ता नैव च सुतो न पिता भ्रातरो नच।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥
यदि त्वेकतरोऽप्येषां स्त्रीधनं भक्षयेद् बलात्।
स वृद्धिकं स दाप्यः स्याद्दण्डञ्चैव समाप्नुयात्॥
तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्व्वकम्।
मूलमेव तदा दाप्यो यदा स धनवान् भवेत्॥
अथ चेत्सद्विभार्य्यः स्यान्न च तां भजते पुनः।
प्रीत्या विसृष्टमपि चेत् प्रतिदाप्यः स तद् बलात्॥
ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः।
तत्र स्वमाददीत स्त्री विभागं रिक्थिनान्तथा॥

स्त्रिया धनं गृहीत्वा यद्यपरभार्य्यया सह वसत्येनाञ्चावमानीते तदा गृहीतं तद्धनं राज्ञा बलाद्दाप्यः। भक्ताच्छादन निवासान् यदि भर्त्ता न ददाति तदा तेऽपि स्त्रिया बलाद्ग्राह्यास्तत्र्यर्थितं धनं वा ग्राह्यमिति श्लोकद्वयस्याथ चेदित्यस्यार्थः। इदमपि तस्या दोषराहित्ये बोध्यं दुष्टा पुनः किमपि स्त्रीधनं न लभत इत्याह स एव।

अपकार क्रियायुक्ता निर्लज्जा चार्थनाशिका।
व्यभिचाररता या च स्त्रीधनं न तु सार्हति॥

नार्हतीत्यनेन तया लब्धमप्याच्छिद्य ग्राह्यमिति सूचितम्। अपकार क्रिया युक्ता सदा भर्तृप्रतिकूलाचरणपरा।

निर्मर्य्यादार्थनाग्निकेत्यपि पाठः देवलः।
वृद्धिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत्।
भोक्त्री तत् स्वयमेवेदं पतिर्नार्हत्यनापदि।
वृथा मोक्षे च भोगे च स्त्रियै दद्यात् स वृद्धिकमिति॥

वृद्धिर्वर्द्धनार्थं पित्रादिना दत्तमिति स्मृतिचन्द्रिकायाम्। मदनरत्ने तु वृद्धिरिति पठितम्। वृत्तिर्ज्जीवनार्थं पित्रादिभिर्दत्तमिति व्याख्यातञ्च। लाभो गौर्य्यादिप्रीत्यर्थं यल्लभ्यते कुतश्चित्। वृथा आपदमन्तरेण। मोक्षस्त्यागोदानमिति यावत्। अननुज्ञातत्याग भोगविषयमेतत्। तदनुज्ञया त्वनापद्यपि न दोषः।

स्वयमेवेत्येवकारः स्वापत्यानां व्युदासार्थः।
भर्त्तृव्युदासस्य पतिर्नार्हतीत्यनेनाभिधानात्॥

भर्त्तृव्युदासे ततो वहिरङ्गानां भ्रात्रादीनां व्युदासस्यापि दण्डापूपिकया सिद्धत्वात्। अनापदीत्यभिधानादापदि न दोषः। अतएव पुत्त्रार्त्तिहरणे चापि स्त्रीधनम्भुक्तमर्हतीति तस्यैव वाक्यशेषः। पतिरित्यनुषङ्गः। पुत्त्रग्रहणं कुटुम्बोपलक्षकं तस्यार्त्तिर्भक्त्याद्यभाव निमित्ता पीड़ा तस्या हरणे। च शब्दादन्यस्मिन्नपि धनाभाव निमित्ते सङ्कटे स्त्रीधनमननुज्ञातमपि पतिस्त्यक्तुं भोक्तुञ्चार्हतीत्यर्थः। ननु परधने त्यागभोगयोः स्वाम्यनुज्ञया विना कथमर्हता बाधितानेन बोध्यते। अनुज्ञायान्त्वनापद्यपि न विरोधः। उच्यते। वचनवलात्तादृशविषये व्यये स्वयमेव तस्य तत्वेत्यदोषः। अतएव योगीश्वरोऽपि।

दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके।
गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति॥

धर्मकार्य्ये आवश्यके नित्ये नैमित्तिके च सम्प्रतिरोधके दण्डाद्यर्थं राज्ञावरोधे कृते।

वाचस्पतिस्तु सम्प्रति रोधक इति व्याधिविशेषणं कार्य्यानुष्ठान बाधक इति च तदर्थ इत्याह। नाकामो दातुमर्हतीत्यपि दारिद्र्यादिकृत दानासामर्थ्ये दुर्भिक्षादि गृहीतमप्यवश्यं देयमेतावतैव वचनोपपत्तौ सामर्थ्येऽप्यदानमिच्छयेत्यस्य कल्पयितु मनर्हत्वात्। पति ग्रहणादापद्यपि पत्युरेव पत्नी धनग्रहणाधिकारो प्रति दानञ्चेच्छया नान्यस्येति ज्ञेयम्। भर्त्रा दातुं प्रतिश्रुतं भार्य्यायै तस्मिन् मृते पुत्रादिभिस्तस्यै देयमित्यप्याह स एव। भर्त्रा प्रतिश्रुतं देय मृणवत् स्त्रीधनं सुतैरिति। सुतग्रहणं पौत्र प्रपौत्रयोरुपलक्षण मृणवदित्यभिधानात्। अनेन स्त्रीधने जीवन्त्यान्तस्यां सुतानां जन्मना स्वत्वेऽपि नास्ति विभाग इति गम्यते। एवं स्त्रीधनमुक्तम्।

अथ तद्विभागो निरूप्यते।

तत्र मनुः। जनन्यां संस्थितायान्तु समं सर्वे सहोदराः।

भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः॥

अत्र द्वन्द्व समानार्थक च शब्दोपादानात् सोदर भ्रातृ भगिनीनां मिलितानां मातृधनाधिकारो गम्यते.। सोदरग्रहणं भिन्नोदर व्यावृत्त्यर्थः। देवलः।

सामान्यं पुत्र कन्यानां मृतायां स्त्रीधनं स्त्रियाम्।

अप्रजायां हरेद्भर्त्ता माता भ्राता पितापि वा॥

अत्र तु द्वन्द्वस्यैव श्रवणात्पुत्राणां कन्यानाञ्च सहाधिकारः प्रतीयते। इदञ्चान्वाधेय पति प्रीतिदत्त द्विविध स्त्रीधनविषयम्। यथाह मनुरेव।

अन्वाधेयञ्च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनम्भवेत् ॥

अन्वाधेयं पूर्वलक्षितं यच्च पत्या प्रीत्या दत्तं तत् स्त्रीधनं वृत्तायाः मृतायाः स्त्रियाः प्रजा पुत्त्र दुहितृरूपा तस्याः स्वम्भवति। पत्यौ जीवतीत्यनादरे सप्तमी। जीवन्तमपि पतिमनादृत्येत्यर्थः। तस्यानधिकारस्तत्रेति यावत्। अत्र च प्रजाया इति सामान्याभिधानात् स्त्री पुंस प्रजायाः समस्तास्यवगतेस्तुल्यवद्विभज्य मातृधनग्रहणं न पुनः पूर्वं भगिनीनां तदभावे भ्रातृणामिति। भगिन्यश्च मनुवचनेऽनूढा ग्राह्याः। तथा च बृहस्पतिः।

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत् स मूढा तु लभते मानमात्रकम् ॥

अपत्यानां पुत्त्राणाम्। दुहितुः पृथगुपादानात्। तदंशिनी पुत्त्र समांशिनी। मानमात्रकमिति गौरवार्थं तदनुसारेण किमपि लभते न तु पुत्त्र समांशमित्यर्थः। अप्रत्तानामभावे प्रत्तानामपि स भर्त्तृकाणां भ्रातृ समभागित्वमित्याह कात्यायनः।

भगिन्यो बान्धवैः सार्द्धं विभजेरन् सभर्तृकाः ।

विभागकाले दौहित्रेभ्योऽपि किञ्चिद्देयम्। तथा च मनुः।

यास्तासांस्यु र्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात्किञ्चित्प्रदेयं प्रीतिपूर्वकम् ॥

यथार्हत इत्युपयोग दारिद्र्याद्यपेक्षयेत्यर्थः।

नच दौहित्रीणां तदा धन स्वाम्याभावात् किमिति। दानमिति वाच्यम्।

यथा पैतृके पुत्त्रसत्त्वे कन्यानां दायार्हत्वेऽपि वचनबला-त्तुरीयांश दानमेवमत्राप्युपपत्तेः। अतएव प्रीतिपूर्व्वकमि-त्युक्तम्। प्रीतिपूर्व्वकत्व वचनादेवानावश्यकत्वमपि सूचित-मत्र। तत्र तु पतिताःस्युरदित्सव इति दोषकीर्त्तनादावाव-श्यकत्वमिति भेदः। यौतुकन्तु कुमारीणामेव मातृधनम्। न पुत्त्राणां नापि प्रत्तदुहितॄणामित्याह मनुरेव।

मातुस्तु यौतुकं यत्स्यात् कुमारीभागएव स इति।

युमिश्रण इति धात्वनुसाराद्विवाहकाले एकासनोपविष्टयो र्वधूवरयोर्य्यद्वान्ववे दीयते तद्यु तयोरिदं यौतकमिति व्युत्पत्त्या यौतकमित्युच्यते। केचित्तु विवाहे स्त्री पुंसयोरेक शरीर-तया मिश्रता भवति। अस्थिभिरस्थीनि मांसैर्मांसन्त्वचा त्वच-मिति श्रुतः। भर्तुर्बध्वस्थ्यादिभिरस्थ्यादीन्येकी भवन्तीत्यर्थ इत्याहुः। यदेतद्धृदयन्तव तदस्तु हृदयं मम तदस्तु हृद-यन्तवेति अत्र लिङ्गाद्विवाहे मिश्रतेत्यन्ये। युतयोर्यौतकमिति निघण्टौ। यौतकं यौतुकञ्च तदिति कोशाद्यौतुकमित्यपि पाठः। भर्तृगृह लब्धात्पृथग्धनतया पितृगृहलब्धं मातृधनं यौतुकम्। यौतशब्दस्या मिश्रणमप्यर्थः। युमिश्रणामिश्रणयो-रिति धातुपाठात्। युतसिद्धाविति प्रयोगाच्चेति देव स्वा-म्याह तदसत् पितृगृह लब्धात्पृथग्धनतया भर्तृगृहलब्धं यौ-तकमित्यस्यापि विनिगमकाभावे वक्तुं शक्यत्वेनास्य कल्पना मात्रत्वात्। कुमारीणामनेकत्वे समं स्यादश्रुतत्वादिति न्यायेन स एव विभागो विशेषाश्रवणात्। एतत्त्रिविधभिन्नं मातृधनं दुहितॄणाम्। तत्रापि प्रथममप्रत्तानां तदभावे प्रत्तानां त-

त्रापि प्रथममप्रतिष्ठितानां तदभावे प्रतिष्ठितानां सधवानां तदभावे विधवानाम् । तथा च गौतमः ।

स्त्रीधनं दुहितॄणामप्रत्तानाम प्रतिष्ठितानाञ्चेति ।

अप्रतिष्ठिता अनपत्या निर्द्धना दुर्भगा विधवा वेत्यपरार्क्केण कल्पतरुकारेण च व्याख्यातम् । प्राक्तनं द्वयमेव विज्ञानेश्वरादिभिः । अत्र च स्त्रीधनमिति सामान्योक्तिरपि त्रिविध प्रागुक्त स्त्रीधन भिन्नविषया । स्मृतिचन्द्रिका मदनरत्नयोरेवमुक्तम् । जीमूतवाहन स्मार्त्त भट्टाचार्य्याभ्यान्तु प्रगुक्तं गौतमवचनं मातुर्दुहितुरभावे दुहितॄणां तदन्वय इति नारदवचनम् ।

दुहितॄणामभावे तु रिक्थं पुत्त्रस्य तद्भवेत् ।

इति कात्यायनवचनम् ।

मातुर्दुहितरः शेषमृणात्तेभ्य ऋतेऽन्वय इति योगीश्वर वचनम् ।

एव मन्यान्यपि स्त्रीधनस्य दुहितृ ग्राह्यत्वपराणि स्मृति वचनानि प्रागुक्त मन्वादिवचनविरोधान्मातुस्तु यौतकमिति प्रागुक्त मनुवचनानुरोधान्मातुः पारिणाय्यं स्त्रियो विभजेरन्निति वाशिष्ठानुसाराच्च यौतकमात्र विषयाणीत्युक्तम् । पारिणाय्यं परिणयनलब्धं यौतकमिति यावदिति ताभ्यां व्याकृतम् । कल्पतरौ विवाद चिन्तामणौ च पारिणाय्यमिति पठित्वा स्त्री परिच्छदादर्शकङ्कतिकादीति व्याख्यातम् । विज्ञानेश्वरस्तु सर्वमेव स्त्रीधनं पुत्त्रादि सत्वेऽपि प्रथमं दुहितृ दौहित्री दौहित्रगामि । तदभावे पुत्त्रादिगामि । अप्रजः स्त्रीधनन्तु व्यवस्थापयिष्यते । मातुर्दुहितरः शेष मृणात्ताभ्य ऋतेऽन्वय इति योगीश्वरवचने दुहितृमात्रन्ताभ्य इत्यनेन न परामृश्यते

किन्तु दौहित्री दौहित्रावपि। मातुर्दुहितरोऽभावे दुहितॄणां तदन्वय इति नारदवचनात्। अत्र तदन्वय इत्यनेन तच्छब्देन दुहितरोऽनन्तराः परामृश्यते। तथा च दुहित्रन्वयो दौहित्री दौहित्ररूपः।

तत्रापि प्रथमं दौहित्री तदभावे दौहित्रः।

दुहितॄणां प्रसूता चेदिति वक्ष्यमाण योगीश्वरवाक्ये दुहितृ शब्देन दुहितरो गृह्यन्ते। साक्षाद्दुहितॄणां मातुर्दुहितर इत्यत्र तेनैवोक्तत्वात् पुत्रत्वात् पुनरुक्त्यापत्तेः। दुहितॄणामन्वय इति सामान्योक्ते दौहित्राधिकारोऽपि। पुत्राधिकारस्तु विभजेरन् सुताः पित्रोरूर्द्धं रिक्थमृणं सममित्यत्र पित्रोरित्येकशेषाल्लभते तच्च प्रागेव प्रपञ्चितम्। ताभ्य ऋतेऽन्वय इत्यत्राप्यन्वयपदेन योग्यतया षष्ठ्यन्त मातृपदान्वयात् दुहितॄणाञ्च पृथगुपादानात् पुत्रादिरेव गृह्यते। दुहित्रभावे तदधिकार प्रतिपादनार्थत्वञ्च न पौनरुक्त्यम्। जनन्यां संस्थितयान्त्विति मनुवचनस्य त्वयमर्थः। सर्वे सहोदरा मातृकं रिक्थं स्वाधिकारावसरे समं भजेरन् सनाभयः सोदरा भगिन्यश्च स्वाधिकारावसरे। न तु द्वयेऽपि सम्भूय विभजेरन्नित्यर्थः। इतरेतर योगस्य द्वन्द्वैकशेषयोरभावादप्रतीतेः। च शब्दस्य तु विभागकर्तृत्वान्वयमात्रेणाप्युपपत्तेः। यथा देवदत्तः कृषिं कुर्याद्यज्ञदत्तश्चेत्युक्ते नेतरेतरयोग प्रतीतिः। वाक्यान्तरेण च द्वयोरपि मातृधनाधिकारे प्राप्तेऽपि सममित्यनेनात्रोद्धारादि विषमविभागनिवृत्त्यर्थं वचनम्। सोदर सनाभिग्रहणमसोदर भ्रातृ भगिनी निवृत्त्यर्थम्। अतएवाध-

सजाति स्त्रीधनं भिन्नोदरापि प्रकृष्टजातीय सपत्नी पुत्री तद-भावे च तदपत्यं गृह्णातीत्युक्तं मनुना ।

स्त्रियास्तु यद्भवेद्वित्तम्पित्रा दत्तं कथञ्चन ।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेदिति ॥

अत्रानपत्यक्षत्रियादि जातीय स्त्रिया इति विवक्षितं ब्राह्मणीपदञ्चोत्तमजात्युप लक्षणम्। अप्रजस्त्रीधनं भर्त्तुरित्यस्य चायमपवादः । अतश्चान पत्यवैश्याधनं क्षत्रिया दुहितानपत्यशूद्राधनञ्च वैश्यादुहिता गृह्णाति । तदभावे तदपत्यानि तदभावेऽप्रजस्त्रीधनमित्यस्य तत्र प्रवृत्तिः। तस्मात् स्त्रीधने सापत्यमाग्दुहित्राद्यधिकारस्तदनु पुत्रादीनामित्याहुः । अत्र जीमूतवाहनः । मनु वृहस्पति शङ्खलिखित वचनेषु द्वन्द्वाश्रवणेऽपि समुच्चयवाचिचशब्देन तदर्थ लाभाद्देवलवचने तु पुत्रकन्यानामिति द्वन्द्वस्यापि श्रवणात्संवादेन तत्रापि च शब्दस्येतरेतरयोगार्थकत्वौचित्याद्भ्रातृभगिनीनां सोदराणां विभज्य सहैव धन ग्रहणं युक्तम् । किञ्च। केवल दुहितृणामेव सकलमातृधनाधिकारे यौतके विशेष वचनमनर्थकम् । न च कुमारीपदोपादानात्प्रत्तदुहितृव्यावृत्त्यर्थन्तदिति युक्तम् । तद्व्यावृत्तेः सर्वस्त्रीधन एव गौतमादि वचनेषूक्तत्वात्। कुमार्य्यभावे प्रत्ताद्यधिकारस्यात्राप्य वर्जनीयत्वात् । तस्मात्पुत्त्रपत्योस्तुल्य वदधिकारएव मन्वाद्यभिप्रेतोऽध्यग्न्यादि स्त्रीधनविषयो यौतकविषयस्तु पुत्त्रीमात्राधिकार इत्येव व्यवस्था । अन्वाधेय पति प्रीतिदत्तमात्र ग्रहणान्तु मनु वचनान्तरेऽध्यग्न्याद्युपलक्षणमितरथा यौतके पृथगारम्भ स्यानर्थक्यापत्तेरित्याह । दायतत्त्वकृदादीनामप्येतदेव मतं । अत्रेदं प्रतिभाति

अन्वाधेयादि ग्रहणस्योपलक्षणत्वे प्रमाणाभावात्तदुभयव्यतिरिक्ते सर्वे मातृधने दुहित्राधिकारः प्रथमन्तदनु पुत्राधिकारः। यौतके विशेष वचनन्तु प्रत्तादिनिवृत्त्यर्थम्। अन्यत्रापि सा समैवेति चेत्सत्यम्। किन्तु। न नियता यौतकेतु नियता। तेन यौतकं कुमार्य्यभावे विवाहभेदेन स्त्रीधनम्भर्त्रादीनामेव भवति न प्रत्तादीनामितिस्मृति चन्द्रिकाकारादीनामाशयः। विज्ञानेश्वराचार्य्याणान्त्वयमभि प्रायः। सामान्यतः स्त्रीधनमात्रस्य दुहितृग्राह्यताबोधकमनन्यया सिद्धवचनानु रोधेन सङ्कोचः कर्त्तव्यो न च मन्वादि वचन मनन्यया सिद्धपुत्रकन्यानां सहाधिकार प्रतिपादकम्। पुत्राधिकार मात्र प्रतिपादन मात्र परत्वात्। नच चशब्दद्वन्द्वाभ्यां सहाधिकारः। विभाग कर्त्तृत्वान्वयेनापि तदुपपत्तेः। अन्यथा पितराविलादौ माता पित्रोस्तदिष्यत इत्यादौ च द्वन्द्वैकशेष श्रवणे सकल निबन्धसम्मतः क्रमो माता पित्रो र्न स्यात्। विष्णु वचनाद्यनु रोधात्तत्रशब्दान्वयसाहित्यमात्रेण तदुपपत्तिरर्थे क्रमस्त्वन्ययाप्यविरुद्ध इत्युच्यते। तर्ह्यत्रापि ताभ्य ऋतेन्वयः दुहितृणामभावे तु रिक्थं पुत्रेषु तद्भवेदित्यादि योगीश्वर कात्यायन वचनावगतार्थे क्रमान्यथा भावे द्वन्द्व च शब्दादीनां शाब्दान्वयः साहित्यमात्रेणोपपत्तिरस्तु न तु तदनुरोधेन तेषामेवान्य विषयत्वम्। सिद्धे सहाधिकारे तेषां सङ्कोचस्तत्सङ्कोचे- चैषां सहाधिकारपरत्वमिश्चय इती तरेतराश्रयत्वञ्चेति। अन्वाधेयादौ विशेष वचनमनर्थकमिति चेत्। नायौतके चन्द्रिकाकारादि मतवदेव सार्थकत्वात्। अन्वाधेय ग्रहणस्योपलक्षणतया प्रजामात्राधिकारे तेन प्रतिपादिते जनन्यां संस्थिता-

यान्त्वित्यादि वचनैः साम्याद्विविधान मित्येवं सर्वेषां सार्थकत्वात्। तस्मात्सर्वं सुस्थमिति। श्रीविद्यारण्यश्रीचरणैस्तु स्मृति चन्द्रिकामिताक्षरयोर्द्वयोर्द्वयोरप्यनुसारेण द्वयमपि लिखितन्न तु विविक्तम्। पुत्रादिभ्यः प्राग्दुहितृ दुहितुस्तदनुदौहित्राणामधिकार इति तु मिताक्षरा चन्द्रिकामदनरत्नकाराणाम्विद्यारण्य श्रीचरणानां च विसम्वादेन सम्मतः। जीमूतवाहन दायतत्त्वकारौतु दुहित्रभावे पुत्राणामेवाधिकारी न तु दौहित्र्याद्यधिकारानन्तरम्। तथाहि नारदवचने दुहितृणान्तदन्वय इत्यत्र दुयितुरन्वय पदेनान्वय पुत्रादि वाचकेन नान्वयः सम्भवति। दुहितृ पदस्य जन्यविशेष वचनस्य जन्यान्तरे समत्वेन निराकाङ्क्षतयान्वया सम्भवात्। तच्छब्दस्यापि दुहितृत्वरूपेणैव तदुपस्थापकस्य नैराकाङ्क्ष्याविशेषात्। किञ्च। याज्ञवल्क्य वचने तावत्। दुहितर इति प्रथमान्तस्यताभ्य इति च पञ्चम्यन्तस्य च षष्ठ्यन्तान्वयपदेनान्वयाद्यवहितस्यापि मातुरित्यस्यैवान्वयस्तदेकवाक्यतयात्रापि मातुरन्वय एव पुत्रादि गृह्यते न दुहित्रन्वयः। किञ्च। सत्स्वङ्गजेषु तद्गामीह्यर्थो भवतीति बौधायन वचनादनन्तराङ्गज पुत्राधिकार एव प्रत्यासत्तेरुचितो न तु व्यवहिताङ्गजदौहित्रादेरित्याहुस्तन्मन्दम्। जन्यवाचकस्य जन्यान्तरेणान्वये पुत्र इत्यादावप्यन्वयो न स्यात्। तज्जन्य प्रतिसम्बन्धितया विरोधस्तत्रापि तुल्यः। अन्यथा दुहितुः पुत्र इत्यत्राप्यन्वयो न स्यात्। तस्माच्छाब्द व्युत्पत्त्यज्ञानमेवेदम्। याज्ञवल्क्य वचनेच यद्यपि मातुरन्वयः पुत्रादेरेवोक्तस्तथापि विभजेरन् सुताः पित्रोरित्यनेन प्राप्ताधिकाराणामेव ऋणदान दुहितृभवोपाधिकृतत्वज्ञापनार्थोऽनुवादःसचदौहित्रा

नन्तरमप्यविरुद्धः। सत्स्वङ्गजेष्विति बौधायन वचनन्तु मातृ साधारण्येन पुत्त्राणाम्धनाधिकारमात्र मङ्गजपदस्य चापत्यमात्रवाचकत्वात् पुत्र दुहितृ साधारणमधिकारं प्रतिपादयद्वचनान्तराविरुद्ध प्रत्यासत्त्यैव व्याख्यातुं युक्तमिति न किञ्चिदेतत्। सन्तानाभावे त्वाह योगीश्वरः।

अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः।

अप्रजसि दुहित्रादि प्रपौत्रपर्य्यन्तरहितायामतीतायां मृतायां बान्धवा वक्ष्यमाणश्लोकोक्ता तत्स्त्रीधनमवाप्नुयुः। विवाहभेदेन व्यवस्थया बान्धवाना मधिकारमाह स एव।

अप्रजः स्त्रीधनम्भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि।

दुहितृणां प्रसूता चेच्छेषेषु पितृ गामि तदिति॥

चतुर्षु ब्राह्मदैवार्ष प्राजापत्येषु। अपिशब्दाद्गान्धर्व परिग्रहः। यद्वा अतद्गुणसंविज्ञान बहुव्रीहिणा ब्राह्मभिन्नदैवार्ष प्राजापत्य गान्धर्व्वाश्चत्वारः।

तेन ब्राह्मदैवार्ष गान्धर्व्व प्राजापत्येषु यद्धनम्।

अप्रजाया मतीयां भर्तुरेव तदिष्यत इति।

मनुवचनविसम्वादः।

ब्राह्मादि विवाहोढाया धनमनपत्याया भर्तुर्भवति। तदभावे भर्तुः प्रत्यासन्नानाम्। स्वामिप्रत्यासत्तेर्भर्त्रैवान्तराये भर्तृप्रत्यासत्तेरेव पुरस्करणीयत्वात्। शेषेष्वासुरादिषु परिणीतायास्तु पितृगामि। एकशेषेण माता पितृगामि। तत्रापि प्राधान्यात्मातृगामि तदनु पितृगामि। पितरावित्यत्रोक्तान्यायात्। विरुद्धवचनान्तराभावाच्च। अतएव मनुना।

यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु।

अतीतायामप्रजसि माता पित्रोस्तदिष्यत इति।

द्वन्द्वे मातृशब्द पूर्वनिपातेन मातुः प्राथम्यम वगमितम्। कन्याधने च मातुरभावे पितुरधिकार श्रवणादत्रापि तथैवौचित्यात्। यथाह बौधायनः।

रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम्।
तदभावे भवेन्मातुस्तदभावेभवे त्पितुरिति॥

माता पित्रोरभावे तत्प्रत्यासन्नगामि। पूर्वोक्तेषु सर्वेष्वेव विवाहेषु प्रसूतापत्यवती चेत् दुहितृणां तद्धनम्। दुहितृशब्देन चात्र दुहितृ दुहितरो लक्ष्यन्ते इति प्रागेवोक्तम्। तत्राप्यनूढादि क्रमो गौतमादितो दुहितृधनग्रहणकाले दौहित्रीभ्योऽपि प्रीत्या किञ्चिद्दानमिति च प्रागेव निरूपितम्। दौहित्रीणाञ्च मातामही धनग्रहणं भिन्न मातृकाणां विषममातृद्वारेण। पौत्राणां पितृद्वारेणैव। पितृ मातृ वा स्ववर्गो भाग इति गौतमस्मरणात्। जीमूतवाहनस्तु। ब्राह्मादि विवाहेषु यद्धनं तदेवानेन व्यवस्थाप्य तेन तु तत्तद्विवाहोढायाः सर्वं धनम्। ब्राह्मादिषु यद्धनमिति सम्बन्धे वर्त्तमान सम्बन्धे कृतकाल लक्षणातस्तदूढ स्त्री परत्वेऽतीत विवाहक्रिया द्वारकसम्बन्धे कृतलक्षणाया जघन्यत्वादित्याह। तदनुगामी दायतत्व कृदप्येवम्। तदपेशलम्। पूर्ववचने अप्रजः स्त्रीधनं बान्धवा गृह्णीयुरिति सामान्यत उक्तेः कीदृश्या अप्रजसः के बान्धवा गृह्णीयुरित्येवमाकाङ्क्षोदयाद्ब्राह्मादिपदानां तद्विशेषणत्व स्यौचित्यात्। यच्च वर्त्तमान भूतसम्बन्धकृतं विनिगमकमुक्तं तदपि तुच्छम्। विभागकालेऽतीतत्वस्योभयत्रा विशेषात्। धनलाभकाले वर्त्तमानत्वस्य चाप्रयोजकत्वात्। विवाहजन्य

भाव्यत्विसम्बन्धया तरङ्गत्वाच्च। यत्तु सर्वेष्वपि विवाहेषु पित्रोः स कामात्तया प्राप्तं विवाहोत्तरं तद्भ्रातृणामेव। यदाह कात्यायनः।

पितृभ्याञ्चैव यद्दत्तं दुहितुः स्थावरं धनम्।
अतीतायामप्रजसि भ्रातृगामि तु सर्व्वदा॥

विश्वरूप जीमूतवाहनौ तु कन्यादशायां यत्पितृभ्यां दत्तं तद्भ्रातृगामि। विवाहात्परतो लब्धस्यान्वाधेयत्वात्। विवाहकाल लब्धस्य च विवाहभेदेन भर्तृगामित्वान्माता पितृगामित्वाच्चेत्याहतुः। तन्न। स्थावरविषयत्वादस्याविरोधात्। न च दण्डापूपिकया स्थावरग्रहणे जङ्गमग्रहणं भ्रातृणामायात्येवेति वाच्यम्। अपवादे तन्न्याया प्रवृत्तेः। शुल्कन्तु सोदराणामेव। भगिनी शुल्कं सोदर्य्याणामिति गौतमवचनात्सोदराभावे मातुः। ऊर्द्धं मातुरिति तद्वचनादेव। पूर्व्वञ्चैक इति तु परमतम्। बन्धुदत्तं प्रथममप्रजसो मृताया बन्धूनां तदभावे भर्तुः। बन्धुदत्तन्तु बन्धूनामभावे भर्तृगामि तदिति कात्यायनवचनात्। पूर्वोक्ताप्रजः स्त्रीधनाधिकार्य्यभावे त्वाह बृहस्पतिः।

मातृष्वसा मातुलानी पितृव्य स्त्री पितृष्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिता॥
यदासामौरसो न स्यात् सुतो दौहित्रएव वा।
तत्सुतो वा धनन्तासां स्वस्रीयाद्याः समाप्नुयुः॥

अनौरसपदेन पुत्र पुत्र्योरुपादनन्तयोः सर्वापवादकत्वात्। अपवादक्रमश्च प्रागुक्त एव। सुतपदेन च सपत्नी पुत्रस्य।

सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्।

सर्वास्तास्तेन पुत्त्रेण प्राह पुत्रवती मनुरिति मनुवचनात्। न तु सुतपदमौरस विशेषण मानर्थक्यात् । सपत्नी पुत्त्र स-द्भावेऽपि स्वस्त्रीयाद्यधिकारापत्तेरनादि व्यवहारविरोधाच्च । तथा च दौहित्राभावे औरसपुत्त्रादिस्तदभावे सपत्नीपुत्त्रः । तस्सुत इति तच्छब्देन व्यवहितयोरौरस सपत्नी पुत्त्रयोरुपा-दानं नानन्तरस्यापि दौहित्रस्य दौहित्रपुत्त्रस्य तस्य पिण्डदाने वहिर्भावात् । तथा च दौहित्रपर्य्यन्ताभावे प्रथममौरसस्तदनु तत्पुत्त्र पौत्त्राः । पुत्त्र पौत्त्रैर्ऋणं देयमिति ऋणापकारणा-धिकारिणां पिण्डदानाधिकारिणाञ्च तेषामेव रिक्थग्रहणौ-चित्यात् । तदभावे सपत्नीपुत्त्र तत्पुत्त्र तत्पुत्त्राणाम् । तेषा-मेव तदा पिण्डदातृत्वादृणापाकर्तृत्वाच्च । प्रागुक्त मनुवच-नाच्च । तदेषामभावे सत्स्वपि श्वशुरादिषु सपिण्डेष्वनन्यग-तिकैतद्वचनबलाद्भगिनीपुत्त्राद्यानामेव मातृष्वस्रादि धने प्रत्यासत्तितारतम्येनाधिकारः । स्नुषादीनां तु ग्रासाच्छादन मात्रभाक्त्वम् । वचन विरोधे सपिण्डवत्प्रत्यासत्तेर प्रयोजक-त्वात् । तस्मात्स्त्रियोनिरिन्द्रिया अदायादा इति श्रुतेः । अ-निन्द्रियाह्य दायाश्च स्त्रियोऽनृतमिति स्मृतिरिति तन्मूलक मनु वचनाच्च । शृङ्गग्राहिकया यत्र कण्ठोक्ताः पत्नीदुहितर इत्यादौ यासां स्त्रीणान्धनाधिकारस्तासामेव । अन्यासान्तु श्रुतिमनु वचनाभ्यां दायग्रहणनिषेध एवेतिस्मृति चन्द्रिकाकारहरद-त्तादीनान्दाक्षिणात्यनिबन्धृणाञ्जीमूतवाहनादि पौरस्त्यसर्व-निबन्धृणां सिद्धान्ताच्च । इति स्त्रीधनविभागः ।

अथविभाग काले केनचिदपक्त्नुतस्य पश्चाद् ज्ञातस्य वि-भाग प्रकारः । तत्र मनुः ।

ऋणे धने च सर्वस्मिन् प्रविभक्ते यथा विधि ।
पश्चाद्दृश्येत यत्किञ्चित्तत्सर्वं समतान्नयेत् ॥

योगीश्वरः । अन्योन्यापहृतन्द्रव्यं विभक्तैर्यत्र दृश्यते ।
तत् पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥

अत्र समपदादुद्धार विभागो निषिद्धः विभजेरन्निति वचनाद् येनैव दृष्टन्तेनैव न ग्राह्यं नाप्यपहर्त्तोऽस्पन्दातव्यमिति बोध्यते। एतावता वचनार्थवत्त्वे स्तेय दोषाभावः समुदाय द्रव्यापहारे स्वबुद्ध्या गृहीतत्वादिति केषाञ्चिद्वचनं प्रलापः। साधारण-द्रव्ये परस्वत्वस्यापि सत्वेन परस्वापहारस्य स्तेयपदार्थस्यावारणीयत्वात् । अथ परकीयबुद्ध्या न गृहीतमिति नस्तेयमित्युच्यते। तत्र अपह्नवे परकीय बुद्धेरावश्यकत्वात्। अतएवाप-हृतमित्युक्तम् । ननु मनुना ज्येष्ठस्यैव समुदाय द्रव्यापहारे दोषो दर्शितो न कनीयसाम् ।

यो लोभाद्विनि कुर्वीत ज्येष्ठो भ्रातॄन् यवीयसः ।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिरिति ।

सत्यम्परन्तु सम्भावित अस्य पितृस्थानीयस्य ज्येष्ठस्यापि-दोष उक्ते तत्परतन्त्राणां पुत्रस्थानीयानान्दण्डा पूपन्यायेन-दोषः सुतरामुक्त एव भवतीति। अतएव समुदाय द्रव्यापहारे समविभाग वचनस्य स्तेयदोषाभाव परत्वमाचक्षाणा अनेन मनु वचनेन दूरापास्ताः। अविशेषेण दोषप्रतिपादिकया श्रु-त्याच यथा। यो वै भागिनम्भागान्नुदते-च यतेन सः। अथ वैतन्नचयतेऽथ पुत्तनय पौत्तञ्चयत इति। योभागिनम्भागान्नं भागान्नुतते निरस्यति। भागन्तस्मै कथञ्चिद्बलाद्वचन यावा न प्रयच्छतीति यावत् । सभागान्नुन्न एनं नोत्तारञ्च यतेनाशयति

दोषवशात्। यद्येनन्न नाशयति तस्य पुत्रं पौत्रं वा नाशयतीति श्रुतेरर्थः श्रुत्यन्तरास्तु प्रलपन्तु नाम साधारणद्रव्यस्यापि पर-स्वत्वेनापहारपदार्थोऽनपायादित्युक्तमेव। यथा मौद्गे चरौविपन्ने साहश्यात्प्रतिनिधितयामाषेषु गृह्यमाणेषु मुद्गावयवबुद्ध्या गृह्यमाणत्वादयज्ञिया वैमाषा इति निषेधोन प्रवर्त्तते मुद्गावयवबुद्ध्या गृह्यमाणत्वादिति पूर्वपक्षिते निषेधस्य प्राप्ति मात्रापेक्षित्वात्तत्रापि माषावयवानामप्य वर्जनीय ग्रहणं यज्ञसाधनत्वञ्चेति निषेध प्रवृत्त्यनपायात्प्रतिनिधितयापि तदनुपादानं सिद्धान्तितम्। राज्ञे तु भागिभिर्न्नेनिवेदनीयं राज्ञे निवेदितमपि तेन सामादिनैव दापनीयमिति प्रीत्यविच्छेदादि दृष्टप्रयोजनकमेव कात्यायन आह।

बन्धुनापहृतं द्रव्यम्बलान्नैव प्रदापयेत्।

अविभागकालेऽनेन बहुभुक्तमित्यपि नवक्तव्यं भुक्तमपि राज्ञा न ग्राह्यमित्याशयेनाह स एव।

बन्धूनाप्रविभक्तानाम्भोगन्नैव निवर्त्तयेदिति।

नहि न्यूनाधिक भोगो वारयितुं शक्योऽवर्ज्जनीयत्वादिति भावः एवं दृष्टार्थतथैवोपपत्तौ नास्यापि स्तेयदोषाभाव परत्वमदृष्टार्थत्वापत्तेस्तस्मादत्रापिस्तेय प्रायश्चित्तं राजदण्डश्च भवत्येवेत्यवधेयम्। अथाविभाज्यम्।

तत्र योगीश्वरः। पितृ द्रव्याविरोधेन यदन्यत् स्वयमर्जितम्।

मैत्र मौद्वाहिकञ्चैव दायादानान्नतद्भवेत्॥

क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः।

दायादेभ्यो नतद्दद्याद्विद्यया लब्ध मेवच॥

पितृ द्रव्याविरोधेनेति सर्वशेषः। स्वातन्त्र्ये पितृद्रव्यो-

पघातेन यन्मैत्रादिकं तस्याप्य विभाज्यत्वापत्तौ महाजनाचार विरोधो विद्यालब्धेनारद वचन विरोधश्च ।

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्सलभेता श्रुतोऽपि सन्निति ॥

कात्यायनस्त्वविभाज्य विद्याधनलक्षणमुखेनैतदेव द्रढयति यथाह । परभक्तोप भोगेन विद्याप्राप्तान्यतस्तु या ।

तया प्राप्तन्धनं यत्तु विद्याप्राप्तं तदुच्यत इति ॥

मनुरपिस्पष्टमाह । अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥

श्रमेण सेवादिना क्रमादभ्यागतायाम्पितृ द्रव्याविरोधेनोद्धृतायामपि भूम्यां विशेष उक्तः शङ्खेन ।

पूर्वनष्टान्तु योभूमिमेकश्चेदुद्धरन् क्रमात् ।
यथा भागं लभन्तेभ्योदत्वांशन्तु तुरीयकमिति ।

उद्धर्त्ते चतुर्थांश मुद्धरण मूल्यमधिकन्दत्वांश त्रयं सर्वे समं विभजेरन्नित्यर्थः । यद्यप्ये तादृशाविभाज्यत्वं यद्येन लब्धन्तत्तस्यैवेति न्यायादेव प्राप्तं तथापि प्रायो व्यवहारशास्त्रे न्याय सिद्धानु वादकान्येव वचनानीति परिभाषा प्रकारोक्त प्रायश्चित्तमिति न दोषः । अविभाज्यान्तरमप्युक्तं मनुना ।

वस्त्रम्पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारञ्च न विभाज्यं प्रचक्ष्यते ॥

पत्रं वाहनम् । वस्त्रादि यद्येन धृतं तत्तस्यैव । अधृतन्तु विक्रयाद्यर्थं विभाज्यमेव । कृतान्नं पक्वान्नं सर्वैर्यथाशक्ति भोक्तव्यं न तु तोलयित्वा विभाज्यम् । उदकमुदकाधारः कूपादिः सर्वैर्यथोपयोगमुपभोज्यः । स्त्रियोदास्यो विषमा न विभाज्याः ।

पर्य्यायेण कर्म कारयितव्याः पितृवद्धास्तु समा अपि न विभाज्याः। स्त्रीष्ववद्धास्तु न विभाग इति गौतमवचनात्। योगक्षेमशब्दाभ्यामिष्टापूर्त्ते उच्येते। तयोरविभाज्यत्वं पितृद्रव्यविरोधेनार्जितयोरपि दृष्टान्ततयोच्यते। न हि स्वतः फलतो वातस्य विभागः सम्भवति पैतृकस्य तु सुतराम्। तथा चाह लौगाक्षिः।

क्षेमम्पूर्त्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः।
अविभाज्ये च ते प्रोक्ते शयनासनमेव च॥

इति योगक्षेमशब्देन तत् कारिणो राजमन्त्रि पुरोहितादय उच्यन्ते इति केचित्। शस्त्र चामरोपानत्प्रभृतय इत्यन्ये। प्रचारो गृहारामादि प्रवेश निर्गममार्गाः। तस्याप्यविभाज्यत्वम्। पितृधृतं वस्त्रादिकं श्राद्धभोक्त्रे दातव्यम्। यथाह बृहस्पतिः।

वस्त्रालङ्कार शय्यादि पितुर्य्यद्वाहनादिकम्।
गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेदिति॥

स्त्री धृतोऽप्यलङ्कारो न विभाज्यः।

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्।
न तम्भजेरन्दायादा भजमानाः पतन्ति ते इति।

धृत इत्यनेनाधृतस्य विभाज्यत्वमेव। पत्यौ जीवतीत्यनेन पतिजीवनचिह्नतया यत्र देशे यो धार्य्यते स न विभाज्य इति सूचितम्। पितृप्रसाद लब्धस्यापि न विभागः।

पितृप्रसादाद्भुज्यन्ते वस्त्राण्याभरणाणि च।

भुज्यन्ते इति वचनाद विभाज्यत्वम्। तथा पितृदत्तस्यापि पितृभ्यां यस्य यद्दत्तन्तत्तस्यैवधनम्भवेदिति च स्मरणात्।

पितृ प्रसाददानप्रीतिदाने अथौचित्यानुरोधेनैव ज्ञेये। नतु यथा कामम्। महाजनाचारविरोधात्। पितृद्रव्याविरोधोपार्जित प्रपञ्चोभूयःसु शौर्य्यादि विषयमादाय स्मृति वचःसुदृश्यते स ग्रन्थविस्तर भिया न लिख्यते।

अथ विभागानधिकारिणः।

तत्र योगीश्वरः। क्लीवोऽथ पतितस्तज्जः पङ्गुरुन्मत्तकोजडः।

अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः॥

तज्जः। पतितजः। क्लीवान्धौ यदि जन्मत आरभ्य तदा विभागानर्हावेव यदित्वन्तरा। तदा तदपगमश्चेदौषधादिना तर्हि दृश्या तद्विभागः स्यादायविशोधितादिति रीत्या विभागार्हावेवेति ध्येयम्। आद्यशब्देनाश्रमान्तर गतपितृद्वेष्युपपातकिवधिर मूकनिरिन्द्रियाणां ग्रहणम्। यथाह वशिष्ठः॥ अनंशास्त्वाश्रमान्तरगता इति। नारदोऽपि।

पितृद्विट् पतितः षण्डो यश्च स्यादौपपातिकः।

औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुत इति॥

मनुरपि। अनंशौ क्लीव पतितौ जात्यन्ध बधिरौ तथा।

उन्मत्त जड़मूकाश्च ये च केचिन्निरिन्द्रिया इति॥

व्याधिना निर्गतमिन्द्रियं यस्य स निरिन्द्रियः। तेन क्लीवाद्भेदः। कश्चित्तु निरिन्द्रियाः पाणिपादादिहीना इत्याह। एते क्लीवादयोंऽशभाजो न भवन्ति किन्तु ग्रासाच्छादनदानादिना भर्त्तव्याः पोषणीयाः। अभरणे तु महान्दोषः। यथाह मनुः।

सर्वेषामपि चैतेषां दातुन्याय्यं मनीषिणा।

ग्रासाच्छादनमत्यन्तं पतितोऽह्यददद्भवेदिति॥

अत्यन्तं यावज्जीवम्। तत्रापि पतितोपपातकिनोर्व्या- वत्प्रायश्चित्ताचरणमनंशित्वम्। औद्धत्यादिना प्रायश्चित्तम- कुर्वतोऽस्तु निपतनमेव। एतेषाञ्च विभागात्प्रागेव दोषभाक्त्वेऽ- नंशित्वम्। न पुनर्विभागोत्तरमपि दत्तविभागापहरणं प्रमाणाभावात्। पश्चादप्यौषधादिना दोष निर्हरणेऽस्त्येवांश- भागितेति विज्ञानेश्वराचार्य्याः। युक्तञ्चैतत्। दोषप्रयुक्त- त्वाद्विभागानर्हतायाः। विभक्तेषु सुतो जातः सवर्णायां वि- भागभागिति न्यायसाम्यात्। पतितादिषु लिङ्गमविवक्षित- मनुपादेयत्वात्। ब्राह्मणो न सुराम्पिबेदित्यादिवत्। तेन यथा सम्भवे पत्नी दुहितर इत्यादेरप्ययमपवादः। क्लीबा- दीना मनंशत्वेऽपि तत्सुतानामंशोऽस्तीत्याह योगीश्वरः।

औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः।

निर्दोषाः पूर्वोक्तानंशत्व प्रयोजक दोषशून्याः। तत्र क्ली- बस्य क्षेत्रजपुत्त्रः सम्भवत्यन्येषामौरसोऽपि पुत्त्रद्वय ग्रहणमि- तरपुत्त्रव्युदासार्थम्। पतिततत्सुतयोर्न भरणम्। तथा च देवलः।

मृते पितरि न क्लीव कुष्ठ्युन्मत्त जड़ान्धकाः।
पतितः पतितापत्यं लिङ्गी दायांशभागिनः॥
तेषां पतितवर्ज्जेभ्यो भक्तं वस्त्रञ्च दीयते।
तत्सुताः पितृदायांशं लभेरन् दोषवर्जिता इति॥

लिङ्गी प्रव्रजितादिः। पतितपदेनात्र पतितसुतस्यापि ग्रहणं पतितोत्पन्नत्वेन तस्यापि पतितत्वात्। पतितापत्यं पतितमेवान्यत्र स्त्रियाः सा हि परगामिनी भवतीति स्मृतेः।

च्छ इति विभागकालोपलक्षणं जीवद्विभागेऽप्यनर्हत्वात्। कात्यायनोऽपि।

> अक्रमोढा सुतश्चैव सगोत्राद्यश्च जायते।
> प्रव्रज्यावसितश्चैव न रिक्थन्तेषु चार्हति॥

हीन स्त्री परिणयानन्तरमुत्तमस्त्रीपरिणयने द्वयोरप्यक्रमोढात्वन्तयोः सगोत्रादनियोगोत्पन्नः क्षेत्रजः पुत्त्रोनार्हति धनम्।

> अक्रमोढा सुतस्त्वृक्थी सवर्णश्च यदा पितुः।
> असवर्णप्रसूतस्तु क्रमोढायाश्च यो भवेत्॥
> प्रतिलोम प्रसूतायास्तस्याः पुत्त्रो न रिक्थभाक्।
> ग्रासाच्छादनमात्रन्तु देयं तद्बन्धुभिर्मितम्॥
> बन्धूनामप्यभावे तु पित्र्यन्द्रव्यं तदाप्नुयात्।
> स्वपित्र्यं तद्धनम्प्राप्तं दापनीया न बान्धवाः॥

क्लीवादीनामपि दारपरिग्रहेण पुत्त्र सम्भव उक्तो मनुना।

> यद्यर्थिता तु दारैः स्यात् क्लीवादीनां कथञ्चन।
> तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति॥

तन्तुरपत्यम्। नच क्लीवादेरुपनयनाभावेन पतितत्वात् कथं दारसम्बन्ध इति वाच्यम्। उपनयनानर्हतया उपनीतत्वे शूद्रवदपतितत्वात्। एतेषां क्लीवादीनां दुहितरो विवाहपर्यन्तं भर्त्तव्याः संस्कर्त्तव्याश्च। तत्स्त्रियस्तु पुत्ररहिताः साध्व्योभरणीया अप्रतिकूलाश्चेत्। अन्यथा वहिष्करणीयाः। तदाह योगीश्वरः।

> सुताश्चैषां प्रभर्त्तव्या यावन्तो भर्तृसात्कृताः।
> अपुत्त्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः॥

निर्व्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैवच।

आपस्तम्बः। अवपातितस्य रिक्थपिण्डोदकानि निवर्त्तन्ते। अवपातितो भिन्नोदकीकृतः। तथा बृहस्पतिः।

सवर्णजोऽप्यगुणवान्नार्हः स्यात् पैतृके धने।
तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते॥
उत्तमर्णाधमर्णेभ्यः पितरन्त्रायते सुतः।
अतस्तद्विपरीतेन नास्ति तेन प्रयोजनम्॥
तथा गवा किं क्रियते या न धेनुर्न गर्भिणी।
कोऽर्थः पुत्त्रेण जातेन यो न विद्वान् न धार्मिकः॥
शास्त्र शौर्य्यार्थरहितस्तपोज्ञानविवर्जितः।
आचारहीनः पुत्त्रस्तु मूत्रोच्चारसमः स्मृतः॥

अयमर्थः। पित्रादेरौर्द्ध्वदेहिक कर्म्मणः कर्त्ता सुतोऽसंस्कृतोऽपि वरः श्रेष्ठः। ज्येष्ठो वेदपारगोऽप्यपरो न वर इति।

पुन्नाम्नो नरकाद्यस्मात् पितरन्त्रायते सुतः।
तस्मात्पुत्त्र इति प्रोक्तः स्वयमेव स्वयम्भुवेति।

स्मृतेः पुत्त्र कर्म्मकर्तुः पितृधनस्वाम्यमेव चेतनमतस्तदकुर्व्वतः कुतो वेतनाधिकार इति भावः। मनुरपि।

सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनमिति।

श्रौतस्मार्त्तकर्मानधिकारिणो विकर्मसक्ताश्च भागानर्हा इति भावः।

इति विभागानधिकारिणः।

अथ विभक्तज्ञतम्।

तत्र नारदः। यद्येकजाता बहवः पृथग्धर्माः पृथक् क्रियाः।
पृथक्कर्म्मगुणोपेता नचेत्कार्य्येषु संमताः॥

स्वभागान्यदि दद्युस्ते विक्रीणीयुस्तथापि वा ।
कुर्य्युर्य्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य हीति ॥

अस्यार्थः । एकस्माज्जाता बहवो भ्रातरो यदि विभक्ता इति शेष इति केचित् वयन्तु पृथग्धर्म्मा इत्यादेरेव विभक्ता इत्यर्थः । तद्विधानस्यात्राप्रतीतेरानर्थक्याच्च । पृथग्विभिन्नो धर्म्मो देवपितृद्विजार्च्चनरूपो येषां नत्वग्निहोत्रादि रूपः । तस्य द्रव्यसाध्यत्वेऽप्य विभागेऽपि पृथक्त्वात् ।
तथा च बृहस्पतिः । एकपाकेन वसतां पितृदेवद्विजार्च्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ।

एतच्च प्राङ्निरूपितम् । पृथक्क्रिया लौकिककृष्यादि रूपा येषां पृथग्विभिन्ना ये कर्म्मणां कण्डनपेषणादीनां गुणा उपसर्जनभूता मुसलोलूखल दृषदुपलादयस्ते येषाम् । ते चेत्कार्य्येषु न संमताः परस्परमनुमतिं यद्यपि न कुर्वन्ति । तथापि ते स्वभागान्यदि दद्युर्विक्रीणीयुर्वा । तत्सर्व्वमन्यदप्याधीकरण ऋणादानादि यथेष्टं स्वेच्छया कुर्य्युः । विभक्ता यद्यनुमतिं कुर्व्वन्ति व्यवहारसौकर्य्य मात्रं भवति । अथ न कुर्व्वन्ति । तथापि न दानाद्यनिष्पत्तिः । तत्र हेतुः हि यस्मात्ते स्वधनस्यासाधारण स्वत्वापन्नस्य धनस्येशाः स्वामिनः । साधारणे स्वत्वे हि परस्परानुमत्यपेक्षा नत्वसाधरणेऽपीति भावः । यत्तु बृहस्पतिनोक्तम् ।

विभक्ता वाऽविभक्ता वा सपिण्डाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमन विक्रय इति ॥

तदपि विभक्तानुमतिं व्यवहार सौकर्य्यार्थमेव प्रतिपादयति ग्रामाद्यनुमतिवदित्यवसेयं स्थावरे हि चिरकालस्यापि

नियतशास्त्यादिविगमे विभागाविभागनिर्णयो दुःशक्कः स्यात् कालान्तरे। सत्यान्त्वनुमतौ विभागनिर्णयानपेक्ष एव व्यवहारः सिद्ध्यति सर्व्वानुमत्या दत्तत्वादित्याशय इति विज्ञानेश्वरा बहव आहुः। स्मृतिचन्द्रिकाकारास्तु यदि विभक्ता अपि स्थावरविभागं दुष्करं मन्यमानास्तत्फलमेव फलकाले विभज्य भोक्ष्याम इत्यभिसन्धिना नादितर धनमेव पृथक्विभज्य गृहीत्वा स्थावरं मध्यकमेव स्थापयन्ति तादृश स्थावरविषयमिदमित्याहु। तत्कल्पना मात्रम्। अविभक्तत्वादेव तत्रानुमत्यपेक्षणात्।

स एव येनांशो यादृशो लब्धः प्राप्य तन्न विचालयेदिति।

प्राप्य स्वीकृत्य। विभागकाले मत्वा पश्चाद्विप्रतिपद्यमानो राज्ञा वारणीयोऽत्याग्रहे दण्ड्यश्चेत्याह स एव।

स्वेच्छाकृत विभागोऽयः पुनरेव विसम्वदेत्।

स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत्॥

अनुबन्धो निर्बन्ध आग्रह इति यावत्।

इति विभक्तकृत्यम्।

अथ विभागप्रकारे उक्ते तत्सन्देहे निर्णयप्रकार उच्यते। तत्र याज्ञवल्क्यः। विभागनिह्नवे ज्ञाति बन्धु साक्ष्यभिलेखितैः।

विभाग भावना ज्ञेया गृहक्षेत्रैश्च यौतकैः॥

विभागस्य निह्नवेऽपलापे विभक्तमध्ये केनचित्कृते ज्ञातिभिः पितृबन्धुभिः। बन्धुभिर्मातुलादिभिः साक्षिभिश्चोदासीनैः साक्षिलक्षण लक्षितैः। यद्यपि ज्ञातिबन्धवोऽपि साक्षिविधयैव निर्णयकारणं तथापि बहिरङ्गसाक्ष्यपेक्षयान्तरङ्गास्ते श्राद्धादि पृथग्भाव रूपविभाग लिङ्गज्ञत्व ज्ञातिभागकर्त्तार-

श्चेति बलीवर्द्दन्यायेन पृथगुपात्ताः। लेख्येन विभागपत्रेण च विभागस्य भावनानिर्णयो ज्ञातव्यः। तथा यौतकैः पृथक्कृतैः। युमिश्रणामिश्रणयोरिति धात्वनुसारात्। गृहैः चेत्रैश्च। नारदः।

विभाग धर्मसन्देहे दायादानां विनिर्णयः।
ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यं प्रवर्त्तनात्॥

ज्ञाति ग्रहणात्तेषु सत्सु वान्य साक्षिपुरस्कार इत्येतदर्थम्।। कार्य्यं कृष्यादि तस्य पृथक्प्रवर्त्तनात्। शङ्खः।

गोत्रभाग विभागार्थे सन्देहे समुपस्थिते।
गोत्रजैश्चाप्यविज्ञाते कुलं साक्षित्वमर्हति॥

कुलं बन्धवोमातुलादयः। अतएव नारदेन मुख्यत्वाज्ज्ञातय एव निर्दिष्टाः। ज्ञातृभिरिति पाठस्त्वनाकरः पुरातन पुस्तकेषु निबन्धेषु चादर्शनात्। लिखितन्तु साक्षिभ्योबलवदिति परिभाषायां निरूपितम्। नारदः।

दान ग्रहण पश्वन्न गृहक्षेत्र परिग्रहाः।
विभक्तानां पृथग्ज्ञेयाः पाकधर्म्मागमव्ययाः॥
साक्षित्वं प्रातिभाव्यञ्च दानङ्ग्रहणमेव च।
विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः कथञ्चन॥
येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थतः।
विभक्ता न वगच्छेयुर्लेख्यमप्यन्तरेण तान्॥

धर्म्मोवैश्वदेवादिः एकपाकेन वसतामिति। प्राक् उक्त वचनात्।

भ्रातृणामविभक्तानामेको धर्म्मः प्रवर्त्तते।
विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथगिति।
नारदेनैवोक्तत्वाच्च। बृहस्पतिः।

साहसं स्थावरं न्यासः प्राग्विभागश्च रिक्थिनाम्।
अनुमानेन विज्ञेयं न स्यातामत्र साक्षिणौ॥

नस्यातामित्यत्र यदीत्यध्याहारः।

पृथगायव्ययधनाः कुसीदञ्च परस्परम्।

वणिक्पथञ्च ये कुर्य्युर्विभक्तास्ते न संशयः। आयोव्ययो-धनञ्च पृथग्येषामिति विग्रहः कुसीदं वृद्ध्यर्थं धनप्रयोगः। वणिक्पथोवाणिज्यम्। परस्परमिति। एकोभ्रातोत्तमर्णः परश्चाधमर्णः। एकोविक्रीणीते परश्चक्रीणाति। इत्येव-मादिभिर्लिङ्गैर्विना विभाग मनुपपद्यमानैर्विभागः प्रमातव्य इत्यर्थः। एताः क्रिया इति बहुवचनान्मिलितानामेवैषां लिङ्गत्वमिति न भ्रमितव्यम्। व्यस्तसमस्तानामपि तद्विधा-नात्। न्यायमूलकत्वाच्च वचनस्य अनुमानेनाप्यनिर्णये दिव्यैः-शपथैश्च विषयाल्पत्वभूयस्त्वानुसारेण निर्णयः। युक्तिष्वप्य-समर्थासु शपथैरेन मर्हयेदिति परिभाषायां निरूपितंयत्र तु मानुषं निर्णायकन्नास्ति युक्तयश्चाभासाः। दिव्यशपथा-ध्यवसायश्चान्यतरस्य न भवति। तत्र पुनर्विभागः कार्य्य इत्याह मनुः।

विभागे यत्र सन्देहो दायादानां परस्परम्।
पुनर्विभागः कर्त्तव्यः पृथक् स्थानस्थितैरपीति॥

सच परिशेष्योभयव्यय मित्यादि संसृष्टिविभागादि रीत्ये-त्यनुसन्धेयम्। यच्च मनुनैवोक्तम्।

सकृदंशो निपतति सकृत्कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृदिति॥

तत् पराद्दत्तिकारणाभावे। कन्यादानदानान्तरयोर-

प्येवम्। इति विभागसन्देहे निर्णयः। समाप्तञ्चेदन्दायभागाख्यं विवादपदम्।

अथ द्यूतसमाह्वयाख्यं व्यवहारपदम्।

तस्य स्वरूपमाह नारदः।

अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम्।
पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयमिति॥

अक्षाः पाशाः। वध्रश्चर्म पट्टिका। शलाकादन्तादिमय्यो दीर्घचतुरस्राः। आद्य ग्रहणाच्चतुरङ्गादि क्रीडासाधनं करितुरगादिकं गृह्यते। तैरप्राणिभिर्यापणपूर्विका क्रिया। तथा वयोभिः पक्षिभिः पारावतादिभिः च शब्दान्मल्लमेषादिभिश्च प्राणिभिर्यापणपूर्विका क्रीडा क्रियते तदुभयं यथाक्रमं द्यूतसमाह्वयाख्यं व्यवहारपदमित्यर्थः। द्यूतञ्च समाह्वयश्च द्यूतसमाह्वयम्। अतएव मनुः।

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते।
प्राणिभिः क्रियमाणस्तु सविज्ञेयः समाह्वय इतिः॥

तत्र सभिकं प्रत्याह नारदः।

सभिकः कारयेद्द्यूतन्देयन्दद्याच्च तत् कृतम्।
दशकन्तु शतं वृद्धिस्ततः स्याद्द्यूतकारिता॥
अथ वा कितवो राज्ञे दत्त्वा लाभं यथोदितम्।
प्रकाशन्देवनं कुर्य्यादेवन्दोषोन विद्यत इति॥

तस्य वृत्तिमाह याज्ञवल्क्यः।

ग्लहेशतिकवृद्धेस्तु सभिकः पञ्चकं शतम्।
गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतमिति॥

परस्परं सम्मतिप्रत्त्याकितवः परिकल्पितः पणोग्लहस्तत्र

ग्लहे तदाश्रया शतपरिमिता तदधिक परिमिता वा वृद्धिर्य-स्यासौ शतिक वृद्धिस्तस्मात्कितवात्मच्च शतञ्जितस्य ग्लहस्यात्म-वृद्ध्यर्थं विंशतितमम्भागङ्गृह्णीयादित्यर्थः। पञ्चकं शतं पञ्च-पणा आयो यस्मिन्शते तत्पञ्चकन्तद्यस्मिन्वृद्धो तिकन्। सभा-कितवनिवासार्थो यस्यास्यसौसभिकः सभापतिस्तु कल्पिता-चादिनिखिल क्रीडोपकरणस्तदुपचित द्रव्योपजीवी। इतर स्मादपूर्णशतवृद्धेः कितवाद्दशकं शतञ्जितस्य दशमभागं गृह्णी-यादित्यर्थः। एवं क्लृप्तवृत्तेः सभिकस्य यत्कर्त्तव्यन्तदाह।

स एव। स सम्यक्पालितो दद्यात् राज्ञे भागं यथा कृतम्।

जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यम्वचः क्षमीति॥

यः क्लृप्तवृत्तिर्द्यूताधिकारी सराज्ञाधूर्त्तकितवेभ्योरक्षि-तस्तस्मैराज्ञे यथा प्रतिपन्नमंशन्दद्यात्। तथा जितन्द्रव्यं पा-राजित सकाशादासेधादिना उद्धृत्य जेत्रे जयिने दद्यात्। तथा क्षमी भूत्वाद्यूतकारिणीति विश्वासार्थं सत्यं वचोवदेदि-त्यर्थः। नारदोऽपि।

सभिकः कारयेद्द्यूतन्देयन्दद्याच्च तत् कृतमिति।

वृहस्पतिरपि। सभिकोग्राहकस्तत्र दद्याज्जेत्रे नृपाय-वेति द्यूतपराजित कितवानां बन्धनादिना पणग्राहकोभवेत्। पणग्रहणात्प्रागेव स्वकीयं द्रव्यं यत्र नृपायच यथाभागं सभि-कोदद्यादित्यर्थः। तथा च कात्यायनः।

जेतुर्दद्यात् स्वकन्द्रव्यञ्जितं ग्राह्यं त्रिपक्षिकम्।

सद्योवा कितवेनैव सभिकात्तुन संशय इति॥

त्रिपक्षिकमित्यनेन यथा सामर्थ्यमाचिपक्षात्कालोदेय इति दर्शितमिति स्मृतिचन्द्रिकायाम्। यदातु जेत्रे जितन्द्रव्यं

सभिको दापयितुमशक्तस्तदा राजा दापयेदित्याह।

याज्ञवल्क्यः। प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्त मण्डले॥

जितं ससभिके स्थाने दापयेदन्यथा नत्विति॥

प्रसिद्धे अन्यथा प्रच्छन्ने सभिकरहितेऽदत्तराजभागेद्यूते-जित पणे जेत्रेन दापयेदित्यर्थः। प्राणिद्यूते प्राणिनाञ्जय पराजयौ तत् स्वामिनोरित्याह वृहस्पतिः।

द्वन्द्वयुद्धेन यः कश्चिदवसादमवाप्नुयात्।

तत् स्वामिना पणो देयोयस्तत्र परिकल्पित इति॥

पणपरिकल्पनं कृताकृतमित्याह नारदः।

परिहास कृतं यच्च यच्चाप्यविदितं नृपे।

तत्रापि नाप्नुयात्काममथत्रानुमतन्तयोरिति॥

काम्यत इति कामः पणः। अत्र जयपराजय विप्रतिपत्तौ निर्णय प्रकारमाह याज्ञवल्क्यः।

द्रष्टारो व्यवहाराणां साक्षिणश्च त एवहीति।

द्यूतव्यहाराणान्द्रष्टारः सभ्याः तएव कितवा एवनियोक्तव्याराज्ञा। न तत्र श्रुताध्ययन सम्पन्ना इत्याद्युक्तनियमोऽस्ति। साक्षिणोऽपित एवद्यूते द्यूतकरा एव कार्याः न तत्र स्त्रीबाल-वृद्धकितवेत्यादि साक्षिनिरूपणोक्त निषेधोऽस्तीत्यर्थः। विष्णुरपि। कितवेष्ववतिष्ठेरन् कितवाः संशयं प्रति।

य एव तत्र द्रष्टारस्त एवैषान्तु साक्षिणः इति।

साक्षिणां परस्परविरोधेत्याह वृहस्पतिः।

उभयोरपि सन्दिग्धौ कितवाः स्युः परीक्षकाः।

यदा विद्वेषिणस्ते तु तदा राजा विचारयेदिति॥

अनियुक्त द्यूतकारिणो दण्डमाह नारदः।

अनिर्द्दिष्टस्तु यो राज्ञा द्यूतं कुर्व्वति मानवः॥
न स तस्मात्प्रयात्कामं विनयञ्चैवसोऽर्हतीति॥

ये तु कूटं द्यूतं कुर्वन्ति तेषां दण्डमाह याज्ञवल्क्यः।

राज्ञा स चिह्नन्निर्वास्याः कूटाक्षोपधि देविन इति।

कूटैरक्षादिभिः उपाधिना मणिमन्त्रादि नामतिवञ्चनेन च ये दीव्यन्ति तान् श्वपदादिनाङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेदित्यर्थः निर्वासने विशेषमाह नारदः।

कूटाक्ष देविनः पापान् राजा राष्ट्राद्विवासयेत्।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृत इति॥

दण्डने विशेषमाह विष्णुः। द्यूते कूटाक्ष देविनां करच्छेदः। उपधि देविना माच्छेद इति। यानि तु द्यूतनिषेधकानि मनुवचनानि।

द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा।
तान् सर्व्वान् घातयेद्राजा शूद्रांश्च द्विज लिङ्गिनः॥
प्रकाशमेतत्तास्कर्य्यं यद्देव न समाह्वयौ।
तयोर्न्नित्यं प्रतीघाते नृपनिर्यत्नवान् भवेत्।
द्यूतं समाह्वयञ्चैव राजा राज्ये निवारयेत्॥

इत्यादीनि तानि कूटाक्षदेवन विषयतया राज्ञाध्यक्ष सभिकरहिततया वा योज्यानि। अतएव बृहस्पतिः।

द्यूतं निषिद्धं मनुना सत्यशौच धनापहम्।
अभ्यनुज्ञातमन्यैस्तु राजभाग समन्वितम्॥
सभिकाधिष्ठितं कार्य्यं तस्करज्ञानहेतुमेति॥

याज्ञवल्क्योऽपि।

द्यूतमेक मुखं कार्य्यं तस्करज्ञानकारणादिति।

राज्ञा द्यूतं एकं मुखं प्रधानं यस्य तत् तथोक्तं कार्य्यम्। राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः। तस्करज्ञान कारणात्। ल्यब्लोपे पञ्चमी। तस्करज्ञानरूपं प्रयोजनं पर्य्यालोच्य अर्थः। प्रायशश्चौर्य्योर्जितधनाएव कितवा भवन्त्यतश्चौर विज्ञानार्थमेकमुखं कार्य्यमित्यादयः। द्यूते विहितं धर्मजातं समाह्वये अतिदिशति एव।

एषएव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये इति॥

सभिक वृत्ति कल्पनादि लक्षणो धर्म्मः समाह्वयेऽपीत्यर्थः॥ इति द्यूत समाह्वयाख्यं व्यवहारपदम्। इति श्रीमत्सकल सामन्तचक्रचूड़ामणि मरीचि मञ्जरीनीराजित चरणकमल श्रीमन्महाराजाधिराज प्रतापरुद्रतनूज श्रीमन्महाराज मधुकरसाहसूनु श्रीमन्महाराजाधिराज चतुरुदधिवलय वसुन्धरा हृदय पुण्डरीक विकास दिनकर श्रीवीरसिंहदेवोद्योजित श्रीहंसपण्डितात्मज श्रीपरशुराम मिश्र सूनु सकलविद्या पारावारपारीणधुरीण जगद्दारिद्र्य महागजपारीन्द्रविद्वज्जनजीवातु श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिध निबन्धे व्यवहारप्रकाशे समाप्तमष्टादश विवादपद निरूपणाख्यं तृतीयं प्रकरणम्।

अथ प्रकीर्णकाख्यञ्चतुर्थं प्रकरणमारभ्यते।

तत्र बृहस्पतिः। एषवादि कृतः प्रोक्तो व्यवहार समासतः।

नृपाश्रयं प्रवक्ष्यामि व्यवहारं प्रकीर्णकमिति॥

तल्लक्षणभेदावाह नारदः।

प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः।

राज्ञामाज्ञा प्रतीघातस्तत्कर्मकरणं तथा॥

पुर: प्रमाणं सम्भेद: प्रकृतीनान्तथैवच ।
पाखण्डनैगमश्रेणि गणधर्म विपर्य्यया: ॥
पिता पुत्त्र विवादश्च प्रायश्चित्त व्यतिक्रम: ।
प्रतिग्रहं विलोपश्चकोप आश्रमिणामपि ॥
वर्णसंकरदोषश्चतद्वृत्तिर्नियमस्तथा ।
न दृष्टं यच्चपूर्वेषु सर्वन्तत्स्यात्प्रकीर्णकमिति ॥

प्रतोघातो भङ्ग: । तत् कर्म्म । सिंहासनारोहणादि राजकर्म । पाखण्डादय: पूर्वमेव व्याख्यात: । प्रकीर्णके विवादपदे ये विवादा राजाज्ञोल्लङ्घनं तदाज्ञाकरणं तत् कर्मरचणादि विषयास्तेनृपसमवायिन एव । तत्र स्मृत्याचारव्यपेतेन मार्गेण वर्त्तमानां प्रतिकूलतामासाद्य नृपएव व्यवहारनिर्णयं कुर्य्यात् । एवं वदता योनृपाश्रयो व्यवहारस्तं प्रकीर्णकमित्युक्तम्भवति । विषय विशेषेदण्ड विशेषमाह याज्ञवल्क्य: ।

न्यूनं वाभ्यधिकं वापि लिखेद्योराजशासनम् ।
पारदारिकचौरं वा मुञ्चतोदण्ड उत्तम: ॥

यो राजदत्त भूमिनिबन्धयोर्मध्येऽन्यतरस्य परिमाणात् न्यूनत्वाधिक्यान्यतरं प्रकाशयन् राजशासनत्वेन लिखति । यश्च पारदारिक चौरं वागृहीत्वा राज्ञेऽनिवेद्य मुञ्चति ताउभावप्युत्तम साहसं दण्डनीयावित्यर्थ: । व्यासोऽपि ।

न्यायस्थाने गृहीत्वार्थमधर्मेण विनिर्णयम् ।
कुर्वन्त्युत्कोचकास्ते तु राज द्रव्य विनाशका: ॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेदिति ॥

राज्ञ: कोशापहरणे दण्डमाह मनु: ।
राज्ञ: कोशापहर्त्तृंश्च प्रतिकूलेष्ववस्थितान् ।

घातयेद्विविधैर्दण्डैर्हरेत् सर्वं स्वमेवचेति ॥

सर्वस्वहरणम साधारणं यद्यस्य जीवनोपकरणन्तदतिरिक्त विषयम्। अतएव नारदः।

आयुधानायुधीयानां वीजानि कृषिजीविनाम्।
यत्यस्योपकरणं येन जीवन्तिजीविकाम् ॥
सर्वस्वहरणेऽप्ये नन्न राज्ञा हर्त्तुमर्हतीति।

वधस्थानेमौण्डंा ब्राह्मणस्य कर्त्तव्यमित्याह मनुः।

ब्राह्मणस्य वधोमौण्ड्यं पुरान्निर्वासनाङ्कने।
ललाटेवाभिशस्ताङ्कं प्रयाणं गर्द्दभेनत्विति ॥

तत् कर्मकरणे दण्डमाह याज्ञवल्क्यः।

राजयाना सनारोहे दण्डोमध्यम साहसमिति।

कात्यायनोऽपि। राज क्रीडासु ये सक्ताराज वृत्त्युप जीविनः।
अप्रियञ्चास्य यो वक्तावधन्तेषां प्रकल्पयेदिति ॥

शूद्राणां प्रव्रज्यादि करणेदण्डमाह स एव।

प्रव्रज्याव सितं शूद्रञ्जपहोमपरं तथा ॥
वधेन शासयेत्पापन्दण्ड्योवाद्वि गुणन्दमामिति।

धर्मशास्त्रानु सारेण व्यवहारदर्शिनोराज्ञः फलमाह यमः

एवन्धर्म प्रवृत्तस्य राज्ञोदण्डधरस्य च।
यशोऽस्मिन् प्रथते लोके स्वर्गवासस्तथा क्षय इति ॥

इति प्रकीर्णकाख्यश्चतुर्थं प्रकरणं समाप्तम्।

प्रत्याशम्परिवर्द्धितेऽर्थिजनतान्दैन्यान्धकारापहे।
श्रीमद्वीर नृगेन्द्रदान जलधिर्य्यद्वक्त चन्द्रोदये।
राज्ञादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते।
ग्रन्थेऽस्मिन् व्यवहार जातिविषयः पूर्णः प्रकाशोऽभवत्।

इति व्यवहारकाण्डं समाप्तम्।

